॥ श्री. ॥

काशी-संस्कृत-ग्रन्थमाला
३७



( व्याकरणविभागे षष्ठं प्रसूनम् )



पाणिनीयव्याकरणसूत्रवृत्तिः

# काशिका

विद्वद्वरवामनजयादित्यविरचिता

सम्पादकः—
व्याकरणन्यायाचार्यः
पण्डित श्रीशोभितमिश्रः

उपोद्घातलेखकः—
पण्डित श्रीब्रह्मदत्तजिज्ञासुः



चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

सं० २००९ ] तृतीयं संस्करणम् [ १९५२ ई०

प्रकाशक —
जयकृष्णदास हरिदास गुप्तः,
चौखम्बा-संस्कृत-सीरिज आफिस,
पो० बाक्स नं० ८ बनारस-१



JAYA KRISHNA DAS HARI DAS GUPTA
The Chowkhamba Sanskrit Series Office
P. O Box 8, Banaras.

सम्पूर्ण ग्रन्थस्य मूल्य १२)

मुद्रक —
विद्याविलास प्रेस,
बनारस-१

## डा० श्री मङ्गलदेव शास्त्री

एम ए., डी. फिल ( आक्सन )

भूतपूर्व अध्यक्ष, गवर्नमेण्ट संस्कृत कालेज, बनारस,

तथा

वर्तमान अध्यक्ष, वैदिक स्वाध्याय मन्दिर, बनारस।

चौखम्बा संस्कृत सीरिज, विद्याविलास प्रेस, बनारस, काशिका वृत्ति के नये संस्करण को प्रकाशित कर रहे हैं, यह जान कर मुझे प्रसन्नता है। पाणिनिव्याकरण के परिपूर्ण ज्ञान के लिये काशिका वृत्ति की अद्वितीय उपयोगिता विद्वानों से छिपी नहीं है। मैंने नये संस्करण के कुछ भाग को देखा है। इसमें सन्देह नहीं कि इस वृत्ति के अब तक के संस्करणों की अपेक्षा यह नया संस्करण कहीं अधिक उपयोगी और प्रामाणिक सिद्ध होगा। मेरी बराबर इच्छा रही है कि यह प्राचीन ग्रन्थरत्न अपने शुद्ध रूप में विद्वानों और छात्रों को सुलभ हो। आशा है इस नये संस्करण का विद्वन्मण्डली स्वागत करेगी।

# प्रकाशकीय वक्तव्य

माननीय विद्वद्वर !

आज अनेक वर्षों से काशिकावृत्ति का कोई भी संस्करण उपलब्ध न होने से छात्रों को अत्यधिक कष्ट ही नहीं अपितु इस ग्रन्थ का पठन पाठन ही बन्द सा हो रहा था। अतः हम अपने अनेक संस्कृत साहित्य के आवश्यक से आवश्यक प्रमुख ग्रन्थों का प्रकाशन कार्य स्थगित रख, जब कि प्रायः सभी पुराने से पुराने संस्कृत पुस्तकों के प्रकाशक भी धन के लोभ में पड कर आज हिन्दी-अंग्रेजी स्कूल कालेजों की टेक्स्ट बुक को प्रकाशित करने में लग गए हैं, अपने संस्कृत साहित्य सेवा के अटल सिद्धान्त से विचलित न होते हुए प्रथम तथा द्वितीय संसार व्यापी महायुद्ध के कारण अर्थाभाव से ग्रस्त होते हुए भी इस भीषण संकट के समय में अपने पूर्वजों का अनुसरण कर उसी सत्पथपर आरूढ रह सर्व प्रथम इस ग्रन्थ को सभी प्रकार से सुन्दर रूप में प्रकाशित कर आप विद्वानों की सेवा में अर्पण कर रहे हैं।

हम संस्कृत विद्या के अधिकारी कर्णधारों को यह विनम्र स्मरण दिला देना भी अपना परम आवश्यक कर्तव्य समझते हैं कि आज निरन्तर ६१ वर्षों से अनेक प्रकार की आर्थिक कठिनाइयों का सामना करते हुए भी संस्कृत साहित्य की जो सेवा "चौखम्बा" ने की है वह किसी भी संस्कृत विद्वान् से छिपी नहीं है फिर भी जो सहयोग तथा सहायता "चौखम्बा" को मिलनी चाहिए नहीं मिली। अतः अगर समय रहते भी अधिकारी वर्ग इस तरफ दृष्टि नहीं देते तो हमें भय है कि इस समय एक मात्र संस्कृत साहित्य की निर्विच्छिन्न सेवा करने वाली यह संस्था भी बहुत से आवश्यक से आवश्यक संस्कृत के ग्रन्थों का प्रकाशन करने में असमर्थ हो जायगी और इस कारण विद्वानों तथा छात्रों को पठन पाठन में कितनी हानि एवं कष्ट होगा उसकी कल्पना करना भी असंभव है।

इस ग्रन्थ की १ से ३ अध्याय तक की प्रेस कापी स्व० श्री शंकर देव जी पाठक तथा ४-८ अध्याय की श्री हरिदत्त जी शास्त्री ने प्रस्तुत करने की कृपा की है तथा पुनः सम्पूर्ण ग्रन्थ को हमारे सुयोग्य विद्वान् सम्पादक श्री शोभित मिश्र जी ने न्यास-पदमञ्जरी-महाभाष्य आदि ग्रन्थों का अवलम्बन करते हुए इस संस्करण का विशुद्ध सम्पादन किया है तथा श्री ब्रह्मदत्त जी जिज्ञासु ने कृपाकर 'उपोद्घात' लिखने की उदारता तथा डा० श्री मङ्गलदेव जी शास्त्री ने प्रसन्नता पूर्वक अपनी "शुभ सम्मति" प्रदान कर इस संस्करण को विशेष रूप से समादृत किया है। अतः हम उपर्युक्त सभी विद्वानों के अत्यन्त आभारी हैं।

ओ३म्

# उपोद्घातः

पश्य देवस्य काव्यं न ममार न जीर्यति ॥ ( अथर्ववेद ) ॥

कस्याविदितमेतद् यत् सर्वेषामप्यार्य्यधर्मावलम्बिनां धार्मिक साहित्यं देववाण्यामेव वर्त्तते। भारतीयानामस्माकं मूर्द्धन्या वेदाः, ऋषिमुनिप्रणीताश्च शाखा-उपवेद-ब्राह्मण-आरण्यक-उपनिषद्-वेदाङ्ग-उपाङ्ग-साहित्य-आयुर्वेद-विज्ञान-गणित-इतिहास-गीतादयः सर्वेऽपि गीर्वाणवाण्यामेव विरचिता वर्त्तन्ते। भारतीयायाः संस्कृतेः सभ्यतायाः साहित्यस्य, भारतीयपरम्परायाश्च सर्वमप्यस्यामेव देवभाषायां परीवृत्यते। आजीवनं तपांसि तपद्भिर्भारतीयैराचार्य्यैरपि सङ्ग्रथितानि ग्रन्थरत्नानि देववाण्यामेवोपलभ्यन्ते। किं बहुना, भारतीयानामस्माकं गौरव सर्वस्वं-सर्वमपि संस्कृतभाषायामेव निहितं विद्यते ॥

## वेदाध्ययनस्यानिवार्य्यता

शास्त्रस्यैष आदेशः—

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च"

( महाभाष्ये भगवान् पतञ्जलिः )

'ब्राह्मणेन' इत्युपलक्षणम्। द्विजमात्रेण षडङ्गाध्ययनपूर्वकं वेदानामध्ययनं निष्कामभावेन (अनेन कर्म्मणा वृत्तिं लप्स्यामहे नवेत्यनपेक्ष्य) अवश्यमेव कर्तव्यम्। महर्षिमनुनाऽपि स्वमानवधर्मशास्त्र उक्तम्—

"शूद्रेण हि सम तावद् यावद् वेदे न जायते" ॥

"अनभ्यासेन वेदानामाचारस्य च वर्जनात्।

आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति" ॥

अनेनापि वेदाध्ययनस्यानिवार्य्यतैव प्रतिपाद्यते। सन्मात्रसंस्कारनिबद्धबुद्धयः, शिथिलीभूतकर्मग्रहग्रन्थयः समासादितस्थिरसमाधयः, साक्षात्कृतधर्माण ऋषयः, अपि च पूर्वापरज्ञा विदितवेदितव्याः समधिगतसकलशास्त्रज्ञानविज्ञानाः सम्मर्शिनोऽल्पज्ञा धर्मकामाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः, किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारङ्गतास्तत्र भवन्त आप्ताश्च किमेतदपि नाजानन् यद् वेदाध्ययनादुदरपूर्तिः कथं सम्पत्स्यत इति। कथं तैर्निष्कारणो धर्म इत्युक्तम्? आसीत्तेषां ह्येषा निश्चिता धारणा—

"सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति" ॥ ( मनु )

अत एव तै "निष्कारणो धर्मः" इत्युक्तम् । पूर्वोक्तशास्त्रवचनैः सुव्यक्तं यदस्माकं पूर्वजानां ह्येषा धारणाऽऽसीद् यद् वेदाध्ययनमन्तरा सर्वेऽपि शूद्राः, वेदाध्ययनेन विना द्विजमात्रस्य गतिर्नास्ति । तेन च न केवलं निःश्रेयससिद्धिरेव, अपि त्वभ्युदयनिःश्रेयसयोरुभयोरपि सिद्धिर्निश्चिता ॥

## वेदाध्ययनस्य साम्प्रतिकी दुरवस्था

साम्प्रतिकपठनपाठनक्रमेण वेदाध्ययनं न सम्भवति, न चाद्यत्वे तज्जायत इति सर्वविदितमेव । काशीस्थराजकीयसंस्कृतकालेजस्य परीक्षायां १६००० परीक्षार्थिषु १४५०० व्याकरणमेवाधीयते । १००० साहित्यम्, अवशिष्टेषु त्रिंशत्सप्तकारछात्रा वेदविषये मध्यमा-शास्त्रि आचार्य-परीक्षायां समुपतिष्ठन्ते । तत्रापि वर्षे प्रायेण द्वित्रा एव छात्रा आचार्य्यपरीक्षोत्तीर्णा भवन्ति । एवं १००० मध्ये द्वौ छात्रावपि वेदं नाधीयाते । १७ विषयाणामाचार्य्यपरीक्षाऽद्यत्वे प्रचलति । प्रतिविषयमाचार्य्यपरीक्षायै ६ वर्षाणि मध्यमापर्य्यन्तम्, ६ वर्षाणि शास्त्रि-आचार्य्यपरीक्षाभ्यां चापेक्ष्यन्ते, एवं १७×६=१०२ वर्षाणि १७ विषयाणामाचार्य्यपरीक्षार्थमपेक्ष्यन्ते । इत्थं ६+१०२=१०८ वर्षाणि सर्वाण्यपेक्षिष्यन्ते सर्वविषयाणामाचार्य्यपदवीं लब्धुमिति तथ्यम् । १६ वर्षाण्यध्ययनकालः प्रायेणास्ति । आजीवनं पठन्नपि न कश्चित् सर्वविषयाणामाचार्य्यपरीक्षायाः पारं गन्तुं समर्थः स्यात् । एतदप्यत्रावगन्तुं शक्यते यद् १०८ वर्षाण्यधीत्यापि तेषां शास्त्राणां परीक्षोपयोगि तात्कालिकं ज्ञानमेव जायते । न च तेषां शास्त्राणां मार्मिकं ज्ञानं सम्पद्यत इति सर्वविदितमेव । व्याकरणाचार्याः प्रायशोऽन्यविषयेभ्योऽनभिज्ञा एव भवन्ति । वेदाचार्य्या आचार्य्यपरीक्षामप्युत्तीर्यैतदपि न जानन्ति यत् के के वैदिकग्रन्था अस्माकं सन्ति, के च वेदभाष्यकारा सन्त्यासन् वा, किञ्च तेषां वेदार्थे वैशिष्ट्यम्, कानि पक्षा वेदार्थे निरकृष्टा वर्जिता, के चाद्यत्वे तिरोहिता इत्यादि किमपि ज्ञानं तेषां न भवति । वेदाध्ययनं नाममात्रमेव वर्त्तते । वेदाङ्गैर्विना वेदाध्ययनस्य किं फलम् ? मूलमात्रमेव जीघुष्यमाणानां कथमर्थावगमः स्यात् ? वैयाकरणा न केवलं वेदज्ञानशून्याः प्रायेण सर्वत्र दरीदृश्यन्तेऽपि तु वेदाङ्गोपाङ्गज्ञानरहिताऽपि प्रायशो यत्र तत्र द्रष्टुं शक्यन्ते । साम्प्रतिकाध्ययनाध्यापनक्रमस्यैवैष दोष इति निर्विवादम् ।

## कथं वेदाध्ययनस्य सम्भवः ?

अस्ति तत्र कश्चिदुपाय इत्याकाङ्क्षायामुच्यते । अष्टवर्षपर्य्यन्तं गृहे पाठशालायां वा मातृभाषाया ज्ञानं पूर्वं स्यात् । तदनन्तरम्—

४ वर्षाणि व्याकरणार्थम् ।
१ वर्षं साहित्ये ।
१ वर्षमुपवेदायैकस्मै ।
२ वर्षे षडङ्गपूर्त्यै ।
२ वर्षे उपाङ्गेभ्यः ।
६ वर्षाणि सब्राह्मणवेदाध्ययने ।
१६ वर्षाणि योगः ।

२४ वर्षेषु १६ वर्षाणि प्राप्स्यन्त्यध्ययनार्थम् । षडङ्गवेदाध्ययनस्यैष एव क्रमोऽपाश्रयः । एतावति काले मूलग्रन्थानां तत्तदार्षभाष्याणाञ्चाध्ययनं सम्भवति । टीकोपटीकापठनक्रमेण तु १०८ वर्षेष्वपि तेषां समाप्तेरसम्भवः, सम्यगवगतेस्तु का कथा ?

## व्याकरणं साधनं न तु साध्यम्

यदा षडङ्गवेदाध्ययनार्थं व्याकरणाय ४ वर्षाण्येवास्माकमन्तिके वर्त्तन्ते, तत्र च "रक्षार्थं वेदानामध्येयं व्याकरणम्" व्याकरणशास्त्राध्ययनस्य प्रयोजनानि ब्रुवता भगवता पतञ्जलिमुनिना "साधनं व्याकरणं न तु साध्यम्" इति समुद्घोषितं भवति । व्याकरणरूपाया नद्याः पारे गत्वैवान्यशास्त्रेषु लभते गतिमित्यादि सर्वमभिलक्ष्य समुद्घोष्यते तदस्माभिः "अष्टाध्यायीक्रमेणैवास्य सम्भव" "अष्टाध्यायीपठनपाठनमेव शरणम्" इति ।

अन्यथाऽऽप्रलयमपि वेदाध्ययनस्य प्रचारो न सम्पत्स्यते । न चैतदनुष्ठानं विना संस्कृतभाषा भारतस्य राष्ट्रभाषा भवितुमर्हति ॥

## आचार्यपाणिनेर्महत्त्वम्

आचार्यपाणिनि र्न केवलं शब्दशास्त्रस्यैवर्षिः ( साक्षात्कृतधर्मा ) आसीत्, अपि तु सम्पूर्णेऽपि वैदिकलौकिकवाङ्मयेऽव्याहतगतिः स आसीदिति सर्ववादिसम्मतम् । वैदिकवाङ्मयविषयस्य निर्देशास्तु तदीयाष्टाध्याय्याः सूत्रेषु यत्र तत्र दृश्यत एव, भूगोल-इतिहास-मुद्राशास्त्र-लोकव्यवहारस्यापि महान् वेत्ताऽऽसीदिति पाणिनिशास्त्रस्यावगाहनेनावगम्यते । तस्य शब्दशास्त्रं न केवलं व्याकरणज्ञानस्यैव प्रतिपादक वर्त्तते, अपि तु भूगोलेतिहासादिविषयाणां ज्ञानार्थमप्यस्य शास्त्रस्याद्भुतो महिमा महत्युपयोगिता चानुभूयते विद्वद्भिः ।

पाणिनीयाष्टाध्याय्या गौरव न केवलमस्माभिरेवोद्घोष्यते, भगवता पतञ्जलिनाप्याचार्यपाणिनेर्गौरवातिशयो महता कण्ठेन समादरेण च प्रदर्श्यते । तद्यथा—

( १ ) "प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उप-

विश्य महता प्रयत्नेन सूत्राणि प्रणयतिस्म। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण"। ( महाभाष्ये १।१।१ पृष्ठ १३४ चौखम्बा संस्करणे )।

( २ ) पुनरप्युच्यते—"सामर्थ्ययोगान्नहि किञ्चिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात्" ( अ० ६।१।७७ महाभाष्ये )।

( ३ ) जयादित्योऽपि 'उदक्च विपाशः' ( अ० ४।२।७४ ) इति सूत्रस्य वृत्तावाह—"महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य"।

( ४ ) चीनदेशीयो यात्री ह्यूनसांगश्चेत्यमाह—"महर्षिः पाणिनिः पूर्णमनोयोगेन शब्दभण्डारतः शब्दराशिं सञ्चेतुमारब्धवान्। १००० पद्येषु ( ४००० सूत्रेष्वित्यर्थः ) सर्वा व्युत्पत्तिः समाप्ता। प्रत्येकं पद्यं ३२ अक्षराणामस्ति। एतावतैव सर्वोऽपि प्राचीनो नवीनश्च ज्ञानराशिः परिसमाप्तः। शब्दाक्षरविषयकं किमपि ज्ञानं नावशिष्टमभूत्" ( ह्यूनसाँग हिन्दी-अनुवादप्रथमभागस्य २२१ पृष्ठत उद्धृत. )

पाश्चात्य—विदुषामपि पाणिनिविषये महत्युत्कृष्टभावना विद्यते। तद्यथा—

( १ ) मोनियरविलियमश्चाह—"संस्कृतव्याकरणे ( अष्टाध्यायीग्रन्थः ) मानवमस्तिष्कस्य प्रतिभाया आश्चर्यतमो भागोऽस्ति, यो मानवमस्तिष्कस्य समक्ष आगत."॥

( २ ) हण्टरश्चाह—"मानवमस्तिष्कस्यातीवमहत्त्वपूर्ण आविष्कारोऽयम् ( अष्टाध्यायीग्रन्थः )"।

( ३ ) लेनिनग्राडस्य प्रो० टी० शेरवात्सकी—"मानवमस्तिष्कस्य सर्वश्रेष्ठा रचनेयं वर्त्तते ( अष्टाध्यायी )"।

## अष्टाध्यायीपठनपाठनस्य क्रमोऽतिप्राचीनः

अद्यत्वे सर्वत्रैव भारतवर्षे प्रायेण संस्कृतविद्यालयेषु प्रारम्भिकशिक्षणे लघुकौमुदीमध्यकौमुदीसिद्धान्तकौमुद्येवोपलभ्यते। केवलमाङ्गलविद्यालयेषु संस्कृतस्याध्ययनाध्यापनमाङ्ग्लभाषाविद्भिरेव निर्मितग्रन्थैः प्रचलति। संस्कृतविद्यालयेषु सर्वत्र कौमुदीरीत्यैव व्याकरणशास्त्रस्य समस्तमपि पठनपाठनं चतुरशताब्दीभ्य एतावद् व्यापकं जातमस्ति, यदष्टाध्याय्याऽपि व्याकरणस्याध्ययनं सम्भवतीति ज्ञानं विश्वासो वा प्रायेण नोत्पद्यते केषाञ्चित् साम्प्रतम्। साधनिका ( प्रयोगसिद्धिः ) कथं सम्भविष्यतीत्याद्याशङ्कमाना उच्चकोटिकविद्वांसोऽपि दृश्यन्ते, अन्येषां तु का कथा?

कालक्रमेणाष्टाध्याय्या लोप एव जात इति मन्तव्यम् । हा हन्त ! काश्यामन्यत्रापि वैदिकानामृग्वेदिना गृहेष्वष्टाध्यायीमतिशुद्धा धाराप्रवाहरूपा कण्ठस्थीकृत्यापि ते बाला पुन सवृत्तीनि लघुकौमुदीसूत्राणि ( तेषा सूत्राणामर्थानप्यनवबुध्यैव ) घोषन्त सर्वत्र दरीदृश्यन्ते । अहो ! कीदृश्येषाऽनर्थपरम्परा प्रचलिता ॥ अष्टाध्यायी कण्ठस्थीकृतवतोऽपि बालान् साम्प्रतिकवैयाकरणै र्व्याकरणस्याध्ययन लघुकौमुदी मन्तरा कारयितु न पार्यते इत्यनिर्वचनीयानर्थपरम्परा, दुर्भाग्यमेवैतद्देशस्य किमन्यत् ?

भट्टोजिदीक्षितमहोदयस्य काल स० १५१०–१५७५ वर्तते। तत पूर्व त्वष्टाध्याय्या एव पठनपाठनस्य प्रचार आसीत्, नात्र शङ्कालेशस्याप्यवसर । तथया चीनदेशस्य यात्री इत्सिङ्गनामा भारते कतिपयवर्षाणि ( सन् ६८१–६९१ ईस्वी ) अस्थात् । अष्टाध्याय्युपक्रमेव संस्कृताध्ययन तेनात्र कृतमिति स्वय तेन स्वयात्रा विवरणे विवृत वर्त्तते । तद्यथा—

(१) "इस ( अष्टाध्यायी ) में १००० श्लोक ( ४००० सूत्रों का १००० श्लोक बनता है—लेखक ) हैं। यह पाणिनि की रचना है। जो प्राचीनकाल में बहुत भारी विद्वान् था ०००००००००० आजकल के भारतवासियों का प्राय इस में विश्वास है। बच्चे ८ वर्ष की आयु में इस ( पाणिनि ) सूत्रपाठ को सीखना आरम्भ करते हैं और ८ मास में इसे कण्ठस्थ करते हैं ॥" ( इत्सिङ्ग की भारत यात्रा पृ० २६४ )

(२) "वृत्तिसूत्र ( काशिकावृत्ति )—
यह ऊपर के सूत्र ( अर्थात् पाणिनि के सूत्र ) की टीका है। पहले समय में अनेक टीकाए रची गई था और यह उन सब में उत्तम है। यह सूत्र का अर्थ देती और इस के अनेक प्रकार के अर्थों की बड़ी बारीकी से व्याख्या करती है। ०००००००० पन्द्रह वर्ष के लड़के इस वृत्ति को पढ़ना आरम्भ करते हैं और पाच वर्ष में ( सम्भवत महाभाष्यसहित—लेखक ) इसे समझ लेते हैं" ॥ ( पृ० २६८ )

(३) "यदि चीन के मनुष्य भारत में अध्ययन के लिये जाय तो उन्हें सबसे पहले ( व्याकरण के ) इस ( अष्टाध्यायी ) ग्रन्थ का अध्ययन करना पड़ता है, फिर दूसरे विषय। यदि ऐसा न होगा तो उनका परिश्रम व्यर्थ जायगा ००००, ००००" ( इत्सिङ्ग की भारत यात्रा पृ० २६८ )

) "इस वृत्ति का अध्ययन कर चुकने के पश्चात् विद्यार्थी गद्य और पद्य की रचना सीखना आरम्भ करते हैं और हेतुविद्या तथा अभिधर्मकोष में लग जाते हैं। न्याय द्वारा तर्क शास्त्र के अध्ययन से वे ठीकतौर पर अनुमान करते हैं और जातकमाला के अध्ययन से उनकी ग्रहण शक्ति बढ़ती है। इस प्रकार अपने उपाध्यायों से शिक्षा पाते और दूसरों को शिक्षा देते हुए वे प्राय- मध्यभारत के नालन्दा विहार में, या पश्चिमी भारत में वल्लभी ( वला ) देश में २, ३ वर्ष व्यतीत करते हैं०००००" ( इत्सिंग की भारत यात्रा पृ० २७०–२७१ )

) अपनी बुद्धि की तीक्ष्णता की परीक्षा के लिये वे राजा की सभा में जाकर ( अपनी योग्यताओं का ) तीक्ष्ण शस्त्र उसके सामने रख देते हैं, वहां वे व्यावहारिक शासन में अधिकार पाने के उद्देश से अपनी कल्पनाएं उपस्थित करते और अपनी राजनैतिक योग्यता प्रदर्शित करते हैं। जब वे विवाद- भवन में उपस्थित होते हैं तब अपने आसन को उठाकर अपनी आश्चर्यजनक चतुराई प्रमाणित करने की चेष्टा करते हैं। जब वे नास्तिकवाद का खण्डन करते हैं, तब उनके सभी प्रतिपक्षी विस्मित हो जाते हैं और अपनी हार स्वीकार करते हैं। तब उनकी कीर्तिध्वनि से ( भारत के ) पांचों पर्वत गूंज उठते हैं और उनकी प्रसिद्धि मानों चारों सीमाओं के ऊपर से बहने लगती है। उन्हें भूमि मिलती है और उनकी पदोन्नति की जाती है। उनके विख्यात नाम, पुरस्कार के रूप में, उनके ऊंचे द्वारों पर सफेदी से लिखे जाते हैं। इसके पश्चात् जो व्यवसाय उन्हें पसन्द हो उसे वे कर सकते हैं॥' ( *इत्सिंग की भारत यात्रा पृ० २७१–२७२* )

) "प्रौढ़ विद्यार्थी उसे ( चूर्णि अर्थात् महाभाष्य को ) ३ वर्ष में सीख लेते हैं"

( अर्थात् काशिका और महाभाष्य में सब मिला कर ४ वर्ष लगते हैं ऐसा प्रतीत होता है—लेखक ) इत्सिंग की भारत यात्रा पृ० २७३।

) "सन् ९११ ई० में इन्द्र वर्मा तृतीय राजा बना यह इस ( भृगु ) वंश का अन्तिम राजा था। इसके ८ लेख मिलते हैं इनसे पता चलता है कि इन्द्र वर्मा षड्दर्शन का पण्डित था। काशिका सहित व्याकरण में पारंगत था

और बौद्धदर्शनका भी अच्छा ज्ञाता था यह अपने समय का भारी विद्वान् था।' (चन्द्रगुप्त वेदालङ्कार कृत बृहत्तरभारत पृ० ३४२) अथ चम्पादेशस्य ('अनाम' इति वर्तमाना सञ्ज्ञा) राजासीत्, देशोऽयं हिन्दचीनीद्वीपेषु वर्तते ऽनेनैतत् सिद्ध्यति यद्बौद्धा अप्यष्टाध्यायीपद्धत्यैव व्याकरणमधीयतेस्म॥

पूर्वोद्धरणैरेतत्स्पष्टं यद् इत्सिङ्ग (६७१–६९५ ई०) समये (सन् ९११ ई०) इन्द्रवर्मराज्यसमयेऽप्यष्टाध्याय्या अध्ययनं न केवलं भारतवर्ष एवासीत्, अपितु भारताद् बहिः 'चम्पादेशे (अनामदेशे) अपि विस्तृतमासीत्। कालक्रमेणैवास्या अष्टाध्याय्या एतावान् लोपोऽभूत्, यदष्टाध्याय्याऽपि व्याकरणस्य ज्ञानं सम्भवतीत्यत्र विद्वांसोऽपि सन्दिहाना दृश्यन्ते किमुत छात्रा इति।

## प्रक्रियानुसारिक्रमस्यारम्भः

इत्सिङ्गसमये (सन् ६८१–६९३ ई०) अष्टाध्यायीपठनपाठनस्य क्रम आसीदिति सप्रमाणमुक्तं पूर्वमस्माभिः, स क्रमः कथं लुप्तः, तत्रारम्भो किं बीजं, प्रक्रियाक्रमे च जनानां प्रवृत्तौ किं निदानमित्यभिलक्ष्येदानीं किञ्चिदुच्यते—

अष्टाध्यायीसूत्रपाठ, धातुपाठ, उणादिपाठ, गणपाठ, लिङ्गानुशासनं समुदितमेतत्'पञ्चपाठी'त्युच्यते सर्वविदितमेतत्। समुदितमेतद् पठितैव 'अधीताष्टाध्यायी' इति मन्तव्यम्। 'वृद्धिरादैच्' इतिसूत्रमधीयानश्छात्रोऽस्य सूत्रस्य पदच्छेद-विभक्ति-समास-अर्थ-उदाहरणादि सर्वं पठन् तत्र चोदाहरणानां (शालीय, भाग, मायक, अचैषीत्, अहावीत्, मार्ष्टि, इत्यादीनां) सिद्धिं सर्वसूत्रैरष्टाध्यायीपद्धत्या सम्पादयति। एवमष्टाध्यायीं धातुपाठञ्च सम्यगभ्यस्य प्रथमावृत्तावेव (उदाहरणानां सिद्धिं कुर्वन्नेवेत्यर्थः) छात्राः सर्वां तिङन्तप्रक्रियां सुबन्तप्रक्रियां कृदन्तप्रक्रियां तद्धित-समासप्रक्रियाञ्च विनापि प्रक्रियाग्रन्थाश्रयेणावबुध्यन्तेस्म। तत्र च सर्वधातूनां सर्वलकारेषु सर्वप्रक्रियासु चैकैकशो रूपाणि सूत्रपुरस्सरं ससाधयन्त प्रक्रियाग्रन्थानामभावेऽपि ते छात्रा न कीदृशीमपि न्यूनतां तत्रानुभवन्ति स्म। अयं क्रमस्तदानीं सर्वसाधारणेषु प्रचलित आसीत्। प्रक्रियाग्रन्थनिर्माणस्य प्रश्न एव नोदतिष्ठत्। कालप्रभावाद्यदा ह्यध्यापकास्तद्रीत्या छात्राणामध्यापने प्रमादाद् भूयांसं क्लेशमनुभवन्तः शैथिल्यमाजह्रुस्तदा ते तामेव प्रयोगसाधनसमये छात्रैरपेक्षितां प्रयोगसाधनप्रक्रियां ग्रन्थरूपेण निर्मापयाञ्चक्रुः। शनैः शनैरष्टाध्यायीक्रमेण प्रयोगसाधनप्रक्रिया तु शिथिलतामगात्। प्रक्रियाग्रन्थानामाश्रयग्रहणमेवोत्तरोत्तरमवर्द्धत।

तदानीमप्येतत्त्वासीदेव यदष्टाध्यायीमभ्यस्य तत्क्रमानुरूपं सूत्रार्थं विज्ञायैव प्रक्रियाग्रन्थरूपेण परिणतानां सिद्धान्तकौमुदीपूर्ववर्तिनां रूपावतार-प्रक्रियारत्न-रूपमाला-प्रक्रियाकौमुद्यादीनां, प्रक्रियासर्वस्वप्रभृतीनाञ्चाष्टाध्यायीकालिकच्छात्र-

तृंकप्रयोगसाधनलिपिरूपाणामाश्रयमध्येतारो गृह्णन्तिस्म । अष्टाध्याय्याश्रयणन्तु दानीमनिवार्यमेवासीत् । यथा काशीस्था महाविद्वांसः "तात्या"शास्त्रिप्रभृ-योऽपि 'न मया समयाभावादद्याष्टाध्यायीसूत्राणामावृत्तिः कृता' इति स्वच्छा-घूदघोषयन् ।

प्रक्रियाग्रन्थानां निर्मित्यनन्तरमपि यद्यष्टाध्यायीसूत्रपाठस्य त्यागो नाभविष्यत्, दाप्यष्टाध्याय्या उपस्थित्या प्रक्रियाग्रन्थेभ्योऽपि साधारणबुद्धिभ्यश्छात्रेभ्यस्तत्र-हेञ्चित्सौकर्यमभविष्यत्–( यदि मूलं त्यक्त्वा शाखासु गमनं नाभविष्यत् )। एवमष्टाध्यायीसूत्रक्रमपाठाश्रयेण प्रक्रियाग्रन्थानामभ्यासो बहुकालाय प्राचलत् । ग्ने बहुतिथे काले गतेऽष्टाध्यायीसूत्रक्रमपाठः प्रमादात् सर्वथाऽपि विलुप्तः, केवलं प्रक्रियाग्रन्थानां पठनपाठनक्रम एव सर्वत्र प्रचलितोऽभूत् । तदारभ्यैवैतेषां प्रक्रिया-कौमुदी–सिद्धान्तकौमुदीप्रभृतीनामुत्पत्तिपरम्परा तेषां व्यापकता च समजनि । तत्कालमध्य एवैकैकस्योपर्यपरस्य प्रक्रियाग्रन्थस्य निर्माणप्रवाहः प्रवृत्तः ॥ प्रक्रियाग्रन्थानामुत्पत्तिक्रमविषय इदानीं किञ्चिदत्र विमृशामः—

## प्रक्रियाग्रन्थानामितिहासः

### (१) रूपावतारः—( सं० ११४० विक्रमीयः )

अष्टाध्यायीग्रहणेऽसमर्थेभ्योऽल्पबुद्धिभ्यश्च व्यावहारिकज्ञानमात्रधिया बौद्ध-भिक्षुणा धर्मकीर्त्तिना प्रक्रियाक्रमस्य सर्वप्रथमो ग्रन्थः 'रूपावतार'नामकोऽष्टाध्यायी-सूत्रैर्व्यरचि । अस्मिन् ग्रन्थेऽष्टाध्यायीक्रमं परित्यज्य केवलं प्रयोगसाधनमभिलक्ष्य संज्ञा–संहिता–सुबन्त–अव्यय–स्त्रीप्रत्यय–कारक–समास–तद्धितप्रकरणानि प्रथम-भागे सद्ग्रथितानि । दशलकार–दशप्रक्रिया–कृदन्तञ्चापरभागे । ( स्वरवैदिक-प्रकरणं विहाय ) २६६४ सूत्राणि प्रक्रियाक्रमेण व्याख्यातानि । प्रक्रियाग्रन्थाना-मुत्पत्तिर्बौद्धकाल एवाभूत् इत्यपि ध्येयम् ।

### (२) प्रक्रियाकौमुदी—( सं० १४८० वि०)—

यद्यपि 'प्रक्रियारत्नम्' 'रूपमाला' इमौ प्रक्रियाग्रन्थौ रूपावतारानन्तरं निर्मिता-विति ज्ञायते तथापि तयोरनुपलम्भात् प्रक्रियाकौमुदीविषय एवोच्यते । प्रक्रिया-कौमुदीनामकोऽयं ग्रन्थो रामचन्द्राचार्येण, सूत्राणां व्याख्यानं किञ्चिद्विस्तरेण विधाय, स्वरवैदिकप्रकरणे च संयोज्य २४७० सूत्राणि व्याचक्षाणेन रूपावतारानन्तरं निरमायि । तेन च प्रक्रियाक्रमस्य विस्तारः प्रचारश्च प्राचुर्येणाभूत् । ग्रन्थोऽयं सिद्धान्तकौमुद्या आधार इति मन्तव्यम् ।

### (३) सिद्धान्तकौमुदी—( सं० १५१०-१५७५ वि० )—

भट्टोजिदीक्षितमहोदयेनाष्टाध्यायीक्रमं परित्यज्यैव पूर्वप्रचलितप्रक्रियाकौमुदी-

क्रममेवाश्रित्य सिद्धान्तकौमुदीनामकस्त्वग्रन्थो व्यरचि। तत्र च प्राय सर्वाण्यां सूत्राणि ( ३९७८ ) व्याख्यातानि। तेन चाय यत्न कृतो यन्मद्रचितोऽय ग्रन्थ "सिद्धान्तकौमुदी" एव सर्वत्र प्रचलेत्। व्याकरणविषये सिद्धान्तकौमुदीं विहाय कस्याप्यन्यग्रन्थस्याध्ययनाध्यापन न तिष्ठेत्। अनेन कियन्महत्काठिन्य छात्रेभ्य भविष्यतीति तु न विचारितम्। तस्यैवैतत्फल य संस्कृतस्याध्येतारो द्वादशवर्ष ण्यधीत्य व्याकरणार्णवस्यापि पार न यान्ति, अन्यशास्त्राणा तु का कथा? तदा "द्वादशभिर्वर्षै व्याकरण श्रूयते" इति श्रवणमात्र, ज्ञान पुनरपि सन्दिग्धमेव ॥

## (४) मध्यकौमुदी—

शिखरमध्यास्थेय सिद्धान्तकौमुदी यदा छात्रेभ्योऽतीव दुःखावहा-दुर्लभा अतीव-परिश्रमसाध्या—अतिकालसाध्या चेत्यनुभूतवान् वरदराजस्तदैव स २११ सूत्राणि व्याख्याय मध्यकौमुद्या निर्माण कृतवान्। मध्यकौमुदीनिर्माणमेव सिद्धान्त कौमुद्यसाफल्यस्य प्रत्यक्ष प्रमाणम्। अन्यथा काऽऽसीदावश्यकता मध्यकौमुदीनि र्माणस्य? एव शिखरान्मध्यमार्गे समागता संस्कृताध्ययनपद्धतिरिति सुव्यक्तम् ॥

## (५) लघुकौमुदी—

मध्यमार्गेणापि यदा सन्तोषो नाभूत् तदानीमन्यदपि लघुतरमार्गमन्विच्छुर तेनैव वरदराजेन स्वपूर्वनिर्मित्या असन्तुष्य ११८८ सूत्राणि व्याख्याय लघुकौमु विरचिता। शिखरान्मध्ये, मध्यान्नीचैरागतोऽय व्याकरणस्य पठनपाठनक्रम । यदि सिद्धान्तकौमुद्या काठिन्य नाभविष्यत्तर्हि मध्यकौमुदीलघुकौमुदीग्रन्थयोर्निर्माण कदापि नाभविष्यदिति सुव्यक्तम्। तयोर्निर्माण प्रत्यक्ष प्रमाण यत् सिद्धान्तकौमुद क्रमेण न सर्वेषामध्ययन सुकर समभवत्—नात्र सन्देहावसर ॥

## अष्टाध्यायीक्रम एव पुनः समुपस्थितः

"वर्षेण भूमि पृथिवी वृतावृता"-( अथर्व ) ॥

यथा चाय भूगोलो वर्तुलाकार, तत्र 'यतश्चलितुमारब्धस्य तत्रैव पुन प्रत्य वृत्तिर्भवतीति' जनश्रवस्तथ्यञ्च, तथैवायमष्टाध्यायीक्रमोऽद्य स्वतन्त्रभारते पुनरा यथाक्रम सम्प्राप्त ।

मूलतोऽतिदूरङ्गता व्याकरणस्याध्येतार इति पूर्वमस्माभि प्रतिपादितम्, यद वृक्षस्य मूलात् सम्बन्धो विच्छिद्यते, कालक्रमेण स्वयमेव तस्य वृक्षस्य पत्राणा पुष्प णाञ्च नाशो दुर्निवार, अत पुनर्मूलस्यैवाश्रये कल्याणसम्भव इति सुधिय ए प्रमाणम्। अतोऽधुनाऽष्टाध्यायीपद्धत्याश्रयण संस्कृताध्यायिना भारतस्य च कृ कल्याणकर स्वश्रेयस्साधकञ्च भवेदित्याशास्यते ॥

नान्यश्रुतोऽय वाद, अपि तु स्वानुभूत एव। [illegible] च स्वानुभव इदानीं स्वमित्र

गामाग्रहेण समादरणीयविदुषां, व्याकरणाध्येतॄणां, व्याकरणमधिजिगमिषूणाञ्च पुरत प्रकाश्यते मनाक् ।

## व्याकरणसारल्ये स्वानुभवः

(१) सर्वथाऽपि संस्कृतानभिज्ञानां द्वित्राणां कन्यानाम्, अष्टाध्यायीमूलसूत्राणां कण्ठस्थीकरणेन विनाऽपि, अष्टाध्यायीक्रमेण पदच्छेद-विभक्ति-समास-अर्थ-उदाहरण-सिद्धि-(सर्वे सूत्रे) इत्यादि-सम्पादनेन व्याकरणे एतावती प्रगतिर्भूत्, यदष्टाध्यायीक्रमेण व्याकरणमधीयानाभिस्ताभिः पञ्जाबविश्वविद्यालयस्य विशारदपरीक्षा दशमासैरेवोत्तीर्णा । अस्या परीक्षाया व्याकरणेन सह संस्कृत-साहित्यग्रन्था, दर्शनग्रन्था, धर्मशास्त्र, भगवद्गीता, संस्कृतेऽनुवादो निबन्धश्चेत्यादिसर्वेष्वपि विषयेषु योग्यता सम्पादनीया भवति । ताभिरेव विशारद-परीक्षानन्तर सप्तमासैरेव पञ्जाबविश्वविद्यालयस्य शास्त्रिपरीक्षाऽप्युत्तीर्णा । शास्त्रिपरीक्षायामपि वेदो निरुक्त, संस्कृतसाहित्यग्रन्था, महाभाष्यं, दर्शने साङ्ख्ययोगौ समाप्यौ, अनुवादो निबन्धश्चेत्येतावन्तो विषया भवन्तीत्यपि ध्येयम् । सप्तदशमासै (सार्द्धवर्षेणैव) सर्वथाऽपि संस्कृतानभिज्ञाः कन्या विशारद-शास्त्रिपरीक्षोत्तीर्णा जाता इति श्रुत्वा सामान्यजनास्तु विश्वासमपि न कुर्वन्ति, विशिष्टास्तु चकितचकिता विस्मिताश्च जायन्ते । परञ्च सर्वमेतदधुनाऽपि मर्मज्ञै प्रत्यक्षीकर्तुं शक्यते ॥

(२) अपरञ्च—बी० ए० एल० एल० बी० इत्युपाधिधारिणि इञ्जीनियरपदधर्मकक्षाणां अपि ३५, ४० वार्षिका प्रौढाः सज्जना सर्वथाऽपि संस्कृतानभिज्ञा, सप्तदिनैरेव 'पठति' 'शालीय' 'पुरुष' इत्युदाहरणानां पूर्वापरसूत्रनिर्देशपुरःसरं सिद्धिमष्टाध्यायीसूत्रै (सत्रापि विना रटनेन) कुर्वन्तीत्यपि द्रष्टुं शक्यते ॥

(३) ऐफ० ए० परीक्षार्थ्येकं छात्र २। सपादद्वयमासेनैवाष्टाध्यायीक्रमेणाष्टाध्यायी-सूत्राण्यकण्ठस्थीकृत्यापि केवलमवबुध्यैव ६०० षट्शतसङ्ख्याकानि सूत्राणि पदच्छेद-विभक्ति-समास-अर्थ-उदाहरण-सिद्धिपुरःसराणि सम्यगधीतवान् । तत्र च 'स्थानिवदादेशोऽनल्विधौ' इत्यादिकठिनतमप्रकरणस्यान्येषां प्रकरणानाञ्च कठिनतमसूत्राणां व्याख्यानं, तेषामुदाहरणानां सिद्धिञ्च (२ ग्रन्थ १०, ६० सूत्रे) सम्यगवबोध्य (विनापि रटनेन) काशीस्थवैयाकरणविद्वत्समाजेऽन्यत्रापि च प्रदर्शितवान् । येन ते सर्वेऽपि विद्वांस आश्चर्यचकिता अभूवन् ।

अत एवास्माभिरुच्यते यदष्टाध्याय्येव संस्कृतज्ञानस्य व्याकरणज्ञानस्य च साधनम् ॥

## कुतो जनाः संस्कृताध्ययनात् पलायन्ते ?

नहि व्याकरणेन विना संस्कृतभाषायामधिकारस्तत्र च सम्यक् प्रवेशो भवतीत्य-

रमाकं सिद्धान्तः । किन्तु तदेव व्याकरणमधत्वे दुरूहतयाऽर्थरहितघोषणपुरःसरतय संस्कृताध्येतॄणां मार्गोऽवरोधकत्वेन सुदृढार्गलरूपेण समुपतिष्ठते । यावदस्याव रोधकत्वन्नापाकृतं स्यात्तावन्नास्या देववाण्याः पुनरुद्धारः सम्पत्स्यत इत्यपि सुनि श्चितमेव । ये केचन स्वर्मनीषिकयाऽन्येषां प्रेरणया, धर्म-देशभक्तिभावनया व संस्कृताध्ययनमारभन्ते, ते पूर्वोक्तामर्थरहितघोषणपुरःसरतां दुरूहताञ्च दृष्ट्वै संस्कृताध्ययनतो पलायिता इतस्ततश्च यत्र तत्र सर्वत्र दरीदृश्यन्ते । एवम्भूतान संस्कृताध्ययनतः पराङ्मुखानां पलायितानां भुक्तभोगिनां सङ्ख्या न जाने भार कति लक्षाणि स्यात् । तैः ( स्कूलकालेजादिष्वधीतवद्भिः 'बी० ए०, ऐम० ए० इत्यु पाधिधारिभिः, आर्य्यभाषाविशेषज्ञैर्वा ) न केवलं स्वयमेव संस्कृताध्ययनं परि त्यज्यतेऽपि स्वप्ने स्वसन्ततेरपि संस्कृताध्ययनस्य मार्गोऽवरोध्यते । एवम्भूता जना स्वसन्ततिभ्य एवमुपदिशन्तो दृश्यन्ते—' वत्स ! मया स्वबाल्यकाले संस्कृताध्ययन मारब्धमासीत्, किन्त्वतिक्लिष्टं महाकष्टसाध्यमर्थरहितघोषणप्रायिकं दुरूहञ्चेदं संस्कृ ताध्ययनमिति कृत्वाऽनिच्छताऽपि मया त्यक्तं पुरा, त्वयापि नात्र समयनाशः शक्ति नाशो वा कर्तव्यः'' इत्थम्भूतैः प्रवादैः संस्कृताध्ययनं देशे लुप्तप्रायमेवाभूत् । दे केचनोत्कृष्टमस्तिष्कास्ते पूर्वमाङ्ग्लीयैः प्रायेण नवनीतवत् समुद्धृत्य इङ्गलैण्डादिदेशेषूपा धिलोभं प्रदर्श्य, महार्घाश्छात्रवृत्तीः प्रदाय विदेशीयवेश-भूषा-भावनायुक्ता अस्मं राजकार्येषु नियोजिताः, येन च ते स्वयं भारतीयसंस्कृतेः, सभ्यतायाः, संस्कृतसा हित्याच्च पराङ्मुखा अभूवन् । ये भिक्षुवृत्तयः साधारणमस्तिष्का देशस्य संसारस्य वा भूतवर्तमान-भविष्यद्विषये सर्वथाप्यनभिज्ञास्ते प्रायेण फल्गुवत् संस्कृताध्ययनेऽ वशिष्टा दरीदृश्यन्ते, ते च न संस्कृताध्ययने स्वकर्तव्यबुद्ध्या प्रवृत्ता भवन्ति, अपि स्वर्थाभाव एव तेषां प्रवृत्तिहेतुर्दृश्यत इत्येवम्भूतायां विषमस्थित्यामपि कथं स्यात् संस्कृताभ्युदय इति सुधीभिर्विमर्शनीयम् ॥

## तत्र व्याकरणाध्ययनस्यातीव सरलोपायः

व्याकरणाध्ययने यदाऽनिवार्यं, नानेन विना संस्कृतसाहित्ये प्रवेशस्यापि सम्भ इत्यस्माभिः पूर्वमुक्तम्, अस्यामवस्थायां "व्याकरणाध्ययनस्य कश्चन सरलोपाय स्यात्" इति विचारे समुत्पन्नेऽस्माभिरेकमेव सूत्रमुद्घोष्यते—

अष्टाध्यायीक्रमेणाध्ययनस्य पुनरुद्धार एवास्य सर्वस्य महौषधम् ॥

अस्यां विंशतितम्यां शताब्द्यामस्याष्टाध्यायीक्रमस्य पुनरुद्धारे बहुकालानन्त प्रथमः प्रयासः श्रीमत्परमहंसपरिव्राजकाचार्य्याणां परमविदुषां विरजानन्दसरस्वती स्वामिनां वर्तते । तदनन्तरं तच्छिष्याणां श्रीमतां परमहंसपरिव्राजकाचार्यदयानन्द सरस्वतीस्वामिनामेव कृपा वर्त्तते, यद् वयं साम्प्रतमष्टाध्यायीपठनपाठनक्रमस्य विषये किञ्चिद् वक्तुं समर्थाः स्मः ॥

## अष्टाध्यायीक्रमस्य वैशिष्ट्यम्

१) किमत्र रहस्यमित्याकाङ्क्षायामुच्यते—मूलाष्टाध्यायीग्रन्थाभ्यास एवात्र रहस्यं नान्यत् किञ्चिदपि । 'आद्गुणः' ( अष्टा० ६–१–८७ ) इति सूत्रमस्माभिरित्थं पाठ्यते–'आत्' ५–१ ( पञ्चम्येकवचनम् ) । 'गुणः' १-१ ( प्रथमैकवचनम् ) पदम् । उपरिष्टाद् "एकः पूर्वपरयोः" ( अष्टा० ६–१–८४ ) 'इकोयणचि' ( अष्टा० ६–१–७७ ) 'संहितायाम्' ( अष्टा० ६–१–७२ ) इति सूत्रेभ्यः 'एकः' 'पूर्वपरयोः' 'अचि' 'संहितायाम्' इति पदानामनुवृत्तिरपेक्ष्यते, अनुवर्त्तन्त इमानि पदानीत्यर्थः । तदानीं बाह्यशब्दस्याध्याहारेण विनापि सूत्रस्यार्थं इत्थं सम्पद्यते—"आत् अचि-संहितायाम्–पूर्वपरयोः-गुणः एकः" । अत्र 'स्यात्', 'भवेत्' 'भूयात्', 'भविष्यति', 'भवति', 'वर्त्तते', 'सम्पद्यते', 'जायते' एषु कतरदपि पदमध्याहर्तुं शक्यते, नात्र विवादोऽस्ति । 'सूत्र एव सूत्रस्यार्थः' इति रहस्यम् । स चार्थः छात्रेभ्यः ( स्युस्ते बालाः प्रौढा वा ) सूत्रत एव बोधनीयो भवति । मूलाष्टाध्यायीपुस्तक एव छात्राय सर्वमेतत् प्रदर्श्यतेऽवबोध्यते च । सूत्राणां घोषणेन विनाऽपि छात्र एवं प्रदर्शित सूत्रार्थमचिरेणैवावबुध्यते । पाठनसमयेऽध्यापकेन पुनः पुनरावृत्त्या सूत्रार्थे कृते, तस्यार्थस्य स्वयमेव छात्रस्य हृदये स्थितिर्जायते, न तत्र घोषणस्यावसर उपतिष्ठते । पुनःपुनरावृत्तावध्यापकस्य परिश्रमो भवति न छात्रस्य । अन्ते स छात्रस्तत्सूत्र तस्यार्थञ्च सम्यग् गृहीत्वा स्वस्मृतौ सञ्चिनोति । अयं हि प्रत्यक्षदर्शनस्य विषयः । इदमेव सामान्यैर्जनै रहस्यमित्युच्यते ।

२) लघुकौमुदी–मध्यकौमुदी–सिद्धान्तकौमुदी–प्रक्रियाकौमुदीप्रभृतीन् कौमुदीपरिवारान् जोघुष्यमाणाश्छात्रा आजीवनमेतदपि नावबुद्ध्यन्ते, यत् सूत्रस्यार्थः कथमेव सम्पन्नः । व्याकरणाचार्या भूत्वाऽप्यनुवृत्तिविषये सर्वथाऽनभिज्ञा एव प्रायेण सर्वत्र दरीदृश्यन्ते । सूत्राणां कण्ठस्थीकृतोऽप्यर्थः ( चतुर्गुणः १६००० षोडशसहस्रपादपरिमितः ) न चिराय स्मृतौ स्थातुमर्हति, इच्छतोऽनिच्छतो वा । स्वाभाविकञ्चैतत्, सम्यगनवगतोऽनवबुद्धः सम्बन्धविज्ञानविरहितोऽर्थः स्मृतौ कथमवतिष्ठेत, अवस्थातु वा शक्नुयादिति सर्वजनीनेयमनुभूतिः सर्वत्रापि द्रष्टुं शक्यते, दृश्यते च ॥

३) अष्टाध्यायीक्रमे चायमपि विशेषः—प्रौढाश्छात्रा अष्टाध्यायीसूत्राणि विना रटनेन पूर्वं बुद्धावध्यापकद्वारा पठनसमये स्थापयन्ति, अग्रे च पुनः पुनस्तेषां सूत्राणां प्रयोगसाधनावसरेऽध्यापकद्वाराऽभ्यासः सम्पद्यते, तदनु तानि सूत्राणि तेषामर्थाश्च स्वयमेव बुद्धौ स्थिरा जायन्ते । यानि यानि सूत्राणीत्थमवबुद्ध्यन्ते

तेषां नीचै रक्ततूलिकया चिह्नानि क्रियन्ते कार्यन्ते च। येन स्वावगतसूत्राणां ज्ञानं स्मृतिर्वा तेषामनायासेनैव सम्पद्यते। स्वाभ्यस्तचिह्नितसूत्रावलोकनेन प्रौढच्छात्रस्याध्ययनोत्साहोऽपि भृश समेधते। एतदप्यस्ति रहस्यमष्टाध्याय्या अध्ययनपद्धतौ। इतरपद्धतौ तु नैवं सम्भवति, न च सम्पद्यते तादृश ज्ञानमिति प्रत्यक्षगोचरोऽय विषयो न श्रवणपरः॥

(४) अष्टाध्याय्यां सर्वाणि प्रकरणानि वैज्ञानिकेन विधिना सुसम्बद्धानि वर्त्तन्ते, तेन तत्तत्प्रकरणस्य ज्ञानं सुतरामनायासेन जायते। तद्यथा—सर्वनाम-इत्संज्ञा-आत्मनेपद-परस्मैपद-कारक-विभक्ति-समास-द्विर्वचन-संहिता-सेट्-अनिट्प्रकरणानां सूत्राणि परस्परं सुसम्बद्धानि वर्त्तन्ते, अतस्तेषामर्थावगमे न काचनापि बाधा छात्राणां जायते। यदि कस्यचिच्छात्रस्येड्विषये द्विर्वचनविषये वा शङ्कोत्पद्यते तर्ह्यष्टाध्यायीक्रमेणाधीतवांश्छात्रो द्वित्रैरेव पलैस्तत्प्रकरणस्य समस्तसूत्राणां पाठं कृत्वा निःसंशयो जायते। कौमुदीक्रमेणाधीतवांश्छात्रस्तु काठिन्येनातिपरिश्रमेण चापि व्युत्क्रमेण सूत्रविन्यासहेतो नं तत्र निस्सन्दिग्धः सम्पद्यते। कुतः ? तस्य क्रमे तु सूत्राणि विभिन्नप्रकरणेषु विकीर्णानि वर्त्तन्ते, तेषां विभिन्नप्रकरणपठितसूत्राणां परस्पर ज्ञानं कथङ्कारं सम्भवेत् ?"

(५) अष्टाध्याय्यां 'विप्रतिषेधे परं कार्यम्' 'असिद्धवदत्राभात्' 'पूर्वत्रासिद्धम्' इत्याद्यधिकारसूत्राणां कार्येषु सूत्रक्रमज्ञानस्य महत्त्वावश्यकतैव न विद्यते, अपि तु तेषां क्रमज्ञानस्यानिवार्यसाऽप्यपेक्षिता भवति। सूत्रपाठक्रमज्ञानमन्तरा 'पूर्वम्' 'परम्' 'आभात्' 'त्रिपादी' 'सपादसप्ताध्यायी' बाध्यबाधकभावश्चेत्यादिज्ञानं न कदापि सम्भवत्यध्येतृणामध्यापकानाञ्चापि। सिद्धान्तकौमुदीप्रक्रियाक्रमेणाधीतवतां छात्राणां सूत्रपाठक्रमज्ञानस्याभावान्महाभाष्य पूर्णतया बुद्धौ नाधिरोहति। प्रतिपद प्रतिसूत्र वा तत्र महत् कष्टमनुभूयते, स्वाभाविकञ्चैतत्। स्वप्रत्यक्षीकृतमेतद् सर्वं यदत्रास्माभिः प्रतिपाद्यते॥

(६) सिद्धान्तकौमुदीक्रमेणाधीतं व्याकरण छात्राणां स्मृतिपथाच्छीघ्रं विलुप्यते। पुनः पुनर्घोषणेनापि सत्वरमेव विस्मृत भवति। सर्वेषामेव व्युत्क्रमेणाधीतवतां छात्राणां स्वानुभूतिरेवात्र प्रमाणम्। नास्त्यत्र कस्यचिदन्यस्य कथनावसरः।

(७) अष्टाध्यायीक्रमे सूत्राणां प्राप्तिः सामान्येनाववोध्यते। सिद्धान्तकौमुदीक्रमे तु यत् सूत्र यत्रोल्लिखितं विद्यते तत्रैव तस्य प्राप्तिश्छात्रस्य मस्तिष्कमारोहति, न चान्यत्रापि तस्य प्राप्तिश्छात्रस्य मस्तिष्के सौकर्य्येणोपतिष्ठते। एकस्मिन्नुदाहरणे प्रयुक्तसूत्रस्य तत्सदृश उदाहरणान्तरे प्रयोक्तुमाधुनिकप्रक्रियानुसारेणाधीतवन्तश्छात्राः सर्वथैव निरर्थकाः। 'अचेन्द्र' इति प्रयोग सद्दृष्टे, न प्रयुक्तं

'आद्गुणः' इति सूत्रं 'दिनेशः' इत्युदाहरणे प्रयोगे वा प्रयोक्तुं ते छात्रा बहुधा विभ्यतो दृश्यन्ते ॥

(८) लेटि रूपाणि, स्वरवैदिकसूत्राणामर्थोदाहरणानि, तेषां सिद्धिर्वाऽष्टाध्यायीक्रम आरम्भादेव 'वृद्धिरादैच्' इति सूत्रस्योदाहरणसिद्धावेवाववोध्यन्ते । सिद्धान्तकौमुदीक्रमे तु ग्रन्थस्यान्ते संस्थापितत्वादाजीवनमपि तत्र यत्नो न क्रियते। यतोऽप्युपेक्षिते तत्प्रकरणे, अतस्तत्र कथं गतिः स्यादिति सर्वजनीनोऽयमनुभवः ॥ अन्येऽपि बहवो दोषाः सिद्धान्तकौमुदीप्रक्रियया व्याकरणाध्ययनाध्यापने च सन्ति, विस्तरभिया विरम्यते ॥

अष्टाध्यायीक्रमेणाध्ययने ये गुणाः सन्ति ते, ये सम्पूर्णामष्टाध्यायीं पूर्वं कण्ठस्थीकृत्याधीयते, तेभ्य एवोपकारिणो भवन्ति, तत्र महाभाष्याध्ययनपर्यन्तमष्टाध्यायीसूत्राणां पारायणस्यावश्यकता भवति । येषामष्टाध्यायी कण्ठस्था न भवति, अष्टाध्याय्याः पठनन्नारभन्ते, ते तु तेभ्यो गुणेभ्यो वञ्चितास्तिष्ठन्ति । तत्रैवं सत्यष्टाध्यायीक्रमज्ञानाभावे तैर्महाभाष्यादिपठने महत् कष्टमनुभूयते । अतो महाभाष्यस्याध्यत्नाध्ययनकर्तॄणां सर्वप्रथममष्टाध्याय्याः कण्ठस्थीकरणमनिवार्यमेवेति दिक् ॥

ये तु प्रौढाः पठनार्थिनो लघुकौमुदीं मध्यकौमुदीं वाऽधीयते (यत्र च तेषां घोषणस्य महान् परिश्रमः कालश्चापि सुमहान् वृथैव जायते) तेभ्योऽप्यष्टाध्यायीसूत्रपाठस्य कण्ठस्थीकरणेन विनापि तावज्ज्ञानमष्टाध्यायीक्रममात्रेण (केवलं सूत्रार्थप्रयोगसिद्धिमात्रेणेत्यर्थः) षट्स्वेव मासेषु सम्पद्यते, यावत् ताभ्यां लघुकौमुदीमध्यकौमुदीभ्यां द्वित्रेषु वर्षेष्वपि न सम्भवति । समयस्य परिश्रमस्य च महान् लाभोऽष्टाध्यायीक्रमस्य महद् वैशिष्ट्यम् ।

अत एव "नान्यः पन्था विद्यतेऽयनाय" अष्टाध्याय्यैवैतद् सर्वं सम्भवति नान्यथेत्यस्माभिर्मुहुर्मुहुरुच्यते ॥

## अष्टाध्यायीक्रमे काशिकावृत्तेर्गौरवम्

यदैतद् बुद्धौ स्थितं भवति, यदष्टाध्यायीक्रम एवास्माकं व्याकरणाध्ययनस्य महानाश्रयीभूतो वर्तते, तदानीमष्टाध्यायीसूत्राणां व्याख्यानग्रन्थस्याप्यपेक्षा जायते। यद्यपि पुरा पाणिनिसूत्राणां वृत्तिग्रन्था बहव आसन्, तद्यथा–पाणिनि कुणि माथुरभाथुरी श्वोभूत्यादयो विक्रमपूर्वाः, वररुचे विक्रमसमकालिका, देवनन्दी–दुर्विनीत–चुल्लिभट्टि–निर्लूरविरचिता विक्रमानन्तरा अष्टाध्यायीसूत्रवृत्तयः काशिकायाः पूर्वा आसन्, तथाप्युद्धरणमात्रमेवासामुपलभामहे साम्प्रतम्, अतः काशिकावृत्तिरेवाष्टाध्याय्यध्येतॄणामद्यत्वे शरणम् । सा चेयं वृत्तिः (स० ६५०–७०० वि०) पञ्चमाध्यायपर्यन्तं जयादित्येन विरचिता, शेषाश्चान्तिमास्त्रयोऽध्यायाः (६–७–८) वामनेन विरचिताः। जयादित्यापेक्षया वामनस्य व्याख्यानं प्रौढतरं वर्तते । वर्तमाना काशिकावृत्तिर्जयादित्यवामनयोरुभयोरपि कृतिर्नात्र सन्देहावसरः । पदमञ्जरीन्या-

सादिपूभयकृताया अस्या काशिकावृत्तेर्व्याख्योपलभ्यते । इदमप्यत्रावधेयं यज्जया-दित्यवामनाभ्यां सम्पूर्णा काशिकावृत्तिः पृथक् पृथगपि निरमायि । काशिकाव्याख्या-कारो जिनेन्द्रबुद्धिः स्वन्यासग्रन्थे जयादित्यस्य वृत्तिमन्तिमेषु ( ६-७-८ ) अध्या-येषु दर्शयति, वामनस्य वृत्तिञ्च पूर्ववर्त्तिषु पञ्चाध्यायेषु विवृणोति—

(१) "नास्ति विरोधः भिन्नकर्तृत्वात् । इदं हि जयादित्यवचनम् । तत्पुन-र्वामनस्य । वामनवृत्तौ तु ( अष्टा० ३-१-३३ ) "तासिसिचोरिकार उच्चारणार्थो नानुबन्धः पठ्यते । तेन विरोधो नाशङ्कनीयः ।" (न्यास ३-१-३३ पृष्ठ ४२४ ) । अत्र न्यासकारेण ( अष्टा० ३-१-३३ ) इति सूत्रस्य वामनवृत्तेः पाठ उद्धृतः । वामनेन ६-७-८ अध्यायानां वृत्तिर्विरचिता जयादित्येन च पूर्ववर्त्तिनां पञ्चाध्यायानामित्येवं सर्वैर्ज्ञायतेऽयत्वे । अनेनाद्वय-येन सम्पूर्णग्रन्थस्य द्वयोः सद्भावे प्रमाणं मुव्यक्तं जायते ॥

( २ ) "आभाच्छास्त्रीयमसिद्धत्वमनित्यम् । अनित्यत्वन्तु तस्य तत्रैव ( अष्टा० ६।४।२२ ) प्रतिपादयिष्यते जयादित्येन" ( न्यास , अष्टा० ३।१।। ३३।पृ० ४२४ ) अनेनाप्येतत् स्पष्टं ज्ञायते यज्जयादित्येन षष्ठाध्यायस्यापि वृत्ति-र्विरचिता ॥

(३) 'प्रत्ययपक्ष एव वामनाचार्यस्य तत्राभिमतः" ( हरदत्तमिश्रकृता पदमञ्जरी पृ० ४२८ ) । अत्र पदमञ्जरीकृत "तत्र" इति प्रयोगः श्रीप्रत्यय-प्रकरणस्य चतुर्थाध्यायस्यैव बोधकः, तत्र च वामनेन प्रत्ययपक्षोऽभिमत इति हर-दत्ताभिप्रायः । वामनेन तु ६-७-८ अध्यायानामेव वृत्तिर्विरचितेत्यद्यत्वे सर्वप्र-सिद्धिः, अनेन वामनस्य पूर्वभागेऽपि वृत्तेः सद्भावः सिद्ध एव । उभयवृत्त्योः कदा कथञ्च सम्मिश्रणमभूदिति तु न विद्मः । भागवृत्त्युद्धरणेषु यतो जयादित्यवा-मनयोः खण्डनमुपलभ्यते, तेनानुमीयते यत्ततः पूर्वमेव ( स० ७०० वि० ) तयोर्मिश्रणं जातं स्यात्* ॥

## काशिकावृत्तेर्वैशिष्टयम्

( १ ) उपलब्धवृत्तिषु सर्वाभ्यः प्राचीनेयं वृत्तिः ।

( २ ) अस्यां प्रतिसूत्रमनुवृत्तिः, वृत्तिः, उदाहरणानि, प्रत्युदाहरणानि च शङ्कासमा-धाननिर्देशपुरःसरमुपलभ्यन्ते, अत्र च प्रौढतया तत्प्रतिपादनं वर्तते ।

---

* विस्तरशस्त्वस्मिन् विषये सामान्येन व्याकरणस्येतिहासविषये च सर्वमपि ज्ञातव्यं, महावैयाकरण श्री० पं० युधिष्ठिरमीमांसककृत 'संस्कृत व्याकरणशास्त्र का इतिहास' इति नामके बहुमूल्यसामग्रीसंयुतपूर्वग्रन्थे द्रष्टव्यम् ।

( ३ ) काशिकावृत्तावुदाहरणानि प्राचीनानि क्रमागतान्येवोपलभ्यन्त इत्यप्यस्या वैशिष्ट्यं येन परम्पराया रक्षाऽपि जायते ।

( ४ ) सन्त्यस्यां वृत्तौ कतिपयानि स्थलानि महाभाष्यविरुद्धानि, सत्यप्येवमस्या उपपत्तिर्बहुशोभना वर्तते ।

( ५ ) साक्षाद् भाष्यविरुद्धानि स्थलानि स्वल्पसंख्यकान्येव सन्ति, भाष्यानुक्तानामनेकविषयाणां प्रतिपादनमत्र काशिकायामन्यव्याकरणग्रन्थेभ्योऽपि दृश्यते ।

( ६ ) काश्यां विरचनात् काशिकेति सञ्ज्ञाऽभूत् ।

( ७ ) काशिकायाः प्राचीनासु वृत्तिषु क्षुभ्नादिषु गणपाठो नासीत्, अस्यां यथा- स्थानमुपलभ्यते ।

( ८ ) सूत्राणां व्याख्या प्राचीनवृत्तीनामाधारेण बहुषु सूत्रेषूपलभ्यते, तेन च तासां वृत्तीनामर्थप्रकारस्य च ज्ञानमपि जायते ।

काशिकायाः पूर्ववर्तिनीनामार्षवृत्तीनामभावेऽस्या आर्षत्वरहितायाः आश्रयणं दुर्निवारमित्यपि बोध्यम् । ऐतिहासिकसामग्रीदृष्ट्याऽप्ययं ग्रन्थोऽतीव मूल्यवानित्यैतिहासिकविदुषां मतम् । तद्धितविषयमवलम्ब्यैतस्मिन् ग्रन्थे गम्भीरानुशीलनस्य महत्यावश्यकताऽनुभूयते ।

## काशिकाव्याख्याग्रन्थाः

अस्या वृत्तेर्व्याख्यारूपौ द्वौ ग्रन्थौ स्तः । प्रथमस्तत्राचार्यजिनेन्द्रबुद्धिकृत ( सम्वत् ७८२–८०७ वि० ) 'काशिकाविवरणपञ्जिका' न्यासो वाऽपरनामको ग्रन्थोऽस्ति । स चाचार्यजिनेन्द्रबुद्धिः मामाणिको बौद्धाचार्य आसीत् । ग्रन्थोऽयं काशिकाऽध्येतृणां कृते महानुपकारकः, अध्यापकेभ्यश्चापि गम्भीरानुशीलनेऽत्युपयोगी वर्तते । नायं छात्राणां पाठ्यग्रन्थः, अपि तु स्वयमनुशीलन एवोपयुज्यते । अस्य ग्रन्थस्य शैल्यतीव सुमाद्या गम्भीरज्ञानप्रदा च वर्तते । अत एव काशिकाऽध्येतृभ्योऽस्य ग्रन्थस्य महत्यावश्यकता वर्तते । दुर्भाग्यवशादयं ग्रन्थो भारतविभाजने 'पाकिस्तान'–अन्तर्गत–पूर्वबङ्गप्रदेशे 'राजशाही' नगरे 'वरेन्द्ररिसर्चसोसाइटी' इति संस्थाया अधिकारे वर्तते, यत्प्राप्तौ मुद्राविनिमयहेतो र्महत्कष्टमनुभूयतेऽस्माभिर्भारतीयैः संस्थाया वा तस्याः कुप्रबन्धाच्च प्राप्यत इदानीम् । अस्य ग्रन्थस्य पुनर्मुद्रापणस्य महत्यावश्यकता वर्तते, यतो हि तत्रापि समाप्तप्रायोऽयं ग्रन्थ इति श्रूयते ।

अपरश्च—हरदत्तमिश्रेण ( सं० १११५ वि० ) पदमञ्जरीनामकः काशिकाया व्याख्याभूतो ग्रन्थो व्यरचि । ग्रन्थोऽयं प्रौढः प्रायेण कैयटस्याधारेण निर्मितः । ग्रन्थकर्तुः स्वपाण्डित्यप्रदर्शनपर इति हेतोर्न्यास इव नायं छात्राणां कृते तावदुपयुज्यते । काशिकानुशीलने विदुषां कृते समुपयुक्त एव । अस्य ग्रन्थस्यापि ३० त्रिंशद्वर्षेभ्योऽभाव एव वर्तते । एतावान् महोपयोगी ग्रन्थोऽद्यावधि कस्यचित् प्रकाशकस्य

मुद्रणयन्त्रालयस्य वा कृपापात्रतां न प्रापदिति महदाश्चर्यम्। आशास्यते य इमावुभावपि न्यासपदमञ्जरीग्रन्थौ काशिकया सहैव कदाचित् केनापि प्रकाशके मुद्रापयिष्येते॥

काशिकाऽनन्तरं भागवृत्तिरष्टाध्याय्या बहुप्रौढा विस्तृता च वृत्तिरासीत्। एतस्या उद्धरणमात्राण्येवोपलभ्यन्ते, येषु यत्र तत्र काशिकायाः खण्डनमुपलभ्यते मत्रीश्वर-जयन्तभट्ट-केशव-इन्द्रमित्र-मैत्रेयरक्षित पुरुषोत्तमदेव-शरणदेव-अप्पयदीक्षित-नीलकण्ठवाजपेयि-अन्नम्भट्ट ओरम्भट्टप्रभृतिभिराचार्यैर्यैः पाणिनीयसूत्रवृत्तयो निर्मिताः, यासु च कतिपया एवोपलभ्यन्ते। न चासु कापि वृत्तिः काशिकासमका वर्तते। साधारणा एव ताः सर्वाः। तथैव काशिकाग्रन्थस्यापि न्यासपदमञ्जर्यतिरिक्ता बह्व्योऽलघुटीका निर्मिताः, कालवशाच्च न ता उपलभ्यन्ते।

## काशिकापाठः

यावन्त्यपि संस्करणानि काशिकाया उपलभ्यन्ते, सर्वाण्यपि तान्यशुद्धानीति तथ्यं वर्तते। महत्वपूर्णस्यैवम्भूतस्य ग्रन्थस्य प्रामाणिकं परिशोधितं संस्करणं स्यादित्यत्र नास्ति कस्यापि विवादावसरः।

काशिकायाः पाठस्यास्यवस्था स्वतिचिरादेवोपलभ्यते। अत एव न्यासकारेण "निकुरि" सूत्रस्य व्याख्यान उच्यते—

"अन्ये तूत्तरसूत्रे कणिताश्वो रणिताश्व इत्यनन्तरमनेन ग्रन्थेन भवितव्यम्। इह तु दुर्विन्यस्तकाकपदजनितभ्रान्तिभिः कुलेखकैर्लिखितमिति वर्णयन्ति" (न्यास। अ० १।१।४ पृष्ठ ४६)।

अनेनैतत् स्पष्टं विज्ञायते यत् काशिकाग्रन्थस्य पाठो न्यासकृतोऽपि पूर्वं व्यस्त उपलभ्यते।

न्यासपदमञ्जर्योः काशिकायाः पाठान्तराणि यत्र तत्रोपलभ्यन्ते। तद्यथा-उदात्तयणो, हल्पूर्वात्"

" (अष्टा० ६।१।१७४) सूत्रस्य प्रत्युदाहरणे—

'हल्पूर्वादिति किम्? बहुनावा ब्राह्मण्या"

अत्र शुद्धपाठस्तु "बहुतितवा ब्राह्मण्या" इति वर्तते। पाठस्य व्यस्ततैतावतैव सुव्यक्ता, किमधिकेन॥

## वर्तमानं संस्करणम्

अष्टाध्यायीपठनपाठनस्य क्रमोऽद्यत्वे कतिपयवर्षेभ्यः पुनः प्रचलितः। सर्वैर्लघु-मध्य-सिद्धान्तकौमुद्यध्येतृभिरप्यनुभूयत इदानीं यत्सूत्राणामर्थज्ञानाय क्रमज्ञानस्यैककालमेव महत्यावश्यकता वर्तते (अस्माकं मते तु क्रमज्ञानस्यानिवार्य-

वर्तते )। तेनैव च सूत्रार्थो बुद्धौ स्थिरीभवितुमर्हति, अतो मूलाष्टाध्याय्यास्तथा व्याख्याग्रन्थस्य चाप्यनिवार्यता दुर्निवारा। तत्र चाष्टाध्यायीसूत्राणां व्याख्यारूपः प्रामाणिकः प्रौढश्च ग्रन्थः काशिकामन्तरो नान्यः कश्चिदुपलभ्यत इत्यत्र नास्ति कस्यापि विवादावसरः। एतस्मात् कारणात् काशिकाग्रन्थस्य महत्यावश्यकतेदानीं सर्वैरनुभूयते, न च प्राप्यते केनापि मूल्येनेति कारणादध्येतारो व्याकुलीभूता दरीदृश्यन्ते।

एतत् सर्वमभिलक्ष्य काशीस्थचौखम्बाप्रकाशनाध्यक्षेण श्रीजयकृष्णदासश्रेष्ठिना काशिकाया नवीनमिदं संस्करणं प्रकाशितम्। अनेन चैते महानुभावाः सर्वेषामप्यस्माकं संस्कृतप्रणयिनां विशेषतस्तु व्याकरणाध्येतॄणामध्यापकानाञ्च धन्यवादार्हा आशीर्वादभाजश्च सन्ति यत् तैर्ग्रन्थमिमं प्रकाशयद्भिरध्येतॄणां कृते महानुपकारः सम्पादि। काशिकाग्रन्थाभावे तु व्याकरणाध्येतॄणां सर्वेषामपि महानध्ययनोत्सादोऽभविष्यत्।

ग्रन्थस्य पूर्वार्द्धमुद्रणानन्तरमेवायं पूर्वार्द्धभागोऽस्माभिः क्वचित् क्वचिद् दृष्टः। मुद्रणाशुद्धीनां पूर्वार्द्धभागे यद्यपि बाहुल्यं विद्यते, तथाप्युत्तरभागो संशोधने विशेषो यत्नः कृतः। पुनरप्यस्य सम्पूर्णग्रन्थस्य शुद्धाशुद्धपत्रनिर्देशस्यावश्यकता वर्तते। तदर्थञ्च स्थालीपुलाकन्यायेन किञ्चित् प्रदर्श्यते—

पृष्ठ ६३ पं० १४ "वृषभ्याम्" इति स्थाने "वृषाभ्याम्" इति भवितव्यम्।

पृष्ठ ६४ पं० १२ "कृन्तये" इति स्थाने "कृतये" इति भवितव्यम्।

पृष्ठ ८४ पं० ३ "समृद्धिर्मद्राणाम्—सुमद्र, सुमुद्र, सुमगन्धं वर्तते" इति स्थाने "समृद्धिर्मद्राणाम्—सुमद्रं, सुमगधं वर्तते" इत्येव साधुः पाठः।

यदि प्रकाशका अस्य ग्रन्थस्य पुनः संशोधनं विद्वद्भिः कारयित्वा ग्रन्थस्यान्ते पृथग् वा शुद्धिपत्रं प्रकाशयेयुस्तदा महानुपकारः स्यात्। सर्वेऽप्युदारधियो विद्वांसः प्रार्थ्यन्ते यदस्य ग्रन्थस्याशुद्धीनामुल्लेखः प्रकाशकानामन्तिकेऽवश्यमेव प्रेषणीयः। येनास्य ग्रन्थस्य संशोधनं न्यूनातिन्यूनमग्रिमसंस्करणे त्ववश्यमेव सम्पद्येत। काशिकाग्रन्थस्य वर्तमानं संस्करणं सत्वरमेव समाप्नुयाद्, येनाग्रिमसंस्करणमतीव संशोधितं प्रकाशयितुं शक्येतेत्याशास्महे॥

मोतीझील बनारस नं० ६<br>
श्रावण शुक्ल ७ सं० २००९<br>
२९-७-१९५२

विदुषां वशंवदः—<br>
ब्रह्मदत्तो जिज्ञासुः

श्रीगणेशाय नमः ।

## पाणिनीयसूत्रवृत्तिः—

# काशिका

वृत्तौ[1] भाष्ये[2] तथा धातुनामपारायणादिषु[3] ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥ १ ॥
इष्टॺुपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं 'काशिका' नाम ॥ २ ॥
व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्यमेतावत्[5] ।
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण ॥ ३ ॥

केषां शब्दानाम्? । लौकिकानां वैदिकानां च । कथमनुशासनम्? प्रकृत्यादिविभागकल्पनया सामान्यविशेषवता लक्षणेन । अथ किमर्थो वर्णानामुपदेशः? । प्रत्याहारार्थः । प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः ।

---

१. सूत्रार्थप्रधानो ग्रन्थो वृत्तिः । सा च कुणिप्रभृतिभिर्विरचिता ।

२. आक्षेपसमाधानपरो ग्रन्थो भाष्यम् । तच्च पतञ्जलिप्रणीतम् ।

३. धातुनामपारायणादिष्विति । यत्र धातुप्रक्रिया तद्धातुपारायणम् । यत्र गणशब्दानां निर्वचनं तन्नामपारायणम् । आदिशब्देन शिक्षोणादिनिघण्ट्वादेर्ग्रहणम् ।

४ सारसङ्ग्रहप्रकारमेव दर्शयति—इष्टीति । सूत्रेणासंगृहीतं लक्ष्यं येन संगृह्यते तदुपलक्षणमिष्टयुपसङ्ख्यानग्रहणम् । तेन वक्तव्यादीनामपि ग्रहणम् । तद्युक्ता । शुद्धगणेति । गणशुद्धियुक्ता । तच्छुद्धिप्रकारश्च "लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि" इत्यादिना मूले प्रदर्शित एव । व्युत्पन्नरूपसिद्धिरिति । उदाहृतशब्दरूपं यथा सिध्यति तथा व्युत्पत्तिप्रदर्शिकेति ।

५. 'कृत्यम्' इति पदमंजरीसम्मतः पाठः । न्यासे तु तृतीयं पद्यं न दृश्यते । द्वितीयमपि शाखान्ते विवृतं इत्युक्तम् ।

अ इ उ ण् ॥ १ ॥

अ इ उ इत्यनेन क्रमेण वर्णानुपदिश्यान्ते णकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवन्येकेन "उरण् रपर" ( अ० सू० १।१।५१ ) इत्यकारेण । ह्रस्वमवर्णं प्रयोगे संवृतम् । दीर्घप्लुतयोस्तु विवृतत्वम् । तेषां सावर्ण्यप्रसिद्ध्यर्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते । तस्य (१) प्रयोगार्थम् "अ अ इति" ( अ० सू० ८।४।६८ ) शास्त्रान्ते प्रत्यापत्तिः (२) करिष्यते ।

ऋ ऌ क् ॥ २ ॥

ऋ ऌ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ककारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः । "अकः सवर्णे दीर्घः" ( अ० सू० ६।१।१०१ ) इत्यकारेण । "इको गुणवृद्धी" ( अ० सू० १।१।३ ) इतीकारेण । "उगितश्च" ( अ० सू० ४।१।५ ) इत्युकारेण । अकारादयो वर्णाः प्रचुरप्रयोगविषयास्तेषां सुज्ञानमुपदेशे प्रयोजनम् । ऌकारस्तु क्लृपिस्थ एव प्रयुज्यते, क्लृपेश्च "पूर्वत्रासिद्धम्" ( अ० सू० ८।२।१ ) इति लत्वमसिद्धम् । तस्यासिद्धत्वाद् ऋकार एव अच्कार्याणि भविष्यन्तीति किमर्थं ऌकार उपदिश्यते ? लत्वविधानाद्यानि पराण्यच्कार्याणि तानि ऌकारे यथा स्युरिति । कानि पुनस्तानि । प्लुतः, स्वरितो, द्विर्वचनम् । क्लृ३प्तशिख प्रक्लृप्तः । क्लृप्तः । क्लृप्तवानिति । यथाशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते । तत्स्थस्यापि ऌकारस्याच्कार्यप्रतिपत्त्यर्थं ऌकारोपदेशः क्रियते । 'ऋतक' इति प्रयोक्तव्ये अशक्तिजैकल्यात् कुमारी 'ऌतक' इति प्रयुङ्क्ते, तदन्योऽनुकरोति कुमार्य् ऌतक इत्याह इति ।

ए ओ ङ् ॥ ३ ॥

ए ओ इत्येतौ वर्णावुपदिश्य अन्ते ङकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन(३) । "एङि पररूपम्" ( अ० सू० ६।१।९४ ) इत्येकारेण ।

---

( १ ) तस्य—विवृतस्य, प्रयोगार्थम्—प्रयोगनिवृत्त्यर्थम् ।

( २ ) स्वरूपात् प्रच्युतस्य पुनस्तत्प्राप्तिः प्रत्यापत्तिः ।

( ३ ) एकेनेति । ननु "षिद्गौरादिभ्यश्च" "स्यादिवर्तिस्त्यात्तभ्यो ङि" इत्यादिष्वकारेण ग्रहणसम्भवात्कथमेकेनेत्युच्यत इति चेत् । न । तत्र प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति-परिभाषया प्रत्ययस्यैवाङो ग्रहणं न तु प्रत्याहाररूपस्य तस्य । प्रत्याख्यानेऽपि व्याख्यानत इत्यादिना अट प्रत्ययस्यैव ग्रहणात् । तत्र व्याख्यानं च प्रत्याहारग्रहणस्य फलाभावरूपम् । अथवा आदिरन्त्येनेत्यत्र अनुदात्तेत्त्वादप्रत्ययपदानवृत्त्या प्रत्ययवोधकशब्दः प्रत्याहाराप्रयोजक इत्यर्थकरणरूपम् । 'सुप्तिङन्तम्' इत्यादिषु न दोषः । तत्र तत्साहचर्यात्सुप् प्रत्याहारस्यैव ग्रहणात् । एवं सर्वत्र । 'इङश्च' 'इङ् धातौ' इत्यादिष्वपि न एकारेण प्रत्याहारः । इको झलिति कित्त्वविधानात् । धातुसाहचर्याच्च । एवं सर्वत्र । विस्तरस्तु पदमञ्जर्यादिषु द्रष्टव्यः ।

## ऐ औ च् ॥ ४ ॥

ऐ औ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते चकारमित करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति चतुर्भिः । "अच परस्मिन् पूर्वविधौ" ( अ० सू० १।१।५७ ) इत्यकारेण । "इच एकाचोऽम् प्रत्ययवच्च" ( अ० सू० ६।३।६८ ) इति इकारेण । "एचोऽयवायाव" ( अ० सू० ६।१।७८ ) इति एकारेण । "वृद्धिरादैच्" ( अ० सू० १।१।१ ) इति ऐकारेण ।

प्रत्याहारेऽनुबन्धाना कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति तच्छायानुकारिणो हि ते, न पुनस्त एव । पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः । *वृद्धिविधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्* । वृद्धिधौ ऋकारग्रहणम् । आनृधतुः, आनृधु । लादेशे ऋकारग्रहणम् । क्लृप्त , क्लृप्तवान् । विनामे ऋकारग्रहणम् । कर्तॄणाम् ।

## ह य व र ट् ॥ ५ ॥

ह य व र इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते टकारमित करोति प्रत्याहारार्थम् । तस्य ग्रहण भवत्येकेन । "शश्छोऽटि" ( अ० सू० ८।४।६३ ) इत्यकारेण । अथ रेफो यकारात्पर उपदिश्यते । तस्य यर्ग्रहणेन यय्ग्रहणेन च ग्रहणे सति स्वर्नयति प्रातर्नयतीत्यत्र "यरोऽनुनासिकेऽनुनासिको वा" ( अ० सू० ८।४।४५ ) इति अनुनासिक प्राप्नोति । भद्रह्रदो भद्रह्रद इत्यत्र द्विर्वचन प्राप्नोति "अचो रहाभ्या द्वे" ( अ०सू० ८।४।४६ ) इति । कुण्ड रथेन वन रथेनेत्यत्र "अनुस्वारस्य ययि परसवर्ण" ( अ० सू० ८।४।५८ ) इति परसवर्ण प्राप्नोति । नैष दोष । आकृतौ पदार्थे समुदाये 'सकृल्लक्ष्ये लक्षण प्रवर्तत' इत्येतस्मिन् दर्शने "यरोऽनुनासिकेऽनुनासिको वा" ( अ० सू० ८।४।४५ ) अन्तरतमो भवतीत्येवमेतत्प्रवर्तते । तदनेन गकारादीना ङकारादयो ये यथा स्व स्थानतो गुणतश्चान्तरतमास्ते सर्वे विहिता । ये तु न स्थानतो नापि गुणत स्थानमात्रेण गुणमात्रेण वा अन्तरतमास्ते सर्वे निवर्तिता इति स्थानमात्रान्तरतमो रेफस्य णकारो न भवति । द्विर्वचनेऽपि रेफस्य यरन्तर्भावे सति यर्कार्यत्व प्राप्त तत्साहचर्याच्छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफ । "अनुस्वारस्य ययि परसवर्ण" ( अ० सू० ८।४।५८ ) इत्येतदप्यनुस्वारान्तरतम सकृदेव परसवर्णं विदधाति । न च रेफस्यानुस्वारान्तरतम सवर्णोऽस्तीति न, भविष्यति कुण्ड रथेन वन रथेनेत्यत्र । अटा मध्ये विसर्जनीयजिह्वामूलीयोपध्मानीयानामप्युपदेश कर्तव्य । किं प्रयोजनम् । उर≍केण । उर केण । उर≍पेण । उर पेण । अत्राड्व्यवाय इति णत्वं यथा स्यादिति ।

## ल ण् ॥ ६ ॥

ल इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते णकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभिः । "अणुदित्सवर्णस्य चाप्रत्ययः" ( अ० सू० १।१।६९ ) इत्यकारेण । "इण्को." ( अ० सू० ८।३।५७ ) इतीकारेण । "इको यणचि" ( अ० सू० ६।१।७७ ) इति यकारेण । इण्ग्रहणानि सर्वाणि परेण णकारेण, अण्ग्रहणानि तु पूर्वेण । "अणुदित्सवर्णस्य चाप्रत्ययः" ( अ० सू० १।१।६९ ) इत्येतदेकमनेन(१)। अथ किमर्थमण्ग्रहणमेवैतन्न क्रियते । नैव शक्यम् । अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यते । सँय्यन्ता, सँव्वत्सर, यँल्लोकम्, तँल्लोकमित्यत्रानुस्वारस्यानुनासिके यवि परसवर्णे कृते तस्य यर्ग्रहणेन ग्रहणाद् द्विर्वचनं यथा स्यादिति । हकारादिष्वकार उच्चारणार्थो नानुबन्धः । लकारे त्वनुनासिक (२)प्रतिज्ञायते । तेन "उरण् रपरः" ( अ० सू० १।१।५१ ) इत्यत्र प्रत्याहारग्रहणाल्लपरत्वमपि भवति ।

## ञ म ङ ण न म् ॥ ७ ॥

ञ म ङ ण न इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते मकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवति त्रिभि(३) । "पुमः खय्यम्परे" ( अ० सू० ८।३।६ ) इत्यकारेण । "हलो यमां यमि लोपः" ( अ० सू० ८।४।६४ ) इति यकारेण । "ङमो ह्रस्वादचि ङमुण् नित्यम्" ( अ० सू० ८।३।३२ ) इति ङकारेण । "अमन्ताड्डः" इति ञकारेणापि ग्रहणमस्य दृश्यते(४) । केचित्तु सर्वाण्येतानि प्रत्याहारग्रहणानि मकारेण भवन्त्विति मकारमनुबन्धं प्रत्याचक्षते । तथा तु सति "ङमो ह्रस्वादचि ङमुण् नित्यम्" ( अ० सू० ८।३।३२ ) इत्यत्रागमिनोर्ञमोरभावादागमाभावप्रतिपत्तौ प्रतिपत्तिगौरवं भवति ।

## झ भ ञ् ॥ ८ ॥

झ भ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ञकारमितं करोति प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन, "अतो दीर्घो यञि" ( अ० सू० ७।३।१०१ ) इति यकारेण ।

---

( १ ) 'इत्येकमनेन' इति न्यासधृत पाठः । 'इत्येतदेकमपरेण' इति पदमञ्जरीपाठः ।

( २ ) 'इत्मशक' इति पाठान्तरम् ।

( ३ ) त्रिभिरिति । नन्वनुपदमेवोच्यते "अमन्ताड्डः" ञकारेणापि ग्रहणमस्य दृश्यते इति तर्हि त्रिभिर्ग्रहणं कथं प्रोच्यते इति चेत् । न, । अष्टाध्यायीपाणिनितन्त्रकाः ग्रहणमित्यभिप्राय तत्। अत एव यमिर्नमन्तां वत्यत्रापि दृश्यत इति ।

( ४ ) "सृजिदृशोर्झल्यमकिति" इत्यत्र न प्रत्याहारस्यामूपदस्य ग्रहणम्, किन्त्वागमस्य । "साक्षाद्द्रष्टरि" इति निर्देशात् । अथवा "आदिरन्त्येनेत्यत्रानुवृत्तस्य 'अप्रत्यय' पदस्य ग्रयकारोत्तरार्थवदविधीयमानार्थकरणात् । अत्र 'अम्' पदं च विधीयमानमिति ।

घ ढ ध ष् ॥ ९ ॥

घ ढ ध इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति द्वाभ्याम्। "एकाचो बशो भष् झषन्तस्य स्ध्वोः" (अ० सू० ८।२।३७) इति झकारभकाराभ्याम्।

ज ब ग ड द श् ॥ १० ॥

ज ब ग ड द इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति षड्भिः। "भोभगोअघोअपूर्वस्य योऽशि" (अ० सू० ८।३।१७) इति अकारेण। "हशि च" (अ० सू० ६।१।११४) इति हकारेण। "नेड्वशि कृति" (अ० सू० ७।२।८) इति वकारेण। झलां जश् झशि" (अ० सू० ८।४।५३) इति जकारझकाराभ्याम्। "एकाचो बशो भष् झषन्तस्य स्ध्वोः" (अ० सू० ८।२।३७) इति बकारेण।

ख फ छ ठ थ च ट त व् ॥ ११ ॥

ख फ छ ठ थ च ट त इत्येतान् वर्णानुपदिश्यान्ते वकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन "नश्छव्यप्रशान्" (अ० सू० ८।३।७) इति छकारेण। खफग्रहणमुत्तरार्थम्।

क प य् ॥ १२ ॥

क प इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति चतुर्भिः। "अनुस्वारस्य ययि परसवर्णः" (अ० सू० ८।४।५८) इति यकारेण। "मय उञो वो वा" (अ० सू० ८।३।३३) इति मकारेण। "झयो होऽन्यतरस्याम्" (अ० सू० ८।४।६२) इति झकारेण। "पुमः खय्यम्परे" (अ० सू० ८।३।६) इति खकारेण।

श ष स र् ॥ १३ ॥

श ष स इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति पञ्चभिः(१)। यरोऽनुनासिकेऽनुनासिको वा" (अ० सू० ८।४।४५) इति यकारेण। "झरो झरि सवर्णे" (अ० सू० ८।४।६५) इति झकारेण "खरि च" (अ० सू० ८।४।५५) इति खकारेण। "अभ्यासे चर्च" (अ० सू० ८।४।५४) इति चकारेण। "शर्पूर्वाः खयः" (अ० सू० ७।४।६१) इति शकारेण।

ह ल् ॥ १४ ॥

ह इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहण

(१) इरितान्धानुनानुपदेशसामर्थ्यात् "इरितो वा" इति न प्रत्याहार। प्रियस्थिरादिस्वरिति न प्रत्याहार.। भाव्यमानत्वात्प्रादिसाहचर्याच।

भवति षड्भिः । "अलोऽन्त्यात् पूर्व उपधा" ( अ० सू० १।१।६५ ) इति अकारेण । "हलोऽनन्तराः संयोगः" ( अ० सू० १।१।७ ) इति हकारेण । "लोपो व्योर्वलि" ( अ० सू० ६।१।७६ ) इति वकारेण । "रलो व्युपधाद्धलादेः संश्च" ( अ० सू० १।२।२६ ) इति रेफेण । "झलो झलि" ( अ० सू० ८।२।२६ ) इति झकारेण । शल इगुपधादनिटः क्सः" ( अ० सू० ३।१।४५ ) इति शकारेण । अथ किमर्थमुपदिष्टोऽपि हकारः पुनरुपदिश्यते ? । कित्वविकल्पक्सेड्विधयो यथा स्युरिति । स्निहित्वा स्नेहित्वेत्यत्र "रलो व्युपधाद्धलादेः संश्च" ( अ० सू० १।२।२६ ) इति कित्वं वा यथा स्यात् । लिहेर्लिक्षदिति "शल इगुपधादनिटः क्सः" ( अ० सू० ३।१।४५ ) इति क्सो यथा स्यात् । रुदिहि स्वपिहीति वलादिलक्षण इड्यथा स्यात् । अदाग्धाम् । हल्ग्रहणेषु च हकारस्य ग्रहणं यथा स्यात् । यद्येवं ह य व र इत्यत्र तर्हि किमर्थमुपदेश्यते । महाँहि सः(१) इत्यत्राड्ग्रहणेषु चाशग्रहणेषु च ग्रहणं यथा स्यात् । "हशि च" ( अ० सू० ६।१।११४ ) इति हकारस्य ग्रहणं यथा स्यात् । ब्राह्मणो हसति । "हशि च" ( अ० सू० ६।१।११४ ) इति उत्वं यथा स्यात् ।

एकस्मान् ङञणवटा द्वाभ्यां षश्चिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥ इति ।

इति प्रत्याहाराः ।

---

## अथ प्रथमाध्यायस्य प्रथमः पादः ।

### (२) वृद्धिरादैच् ॥ १ ॥

वृद्धिशब्दः संज्ञात्वेन विधीयते प्रत्येकमादैचां वर्णानां सामान्येन तद्भावितानामतद्भावितानां च । तपरकरणमैजर्थं तादपि परस्तपर इति, खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये । आश्वलायनः । ऐतिकायनः । औपगवः । औपमन्यवः । शालीयो, मालीयः । वृद्धिप्रदेशाः "सिचि वृद्धिः परस्मैपदेषु" ( अ० सू० ७।२।१ ) इत्येवमादयः ।

---

( १ ) अत्र 'देवा हसन्ति' इत्युदाहरणं मूले विद्यमानमपि पदमञ्जर्यामयोरदर्शनात्मार्जितिरस्तम् ।

( २ ) त्रिपदमिदं सूत्रम् । समासे समासान्तविधेरनित्यत्वकल्पनापत्तेः । आदैच्छब्दादर्थवाद्धिभक्त्युत्पत्तौ "चो: कुः" इति प्राप्तं तच्च मत्वाद्भार्यते । भत्वं च 'अयस्मयादीनि च छन्दसि' इत्यनेन । छन्दस्त्वं च 'छन्दोवत्सूत्राणि भवन्ति' इति वचनात् । उद्देश्यमनुद्दिश्य विधेयमुदीरयेत् इति नियमस्य त्यागेन विधेयवोधकवृद्धिशब्दपूर्वप्रयोगस्तु मङ्गलार्थः । "वृद्ध्यादीनि" इत्यादिवचनात् ।

## अदेङ्गुणः ॥ २ ॥

गुणशब्दः संज्ञात्वेन विधीयते प्रत्येकमदेङां वर्णानां सामान्येन तद्भावितानामत द्भावितानां च । तपरकरणं त्विह सर्वार्थम् । तरिता, चेता, स्तोता, (१)पचन्ति जयन्ति, अहं पचे । गुणप्रदेशा "मिदेर्गुण" ( अ० सू० ७।३।७२ ) इत्येवमादयः ।

## इको गुणवृद्धी ॥ ३ ॥

परिभाषेयं स्थानिनियमार्था । अनियमप्रसङ्गे नियमो विधीयते । वृद्धिगुणौ स्वसंज्ञया शिष्यमाणाविक एव स्थाने वेदितव्यौ(२) । वक्ष्यति "सार्वधातुकार्द्धधातुकयोः" ( अ० सू० ७।३।८४ ) अङ्गस्य गुण इति । स इक एव स्थाने वेदितव्यः । तरति । नयति । भवति । वृद्धिः खल्वपि । अकार्षीत् । अहार्षीत् । अचैषीत् । अनैषीत् । अलावीत् । अस्तावीत् । गुणवृद्धी (यत्र) स्वसंज्ञया विधीयेते तत्र इक इति एतदुपस्थितं द्रष्टव्यम् । किं कृत भवति । द्वितीया षष्ठी प्रादुर्भाव्यते । मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्विशेष्यते । जुसि सार्वधातुकार्धधातुकाद्गुणेष्विकाङ्ग विशेष्यते । मेद्यते । (३)अचिनवुः । इक इति किम् । आत्सन्ध्यक्षरव्यञ्जनाना मा भूत् । यानम् । ग्लायति । उम्भिता । पुनर्गुणवृद्धिग्रहण स्वसंज्ञया विधाने नियमार्थम् । इह मा भूत् । द्यौः । पन्थाः । सः । इममिति ।

## न धातुलोप आर्धधातुके ॥ ४ ॥

धात्वेकदेशो धातुः(४)तस्य लोपो यस्मिन्नार्धधातुके तदार्धधातुकं धातुलोपं तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः । लोलुवः । पोपुवः । मरीमृजः । लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि विहिते "यङोचि च" ( अ० सू० २।४।७४ ) इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः । धातुग्रहण किम् ? । लूञ् । लविता । रेडसि । पर्णं नये । अनुबन्धप्रत्ययलोपे मा भूत् । रिषेर्हिंसार्थस्य विच्प्रत्ययलोप उदाहरण रेडिति । आर्धधातुक इति किम् ? । त्रिधा बद्धो वृषभो रोरवीति । सार्वधातुके मा भूत् । इक इत्येव । अभाजि । रागः । बहुव्रीहिसमाश्रयणं किम् ! क्नोपयति, प्रेद्धम(५) ।

---

( १ ) अत्र 'पचति' 'जयति' इति मूलमुद्रित पाठोऽशुद्ध एव तत्स्थाने 'पचन्ति' 'जयन्ति' इति पदमञ्जरी पाठः । न्यासे तु 'पचति' 'जयति' इति नास्त्येव, तत्स्थाने 'पठन्ति' 'पठन्' इत्युदाहरणे । ( २ ) 'भवत इति वेदितव्यम्" इति पाठ क्वचित्

( ३ ) 'गुणवृद्धी" इत्यादि "अचिनवु" इत्यन्त पाठ प्रायो नोपलभ्यते ।

( ४ ) अस्मिन् सूत्रे धातुपदेन धात्वेकदेश स्वीक्रियते । कृत्स्नधातुलोपे तु गुणवृद्ध्यो प्राप्तेरभाव एव । तस्माद्धातुपदम्धात्वेकदेशपरम् । तदाह—धात्वेकदेशो धातुरिति ।

( ५ ) अत्र 'बहुव्रीहि' इत्यारभ्य 'प्रेद्धम्" इत्यन्त पाठ न्यासग्रन्थादात्ताकृतः पदमञ्जर्यां त्वेतन्न दृश्यते ।

क्ङिति च ॥ ५ ॥

निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी(१) प्राप्नुतस्ते न भवत । चित । चितवान् । स्तुत । स्तुतवान् । भिन्न । भिन्नवान् । मृष्ट । मृष्टवान् । ङिति खल्वपि । चिनुत । चिन्वन्ति । मृष्ट । मृजन्ति । गकारोऽप्यत्र चर्वभूतो निर्दिश्यते । 'ग्लाजिस्थश्च क्स्नु' (अ० सू० ३।२।१३९) जिष्णु । भूष्णु । इक इत्येव । कामयते । लैगवायन । अमृजन्जादौ सङ्क्रमे विभाषा वृद्धिरिष्यते । सङ्क्रमो नाम गुणवृद्धिप्रतिषेधविषय । परिमृजन्ति । परिमार्जन्ति । परिमृजन्तु । परिमार्जन्तु । लघूपधगुणस्याप्यत्र प्रतिषेध । अचिनवमसुनवमित्यादौ एकारस्य सत्यपि ङित्वे यासुटो ङिद्वचन ज्ञापक, ङिति यत्कार्य तल्लकारे ङिति न भवतीति ।

दीधीवेवीटाम् ॥ ६ ॥

दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवत । आदीध्यनम् । आदीध्यक । आवेव्यनम् । आवेव्यक । इट खल्वपि । म कणिता, श्वो रणिता । वृद्धिरिटो न सम्भवतीति लघूपधगुणस्यात्र प्रतिषेध ।

हलोऽनन्तरा सयोग ॥ ७ ॥

भिन्नजातीयैरज्भिरव्यवहिता श्लिष्टोच्चारिता हल सयोगसञ्ज्ञा भवन्ति समुदाय सञ्ज्ञी । जातौ चेद् बहुवचन तेन द्वयोर्बहूना च सयोगसञ्ज्ञा सिद्धा भवति । अग्निरिति गनौ । अश्व इति शवौ । कर्णं इति रणौ । इन्द्रश्चन्द्रो मन्द्र इति नदरा । उष्ट्रो राष्ट्रमाष्ट्रमिति षटरा । तिलान् स्त्यायतीति तिलस्त्यया । नवसस्तरया वा । हल इति किम् । तितउच्छत्रम् । 'सयोगान्तस्य लोप' (अ० सू० ८।२।२३) इति लोप स्यात् । अनन्तरा इति किम् । पचति । पनसम् । 'स्को सयोगाद्यो' (अ० सू० ८।२।२९) इति लोप स्यात् । सयोगप्रदेशा 'सयोगान्तस्य लोप' (अ० सू० ८।२।२३) इत्येवमादय ।

मुखनासिकावचनोऽनुनासिक ॥ ८ ॥

मुखसहिता नासिका मुखनासिका तया य उच्चार्यते वर्ण सोऽनुनासिकसञ्ज्ञो भवति । 'आङोऽनुनासिकश्छन्दसि' (अ० सू० ६।१।१२६) अभ्रआँ अप । गभीर आँ उग्रपुत्रे । घनआँ इन्द्र(२) । मुखग्रहण किम् । अनुस्वारस्यैव हि स्यात् । नासि

(१) क्ङिन्निमित्ते ये गुणवृद्धी इति अनेन गुणवृद्धिविशेषण क्ङिदादीतिन्निमित्तम् । ननु गणत्वात् निषेधस्य विशेषण योग्य गुणाना च परार्थत्वान्निति न्यायान्मिति चेन्न । ईदृशेषु स्थलेष्वस्य न्यायस्याप्रवृत्त सच—

गुण कृतात्मसस्कार प्रधान प्रतिपद्यते । प्रधानस्योपकारे हि तथा भूयसि वर्तते ।

अनया कारिकया स्पष्टीकृतो वेदितव्य

(२) 'अप इति क्वचित्पाठ ।

कग्रहणं किं कचटतपानां मा भूत्। अनुनासिकप्रदेशाः 'आङोऽनुनासिकश्छन्दसि" (अ० सू० ६।१।१२६) इत्येवमादयः।

तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥

तुल्यशब्दः सदृशपर्यायः, आस्ये भवमास्यं ताल्वादिस्थानं, प्रयतनं प्रयत्नः स्पृष्टतादिर्वर्णगुणः। तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति। चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते। स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता चेति। 'अअअ' इति त्रयोऽकारा उदात्तानुदात्तस्वरिताः, प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्वदीर्घप्लुतभेदादष्टादशधा भिद्यन्ते। तथेवर्णः। तथोवर्णः। तथा ऋवर्णः। लृवर्णस्य दीर्घा न सन्ति। तं द्वादशप्रभेदमाचक्षते। सन्ध्यक्षराणां ह्रस्वा न सन्ति तान्यपि द्वादशप्रभेदानि। अन्तःस्था द्विप्रभेदा रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च। रेफोष्मणां सवर्णा न सन्ति। वर्ग्यो वर्ग्येण सवर्णः। दण्डाग्रम्। खट्वाग्रम्। आस्यग्रहणं किं कचटतपानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत्। किं च स्यात्? 'तर्प्ता' 'तर्प्तुम्' इत्यत्र "झरो झरि सवर्णे" (अ० सू० ८।४।६५) इति पकारस्य तकारे लोपः स्यात्। प्रयत्नग्रहणं किम्? इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत्। किं च स्यात्? अश्च्योततीत्यत्र 'झरो झरि सवर्णे" (अ० सू० ८।४।६५) इति शकारस्य चकारे लोपः स्यात्। ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या। होतृऌकारः। होतॄकारः। उभयोर्ऋवर्णस्य चान्तरतम्यात् सवर्णो दीर्घो नास्तीति ऋकार एव दीर्घो भवति। सवर्णप्रदेशाः "अकः सवर्णे दीर्घः" (अ० सू० ६।१।१०१) इत्येवमादयः।

नाज्झलौ ॥ १० ॥

अच्च हल् च अज्झलौ, तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं (१)सवर्णसंज्ञौ न भवतः। अवर्णहकारौ—दण्डहस्तः। इवर्णशकारौ—दधि शीतम्। सवर्णदीर्घत्वं न भवति। वैपाशो मत्स्यः। आनडुहं चर्मेति, "यस्येति च" (अ० सू० ६।४।१४८) इति लोपो न भवति।

ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥

ईत् ऊत् एत् इत्येवमन्तं द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति। अग्नी इति। वायू इति। (२)माले इति। पचेते इति। पचेथे इति। ईदूदेदिति किम्? वृक्षावत्र। प्लक्षा-

---

(१) अत्राज्झलौ केनापि सवर्णौ न भवत इति न वाक्यार्थः। तथा सति संज्ञा नावधया स्यात्। नापि अचामज्भिः सावर्ण्यं निषिध्यते 'नाच्' इति दीर्घनिर्देशासङ्गतेः। नापि हलां हल्भिः। पूर्वसवर्णनिर्देशासङ्गतेः। तस्मादचां हलां परस्परमन्यैव वक्तव्यम्। तदेव वक्ति परस्परमिति।

(२) अत्र न्यासे 'माले' इत्यस्य स्थाने 'खट्वे' इति, 'पचेथे' इत्यस्य स्थाने 'यजेते' इति पाठो दृश्यते। विशेषाभावात् नास्माभिः परिवर्तितः।

अत्र। द्विवचनमिति किम्। कुमार्यत्र। किशोर्यत्र। तपरकरणमसन्देहार्थम्। प्रगृह्यप्रदेशाः "प्लुतप्रगृह्या अचि" (अ० सू० ६।१।१२५) इत्येवमादयः। ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः (१)।

मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम। दम्पतीव जम्पती वरोदसीव॥

## अदसो मात्॥ १२॥

अदसः सम्बन्धी यो मकारस्तस्मात्पर ईदूदतः प्रगृह्यसंज्ञा भवन्ति। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते। एकारस्य नास्त्युदाहरणम्। अदस इति किम्। शम्यत्र। दाडिम्यत्र। मादिति किम्। अमुकेऽत्र।

## शे॥ १३॥

शे इत्येतत्प्रगृह्यसंज्ञं भवति। किमिदं शे इति। सुपामादेशश्छन्दसि। न युष्मे वाजबन्धवः। अस्मे इन्द्राबृहस्पती। युष्मे इति। अस्मे इति। त्वे रायः। मे रायः। त्वे इति। मे इति। छान्दसमेतदेवेकमुदाहरणम्। अस्मे इन्द्राबृहस्पती इति। तत्र तथा पाठात्। इतरत्तु लौकिकमनुकरणम्, युष्मे इति, अस्मे इति, त्वे इति, मे इति।

## निपात एकाजनाङ्॥ १४॥

एकश्चासावच् एकाच्, निपातो य एकाच् आङ्वर्जितः स प्रगृह्यसंज्ञो भवति। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं नु मन्यसे। आ एवं किल तत्। निपात इति किम्, चकारात्र। एकाजिति किम्, प्रागेव चावमीरय। अनाङिति किम्, आ उदकान्तात् ओदकान्तात्।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥

## ओत्॥ १५॥

निपात इति वर्त्तते। तस्यौकारेण तदन्तविधिः। ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति। आहो इति उताहो इति।

## सम्बुद्धौ शाकल्यस्येतावनार्षे॥ १६॥

ओदिति वर्त्तते। सम्बुद्धिनिमित्तो य ओकारः स शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञो भवति इति शब्देऽनार्षे=अवैदिके परतः। वायो इति, वायविति। भानो इति, भानविति। सम्बुद्धाविति किम्, गविन्त्ययमाह। अत्रानुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात्। असत्यर्थवत्त्वे विभक्तिर्न भवति। शाकल्यग्रहणं विभाषार्थम्। इताविति किम्, वायोऽत्र। अनार्ष इति किम्, एता गा ब्रह्मबन्धवित्यब्रवीत्।

---

(१) मणीवेति। नेदं भाष्यकारवार्त्तिककारयोर्वचनम् किन्तु मणीवादीनां निर्वाह कर्त्तव्य इत्यर्थः। निर्वाहप्रकारश्च मणीवोष्ट्रस्य इत्यत्रोपमानार्थकवाशब्दस्य प्रयोगः। 'रोदसीव' इत्यादौ छान्दसत्वान्निर्वाहः।

उञः ॥ १७ ॥

शाकल्यस्येताविति वर्त्तते। उञः प्रगृह्यसंज्ञा भवति इतौ शाकल्यस्याचार्यस्य मतेन। शाकल्यस्येति विभाषार्थम् उ इति। विति ॥

ऊँ ॥ १८ ॥

उञ इति वर्त्तते। उञ इतावनार्षे ऊँ इत्ययमादेशो भवति दीर्घोऽनुनासिकः शाकल्यस्य मतेन प्रगृह्यसञ्ज्ञकश्च। शाकल्यस्य ग्रहणं विभाषार्थमिहाप्यनुवर्त्तते, तेन त्रीणि रूपाणि भवन्ति। उ इति, विति ऊँ इति ॥

ईदूतौ च सप्तम्यर्थे ॥ १९ ॥

शाकल्यस्येतावनार्षे इति निवृत्तम्। ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्त्तमानं प्रगृह्यसञ्ज्ञं भवति। अध्यस्यां मामकी तनू। मामक्यां तन्वामिति प्राप्ते। मामक्या, मामकी इति। तन्वा, तनू इति। सोमो गौरी अधिश्रितः। ईदूताविति किम्, प्रियः सूर्ये प्रियो अग्ना भवाति। अग्निशब्दात्परस्याः सप्तम्या डादेशः। सप्तमीग्रहणं किम्, धीती मती सुष्टुती। धीत्या मत्या सुष्टुत्या इति प्राप्ते। अर्थग्रहणं किम्, वाप्यश्वो नद्यातिः। तपरकरणमसन्देहार्थम् ॥

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत्।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भाव प्रसज्यते ॥ १ ॥
वचनाद्यत्र दीर्घत्वं तत्रापि सप्तमी यदि।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत् ॥ २ ॥

दाधा घ्वदाप् ॥ २० ॥

दारूपाश्चत्वारो धातवो धारूपौ च द्वौ दाप्दैपौ वर्जयित्वा घुसञ्ज्ञका भवन्ति। डुदाञ्, प्रणिददाति। दाण् दाने, प्रणिदाता। दो, प्रणिद्यति। देङ्, प्रणिदयते। डुधाञ्, प्रणिदधाति। धेट्, प्रणिधयति वत्सो मातरम्। अदाविति किम्। दाप् लवने, दातं बर्हिः। दैप् शोधने, अवदातं मुखम्। घुप्रदेशाः—"घुमास्थागापाजहातिसां हलि" (अ० सू० ६।४।६६) इत्येवमादयः (१) ॥

आद्यन्तवदेकस्मिन् ॥ २१ ॥

असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिद्ध्यन्तीत्ययमतिदेश आरभ्यते। सप्तम्यर्थे वतिः। आदाविव अन्त इव एकस्मिन्नपि कार्यं भवति। यथा कर्त्तव्यमित्यत्र प्रत्ययाद्युदात्तत्वं भवति एवमौपगवमित्यत्रापि यथा स्यात्। यथा वृक्षाभ्यामित्यत्रातोऽङ्गस्य दीर्घत्वमेवमाभ्यामित्यत्रापि यथा स्यात्। एकस्मिन्निति किम्, सभासन्नयने भवः साभासन्नयनः। आकारमाश्रित्य वृद्धसञ्ज्ञा न भवति ॥

---

(१) "नेर्गदनदपतपदघुमास्यतीत्येवमादय" इति पाठः क्वचित्।

तरप्तमपौ घ ॥ २२ ॥

तरप् तमप् इत्येतौ प्रत्ययौ घसञ्ज्ञौ भवत । कुमारितरा । कुमारितमा । ब्राह्मणितरा ब्राह्मणितमा । घप्रदेशा "घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्व" ( अ० सू० ६।३।४३ ) इत्येवमादय ॥

बहुगणवतुडति सङ्ख्या ॥ २३ ॥

बहुगणवतुडति(१) इत्येते सङ्ख्यासञ्ज्ञा भवन्ति । बहुकृत्व । बहुधा । बहुक । बहुश । गणकृत्व । गणधा । गणक । गणश । तावत्कृत्व । तावद्धा । तावत्क । तावच्छ । कतिकृत्व । कतिधा । कतिक । कतिश । बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति । सङ्ख्यावाचिनोरेव । भूयादीनां निवृत्त्यर्थं सङ्ख्या सञ्ज्ञा विधीयते ॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्त सङ्ख्यासञ्ज्ञो भवतीति वक्तव्य समासकन्विध्यर्थम् ॥१॥ अर्धपञ्चमशूर्पं । अर्द्धं पञ्चम येषामिति बहुव्रीहौ कृतेऽर्द्धपञ्चमै शूर्पै क्रीत । तद्धितार्थेति समास । तत्र "दिक्सङ्ख्ये सञ्ज्ञायाम्" ( अ० सू० २।१।५० ) इत्यनुवृत्तेस्तत सङ्ख्यापूर्वस्य द्विगुसञ्ज्ञाया "शूर्पादञन्यतरस्याम्" ( अ० सू० ५।१।२६ ) इत्यञ् ठञ् । "अध्यर्द्धपूर्वाद्द्विगो" ( अ० सू० ५।१।२८ ) इति लुक् । अर्द्धपञ्चमक । सङ्ख्याप्रदेशा —"सङ्ख्यापूर्वो द्विगु" ( अ० सू० २।१।१९ ) इत्येवमादाय (२) ।

ष्णान्ता षट् ॥ २४ ॥

स्त्रीलिङ्गनिर्देशात् सङ्ख्येति सम्बध्यते । षकारान्ता नकारान्ता च या सङ्ख्या सा षट्सञ्ज्ञा भवति । षकारान्तास्तावत् षट् तिष्ठन्ति । षट् पश्य । नकारान्ता पञ्च । सप्त । नव दश । अन्तग्रहणमौपदेशिकार्थम् । तेनेह न भवति । शतानि । सहस्राणि । अष्टानामित्यत्र नुट् भवति । षट्प्रदेशा "षड्भ्यो लुक्" ( अ० सू० ७।१।२२ ) इत्येवमादय ।

डति च ॥ २५ ॥

डत्यन्ता या सङ्ख्या सा षट्सञ्ज्ञा भवति । कति तिष्ठन्ति । कति पश्य ॥

क्तक्तवतू निष्ठा ॥ २६ ॥

क्तश्च क्तवतुश्च क्तक्तवतू प्रत्ययौ निष्ठासञ्ज्ञौ भवत । कृत । कृतवान् । भुक्त । भुक्तवान् । ककार कित्कार्यार्थ । उकार उगित्कार्यार्थ । निष्ठाप्रदेशा "श्वीदितो निष्ठायाम्" ( अ० सू० ७।२।१४ ) इत्येवमादय ॥

---

(१) डति इत्येते सङ्ख्यासञ्ज्ञा भवन्तीति । यद्यप्यत्र वतुडती इति प्रत्ययायोर्ग्रहणात् 'सञ्ज्ञाविधौ प्रत्ययग्रहणे' इत्यनया परिभाषया तदन्तग्रहणप्रसक्तं वाप्यत्र तदन्तयोरेव ग्रहणम् । केवलयो प्रत्यययो सञ्ज्ञाविधानेन प्रयोजनं नास्ति, इति ।

(२) "सङ्ख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्" —इत्येवमादय । इति पाठ क्वचित् ।

## सर्वादीनि सर्वनामानि ॥ २७ ॥

सर्वशब्द आदिर्येषां तानीमानि सर्वादीनि सर्वनामसञ्ज्ञानि भवन्ति । सर्वे, सर्वौ, सर्वे सर्वस्मै, सर्वस्मात्, सर्वेषाम्, सर्वस्मिन्, सर्वकः, । विश्व, विश्वौ, विश्वे, विश्वस्मै, विश्वस्मात्, विश्वेषाम्, विश्वस्मिन्, विश्वक. उभ, उभय । उभशब्दस्य सर्वनामत्वे प्रयोजनं "सर्वनाम्नस्तृतीया च" ( अ० सू० २।३।२७ ) इति । उभये, उभयस्मै, उभयस्मात्, उभयेषाम्, उभयस्मिन् । डतर । डतम । कतर, कतम, कतरस्मै, कतमस्मै । इतर, अन्य, अन्यतर । इतरस्मै, अन्यस्मै, अन्यतरस्मै । त्वशब्दोऽन्यवाची, स्वरभेदाद् द्विःपठित. । एक उदात्तो द्वितीयोऽनुदात्त. । केचित् तकारान्तमेकं पठन्ति । त्वद्वदिति द्वावपि चानुदात्तावित्ति स्मरन्ति । नेम, नेमस्मै । वक्ष्यमाणेन जसि विभाषा भवति । नेमे, नेमाः, इति । सम समस्मै । कथ "यथासख्यमनुदेशः समानाम्" ( अ० सू० १।३।१० ) "समे देशे यजेत" इति । समस्य सर्वशब्दपर्यायस्य सर्वनामसञ्ज्ञेष्यते न सर्वत्र । सिम, सिमस्मै । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तर बहिर्योगोपसंव्यानयोः । त्यद् । तद् । यद् । एतद् । इदम् । (१)अदस् । एक । द्वि । युष्मद् । अस्मद् । भवतु । किम् । सर्वादि. ॥ सर्वनामप्रदेशाः—"सर्वनाम्न. स्मै" (अ० सू० ७।१।१४) इत्येवमादयः ॥

## विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥

"न बहुव्रीहौ" ( अ० सू० १।१।२९ ) इति प्रतिषेध वक्ष्यति तस्मिन्नित्ये प्रतिषेधे प्राप्ते विभाषेयमारभ्यते । दिशां समासो दिक्समासो दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसञ्ज्ञानि भवन्ति । उत्तरपूर्वस्यै, उत्तरपूर्वायै । दक्षिणपूर्वस्यै, दक्षिणपूर्वायै, । दिग्ग्रहण किम्, "न बहुव्रीहौ" ( अ० सू० १।१।२९ ) इति प्रतिषेधं वक्ष्यति तत्र न ज्ञायते क्व विभाषा क्व प्रतिषेध इति । दिग्ग्रहणे पुन' क्रियमाणे ज्ञायते दिगुपदिष्टसमासे विभाषाऽन्यत्र प्रतिषेध इति । समासग्रहण किम्, समास एव यो बहुव्रीहिस्तत्र विभाषा यथा स्यात् । बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्, दक्षिणदक्षिणस्यै देहि । बहुव्रीहाविति किम्, द्वन्द्वे विभाषा मा भूत्, दक्षिणोत्तरपूर्वाणामिति । "द्वन्द्वे च" (अ० सू० १।१।३१) इति नित्य प्रतिषेधो भवति ॥

## न बहुव्रीहौ ॥ २९ ॥

सर्वनामसञ्ज्ञायां तदन्तविधेरभ्युपगमाद् बहुव्रीहेरपि सर्वाद्यन्तस्य सञ्ज्ञा स्यादिति प्रतिषेध आरभ्यते । बहुव्रीहौ समासे सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति । प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय । इह च त्वत्कपितृको मत्कपितृक इत्यकच न भवति । बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वमात्रेऽपि प्रतिषेधो यथा स्यात् । वस्त्रान्तरवसनान्तरा इति ॥

---

( १ ) पण्डितपत्रमुद्रिते अदस् शब्दानन्तरम् इदम् शब्दस्य पाठ. ।

तृतीयासमासे ॥ ३० ॥

तृतीयासमासे सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति। मासपूर्वाय, सवत्सरपूर्वाय, द्व्यहपूर्वाय, त्र्यहपूर्वाय। समास इति वर्त्तमाने पुनः समासग्रहणं तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात्। मासेन पूर्वाय। "पूर्वसदृशसमोनार्थ" (अ० सू० २।१।३१) इति तृतीयासमासं प्रतिपदं वक्ष्यति तस्येदं ग्रहणं न यस्य कस्य चित्तृतीयासमासस्य "कर्तृकरणे कृता बहुलम्" (अ० सू० २।१।३२) इति। त्वयका कृतम्, मयका कृतम्।

द्वन्द्वे च ॥ ३१ ॥

द्वन्द्वे च समासे सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति। पूर्वापराणाम्, कतरकतमानाम्।

विभाषा जसि ॥ ३२ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषाऽऽरभ्यते। द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसञ्ज्ञानि न भवन्ति। कतरकतमे, कतरकतमाः जसः कार्यं प्रति विभाषाऽकज् हि न भवति, कतरकतमकाः।

प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च ॥ ३३ ॥

विभाषाजसीति वर्त्तते। द्वन्द्व इति निवृत्तम्। प्रथम, चरम, तय, अल्प, अर्द्ध, कतिपय, नेम, इत्येते जसि विभाषा सर्वनामसञ्ज्ञा भवन्ति। प्रथमे, प्रथमाः। चरमे, चरमाः। द्वितये, द्वितयाः। अल्पे, अल्पाः। अर्धे, अर्धाः। कतिपये, कतिपयाः। नेमे, नेमाः। तय इति तयप्प्रत्ययः। शिष्टानि प्रातिपदिकानि। तत्र नेम इति सर्वादिषु पठ्यते तस्य प्राप्ते विभाषा, अन्येषामप्राप्ते। उभयशब्दस्य तयप्प्रत्ययान्तस्य गणे पाठान्नित्या सर्वनामसञ्ज्ञा इहापि जस्कार्यं प्रति विभाषा। काकचोर्यथायोगं वृत्तिः।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् ॥ ३४ ॥

पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येतेषां गणे पाठात्पूर्वेण नित्यायां सर्वनामसञ्ज्ञायां प्राप्तायां जसि विभाषाऽऽरभ्यते पूर्वादीनि विभाषा जसि सर्वनामसञ्ज्ञानि भवन्ति व्यवस्थायामसञ्ज्ञायाम्। स्वाभिधेयापेक्षावधिनियमो व्यवस्था(१)। पूर्वे पूर्वाः। परे पराः। अवरे, अवराः। दक्षिणे, दक्षिणाः उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधराः। व्यवस्थायामिति किम्, दक्षिणा इमे गाथकाः, प्रवीणा इत्यर्थः। असञ्ज्ञायामिति किम्, उत्तराः कुरवः। सत्यामेव व्यवस्थायामियं तेषां सञ्ज्ञा।

स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

अत्रापि नित्या सर्वनामसञ्ज्ञा प्राप्ता जसि विभाष्यते। स्वमित्येतच्छब्दरूपं जसि

(१) अत्र स्वाभिधेयापेक्षावधिनियम इति पाठो योग्यः स्वाभिधेयापेक्षाऽवधारितपाठः क्वचिदुपलभ्यते स चासमञ्जस इति कृत्वा परित्यक्तः।

विभाषा सर्वनामसञ्ज्ञं भवति न चेज्ज्ञातिधनयोः सञ्ज्ञारूपेण वर्तते । स्वे पुत्राः, स्वाः पुत्राः । स्वे गावः, स्वा गावः । आत्मीया इत्यर्थः । ज्ञातिप्रतिषेधः किम्,

(१) धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव सहताः ।
उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ॥

अधनाख्यायामिति किम्, प्रभूताः स्वा न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते । प्रभूतानि धनानीत्यर्थः ।

## अन्तरं बहिर्योगोपसव्यानयोः ॥ ३६ ॥

अत्रापि पूर्वेण नित्या सर्वनामसञ्ज्ञा प्राप्ता सा जसि विभाष्यते । अन्तरमित्येतच्छब्दरूपं विभाषा जसि सर्वनामसञ्ज्ञं भवति बहिर्योगे उपसव्याने च गम्यमाने । अन्तरे गृहाः, अन्तरा गृहाः । नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते । अन्तरे शाटकाः, अन्तराः शाटकाः । उपसव्यानं परिधानीयमुच्यते, न प्रावरणीयम् । बहिर्योगोपसव्यानयोरिति किम्, अनयोर्ग्रामयोरन्तरे तापसः प्रतिवसति, तस्मिन्नन्तरे शीतान्युदकानि । मध्यप्रदेशवचनोऽन्तरशब्दः । गणसूत्रस्य चेदं प्रत्युदाहरणम् । ॐअपुरीति च वक्तव्यम् ॥ अन्तरायां पुरि वसति । ॐविभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसञ्ज्ञोपसङ्ख्यानम्ॐ ॥ द्वितीयाय, द्वितीयस्मै । तृतीयाय, तृतीयस्मै ।

## स्वरादिनिपातमव्ययम् ॥ ३७ ॥

स्वरादीनि शब्दरूपाणि निपाताश्चाव्ययसञ्ज्ञानि भवन्ति । स्वर् । अन्तर् । प्रातर् । एतेऽन्तोदात्ताः पठ्यन्ते । पुनर् आद्युदात्तः । सनुतर् उच्चैस् । नीचैस् । शनैस् । ऋधक् । आरात् । ऋते । युगपत् । पृथक् । एतेऽपि सनुतरप्रभृतयोऽन्तोदात्ताः पठ्यन्ते । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । आविस् । अवस् । अधस् । समया । निकषा । स्वयम् । मृषा । नक्तम् । नञ् । हेतौ । अद्धा । इद्धा । सामि एतेऽपि ह्यस्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते । वत् । वदन्तमव्ययसञ्ज्ञं भवति । ब्राह्मणवत् । क्षत्रियवत् । सन् । सनात् । सनत् । तिरस् । एते आद्युदात्ताः पठ्यन्ते । अन्तरा अयमन्तोदात्तः । अन्तरेण । ज्योक् । कम् । शम् । सना । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मुधा । मिथ्या । क्त्वातोसुन्कसुनः, कृन्मकारान्तः, सन्ध्यक्षरान्तोऽव्ययीभावश्च । पुरा । मिथो । मिथस् । प्रबाहुकम् । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । समम् । नमस् । हिरुक् । तसिलादिस्तद्धित एधाच्पर्यन्तः । शस्तसी । कृत्वसुच् । सुच् । आस्थालौ ।

(१) धूमायन्त इति । यथोल्मुकान्यश्लिष्टानि-असहतानि धूमायन्ते सहतानि तु प्रज्वलन्ति तद्वत् ज्ञातयोऽपीत्यर्थः । स्वशब्दस्यानेकार्थत्वात्प्रकृतार्थज्ञानाय ज्ञातिशब्दस्य प्रयोगः ।

च्व्यर्थाश्च । अम् । आम् । प्रतान् । प्रशान् । स्वरादि । निपाता वक्ष्यन्ते । 'प्रागीश्वरान्निपाता" ( अ० सू० १।४।५६ ) इति । च । वा । ह । अह । एव । एवमित्यादय । अव्ययप्रदेशा "अव्ययादाप्सुप" ( अ० सू० २।४।८२ ) इत्येवमादय ।

(१) सदृश त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

## तद्धितश्चासर्वविभक्ति ॥ ३८ ॥

तद्धितान्त शब्दोऽसर्वविभक्तिरव्ययसंज्ञो भवति । यस्मान्न सर्वविभक्तिरुत्पद्यते सोऽसर्वविभक्ति । तत । यत । तत्र । यत्र । तदा । यदा । सर्वदा । सदा । तद्धित इति किम् ? एक , द्वौ, बहव । असर्वविभक्तिरिति किम् ? औपगव , औपगवौ, औपगवा ।

## कृन्मेजन्त ॥ ३९ ॥

कृद्यो मकारान्त एजन्तश्च तदन्त शब्दरूपमव्ययसंज्ञं भवति । स्वादुङ्कार भुङ्क्ते सम्पन्नङ्कार भुङ्क्ते लवणङ्कार भुङ्क्ते । एजन्त । वक्षे राय । ता वामेषे रथानाम् । क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे । वक्षे इति वचे । 'तुमर्थे सेसेन्' ( अ० सू० ३।४।९ ) इति सेप्रत्यये कृते पत्वे च कृते रूपम् । एषे इति इण से प्रत्यये गुणे पत्वे च कृते रूपम् । जीवसे इति जीवेरसे प्रत्यये रूपम् । दृशे इति दृशे केप्रत्ययो निपात्यते 'दृशे विख्ये च' ( अ० सू० ३।४।११ ) इति । अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । इह मा भूत् । आधये, चिकीर्षवे, कुम्भकारेभ्य इति ।

## क्त्वातोसुन्कसुन ॥ ४० ॥

क्त्वा तोसुन् कसुन् इत्येवमन्त शब्दरूपमव्ययसंज्ञं भवति । कृत्वा, हृत्वा । तोसुन् । पुरा सूर्यस्योदेतोराधेय , पुरा वत्सानामपाकर्तो । 'भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्' ( अ० सू० ३।४।१६ ) इति इण कृञश्च तोसुन्प्रत्यय । कसुन् सृपितृदो कसुन् ( अ० सू० ३।४।१७ ) । पुरा क्रूरस्य विसृपो विरप्शिन् पुरा जतृभ्य आतृद ।

## अव्ययीभावश्च ॥ ४१ ॥

अव्ययीभावसमासोऽव्ययसंज्ञो भवति । किं प्रयोजनम् । लुङ्मुखस्वरोपचारा । लुक् । उपाग्नि, प्रत्यग्नि शलभा पतन्ति । मुखस्वर, उपाग्निमुख प्रत्याग्निमुख । "मुखं स्वाङ्गम्" ( अ० सू० ६।२।१६७ ) इत्युत्तरपदान्तोदात्तत्वं प्राप्त 'नाव्ययदिक्छब्द' ( अ० सू० ६।२।१६८ ) इति प्रतिषिध्यते । तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर

(१) सदृशमिति आथर्वणी श्रुतिरेषा प्रणवविद्याविषायका अव्ययीभावस्य लिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् यन्नव्येतीति यत् यस्मात् न व्येति सत्वधर्मान् गृह्णाति तत् तस्मात् अव्ययमिति । अथवा यच्छब्दस्य रूपं प्रथमान्तम् यन्न व्येति तदव्ययमिति ।

[व भवति । उपचार, उपपय कार, उपपय काम । विसर्जनीयस्थानिकस्य नकारस्य उपचार इति सञ्ज्ञा । तत्राऽव्ययीभावस्याव्ययत्वे "अत कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" ( अ० सू० ८।३।४६ ) इति पर्युदास सिद्धो भवति । सर्वमिद काण्ड स्वरादावपि पठ्यते । पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेनाय कार्यनियम सिद्धो भवति । इह च पुरा सूर्यस्योदेतोराधेय, पुराक्रूरस्य विसृप इति "न लोकाव्ययनिष्ठा" ( अ० सू० २।३।६९ ) इति षष्ठीप्रतिषेधो न भवति ।

## शि सर्वनामस्थानम् ॥ ४२ ॥

शि इत्येतत्सर्वनामस्थानसञ्ज्ञ भवति । किमिद शि इति ? जश्शसो शिरादेश । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य, दधीनि, मधूनि, त्रपूणि जतूनि । सर्वनामस्थानप्रदेशा "सर्वनामस्थाने चासम्बुद्धौ" ( अ० सू० ६।४।८ ) इत्येवमादय ।

## सुडनपुंसकस्य ॥ ४३ ॥

सुडिति पञ्च वचनानि सर्वनामस्थानसञ्ज्ञानि भवन्ति नपुसकादन्यत्र । नपुसके न विधिर्न प्रतिषेधस्तेन जश्शसो सर्वनामस्थानसञ्ज्ञा पूर्वेण भवत्येव । राजा, राजानौ, राजान, राजानम्, राजानौ । सुडिति किम्, राज्ञ पश्य । अनपुसकस्येति किम्, सामनी, वेमनी ।

## न वेति विभाषा ॥ ४४ ॥

नेति प्रतिषेधो वेति विकल्पस्तयो प्रतिषेधविकल्पयोर्विभाषेति सञ्ज्ञा भवति । इतिकरणोऽर्थनिर्देशार्थ । विभाषाप्रदेशेषु प्रतिषेधविकल्पावुपतिष्ठेते । तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्प प्रवर्तते । उभयत्र विभाषा प्रयोजयन्ति । "विभाषा श्वे" ( अ० सू० ६।१।३० ) । शुशाव, शिश्वाय, शुशुवतु, शिश्वियतु । विभाषाप्रदेशा । "विभाषा श्वे" ( अ० सू० ६।१।३० ) इत्येवमादय ।

## इग्यण सम्प्रसारणम् ॥ ४५ ॥

इग्यो यण स्थाने भूतो भावी वा तस्य सम्प्रसारण मित्येषा सञ्ज्ञा भवति । यज—इष्टम् । वप्-उप्तम् । ग्रह गृहीतम् । केचिदुभयथा सूत्रमिद व्याचक्षते । वाक्यार्थ सञ्ज्ञी वर्णश्चेति । इग्यण इति यो वाक्यार्थ स्थान्यादेशसम्बन्धलक्षण स सम्प्रसारण सञ्ज्ञो भवति, यणस्थानिक इग्वर्ण स सम्प्रसारणसञ्ज्ञो भवतीति । तत्र विधौ वाक्यार्थ उपतिष्ठते । "ष्यड सम्प्रसारण" ( अ० सू० ६।१।१३ ) "वसो सम्प्रसारणम्" ( अ० सू० ६।४।१३१ ) इति । अनुवादे वर्ण । "सम्प्रसारणाच्च" ( अ० सू० ६।१।१०८ ) इति । सख्यातानुदेशादिह न भवति, अदुहितरामिति । (१)सम्प्रसारणप्रदेशा । "वसो सम्प्रसारणम्" ( अ० सू० ६।४।१३१ ) इत्येवमादय ।

## आद्यन्तौ टकितौ ॥ ४६ ॥

( १ ) अत्राय पाठ क्वचिदुपलभ्यते 'द्युभ्यामित्यत्र दिव उदिति तपरकरणाद्दीर्घो न' इति ।

आदिष्टिद्भवति अन्तः किद्भवति षष्ठीनिर्दिष्टस्य । लविता, भुन्धो भीषते? टित्प्रदेशाः —"आर्धधातुकस्येड्वलादेः" ( अ० सू० ७।२।३५ ) इत्येवमादयः । कि० "भियो हेतुभये षुक्" ( अ० सू० ७।३।४० ) इत्येवमादयः ।

मिदचोऽन्त्यात्परः ॥ ४७ ॥

अचः इति निर्धारणे षष्ठी । जातौ चेदमेकवचनम् । अचां सन्नि- परो मिद्भवति स्थानेयोगप्रत्ययपरत्वस्यायमपवादः । विरुणद्धि मुञ्चति पयांसि । मित्प्रदेशाः । "रुधादिभ्यः श्नम्" ( अ० सू० ३।१।७८ ) इत्येवमादयः । मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम् । मग्नः, मग्नवान्, मङ्क्ता, मङ्क्तुम् ।

एच इग्घ्रस्वादेशे ॥ ४८ ॥

एचो ह्रस्वादेशे कर्तव्ये इगेव ह्रस्वो भवति नान्यः । रै–अतिरि । नौ–अतिनु । गो–उपगु । एच इति किम् ? अतिखट्वः अतिमालः । ह्रस्वादेश इति किम् ? देवदत्त, दैवदत्त ।

षष्ठी स्थानेयोगा ॥ ४९ ॥

परिभाषेयं योगनियमार्था । इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते सा स्थानेयोगैव भवति नान्ययोगा । स्थाने योगनिमित्तभूते सति(१) सा प्रतिपत्तव्या । स्थानशब्दश्च प्रसङ्गवाची । यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति दर्भाणां प्रसङ्ग इति गम्यते । एवमिहापि अस्तेः स्थाने प्रसङ्गे भूर्भवति, भविता, भवितुम्, भवितव्यम् । ब्रुवः प्रसङ्गे वचिर्भवति । वक्ता, वक्तुम्, वक्तव्यम् । प्रसङ्गे सम्बन्धस्य निमित्तभूते ब्रुव इति षष्ठी । बहवो हि षष्ठ्यर्थाः स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्यास्तत्र यावन्तः शब्दे सम्भवन्ति तेषु सर्वेषु प्राप्तेषु नियमः क्रियते, 'षष्ठी स्थानेयोगा" ( अ० सू० १।१।४९ ) इति, स्थाने योगोऽस्या इति व्यधिकरणो बहुव्रीहिः । अत एव निपातनाच्च सप्तम्या अलुक् ।

स्थानेऽन्तरतमः ॥ ५० ॥

स्थाने प्राप्यमाणानामन्तरतम(२) आदेशो भवति सदृशतमः । कुतश्च शब्दस्यान्तर्यम् । स्थानार्थगुणप्रमाणतः । स्थानतः, "अकः सवर्णे दीर्घः" ( अ० सू० ६।१।१०१ ) दण्डाग्रम्, यूपाग्रम् । द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति ।

---

( १ ) 'स्थानेयोगस्य निमित्तभूते' इति पाठान्तरम्

( २ ) अत्र षष्ठ्यर्थे प्राप्ति तत्र विधिपक्षो न सम्भवति तथाहि–स्वतन्त्रविधिपक्षे दधि, मधु इत्याद्यपि प्राप्नोति । अथ यावदर्थविधानात् स एव प्राप्नोति । अस्तु न दोष इति चेद् तस्याप्यन्य तस्याप्य इति रीत्यानवस्थापातात् । तस्मात् परिभाषापक्ष एव श्रेयान् । स च यत्र स्थानषष्ठी तत्रोपतिष्ठते विधिनैकवाक्यतया च । तदा च विधानकाल एव प्राप्यमाणानामन्तरतम आदेश इत्यर्थो भविष्यति, त इह–प्राप्यमाणेति ।

ः, वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः । पुंवद्भावेनान्तरतमः पुंशब्दो निर्दिश्यते । गुणतः, पाकः, त्यागः, रागः, "चजोः कु घिण्ण्यतोः" (अ० सू० ७।३।५२) इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारो भवति । जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः । प्रमाणतः, अमुष्मै, अमूभ्याम् । "अदसोऽसेर्दादु दो मः" (अ० सू० ८।२।८०) इति ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः । स्थाने इत्यनुवर्तमाने पुनः स्थानेग्रहणं किम्, यत्रानेकमान्तर्यं सम्भवति तत्र स्थानत आन्तर्यं बलीयो यथा स्यात् । चेता, स्तोता । प्रमाणतोऽकारो गुणः प्राप्तस्तत्र स्थानत आन्तर्यादेकारौकारौ भवतः । तमब्ग्रहणं किम्, वाग्घसति, त्रिष्टुब्भसति । "झयो होऽन्यतरस्याम्" (अ० सू० ८।४।६२) इति हकारस्य पूर्वसवर्णे क्रियमाणे 'सोष्मणः सोष्माणः' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्तः' इति तृतीयाः, तमब्ग्रहणाद् ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः ।

## उरण् रपरः ॥ ५१ ॥

उः स्थानेऽण् प्रसज्यमान एव रपरो वेदितव्यः । कर्त्ता, हर्त्ता, किरति, गिरति, द्वैमातुरः, त्रैमातुरः । उरिति किम्, खेयम्, (१)गेयम् । अण् ग्रहणं किम्, "सुधातुरकङ् च" (अ० सू० ४।१।९७) सौधातकिः ।

## अलोऽन्त्यस्य ॥ ५२ ॥

षष्ठीनिर्दिष्टस्य य उच्यते आदेशः सोऽन्त्यस्यालः स्थाने वेदितव्यः । "इद्गोण्याः" (अ० सू० १।२।५०) पञ्चगोणिः दशगोणिः ।

## ङिच्च ॥ ५३ ॥

ङिच्च य आदेशः सोऽनेकालपि अलोऽन्त्यस्य भवति । "आनङ् ऋतो द्वन्द्वे" (अ० सू० ६।३।२५) । होतापोतारौ, मातापितरौ । तातङ् ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वात्सर्वादेशस्तातङ् भवति । जीवतात्भवान्, जीवतात्त्वम् ।

## आदेः परस्य ॥ ५४ ॥

परस्य कार्यं शिष्यमाणमादेरलः प्रत्येतव्यम् । क्व च परस्य कार्यं शिष्यते । यत्र पञ्चमीनिर्देशः । तद्यथा "ईदासः" (अ० सू० ७।२।८३) आसीनोयजते । "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (अ० सू० ६।३।९७) । द्वीपम्, अन्तरीपम्, (२) प्रतीपम्, समीपम् ।

## अनेकाल् शित् सर्वस्य ॥ ५५ ॥

अनेकाल् य आदेशः शिच्च स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति । "अस्तेर्भूः"

(१) गयमित्युदाहरणं न्यासपदमञ्जर्योर्न दृश्यते ।

(२) प्रतीपमिति न्यासपदमञ्जर्योर्न दृश्यते ।

( अ० सू० २।४।५२ )। भविता, भवितुम् , भवितव्यम् । शिल्लक्ष्वपि। "जश्शसोः शि" ( अ० सू० ७।१।२० ) कुण्डानि तिष्ठन्ति, कुण्डानि पश्य।

## स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥

स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोतीत्ययमतिदेश आरभ्यते। स्थानिना तुल्यं वर्तते इति स्थानिवत्। स्थानिवदादेशो भवति स्थान्याश्रयेषु कार्येष्वनल्आश्रयेषु स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा। अनल्विधिरनेकाल्विधिरित्यर्थः। किमुदाहरणम्, धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः। धात्वादेशो धातुवद्भवति, "अस्तेर्भूः" ( अ० सू० २।४।५२ )। "ब्रुवो वचिः" (अ०सू०२।४।५३)। आर्धधातुकविषये प्रागेवादेशेषु कृतेषु धातोरिति तव्यादयो भवन्ति। भविता, भवितुम्, भवितव्यम्। वक्ता, वक्तुम्, वक्तव्यम्। अङ्गादेशोऽङ्गवद्भवति, केन, काभ्याम्, कैः। किमः कादेशे कृतेऽङ्गाश्रया इनदीर्घत्वैस्भावा भवन्ति। कृदादेशः कृद्वद्भवति, प्रकृत्य, प्रहृत्य। ल्यबादेशे कृते "ह्रस्वस्य पिति कृति तुक्" इति तुग्भवति। तद्धितादेशस्तद्धितवद्भवति, दाधिकम्, अद्यतनम्। "कृत्तद्धितसमासाश्च" ( अ०सू०१।२।४६) इति प्रातिपदिकसंज्ञा भवति। अव्ययादेशोऽव्ययवद्भवति, प्रस्तुत्य, प्रहृत्य, उपस्तुत्य। "अव्ययात्" ( अ० सू० २।४।८२ ) इति सुब्लुग् भवति। सुबादेशः सुब्वद्भवति, वृक्षाय, प्लक्षाय। "सुपि च" ( अ० सू० ७।३।१०२ ) इति दीर्घत्वं भवति। तिङादेशस्तिङ्वद्भवति। अकुरुताम्, अकुरुतम्। "सुप्तिङन्तं पदम्" ( अ० सू० १।४।१४ ) इति पदसंज्ञा भवति। पदादेशः पदवद्भवति ग्रामो वः स्वम्, जनपदो नः स्वम्। "पदस्य" इति रुत्वं भवति। वत्करणं किम्, स्थानी आदेशस्य संज्ञा मा विज्ञायीति। स्वाश्रयमपि यथा स्यात्। "आङो यमहनः" ( अ० सू० १।३।२८ ) आहत, आवधिष्ट, इत्यात्मनेपदमुभयत्रापि भवति। आदेशग्रहणं किम्, आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात्, पचतु, "एरुः" ( अ० सू० ३।४।८६ )। अनल्विधाविति किम्, द्युपथिसदादेशा न स्थानिवद्भवन्ति, द्यौः, पन्थाः, सः इति। "हल्ङ्याब्भ्यः" (अ० सू० ६।१।६८) सुलोपो न भवति ॥

## अचः परस्मिन् पूर्वविधौ ॥ ५७ ॥

पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः। अल्विध्यर्थमिदमारभ्यते। आदेशः स्थानिवदिति वर्तते। अच इति स्थानिनिर्देशः। परस्मिन्निति निमित्तसप्तमी। पूर्वविधाविति विषयसप्तमी। अजादेशः परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानिवद्भवति, पटयति, अवधीत्, बहुखट्वकः। पटुमाचष्ट इति णिचि टिलोपे कृते तस्य स्थानिवद्भावात् "अत उपधायाः" ( अ० सू० ७।२।११६ ) इति वृद्धिर्न भवति। अवधीत्। अतो लोपस्य स्थानिवद्भावात् "अतो हलादेर्लघोः" ( अ० सू० ७।२।७ ) इति हलन्तलक्षणा वृद्धिर्न भवति। बहुखट्वक इति। "आपोऽन्यतरस्याम्" ( अ०सू० ७।४।१५)

इति ह्रस्वस्य स्थानिवद्भावाद् "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इति स्वरो न भवति। अच इति किम्, प्रश्नः, अकाष्टाम्, आगत्य। प्रश्न इति प्रच्छेर्नङ्प्रत्यये, "च्छ्वोः शूडनुनासिके च" (अ० सू० ६।४।१९) इति छकारस्य शकारः परनिमित्तकस्तुकि कर्त्तव्ये न स्थानिवद्भवति। अकाष्टामिति, "झलो झलि" (अ० सू० ८।२।२६) इति सिचो लोपः परनिमित्तकः कृते षकारस्य "षढोः कः सि" (अ० सू० ८।२।७१) इति ककारे कर्त्तव्ये न स्थानिवद्भवति। आगत्येति "वा ल्यपि" (अ० सू० ६।४।३८) इति अनुनासिकलोपः परनिमित्तकस्तुकि कर्त्तव्ये न स्थानिवद्भवति। परस्मिन्निति किम्, युवजानिः, वधूजानिः, वैयाघ्रपद्यः, आदीध्ये, युवजानिरिति। "जायाया निङ्" (अ० सू० ५।४।१३४) न परनिमित्तकस्तेन यलोपे न स्थानिवद्भवति। वैयाघ्रपद्य इति न परनिमित्तकः पादस्यान्तलोपः पद्भावं न प्रतिबध्नाति। आदीध्य इति दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापरनिमित्तकत्वाद् "यीवर्णयोर्दीधीवेव्योः" (अ०सू०७।४।५३) इति लोपो न भवति। पूर्वविधाविति किम्, हे गौः, बाभ्रवीयाः, नैधेयः। हे गौरिति वृद्धिरनादेशः सम्बुद्धिलोपे कर्त्तव्ये न स्थानिवद्भवति। बाभ्रवीया इति बाभ्रव्यस्यामी छात्रा इति, "वृद्धाच्छः" (अ० सू० ४।२।११४) इति छः। "हलस्तद्धितस्य" (अ० सू० ६।४।१५०) इति यकारलोपे कर्त्तव्ये, अवादेशो न स्थानिवद्भवति। नैधेयः। "आतो लोप इटि च" (अ० सू० ६।४।६४) इत्याकारलोपः, "इतश्चानिञः" (अ० सू० ४।१।१२२) इति ढग्लक्षणे प्रत्ययविधौ न स्थानिवद्भवति॥

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ ५८ ॥

पूर्वेणातिप्रसक्तः स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते। पदान्तविधिं प्रत्यजादेशो न स्थानिवद्भवति। कौ स्तः, यौ स्तः, तानि सन्ति, यानि सन्ति। "श्नसोरल्लोपः" (अ० सू० ६।४।१११) क्ङिति सार्वधातुके इति परनिमित्तकः स पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत्स्यात्। अस्माद्वचनान्न भवति। द्विर्वचनविधिं प्रति न स्थानिवद्भवति दद्ध्यत्र, मद्ध्वत्र। यणादेशः परनिमित्तकस्तस्य स्थानिवद्भावात् "अनचि च" (अ० सू० ८।४।४७) इति धकारस्य द्विर्वचनं न स्यादस्माद्वचनाद्भवति। वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद्भवति। अप्सु यायावरः प्रवपेत पिण्डान्। यातेर्यङन्तात् "यश्च यङः" (अ० सू० ३।२।१७६) इति वरचि कृते, अतो लोपः परनिमित्तकस्तस्य स्थानिवत्त्वात् "आतो लोप इटि च" (अ० सू० ६।४।६४) इत्याकारलोपः स्यादस्माद्वचनान्न भवति। यलोपः, यलोपविधिं प्रत्यजादेशो न स्थानिवद्भवति। कण्डूतिः। कण्डूयतेः क्तिचि कृतेऽतोलोपः परनिमित्तकः, "लोपो व्योर्वलि" (अ० सू० ६।१।६६) इति यलोपे स्थानिवत्स्यादस्माद्वचनान्न भवति। स्वरः, स्वरविधिं प्रत्यजादेशो न स्थानिवद्भवति, चिकीर्षकः, जिहीर्षकः। ण्वुलि कृतेऽतोलोपः परनिमित्तको लितिः प्रत्ययात्पूर्वमुदात्तमिति स्वरे कर्त्तव्ये

न स्थानिवद्भवतीति । सवर्णं, सवर्णविधि प्रति अजादेशो न स्थानिवद्भवति । शिण्ढि, पिण्ढि । शिषे पिषेश्च लोण्मध्यमपुरुषैकवचने "रुधादिभ्यः श्नम्" (अ०सू०३।१।७८) हित्व धित्वष्टुत्वजश्त्वेषु कृतेषु "श्नसोरल्लोप" ( अ० सू० ६।४।१११ ) इत्यनेन सार्वधातुके परनिमित्तकोऽनुस्वारस्य यथि परसवर्णे कर्त्तव्ये न स्थानिवद्भवति । अनुस्वार, अनुस्वारविधि प्रत्यजादेशो न स्थानिवद्भवति । शिंषन्ति, पिंषन्ति । "नश्चापदान्तस्य झलि" ( अ० सू० ८।३।२४ ) इति अनुस्वारे कर्त्तव्ये श्नसोरल्लोपो न स्थानिवद्भवति । दीर्घविधि प्रत्यजादेशो न स्थानिवद्भवति । प्रतिदीव्ना, प्रतिदीव्ने । प्रतिदिवन्शब्दस्य "भस्य" ( अ० सू० ६।४।१२९ ) इत्यधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च, "अल्लोपोऽनः" ( अ० सू० ६।४।१३४ ) इति अकारलोप परनिमित्तकस्तस्य स्थानिवद्भावात् "हलि च" ( अ० सू० ८।२।७७ ) इति दीर्घत्वं न स्यात् । नह्ययं वकारो हल्पर इत्यस्माद्वचनान्नभवति । जश्, जश्विधि प्रत्यजादेशो न स्थानिवद्भवति । सग्धिश्च मे सपीतिश्च मे, बब्धान्ते हरी धाना । अदे क्तिनि "बहुलं छन्दसि" ( अ० सू० २।४।३९ ) इति घस्लादेश "घसिभसोर्हलि च" ( अ० सू० ६।४।१०० ) इत्युपधालोप, "झलो झलि" ( अ० सू० ८।२।२६ ) इति सकारलोप, "झषस्तथोर्धोऽधः" ( अ० सू० ८।२।४० ) इति धत्वम्, उपधालोपस्य स्थानिवत्वात् "झलां जश्झशि" ( अ० सू० ८।४।५३ ) ति घकारस्य जश्त्वं न स्यादस्माद्वचनान्नभवति । समाना ग्धि, समानस्य सभाव, सग्धि । बब्धामिति । भसेर्लोटि द्विवचने शप श्लु, द्विर्वचनमभ्यासकार्यं, "घसिभसोर्हलि च" ( अ० सू० ६।४।१०० ) इति उपधालोप, "झलो झलि" ( अ० सू० ८।२।२६ ) इति सकारलोप, "झषस्तथोर्धोऽधः" ( अ० सू० ८।२।४० ) इति धत्वम्, उपधालोपस्य स्थानिवत्वात् "झलां जश् झशि" ( अ० सू० ८।४।५३ ) इति जश्त्वं न स्यादस्माद्वचनान्नभवति । चर्, चर्विधि प्रत्यजादेशो न स्थानिवद्भवति । जक्षतु, जक्षु, अक्षन्नमीमदन्त पितर । लिड्द्विवचनबहुवचनयोरदेर्घस्लादेश, "गमहनजनखनघसाम्" ( अ० सू० ६।४।९८ ) इत्युपधालोप, द्विर्वचनम्, अभ्यासकार्यं, तत्रोपधालोपस्य स्थानिवत्वात्, "खरि च" ( अ० सू० ८।४।५५ ) इति घकारस्य चर्त्वं न स्यादस्माद्वचनान्नभवति । "शासिवसिघसीनां च" ( अ० सू० ८।३।६० ) इति षत्वम् । अक्षन्नित्यदेर्लुङ्बहुवचने घस्लादेशश्च्लेरागमस्य, 'मन्त्रे घसह्वर' ( अ० सू० २।४।८० ) इति लुक्, "गमहनजनखनघसाम्" ( अ० सू० ६।४।९८ ) इत्युपधालोप । तस्य स्थानिवत्वात्, "खरि च" ( अ० सू० ८।४।५५ ) इति चर्त्वं न स्यादस्माद्वचनान्नभवति । स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्भवति । अन्यत्र तु स्थानिवदेव । तेन वाय्वोः, अध्वर्य्वोः, कियो, गियो, वाय्वोरिति स्थानिवत्वात् स्वरदीर्घयलोपा न भवन्ति ॥

द्विर्वचनेऽचि ॥ ५९ ॥

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचन एव कर्त्तव्ये । रूपातिदे-

शश्चाय नियतकालस्तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते । आल्लोपोपधालोप-यणयवायावादेशा प्रयोजनम् । आल्लोप पपतु, पपु, "आतो लोप इटि च' ( अ० सू० ६।४।६४ ) इत्याकारलोपे कृते तस्य स्थानिवद्भावात 'एकाच' इति द्विर्वचन भवति । उपधालोप जघ्नतु, जघ्नु । "गमहनजनखनघसाम' ( अ० सू० ६।४।९८ ) इत्युपधालोपे कृते, अनच्कत्वाद् द्विर्वचन न स्यात्, अस्माद्वचनाद्भवति । णिलोप आटिटत् । आटतेर्णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वात् 'अजादेर्द्वितीयस्य ( अ० सू० ६।१।२ ) इति टिशब्दस्य द्विवचन भवति । यण् चक्रतु, चक्रु । करोतेरतुसि उसि च यणादेशे कृतेऽनच्कत्वाद् द्विर्वचन न स्यात् स्थानिवत्त्वाद्भवति । अयवायावादेशा । निनय, निनाय, लुलव, लुलाव । नयतेर्लुनातेश्चोत्तमे णलि गुणे कृते वृद्धौ चायवायावादेशास्तेषा स्थानिवत्त्वा(१)न्नेनीनैलावित्ति द्विवचन भवति । द्विर्वचन इति किम् ? जग्ले । मम्ले । श्रवणमाकारस्य न भवति । द्विर्वचननिमित्त इति किम् ? दुद्यूषति ऊठि यणादेशो न स्थानिवद्भवति । अचीति किम् ? जघ्नीयते, देध्मीयते । "ईघ्राध्मो" ( अ० सू० ७।४।३१ ) "यङि च ( अ० सू० ७।४।३० ) इति ईकारादेशस्तस्य स्थानिवद्भावादाकारस्य द्विर्वचन स्यात् । अज्ग्रहणान्न भवति ॥

## अदर्शन लोप ॥ ६० ॥

अदर्शनमश्रवण(२)मनुच्चारणमनुपलब्धिरभावो वर्णविनाश इत्यनर्थान्तरमेतै शब्दैर्योऽर्थोऽभिधीयते तस्य लोप इतीय सज्ञा भवति । अर्थस्येय सज्ञा न शब्दस्य । प्रसक्तस्यादर्शन लोपसज्ञ भवति "गोधाया ढ्रक् ( अ० सू० ४।१।१२९ ) गौधेर, पचेरन् । जीवेरदानुक्-जीरदानु । स्रिवेर्मनिन् आस्रेमाणम् । यकारवकारयोरदर्शन मिहोदाहरणम् । अपरस्याऽनुबन्धादे प्रसक्तस्य । लोपप्रदेशा, 'लोपो व्योर्वलि' ( अ० सू० ६।१।६६ ) इत्येवमादय ॥

## प्रत्ययस्य लुक्श्लुलुप ॥ ६१ ॥

अदर्शनमिति वर्त्तते । प्रत्ययादर्शनस्य लुक श्लु लुप इत्येता सज्ञा भवन्ति अनेकसज्ञाविधानाच्च तद्भावितग्रहणमिह विज्ञायते । लुक्सज्ञाभावित लुक्सज्ञ भवति । श्लुसज्ञाभावित श्लुसज्ञ भवति । लुप्सज्ञाभावित लुप्सज्ञ भवति तेन सज्ञाना सकरो न भवति । विधिप्रदेशेषु च भाविनी संज्ञा विज्ञायते । अत्ति जुहोति, वरणा । प्रत्ययग्रहण किम्, अगस्त्य, कुण्डिना । लुक्श्लुलुपप्रदेशा 'लुक्तद्धितलुकि' ( अ० सू० १।२।४९ ) जुहोत्यादिभ्य श्लु ( अ० सू० २।४।७५ 'जनपदे लुप्' ( अ० सू० ४।२।८१ ) इत्येवमादय ॥

---

( १ ) 'नेनैलोलावित्ति'–इति पदमञ्जरीधृतपाठ ।

( २ ) इह दर्शन ज्ञानमुपलब्धिस्तच्च शब्दानुशासनप्रस्तावाच्छब्दविषय सच्छ्रवण भवतीत्याह अश्रवणमिति ।

प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥

प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये कथं नु नाम स्यादिति सूत्रमिदमारभ्यते। प्रत्ययलोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं कार्यं भवति। अग्निचित्, सोमसुत्, अधोक्। इत्यत्र सुप्तिङोर्लुप्तयोः "सुप्तिङन्तं पदम्" (अ० सू० १।४।१४) इति पदसंज्ञा भवति। अधोगिति दुहेर्लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम्। प्रत्यय इति वर्त्तमाने पुनः प्रत्ययग्रहणं किम्। कृत्स्नप्रत्ययलोपे यथा स्यात्। इह मा भूत्, आघ्नीय, सङ्ग्मीय। हनिगम्योर्लिङि आत्मनेपदे "लिङः सलोपोऽनन्त्यस्य" (अ० सू० ७।२।७९) इति सीयुट्सकारलोपे प्रत्ययैकदेशलोपस्तत्र प्रत्ययलक्षणेन झलीत्यनुनासिकलोपो न भवति। प्रत्ययलक्षणमिति किम्? रायः कुलं रैकुलम्। गवे हितं गोहितम्। आयवादेशौ न भवतो वर्णाश्रयत्वात्॥

न लुमताऽङ्गस्य ॥ ६३ ॥

पूर्वेणातिप्रसक्तं प्रत्ययलक्षणमिति विशेषे प्रतिषेध उच्यते। लुमताशब्देन लुप्ते प्रत्यये यदङ्गं तस्य प्रत्ययलक्षणं कार्यं न भवति। गर्गाः, मृष्टः, जुहुतः। (१)शब्योर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः। लुमतेति किम्(२) कार्यते। अङ्गस्येति किम्, पञ्च, सप्त, पयः, साम॥

अचोऽन्त्यादि टि ॥ ६४ ॥

अच इति निर्द्धारणे षष्ठी। जातावेकवचनम्। अचां सन्निविष्टानां योऽन्त्योऽच् तदादि शब्दरूपं टिसंज्ञं भवति। अग्निचित्, इच्छन्द। सोमसुत्, उच्छन्द। आताम्, आथाम्, आमुखन्द। पचते, पचेथे। टिप्रदेशाः "टित आत्मनेपदानां टेरे" (अ० सू० ३।४।७९) इत्येवमादयः॥

अलोऽन्त्यात् पूर्व उपधा ॥ ६५ ॥

धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्वो यो वर्णः सोऽलेवोपधासंज्ञो भवति। पच्, पठ्, अकारः। भिद्, छिद्, इकारः। बुध्, युध्, उकारः। वृत्, वृध्, ऋकारः। अल इति किम्, शिष्ट, शिष्टवान्। समुदायात् पूर्वस्य मा भूत्। उपधाप्रदेशाः—"अत उपधायाः" (अ० सू० ७।२।११६) इत्येवमादयः।

तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥

तस्मिन्निति सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य। "इको यणचि" अ० सू० ६।१।७७)दध्युदकम्, मध्विदम्, पचत्योदनम्। निर्दिष्टग्रहणमानन्तर्यार्थम्। अग्निचिदत्रेति व्यवहितस्य मा भूत्॥

---

(१) यन्शपोरिति पाठः साधुः

(२) न्यासे उत्तरसि किम्। वर्त्तते' इति पाठः पञ्च, सप्त, पयः, साम इत्यस्यानन्तरं दृश्यते।

तस्मादित्युत्तरस्य ॥ ६७ ॥

निर्दिष्टग्रहणमनुवर्त्तते। तस्मादिति पञ्चम्यर्थनिर्देश उत्तरस्यैव कार्यं भवति न पूर्वस्य। "तिङ्ङतिङः" (अ० सू० ८।१।२८) ओदनं पचति। इह न भवति। पचत्योदनमिति ॥

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥

शास्त्रे स्वमेव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति न बाह्योऽर्थः, शब्दसंज्ञां वर्जयित्वा। शब्देनार्थावगतेरर्थे कार्यस्यासम्भवात् तद्वाचिनां शब्दानां सम्प्रत्ययो मा भूदिति सूत्रमिदमारभ्यते। "अग्नेर्ढक्" (अ० सू० ४।२।३३) आग्नेयमष्टाकपालं निर्वपेत्। अग्निशब्दोऽग्निशब्दस्यैव ग्राहको भवति, न ज्वलनः, पावको, धूमकेतुरिति, नातः प्रत्ययो भवति। "उदश्वितोऽन्यतरस्याम्" (अ० सू० ४।२।१९) औदश्वित्कम्, औदश्वितम्। तक्रमरिष्टं, कालशेयं, दण्डाहतं, मथितमिति नातः प्रत्ययो भवति। अशब्दसंज्ञेति किम्, "दाधाघ्वदाप्" (अ० सू० १।१।२०) "तरप्तमपौ घः" (अ० सू० १।१।२२) घुग्रहणेषु घग्रहणेषु च संज्ञिनां ग्रहणं न संज्ञायाः। ॐसित्तद्विशेषाणां वृक्षाद्यर्थम्ॐ। सिन्निर्देशः कर्त्तव्यः। ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति। किं प्रयोजनम्, वृक्षाद्यर्थम्। "विभाषा वृक्षमृगतृण" (अ० सू० २।४।१२) इति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। ॐपित्पर्यायवचनस्य च स्वाद्यर्थम्ॐ। पिन्निर्देशः कर्त्तव्यः। ततो वक्तव्यं पर्यायवचनस्य ग्रहणं भवति, चकारात् स्वस्य रूपस्य तद्विशेषाणां चेति। किं प्रयोजनम्, स्वाद्यर्थम्। स्वे पुषः, स्वपोषं पुष्टः, रैपोषम्, धनपोषम्, अश्वपोषम्, गोपोषम्। ॐजित्पर्यायवचनस्यैव राजाद्यर्थम्ॐ। जिन्निर्देशः कर्त्तव्यः। ततो वक्तव्यं पर्यायवचनस्यैव ग्रहणं भवतीति, न स्वरूपस्य, नापि तद्विशेषाणाम्। किं प्रयोजनम्। राजाद्यर्थम्। "सभा राजाऽमनुष्यपूर्वा" (अ० सू० २।४।२३) इनसभम्, ईश्वरसभम्। तस्यैव न भवति राजसभा। तद्विशेषाणां च न भवति, पुष्यमित्रसभा, चन्द्रगुप्तसभा। ॐझित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम्ॐ। झिन्निर्देशः कर्त्तव्यः। ततो वक्तव्यं तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम्, मत्स्याद्यर्थम्। "पक्षिमत्स्यमृगान् हन्ति" (अ० सू० ४।४।३५) इति ठक्। पाक्षिकः, मात्स्यिकः। तद्विशेषाणाम्, शाकुलिकः। पर्यायाणां न भवति, अजिह्मान् हन्ति, अनिमिषान् हन्तीति। अस्योच्यते। मीनान् हन्तीति मैनिकः ॥

अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६९ ॥

परेण णकारेण प्रत्याहारग्रहणम्। अण् गृह्यमाण उदिच्च सवर्णानां ग्राहको भवति स्वस्य च रूपस्य प्रत्ययं वर्जयित्वा। "आद्गुणः" (अ० सू० ६।१।८७) "अस्य च्वौ" (अ० सू० ७।४।३२) "यस्येति च" (अ० सू० ६।४।१४८)। स्वरानुनासिक्यकालभिन्नस्य ग्रहणं भवति। उदित्खल्वपि। "चुटू" (अ० सू० १।३।७) "लशक्वतद्धिते" (अ० सू० १।३।८) चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति। अप्रत्यय इति किम्,

"समासत्तमिच उ" (अ० सू० ३।२।१६८) "असार्वतिके" (अ० सू० ४।३।१९) दीर्घो न भवति ॥

तपरस्तत्कालस्य ॥ ७० ॥

त परो यस्मात्सोऽयं तपर, तादपि परस्तपर। तपरो वर्णस्तत्कालस्यात्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति स्वस्य च रूपस्य। विध्यर्थमिदम्। अणिति नानुवर्तते। अणामन्येषां च तपराणाम्। इदमेव ग्रहणकशास्त्रम् "अतो भिस ऐस्" (अ० सू० ७।१।९) इत्येवमादिषु पूर्वग्रहणकशास्त्रं न प्रवर्तत एव। अतपरा अणस्तस्यावकाशः। किमुदाहरणम् 'अतो भिस ऐस्' (अ० सू० ७।१।९) वृक्षैः, प्लक्षैः। "विड्वनोरनुनासिकस्य" (अ० सू० ६।४।४१) अत्। अब्जा, गोजा। तत्कालस्येति किम्, खट्वाभिः मालाभिः ॥

आदिरन्त्येन सहेता ॥ ७१ ॥

आदिरन्त्येनेत्संज्ञकेन सह गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति स्वस्य च रूपस्य। अण्, अक्, अच्, हल्, सुप्, तिङ्। अन्त्येनेति किम्, सुडिति तृतीयैकवचनेन टा इत्यनेन ग्रहणं मा भूत् ॥

येन विधिस्तदन्तस्य ॥ ७२ ॥

येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य 'समुदायस्य' ग्राहको भवति स्वस्य च रूपस्य। "एरच्" (अ० सू० ३।३।५६)। इवर्णान्तादच्प्रत्ययो भवति, चय, जय, क्षय। "ओरावश्यके" (अ० सू० ३।१।१२५) उवर्णान्ताद् ण्यद्भवति। अवश्यलाव्यम्, अवश्यपाव्यम्। *समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः*। द्वितीयान्तं श्रितादिभिः सह समस्यते, कष्टश्रितः। इह मा भूत् कष्टं (१)परमश्रित इति। प्रत्ययविधौ, "नडादिभ्यः फक्" (अ० सू० ४।१।९९)। नडस्यापत्यं नाडायनः। इह मा भूत् सूत्रनडस्यापत्यं सौत्रनाडिः। किमविशेषेण? नेत्याह। *उगिद्वर्णग्रहणवर्जमिति वाच्यम्*। उगितश्चेति ङीप्प्रत्ययस्तदन्तादपि भवति, भवती, अतिभवती। वर्णग्रहणम्, "अत इञ्" (अ० सू० ४।१।९५)। दाक्षिः, प्लाक्षिः। *यस्मिन् विधिस्तदादावल्ग्रहणे*। अल्ग्रहणेषु यस्मिन् विधिस्तदादाविति वक्तव्यम्। "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" (अ० सू० ६।४।७७) इति। श्रियः, भ्रुवः ॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७३ ॥

यस्येति समुदाय उच्यते। अचां मध्ये यस्य वृद्धिसंज्ञक आदिभूतस्तच्छब्दरूपं वृद्धसंज्ञं भवति। अचामिति जातौ बहुवचनम्। शालीय, मालीय, औपगवीय, कापटवीय। आदिरिति किम्, सभासन्नयने भवः साभासन्नयनः। *वा नामधेयस्य वृद्धसंज्ञा वक्तव्या*। देवदत्तीया, दैवदत्ताः। *गोत्रान्तादसमस्तवत् प्रत्ययो

(१) 'सन्ध्यन्तर्गतत्' इति पदमञ्जरी।

भवतीति वक्तव्यम्* । घृतप्रधानो रौढि, घृतरौढि, तस्य छात्रा घृतरौढीया । ओदनप्रधानः पाणिनिरोदनपाणिनिस्तस्य छात्रा ओदनपाणिनीया, वृद्धाम्भीया वृद्धकाश्यपीया । *जिह्वाकात्यहरितकात्यवर्जम्* । जैह्वाकाता, हारितकाता ॥

त्यदादीनि च ॥ ७४ ॥

यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते(१) । इह न सम्बध्यते(२) । त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति । त्यदीयम्, तदीयम्, एतदीयम्, इदमीयम्, अदसीयम्, त्वदीयम्, त्वादायनिः, मदीयम्, मादायनिः, भवदीयम्, किमीयम् ॥

एङ् प्राचां देशे ॥ ७५ ॥

यस्याचामादिग्रहणमनुवर्त्तते । एङ् यस्याचामादिस्तत्प्राचां देशाभिधाने वृद्धसंज्ञं भवति । एणीपचनीय, भोजकटीय, गोनर्दीय । एङिति किम्, आहिच्छत्र कान्यकुब्ज । प्राचामिति किम्, देवदत्तो नाम वाहीकेषु ग्रामः, तत्र भवो देवदत्तः । देश इति किम्, गोमत्यां भवा मत्स्या गोमता ।

(३)प्रागुदञ्चौ विभजते हंसः (४)क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य प्रथमः पादः ॥१।१॥

---

## अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

### गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ ॥

अतिदेशोऽयम् । गाङिति इङादेशो गृह्यते, न 'गाङ् गतौ' इति । अनन्यार्थत्वात् । कुटादयोऽपि, 'कुट कौटिल्ये' इत्येतदारभ्य यावत् 'कुङ् शब्दे' इति एभ्यो गाङ्कुटादिभ्यः परेऽञ्णितः प्रत्यया ङितो भवन्ति ङिद्वद्भवन्तीत्यर्थः । गाङ् अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । कुटादिभ्यः, कुटिता, कुटितुम्, कुटितव्यम्(५) । उत्पुटिता, उत्पुटितुम्, उत्पुटितव्यम् । अञ्णिदिति किम्, उत्कोटयति, उच्चुकोट, उत्कोटकः, उत्कोटो वर्त्तते । *व्यचे कुटादित्वमनसीति वक्तव्यम्* (६)विचिता, विचितुम्, विचितव्यम् । अनसीति किम्, उरुव्यचाः ॥

---

(१) अनुवर्तत इति । तत्र प्रयोजनवत्त्वात् यस्याचामादिरन्निति सम्बन्धसम्भवाच्च ।

(२) इह तु न सम्बध्यत इतीति । अयोग्यत्वात् निर्धारणस्य सनातोत्रविषयत्वात् त्यदादीनां चाजात्मकत्वाभावात् न ह्यस्य सम्भव इति ।

(३) प्रागुदञ्चम्, प्रागुदञ्च इति पाठान्तरे । (४) क्षीरोदकमिति पाठान्तरम्

(५) कुटितेत्याद्युदाहरणस्थाने 'उत्कुटिता' 'उत्पुटिता' इति न्यासधृतपाठः ।

(६) उद्विचितेत्यादि पदमञ्जरीसम्मतः पाठः । न्यासे तु यथा श्रुत एव पाठः ।

विज इट् ॥ २ ॥

'ओविजी भयचलनयो' अस्मात् पर इडादि प्रत्ययो ङिद्भवति । उद्विजिता, उद्विजितुम्, उद्विजितव्यम् । इडिति किम् । उद्वेजनम्, उद्वेजनीयम् ॥

विभाषोर्णोः ॥ ३ ॥

इडिति वर्तते । 'ऊर्णुञ् आच्छादने' अस्मात् पर इडादि प्रत्ययो विभाषा ङिद्भवति । प्रोर्णुविता, प्रोर्णविता । इडित्येव, प्रोर्णवनम्, प्रोर्णवनीयम् ॥

सार्वधातुकमपित् ॥ ४ ॥

सार्वधातुकं यदपित्तन्ङिद्वद्भवति । कुरुत, कुर्वन्ति । चिनुत, चिन्वन्ति । सार्वधातुकमितिकिम्, कर्ता, कर्तुम्, कर्तव्यम् । अपिदिति किम्, करोति, करोषि, करोमि ॥

असंयोगाल्लिट्कित् ॥ ५ ॥

अपिदिति वर्तते । असंयोगान्ताद्धातो परो लिट् प्रत्ययोऽपित् किद्भवति । बिभिदतु, बिभिदु, चिच्छिदतु, चिच्छिदु, ईजतु, ईजु । असंयोगादिति किम्, सस्रंसे, दध्वंसे । अपिदित्येव, बिभेद (१) ॥

इन्धिभवतिभ्यां च ॥ ६ ॥

इन्धिभवतीत्येताभ्यां परो लिट्प्रत्यय किद्भवति । समीधे दस्युहन्तमम्, पुत्र ईधे अथर्वण । भवते खल्वपि, बभूव, बभूविथ । इन्धे संयोगार्थं ग्रहणम् । भवते पिदर्थम् । अन्येषाम् । ॐश्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्ॐ श्रेथतु, श्रेथु, ग्रेथतु, ग्रेथु, देभतु, देभु, परिषस्वजे, परिषस्वजाते ॥

मृडमृदगुधकुषक्लिशवदवस क्त्वा ॥ ७ ॥

मृड मृद गुध कुष क्लिश वद वस इत्येतेभ्य पर क्त्वाप्रत्यय किद्भवति "न क्त्वा सेट्" इति प्रतिषेध वक्ष्यति तस्याय पुरस्तादपकर्ष । गुधकुषक्लिशीना तु "रलो व्युपधात्" इति विकल्पे प्राप्ते नित्यार्थं वचनम् । मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उषित्वा ॥

रुदविदमुषग्रहिस्वपिप्रच्छ संश्च ॥ ८ ॥

रुद, विद, मुष ग्रहि, स्वपि, प्रच्छ इत्येतेभ्य सँश्च क्त्वा च कितौ भवत । रुदविदमुषीणा "रलो व्युपधात्" इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम् । ग्रहेरप्यर्थमेव । स्वपिप्रच्छ्यो सन्नर्थं ग्रहणम् । किदेव हि क्त्वा । रुदित्वा । रुरुदिषति, विदित्वा, विविदिषति, मुषित्वा, मुमुषिषति, गृहीत्वा जिघृक्षति, सुप्त्वा, सुषुप्सति, पृष्ट्वा, पिपृच्छिषति । ग्रहादीनां कित्त्वात्सम्प्रसारणं भवति 'किरश्च पञ्चभ्य' इति प्रच्छेरिडागम ॥

(१) 'बिभेदिथ' इति क्वचित्क पाठ

इको झल् ॥ ९ ॥

सन्नित्यनुवर्त्तते । क्त्वेति निवृत्तम् । इगन्ताद्धातोः परो झलादिः सन् किद्भवति । चिचीषति, तुष्टूषति, चिकीर्षति(१) । इक इति किम्, पिपासति, तिष्ठासति । झलिति किम्, शिशयिषते, किमर्थमिदमुच्यते । गुणो मा भूदिति । "अज्झनगमां सनि" इति दीर्घत्वं गुणस्य बाधकं भविष्यति । यथैव तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि बाधेत । तस्माद्दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते । चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वाद् णिलोपेन बाध्यते, ज्ञीप्सति ॥

इकः कित्वं गुणो मा भूद्दीर्घारम्भात्कृते भवेत् । अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम् । दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ॥

हलन्ताच्च ॥ १० ॥

(२)इकः, सन्, झल्किदिति वर्त्तते । (३)समीपवचनोऽन्तशब्दः । हल् चासावन्तश्च हलन्त । इगन्तादि(४)क्समीपाद्धलः परः सन् झलादि किद्भवति, बिभित्सति । बुभुत्सते । इक इत्येव, यियक्षते, झलित्येव, विवर्त्तिषते । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्, धीप्सति, धिप्सति ॥

लिङ्सिचावात्मनेपदेषु ॥ ११ ॥

हलन्तादिको झल्किदिति वर्त्तते । सन्निति निवृत्तम् । इगन्तादिक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ भवतः, भित्सीष्ट, भुत्सीष्ट । सिचि खल्वपि, अभित्त अबुद्ध । इक इत्येव, यक्षीष्ट, अयष्ट । सम्प्रसारणं हि स्यात् । आत्मनेपदेष्विति किम्, अस्राक्षीत्, अद्राक्षीत् । सृजिदृशोर्झल्यमकिति" इ … । न स्यात् । हलन्तादित्येव, चेषीष्ट, अचेष्ट । गुणो न स्यात् । झलित्येव, वर्त्तिषीष्ट, अवर्त्तिष्ट, गुणो न स्यात् । लिङ्सिचाविति किम् । द्वेष्टा, द्वेक्ष्यति ॥

उश्च ॥ १२ ॥

(५)ऋवर्णान्ताद्धातोः परौ लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः । कृषीष्ट, हृषीष्ट । सिचः खल्वपि, अकृत, अहृत । झलित्येव, वरिषीष्ट, अवरिष्ट । वृ … व… अवरीष्ट(६) ॥

वा गमः ॥ १३ ॥

लिङ्सिचावात्मनेपदेष्विति वर्त्तते । गमेर्धातोः परौ लिङ्सिचौ आत्मनेपदेषु

(१) 'चिकीर्षति' इत्युदाहरणं न्यासपदमञ्जर्योर्न व्याख्यानम् ।
(२) न्यासस्वरसात् "इकः" इति वृत्तिग्रन्थस्य पाठो न प्रतीयते
(३) "समीपवचनोयमन्तशब्दः" इति न्यासस्थ पाठः ।
(४) 'इक्समीपगतादि'ति न्यासे पाठः । (५) "ऋकारान्तादिति" न्यासे पाठः ।
(६) क्वचित्पाठः — 'आत्मनेपदेष्वित्येव । अवारिष्ट' इति ।

झलादी वा कितौ भवतः। समंसीष्ट, समसीष्ट। सिचः खल्वपि, समगत, समगंस्त, कित्पक्षे अनुनासिकलोपो भवति, "अनुदात्तोपदेशवनतितनोत्यादीनाम्" इति॥

हनः सिच्॥ १४॥

हन्तेर्धातोः परः सिच् किद्भवति। आहत, आहसाताम्, आहसत। सिचः कित्त्वादनुनासिकलोपः। सिज्ग्रहणं लिङ्निवृत्त्यर्थम्, उत्तरत्रानुवृत्तिर्मा भूत्। आत्मनेपदग्रहणमुत्तरार्थमनुवर्तते। इह तु परस्मैपदे हन्तेर्वधभावस्य नित्यत्वात् कित्त्वस्य प्रयोजनं नास्ति॥

यमो गन्धने॥ १५॥

सिच आत्मनेपदेष्विति वर्तते। यमेर्धातोर्गन्धने वर्तमानात्परः सिच प्रत्ययः किद्भवति आत्मनेपदेषु परतः। गन्धनं सूचनं, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम्। अनेकार्थत्वाद्धातूनां यमिस्तत्र वर्तते। उदायत, उदायसाताम्, उदायसत। सूचितवानित्यर्थः।, सिचः कित्त्वादनुनासिकलोपः। "आङो यमहनः" इत्यात्मनेपदम्। गन्धन इति किम्, उदायस्त पादम्, उदायस्त कूपादुदकम्(१) उद्धृतवानित्यर्थः। सकर्मकत्वेऽपि "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदम्।

विभाषोपयमने॥ १६॥

यमः सिजात्मनेपदेष्विति वर्तते। यमेर्धातोरुपयमने वर्तमानात् परः सिच्प्रत्ययो वैभाषा किद्भवति आत्मनेपदेषु परतः]। उपायत कन्याम्, उपायंस्त कन्याम्, उपायत भार्याम्, उपायंस्त भार्याम्। उपयमनं, स्वीकरणं, विवाहो, दारकर्म, पाणिग्रहणमित्यर्थः। "उपाद्यमः स्वकरणे" इत्यात्मनेपदम्॥

स्थाघ्वोरिच्च॥ १७॥

सिजात्मनेपदेष्विति वर्तते। तिष्ठतेर्धातोः, घुसञ्ज्ञकानां च इकारश्चान्तादेशः सिच कद्भवति आत्मनेपदेषु परतः। उपास्थित, उपास्थिषाताम्, उपास्थिषत। घुसंज्ञकानाम्, अदित, अधित॥

इकस्य तकारत्वं दीर्घो मा भूदृतेऽपि सः। अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः॥

न क्त्वा सेट्॥ १८॥

क्त्वाप्रत्ययः सेण्न किद्भवति। देवित्वा, वर्तित्वा। सेडिति किम् कृत्वा, हृत्वा। क्त्वाग्रहणं किम्? निगृहीतिः, उपस्निहितिः, निकुचितिः॥

सेडिति कृतेऽकित्वे निष्ठायामवधारणात्। ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः॥
इं कित्संनियोगेन रेण तुल्य सुधीवनि। अस्त्वर्थं किद्तीदेशान्निगृहीतिः प्रयोजनम्॥

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः॥ १९॥

न सेडिति वर्तते (१)। शीङ्, स्विदि, मिदि, क्ष्विदि, धृष्, इत्येतेभ्यः परा

---

(१) "रज्जुम्" इति पाठः। (१) "सेट् न किदिति वर्तते" पाठोऽयं बहुत्र।

निष्ठाप्रत्यय सेण्न किद्भवति । शयित, शयितवान्, प्रस्वेदित, प्रस्वेदितवान्, प्रमेदित, प्रमेदितवान्, प्रक्ष्वेदित, प्रक्ष्वेदितवान्, प्रधर्षित, प्रधर्षितवान् । सेडित्येव स्विन्न, स्विन्नवान् । स्विदादीनाम् "आदितश्च" इति निष्ठायामिट प्रतिषिध्यते । "विभाषा भावादिकर्मणो" इति पक्षेऽभ्यनुज्ञायते । स विषय कित्वप्रतिषेधस्य ॥

मृषस्तितिक्षायाम् ॥ २० ॥

मृषेर्धातोस्तितिक्षायामर्थे निष्ठा सेण्न किद्भवति । तितिक्षा क्षमा । मर्षित, मर्षितवान् । तितिक्षायामिति किम् ? अपमृषित वाक्यमाह ॥

उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥

निष्ठा सेण्न किदिति वर्त्तते । उदुपधाद्धातो परा भावे आदिकर्मणि च वर्त्तमानो निष्ठाप्रत्यय सेडन्यतरस्या न किद्भवति । द्युतितमनेन द्योतितमनेन, प्रद्योतित प्रद्युतित, मुदितमनेन, मोदितमनेन । प्रमुदित प्रमोदित ॥ उदुपधादिति किम् ? लिखितमनेन । भावादिकर्मणोरिति किम् ? रुचित कार्षापण ददाति ॥ सेडित्येव ... ओदन । व्यवस्थितविभाषा चेयम् । तेन शब्विकरणानामेव भवति । 'गुध परिवेष्टने' । गुधितमित्यत्र न भवति ॥

पूङ क्त्वा च ॥ २२ ॥

अन्यतरस्यामिति न स्वर्यते । उत्तरसूत्रे पुनर्वावचनात् । न सेडिति वर्त्तते । 'पूङश्च' इड विहित क्लिश क्त्वानिष्ठयो, पूङश्चेति । पूङ परो निष्ठाप्रत्यय -क्त्वा च सेण न किद्भवति । पवित, पवितवान् । क्त्वाप्रत्ययस्य न क्त्वा सेडिति सिद्ध एव प्रतिषेध । तस्य ग्रहणमुत्तरार्थम् । तथा चोक्तम् । 'नित्यमकित्वमिडाद्यो क्त्वानिष्ठयो क्त्वाग्रहणमुत्तरार्थमिति' ॥

नोपधात्थफान्ताद्वा ॥ २३ ॥

निष्ठेति निवृत्तम् । नकारोपधाद्धातोस्थकारान्तात्फकारान्ताच्च पर क्त्वाप्रत्यय सेड्वा न किद्भवति । ग्रथित्वा ग्रन्थित्वा, श्रथित्वा, श्रन्थित्वा, गुफित्वा गुम्फित्वा ॥ नोपधादिति किम् ? रेफित्वा, गोफित्वा । थफान्तादिति किम् ? स्रसित्वा, ध्वसित्वा ॥

वञ्चिलुञ्च्यृतश्च ॥ २४ ॥

वञ्चि लुञ्चि ऋत इत्येतेभ्य पर क्त्वाप्रत्यय सेड्वा न किद्भवति । वचित्वा वञ्चित्वा, लुचित्वा लुञ्चित्वा, ऋतित्वा अर्तित्वा । "ऋतेरीयङ्" आर्धधातुके विकल्पित (१) । स यत्र पक्षे नास्ति तत्रेदमुदाहरणम् । सेडित्येव, वक्त्वा ॥

तृषिमृषिकृशे काश्यपस्य ॥ २५ ॥

न क्त्वा सेडिति प्रतिषेधे प्राप्ते कित्व विकल्प्यते । तृषि, मृषि, कृशि, इत्येतेभ्य

(१) "विकल्प्यत" इति न्यास पाठ ।

परः क्त्वाप्रत्ययः सेट् काश्यपस्याचार्यस्य मते वा न किद्भवति । तृपित्वा तर्पित्वा, मृपित्वा मर्पित्वा, कृशित्वा कर्शित्वा । काश्यपग्रहणं पूजार्थम् । वेत्येव हि वर्त्तते ॥

रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥

वेति वर्त्तते सेडिति च । उश्च इश्च वी । वी उपधे यस्य स व्युपधः । उकारोपधादिकारोपधाच्च धातोरलन्ताद्धलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः । द्युतित्वा द्योतित्वा,(१)दिद्युतिषते दिद्योतिषते, लिखित्वा लेखित्वा, लिलिखिषति लिलेखिषति । रल इति किम् ? देवित्वा दिदेविषति । व्युपधादिति किम् ? वर्त्तित्वा विवर्त्तिषते । हलादेरिति किम् ? एषित्वा एषिषिषति । सेडित्येव भुक्त्वा बुभुक्षते ॥

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २७ ॥

ऊ इति त्रयाणामयं मात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्टनिर्देशः । ह्रस्वदीर्घप्लुत इति द्वन्द्वैकवद्भावे पुंल्लिङ्गनिर्देशः । उऊऊ३ इत्येवंकालोऽज् यथाक्रमं ह्रस्वदीर्घप्लुत इत्येवंसंज्ञो भवति । उकालो ह्रस्वः, दधि मधु । ऊकालो दीर्घः, कुमारी गौरी । ऊ३कालः प्लुतः देवदत्त३ अत्र न्वसि । कालग्रहणं परिमाणार्थम् । दीर्घप्लुतयोः ह्रस्वसञ्ज्ञा मा भूत् । आलय महत्य । "ह्रस्वस्य पिति कृति तुक्" इति तुग् न भवति । अज्ग्रहणं संयोगाच्समुदायनिवृत्यर्थं, प्रतक्ष्य प्ररक्ष्य । ह्रस्वाश्रयस्तुग् मा भूत् तितउच्छत्रम् । "दीर्घात्" "पदान्ताद्वा" इति विभाषा तुग् मा भूत् । ह्रस्वदीर्घप्लुतप्रदेशाः । "ह्रस्वो नपुंसके प्रातिपदिकस्य" "अकृत्सार्वधातुकयोर्दीर्घः" "वाक्यस्य टेः प्लुत उदात्त" ॥

अचश्च ॥ २८ ॥

परिभाषेयं स्थानिनियमार्था । ह्रस्वदीर्घप्लुताः स्वसञ्ज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः । वक्ष्यति "ह्रस्वो नपुंसके प्रातिपदिकस्य" रै अतिरि, नौ अतिनु, गो उपगु । अच इति किम्, सुवाग् ब्राह्मणकुलम् । "अकृत्सार्वधातुकयोर्दीर्घः" चीयते, श्रूयते । अच इति किम्, भिद्यते, छिद्यते । "वाक्यस्य टेः प्लुत उदात्तः" देवदत्त ३, यज्ञदत्त ३ । अच इति किम्, अग्निचि ३ त्, सोमसु ३ त् । तकारस्य मा भूत् । स्वसंज्ञया विधाने नियमः । अजिति वर्त्तते । इह मा भूत् । द्यौः, पन्थाः, सः, द्युभ्याम्, द्युभिः । अत्र नियमो नास्ति ॥

उच्चैरुदात्तः ॥ २९ ॥

अजिति वर्त्तते । उदात्तादिशब्दाः, स्वरे वर्णधर्म्मे लोकवेदयोः प्रसिद्धा एव त इह द्गुणेऽचि परिभाष्यन्ते । उच्चैरुपलभ्यमानो योऽच् स उदात्तसंज्ञो भवति । उच्चैरिति च निप्रकर्षो न गृह्यते । उच्चैर्भाषते, उच्चैः पठतीति । किं तर्हि, स्थानकृतमुच्चत्वं संज्ञिनो

(१) "विदिद्युतिषते" विदिद्योतिषते' इति न्यासपाठ ।

विशेषणम्। ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते। तत्र यः समाने स्थाने ऊर्ध्वभागनिष्पन्नोऽच् स उदात्तसंज्ञो भवति, यस्मिन्नुच्चार्यमाणे गात्राणामायामो निग्रहो भवति। रूक्षता अस्निग्धता स्वरस्य। संवृतता कण्ठविवरस्य। ये, ते, के। उदात्तप्रदेशा "आद्युदात्तश्च" इत्येवमादयः॥

नीचैरनुदात्तः॥ ३०॥

अजिति वर्तते। नीचैरुपलभ्यमानो योऽच् सोऽनुदात्तसंज्ञो भवति। समाने स्थाने नीचभागे निष्पन्नोऽच् अनुदात्तः। यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गो मार्दवम् भवति स्वरस्य मृदुता स्निग्धता, कण्ठविवरस्योरुता महत्ता। त्व, सम, सिम, नेम, इत्यनुदात्तानि। नमस्ते रुद्र नीलकण्ठ सहस्राक्ष। अनुदात्तप्रदेशाः। "अनुदात्तौ सुप्पितौ" इत्येवमादयः॥

समाहारः स्वरितः॥ ३१॥

अजिति वर्तते। उदात्तानुदात्तस्वरसमाहारो योऽच् स स्वरितसंज्ञो भवति। सामर्थ्याच्चात्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, नाचौ। तौ समाह्रियेते यस्मिन्नचि तस्य स्वरित इत्येषा संज्ञा विधीयते। शिक्यम्, कन्या, सामन्यः, क। स्वरितप्रदेशाः "तित्स्वरितम्" इत्येवमादयः॥

तस्यादित उदात्तमर्धह्रस्वम्॥ ३२॥

उदात्तानुदात्तस्वरसमाहारः स्वरित इत्युक्तम्। तत्र न ज्ञायते कस्मिन्नंशे उदात्तः कस्मिन्ननुदात्तः, कियान् वा उदात्तः, कियान् वा अनुदात्त इति। तदुभयमनेनाख्यायते। तस्य स्वरितस्य आदावर्धह्रस्वमुदात्तम्। परे शेषमनुदात्तम्। अर्धह्रस्वमिति चार्धमात्रोपलक्ष्यते। ह्रस्वग्रहणमतन्त्रम्। सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरविभागः, शिक्यमित्यत्रार्द्धमात्रादित उदात्ताऽपरार्धमात्राऽनुदात्ता, एकश्रुतिर्वा। कन्या इत्यत्रार्द्धमात्राऽऽदित उदात्ताऽध्यर्धमात्राऽनुदात्ता। माणवक ३ माणवकेत्यत्रार्धमात्राऽऽदित उदात्ताऽर्धतृतीयमात्रा अनुदात्ता॥

एकश्रुति दूरात्सम्बुद्धौ॥ ३३॥

त्रैस्वर्ये पदानां प्राप्ते दूरात्सम्बुद्धावैकश्रुत्यं विधीयते। एका श्रुतिर्यस्य तदिदमेकश्रुति। एकश्रुति वाक्यं भवति। दूरात् सम्बोधयति येन वाक्येन तत्सम्बोधनं सम्बुद्धिः। नैकवचनं सम्बुद्धिः। स्वराणामुदात्तादीनामविभागो भेदतिरोधानमेकश्रुतिः। आगच्छ भो माणवक देवदत्त ३। दूरादिति किम्, आगच्छ भो माणवक देवदत्त॥

यज्ञकर्मण्यजपन्यूङ्खसामसु॥ ३४॥

त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते। जपन्यूङ्खसामानि वर्जयित्वा। यज्ञकर्मणि मन्त्राणामैकश्रुत्यं भवति। अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्, अपां रेतांसि जिन्वतो३म्। यज्ञकर्मणी-

ति किम्, सशठे माभूत्। अजपेष्विति किम्, ममाग्ने वर्चो विहवेष्वस्तु। जपोऽ(१)नुकरणमन्त्रः। उपांशुप्रयोगः। अन्यूङ्खेष्विति किम्—न्यूङ्खा ओकारा(२) षोडश। तेषु केचिदुदात्ताः। केचिदनुदात्ताः। असामस्विति किम्, ए३ विश्वं समत्रिणं (३) दहा३। सामानि वाक्यविशेषस्था गीतय उच्यन्ते। तत्रैकश्रुतिर्न भवति॥

## उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥

यज्ञकर्मणीति वर्तते। यज्ञकर्मणि वषट्कारः उच्चैस्तरां वा भवति एकश्रुतिर्वा। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते, वौषडित्यस्यैवेदं स्वरविधानम्। यद्येवं वौषड्ग्रहणमेव कस्मान्न कृतम्। वैचित्र्यार्थम्। विचित्रा हि सूत्रस्य कृतिः पाणिनेः। सोमस्याग्ने वीही३ वौ३ षट्, सोमस्याग्ने वीही३ वौ३ षट्॥

## विभाषा छन्दसि ॥ ३६ ॥

छन्दसि विषये विभाषा एकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव भवति। वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थम्। तेनायं स्वाध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति। इषे त्वोर्जे त्वा, इषे त्वोर्जे त्वा। अग्न आयाहि वीतये, अग्न आयाहि वीतये। अग्निमीळे पुरोहितम्, अग्निमीळे पुरोहितम्। शन्नो देवीरभिष्टये, शन्नो देवीरभिष्टये। (४)व्यवस्थितविकल्पोऽयमिति केचित्। व्यवस्था च वेदे मन्त्रदले नित्यं त्रैस्वर्यं ब्राह्मणदले नित्यमैकश्रुत्यमिति॥ "इच्छासहितयोरार्षे छन्दो वेदे च छन्दसि" इति नानार्थकोशात् छन्दसि वर्णसंहितायामिति भट्टाचार्यचरणा इति। भाषायामप्येकश्रुतिर्विभाषा भवतीति सिद्धम्॥

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥

सुब्रह्मण्या नाम निगदस्तत्र "यज्ञकर्मणीति" "विभाषा छन्दसीति" च एकश्रुतिः प्राप्ता प्रतिषिध्यते। सुब्रह्मण्यायामेकश्रुतिर्न भवति। यस्तु लक्षणप्राप्तः स्वरितस्तस्योदात्त आदेशो भवति। सुब्रह्मण्यो३मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्। अत्र सुब्रह्मण्योमित्योकारस्तित्स्वरेण स्वरितस्तस्योदात्तो विधीयते। इन्द्र आगच्छेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्णोऽनुदात्तः। "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितः प्रसक्तस्तस्यानेन उदात्तः क्रियते। तेन द्वावप्युदात्तौ सम्पन्नौ। आगच्छेत्याकार उदात्तः। ततः परोऽनुदात्तः स्वरितस्तस्यानेनोदात्तः क्रियते। तदेवमिन्द्र आगच्छेति चत्वार उदात्ताः। पश्चिम एकोऽनुदात्तः। हरिव

---

(१) "अकरणमन्त्र" इति पाठान्तरम्। (२) 'षोडशा' इति पाठान्तरम्।
(३) 'दह' इति ह्रस्वान्तम्, 'दहा' इति दीर्घान्तञ्च पाठान्तरम्। न्यासे तु ह्रस्वान्तः पाठः।
(४) व्यवस्थितत्वारम्भ सिद्धमित्यन्तः पाठः क्वचिन्नोपलभ्यते। न्यासपदमञ्जर्योरपि न व्याख्यात एष पाठः।

आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ता, द्वावनुदात्तौ । मेधातिथेरिति षष्ठ्यन्तं परमामन्त्रितमनुप्रविशति । "सुबामन्त्रिते पराङ्गवत्स्वरे" इति । ततः सकलस्यामन्त्रिताद्युदात्तत्वे कृते द्वितीयमक्षरमनुदात्तं तस्य "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितत्वे प्राप्ते इदमुदात्तत्वं विधीयते । तेन द्वावप्युदात्तौ भवतः । शेषमनुदात्तम् । वृषणश्वस्य मेन इति समानं पूर्वेण । गौरावस्कन्दिन्निति तथैव द्वे आद्ये अक्षरे उदात्ते शेषमनुदात्तम् । अहल्यायै जारेति सुबन्तस्यामन्त्रितानुप्रवेशात् तद्वदेव स्वरः । द्वावुदात्तौ शेषमनुदात्तम् । कौशिकब्राह्मणेति समस्तमामन्त्रितमाद्युदात्तं तत्र पूर्ववत् द्वावुदात्तौ । शेषमनुदात्तम् । एवं गौतमब्रुवाणेति द्वावुदात्तौ शेषमनुदात्तम् । श्वः सुत्यामागच्छ मघवन्निति श्वः शब्द उदात्तः, सुत्यामित्यन्तोदात्तः । "समायां समजनिषद" इति क्यपो विधाने उदात्त इति वर्त्तते । आगच्छेति द्वावुदात्तौ । अन्त्योऽनुदात्तः । मघवन्निति पदात् परमामन्त्रितं निहन्यते ॥

## देवब्रह्मणोरनुदात्तः ॥ ३८ ॥

सुब्रह्मण्यायामेव देवा ब्रह्माण इति पठ्यते । तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते । देवब्रह्मणोः स्वरितस्यानुदात्त आदेशो भवति । देवा ब्रह्माण आगच्छत । द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरिते कृते तस्यानुदात्तो भवति ॥

## स्वरितात्संहितायामनुदात्तानाम् ॥ ३९ ॥

एकश्रुतिरिति वर्त्तते । संहिताया विषये स्वरितात् परेषामनुदात्तानामेकश्रुतिर्भवति । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि । माणवक जटिलकाध्यापक [illegible] गमिष्यसि । इममित्यन्तोदात्तं, मे इति अनुदात्तं, सर्वानुदात्तं एव निघातविधानात् । तत्पुनः "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितं सम्पद्यते । तस्मात् स्वरितात् परेषामनुदात्तानां गङ्गेप्रभृतीनामेकश्रुतिर्भवति । सर्वे एते आमन्त्रितनिघातेनानुदात्ताः । माणवकजटिलकेति प्रथममामन्त्रितमाद्युदात्तं तस्य द्वितीयमक्षरं स्वरितं ततः परेषामनुदात्तानामेकश्रुतिर्भवति । संहिताग्रहणं किम्, अवग्रहे मा भूत्, इमं मे गङ्गे यमुने सरस्वति ॥

## उदात्तस्वरितपरस्य सन्नतरः ॥ ४० ॥

अनुदात्तग्रहणमनुवर्त्तते । उदात्तः परो यस्मात्स उदात्तपरः, स्वरितः परो यस्मात्स स्वरितपरः । उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतर आदेशो भवति । अनुदात्ततर इत्यर्थः । देवा मरुतः पृश्निमातरोऽपः । मातर इत्यनुदात्तः । अप इत्यन्तोदात्तः । "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" इति । तत्रानुदात्तयोरेकादेश ओकारोऽनुदात्तः । तस्योदात्ते परभूते सन्नतर आदेशो भवति । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि । इकारोऽनुदात्तः शुतुद्रि इत्येतदामन्त्रितं पादादौ तस्मान्न निहन्यते, "अनुदात्तं सर्वमपादादौ" इति । तस्य प्रथममक्षरमुदात्तं तस्मिन् परभूते पूर्वस्य सरस्वतीतीकारस्य

सञ्चतर आदेशो भवति । माणवक जटिलकाध्यापक क गमिष्यसि । क इति स्वरितस्तस्मिन् परभूते क इति अनुदात्तस्तस्य सन्नतर आदेशो भवति ॥

अपृक्त एकाल्प्रत्ययः ॥ ४१ ॥

अपृक्त इतीयं सञ्ज्ञा भवति एकाल् यः प्रत्ययस्तस्य । असहायवाची एकशब्दः । "स्पृशोऽनुदके क्विन्" । घृतस्पृक् । "भजो ण्विः" । अर्धभाक्, पादभाक् । एकालिति किम् । दर्विः । जागृविः । प्रत्यय इति किम् । सुराः । अपृक्तप्रदेशा "वेरपृक्तस्य" इत्येवमादयः ॥

तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४२ ॥

तत्पुरुष इति समासविशेषस्य यस्य सञ्ज्ञां वक्ष्यति स तत्पुरुषः समानाधिकरणपदः कर्मधारयसञ्ज्ञो भवति । अधिकरणशब्दोऽभिधेयवाची । समानाधिकरणः समानाभिधेयः । परमराज्यम्, उत्तमराज्यम् । कर्मधारये राज्यमित्युत्तरपदाद्युदात्तं न भवति । पाचकवृन्दारिका । तत्पुरुष इति किम्, पाचिकाभार्यः । समानाधिकरण इति किम्, ब्राह्मणराज्यम् । कर्मधारयप्रदेशाः, "कर्मधारये निष्ठा" इत्येवमादयः(१) ॥

प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ ४३ ॥

प्रथमया विभक्त्या यन्निर्दिश्यते समासशास्त्रे तदुपसर्जनसञ्ज्ञं भवति । समास इति समास(२)विधायि शास्त्रं गृह्यते । वक्ष्यति, "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति द्वितीयासमासे द्वितीयेत्येतत् प्रथमानिर्दिष्टं, तृतीयासमासे तृतीयेति, चतुर्थीसमासे चतुर्थीति, पञ्चमीसमासे पञ्चमीति, षष्ठीसमासे षष्ठीति, सप्तमीसमासे सप्तमीति । कष्टश्रितः, शङ्कुलाखण्डः, यूपदारु, वृकभयम्, राजपुरुषः, अक्षशौण्डः । उपसर्जनप्रदेशा "उपसर्जनं पूर्वम्" इत्येवमादयः ॥

एकविभक्ति चापूर्वनिपाते ॥ ४४ ॥

एका विभक्तिर्यस्य तदिदमेकविभक्ति, समासे विधीयमाने यन्नियतविभक्तिकं, द्वितीये सम्बन्धिनि बहुभिर्विभक्तिभिर्युज्यमानेऽप्येकयैव विभक्त्या युज्यते तदुपसर्जनसञ्ज्ञं भवति अपूर्वनिपाते । पूर्वनिपातं पूर्वनिपाताख्यमुपसर्जनकार्यं वर्जयित्वा । निरादयः क्रान्ताद्यर्थे पञ्चम्या । पूर्वपदे नानाविभक्तिकेऽप्युत्तरपदं पञ्चम्यन्तमेव भवति । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । निष्क्रान्तं कौशाम्ब्या निष्कौशाम्बिम् । निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना । निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये । निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः । निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः । निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ । एवं निर्वाराणसिः । एकविभक्तीति किम्, राजकुमारी । अपूर्वनिपात इति किम् ? न हि भवति कौशाम्बीनिरिति ॥

(१) कर्मधारयप्रदेशा "पुंवत्कर्मधारयजातीयदेशीयेषु" इत्येवमादय " इति क्वचिदुपलभ्यते।

(२) न्यासे 'विधायि' इति पदं नास्ति, "समासशास्त्रम्" इत्येव तत्र पाठः ।

### अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥

अभिधेयवचनोऽर्थशब्द (१)। अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्जयित्वा। डित्थः, कपित्थः, कुण्डम्, पीठम्। अर्थवदिति किम्, वनं धनमिति। नान्तस्यावधेर्मा भूत्। न लोपो हि स्यात्। अधातुरिति किम्, हन्तेर्लङ्, अहन्, नलोपः स्यात्। अप्रत्यय इति किम्, काण्डे, कुड्ये। "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वः स्यात्। (२)अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते। अभ्यागच्छति, प्रलम्बते। प्रातिपदिकप्रदेशाः, "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्येवमादयः ॥

### कृत्तद्धितसमासाश्च ॥ ४६ ॥

कृतस्तद्धिताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति। अप्रत्यय इति (३)पूर्वत्र पर्युदासात् कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसंज्ञा विधीयते। अर्थवत्समुदायानां समासग्रहणं नियमार्थम्। कृत्—कारकः, हारकः, कर्त्ता, हर्त्ता। तद्धितः—औपगवः। कापटवः। समासः—राजपुरुषः, ब्राह्मणकम्बलः। समासग्रहणस्य नियमार्थत्वाद्वाक्यस्यार्थवतः संज्ञा न भवति ॥

### ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४७ ॥

नपुंसकलिङ्गेऽर्थे यत्प्रातिपदिकं वर्त्तते तस्य ह्रस्वो भवति आदेशोऽलोऽन्त्यस्याचः। अतिरि कुलम्, अतिनु कुलम्। नपुंसक इति किम्, ग्रामणीः, सेनानीः। प्रातिपदिकस्येति किम्, काण्डे तिष्ठतः, कुड्ये तिष्ठतः। प्रातिपदिकग्रहणसामर्थ्यादेकादेशः पूर्वस्यान्तवन्न भवति ॥

### गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥

प्रातिपदिकस्येति वर्त्तते। गो इति स्वरूपग्रहणं, स्त्रीति प्रत्ययग्रहणं स्वरितत्वात्। उपसर्जनग्रहणं तयोर्विशेषणं, गोरुपसर्जनस्य स्त्रीप्रत्ययान्तस्योपसर्जनस्येति। ताभ्यां प्रातिपदिकस्य तदन्तविधिः। उपसर्जनगोशब्दान्तस्य उपसर्जनस्त्रीप्रत्ययान्तान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः, शबलगुः। स्त्रियाः—निष्कौशाम्बिः, निर्वाराणसिः, अतिखट्वः, अतिमालः। उपसर्जनस्येति किम्, राजकुमारी। स्वरितत्वं किम्, अतितन्त्रीः, अतिलक्ष्मीः, अतिश्रीः। ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः॥ बहुश्रेयसी, विद्यमानश्रेयसी ॥

---

(१) अर्थशब्दो हि अभिधेय-प्रयोजन-निवृत्ति-धनवचनः। तत्र न प्रयोजनवचनोऽव्यभिचारात्। न निवृत्तिवचनः स्वत निवृत्तस्य किं संज्ञया। न धनवचनः स्वस्वामिभावस्यासम्भवात्। तस्मात् परिशेषादभिधेयवचन इत्याह—अभिधेयवचनोऽर्थशब्द इति।

(२) अनर्थकस्येत्यादिः प्रलम्बते—इत्यन्तः पाठः क्वचिन्नास्ति। न्यासपदमञ्जर्योरपि एष पाठो न व्याख्यातः। (३) न्यासे "पूर्वसूत्रे" इति पाठः।

लुकद्धितलुकि ॥ ४९ ॥

स्त्रीग्रहणमनुवर्तते उपसर्जनस्येति च। (1)पूर्वेण ह्रस्वत्वे प्राप्ते लुग्विधीयते। तद्धितलुकि सति स्त्रीप्रत्ययस्य उपसर्जनस्य लुग्भवति। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः, दशेन्द्रः। पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलिः, आमलक्याः फलमामलकम्, बदरम्, बदरम्, कुवलम्। तद्धितग्रहणं किम्, गार्ग्याः कुलं गार्गीकुलम्। लुगिति किम्, गार्गीत्वम्। उपसर्जनस्येत्येव। अवन्ती, कुन्ती, कुरू॥

इद्गोण्याः ॥ ५० ॥

पूर्वेण लुकि प्राप्ते इकारो विधीयते। गोण्यास्तद्धितलुकि सति इकारादेशो भवति। पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः, दशगोणिः। इदिति योगविभागः। पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः, दशसूचिः। स च एव विषय एव॥

लुपि युक्तवद् व्यक्तिवचने ॥ ५१ ॥

लुपीति लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थ उच्यते। तत्र लुपि युक्तवद् व्यक्तिवचने भवतः। युक्तवदिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते। सहि प्रत्ययार्थमात्मना युनक्ति। तस्य युक्तवतो व्यक्तिवचने लुबर्थे विधीयेते। अथ वा युक्तः प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्धस्तस्मिन्निव व्यक्तिवचने लुबर्थे भवतः। सप्तम्यर्थे वतिः। व्यक्तिवचने इति च लिङ्गसंख्ययोः पूर्वाचार्यनिर्देशस्तदीयमेवेदं सूत्रम्। तथा चास्य प्रत्याख्यानं भविष्यति। "तदशिष्यं संज्ञाप्रमाणत्वात्"इति। व्यक्तिः स्त्रीपुंनपुंसकानि, वचनमेकत्वद्वित्वबहुत्वानि। पञ्चालाः क्षत्रियाः, पुंलिङ्गा बहुवचनविषयाः। तेषां निवासो जनपदः। यथा तेषु क्षत्रियेषु व्यक्तिवचने तद्वज्जनपदे भवतः, पञ्चालाः, कुरवः, मगधाः, मत्स्याः, अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्राः। लुपीति किम्। लुकि मा भूत्। लवणः सूपः, लवणा यवागूः, लवणं शाकम्। व्यक्तिवचने इति किम्? शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनम्। "विभाषौषधिवनस्पतिभ्यः" इति णत्वं न भवति॥ *हरीतक्यादिषु व्यक्तिः*। हरीतक्याः फलानि हरीतक्यः फलानि। *खलतिकादिषु वचनम्*। खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि॥

विशेषणानां चाजातेः ॥ ५२ ॥

लुपीति वर्तते। लुबर्थस्य यानि विशेषणानि तेषामपि युक्तवद् व्यक्तिवचने भवतो जातिं वर्जयित्वा। पञ्चालाः रमणीयाः, बह्वन्ना बहुक्षीरघृता बहुमाल्यफलाः। गोदौ रमणीयौ, बह्वन्नौ बहुक्षीरघृतौ बहुमाल्यफलौ। अजातेरिति किम्, पञ्चालाः जनपदः, गोदौ ग्रामः। जात्यर्थस्य चायं युक्तवद्भावप्रतिषेधः। तेन जातिद्वारेण यानि विशेषणानि तेषामपि युक्तवद्भावो न भवति। पञ्चालाः जनपदो रमणीयो बह्वन्नः,

(१) पदमञ्जरीदर्शनात् "पूर्वेण ह्रस्वत्वे प्राप्ते" इति पाठस्य काशिकात्वं प्रतीयते।

गोदौ ग्रामो रमणीयो बहन्न इति । ॐमनुष्यलुपि प्रतिषेधो वक्तव्य॰ । चञ्चाऽभिरूप वर्धिका दर्शनीय ।

तदशिष्य सज्ञाप्रमाणत्वात् ॥ ५३ ॥

तदिति प्रकृत युक्तवद्भावलक्षण निर्दिश्यते तदशिष्य न वक्तव्य कस्मात्सज्ञाप्रमाणत्वात् । सज्ञाशब्दा हि नाना लिङ्गसख्या प्रमाणम् । पञ्चाला वरणा इति च नैते योगशब्दा । किं तर्हि जनपदादीना सज्ञा एता । तत्र लिङ्ग वचन च स्वभावसिद्धमेव, न यत्नप्रतिपाद्यम् । यथा आपो दारा गृहा सिकता वर्षा इति ॥

लुब्योगाप्रख्यानात् ॥ ५४ ॥

लुबप्यशिष्य । योऽय जनपदे लुप् वरणा दिभ्यश्च इति लुबुच्यते अय न वक्तव्य । किं कारण योगाप्रख्यानात् । न हि पञ्चाला वरणा इति योग सम्बन्ध प्रख्यायते । नैतदुपलभामहे पूर्वसयोगादयं वरणा इति किं तर्हि सज्ञा एता । तस्मा दत्र तस्य निवास अदूरभवश्च इति तद्धितो नैवोत्पद्यते किं लुपो विधानेन ।

योगप्रमाणे च तदभावेऽदर्शन स्यात् ॥ ५५ ॥

पञ्चालादय सज्ञाशब्दा न योगनिमित्ता इत्युक्त तदवश्यमेवाभ्युपगन्तव्य योगप्रमाणे हि तदभावेऽदर्शन स्यात् । यदि पञ्चाला दिशब्दो योगस्य प्रमाण=योगस्य वाचक(१) स्यात् ततस्तदभावेऽदर्शनमप्रयोग स्यात् । दृश्यते च सम्प्रति विनैव क्षत्रियसम्बन्धेन जनपदेषु पञ्चालादिशब्दस्ततोऽवसीयते नाय योग न सक्त, किं तर्हि रूढिरूपेणैव तत्र प्रवृत्त इति ॥

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥५६ ॥

अशिष्यमिति वर्तते प्रधान समासे किञ्चित्पदम्, प्रत्ययस्तव्यदा द । वचनमर्थाभिधानमनेन प्रकारेण भवतीति पूर्वाचार्यै परिभाषितम् । प्रधानार्थं सह ब्रूत ॐ । ॐप्रकृतिप्रत्ययौ सहार्थं ब्रूत इति । तत्पाणिनिराचार्य चष्ट । अशिष्यमसत् । अथस्यान्यप्रमाण वादिति । अन्य इति व्यपदिश्यते शब्दैरर्थाभिधान स्वाभाविक न पारिभाषिकसम्बन्धत्वात् । एवार्थावगते । यैरपि व्याकरण न श्रुत तेऽपि राजपुरुषमानय युक्त राजविशिष्ट पुरुषमानयन्ति न राजान नापि पुरुषमात्रम् । औपगवमानय युक्त उपगुविशिष्टमपत्यमानयन्ति नोपगु नाप्यपत्यमात्र नोभौ । यच्च लोकतोऽर्थ सिद्ध किं तत्र यत्नेन

कालोपसर्जने च तुल्यम् ॥ ५७ ॥

अशिष्यमिति वर्तते । कालोपसर्जन चाशिष्ये कस्मादर्थस्यान्यप्रमाणत्वात् । तुल्यशब्दो हेत्वनुकर्षणार्थ । अशिष्यविशेषण चैतत् । कालोपसर्जने च तुल्यमशिष्ये भवत

(१) पदमञ्जरीदर्शनाद् 'योगस्य वाचक' इति मूलपाठो न प्रतीयते ।

इहान्ये वैयाकरणा कालोपसर्जनयो परिभाषा कुर्वन्ति । आन्याय्यादुत्थानादान्याय्याच्च संवेशनात् । एषोऽद्यतन काल' । अपरे पुनराहु । 'अहरुभयतोऽर्धरात्रमेषोऽद्यतन काल' इति । तथोपसर्जनपरिभाषां कुर्वन्ति, । 'अप्रधानमुपसर्जनमिति' । तत्पाणिनिराचार्यं प्रत्याचष्टे लोकतोऽर्थावगते । यैरपि व्याकरण न श्रुत तेऽप्याहुरिदमस्माभरद्य कर्त्तव्यमिदं श्व कर्त्तव्यमिद ह्य कृतमिति । नैव व्युत्पाद्यन्ते । तथोपसर्जन, यथत्र गृहे ग्रामे वा उपसर्जनमप्रधानमिति गम्यते । यच्च लोकतोऽर्थं सिद्ध किं तत्र यत्नेन । यद्येव पूर्वसूत्र एव कालोपसर्जनग्रहण कस्मान्न क्रियते, किमर्थो योगविभाग, प्रदर्शनार्थ । अन्यदप्येव जातीयकमशिष्यमिति । तथाच पूर्वाचार्या परिभाषन्ते 'मत्वर्थे बहुव्रीहि,' 'पूर्वपदार्थप्रधानोऽव्ययीभाव, उभयपदार्थप्रधानो द्वन्द्व' । इत्येवमादि, तदशिष्यमिति ॥

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ॥ ५८ ॥

अशिष्यमिति निवृत्तम् । जातिर्नामायमेकोऽर्थ । तदभिधाने एकवचनमेव प्राप्तमतो विधिरुच्यते । जातेराख्या जात्याख्या । जात्याख्यायामेकस्मिन्नर्थे बहुवचनमन्यतरस्यां भवति । जात्यर्थो बहुवद् भवतीति यावत् । तेन तद्विशेषणानामजातिशब्दानामपि सम्पन्नादीनां बहुवचनमुपपद्यते । सम्पन्नो यव, सम्पन्ना यवा । सम्पन्नो व्रीहि, सम्पन्ना व्रीहय । पूर्ववया ब्राह्मण प्रत्युत्थेय, पूर्ववयसो ब्राह्मणा प्रत्युत्थेया । जातिग्रहण किम् ? देवदत्तो यज्ञदत्त । आख्यायामिति किम् ? काश्यपप्रतिकृति काश्यप । भवत्ययं जातिशब्दो न त्वनेन(१) जातिराख्यायते, किं तर्हि ? प्रतिकृति । एकस्मिन्निति किम् ? व्रीहियवौ । *संख्याप्रयोगे प्रतिषेधो वक्तव्य* । एको व्रीहि सम्पन्न सुभिक्ष करोति ॥

अस्मदो द्वयोश्च ॥ ५९ ॥

अस्मदो योऽर्थस्तस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवति । अह ब्रवीमि, वय ब्रूम । आवा ब्रूव, वय ब्रूम । *सविशेषणस्य प्रतिषेधो वक्तव्य* । अह देवदत्तो ब्रवीमि । अह गार्ग्यो ब्रवीमि । अह पटुर्ब्रवीमि । युष्मदि गुरावेकेषाम् । त्व मे गुरु, यूय मे गुरव ॥

फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ६० ॥

चकारो द्वयोरित्यनुकर्षणार्थ । फल्गुन्योर्द्वयो प्रोष्ठपदयोश्च द्वयोर्नक्षत्रयोर्बहुवचनमन्यतरस्यां भवति । कदा पूर्वे फल्गुन्यौ, कदा पूर्वा फल्गुन्य । कदा पूर्वे प्रोष्ठपदे, कदा पूर्वा प्रोष्ठपदा । नक्षत्र इति किम् । फल्गुन्यौ माणविके ॥

छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६१ ॥

अन्यतरस्यामित्यनुवर्तते । द्वयोर्द्विवचने प्राप्ते पुनर्वस्वोश्छन्दसि विषये एकवच-

(१) न्यासे तु "नत्वयं जातिरूपेणोच्यते" इति पाठो दृश्यते

नमन्यतरस्यां भवति। पुनर्वसुर्नक्षत्रमदितिर्देवता। पुनर्वसू नक्षत्रमदितिर्देवता। नक्षत्र इत्येव। पुनर्वसू माणवकौ। छन्दसीति किम् पुनर्वसू इति॥

विशाखयोश्च ॥ ६२ ॥

छन्दसीति वर्त्तते, द्विवचने प्राप्ते छन्दसि विषये विशाखयोरेकवचनमन्यतरस्यां भवति। विशाखा नक्षत्रमिन्द्राग्नी देवता। विशाखे नक्षत्रमिन्द्राग्नी देवता।

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ६३ ॥

छन्दसीति निवृत्तम्। तिष्य एकः पुनर्वसू द्वौ तेषां द्वन्द्वो बह्वर्थः, तत्र बहुवचने प्राप्ते द्विवचनं विधीयते। तिष्यपुनर्वस्वोर्नक्षत्रविषये द्वन्द्वे बहुवचनप्रसङ्गे नित्यं द्विवचनं भवति। उदितौ तिष्यपुनर्वसू दृश्येते। तिष्यपुनर्वस्वोरिति किम्? विशाखानुराधाः। नक्षत्र इति किम्? तिष्यश्च माणवकः पुनर्वसू माणवकौ तिष्यपुनर्वसवो माणवकाः। ननु च प्रकृतमेव नक्षत्रग्रहणं किमर्थं पुनरुच्यते। पर्यायाणामपि यथा स्यात्। तिष्यपुनर्वसू। पुष्यपुनर्वसू। सिध्यपुनर्वसू। द्वन्द्व इति किम्? यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसव? उन्मुग्धाः। तिष्यादय एव विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्ते। तेन नक्षत्रसमास एवाऽयम्। बहुवचनस्येति किम्? एकवचनस्य मा भूत्, तिष्यपुनर्वसु इदमिति। 'सर्वो द्वन्द्वो विभाषा एकवद्भवति' इत्यस्यैतदेव ज्ञापकम्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्॥

सरूपाणामेकशेष एकविभक्तौ ॥ ६४ ॥

समानं रूपमेषामिति सरूपाः। सरूपाणां शब्दानामेकविभक्तौ परत एकशेषो भवति। एकः शिष्यते इतरे निवर्त्तन्ते। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः। प्रत्यर्थं शब्दनिवेशान्नैकेन(१)नानेकस्याभिधानम्। तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्तं, तस्मादेकशेषः। सरूपाणामिति किम्? प्लक्षन्यग्रोधाः। रूपग्रहणं किम्? भिन्नेऽप्यर्थे यथा स्यात्, अक्षाः, पादाः, माषाः। एकग्रहणं किम्? द्विबह्वोः शेषो मा भूत्। शेषग्रहणं किम्? आदेशो मा भूत्। एकविभक्ताविति किम्? पयः पयो जरयति। ब्राह्मणाभ्यां च कृतं, ब्राह्मणाभ्यां च देहि॥

वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ ६५ ॥

---

(१) अत्र "नैकेन" इत्यस्य स्थाने "अनेकेन" इति पाठो न्यासपदमञ्जरीपर्यालोचनया प्रतीयते। समानार्थकत्वात्तु न परिवर्तितः। तथा च—एकेन शब्देन अनेकस्यार्थस्याभिधानं न भवतीति मूले मुद्रितपाठस्याभिप्रायः। अनेकेन शब्देन अनेकस्यार्थस्याभिधानं भवतीति पाठान्तरस्याभिप्रायः। यद्वा नैकेन इत्यत्र नञर्थकनशब्दस्य समासे अनेकेन इत्येवार्थः॥

शेष इति वर्त्तते। यूनेति सहयोगे (१) तृतीया। वृद्धो यूना सहवचने शिष्यते, युवा निवर्त्तते। वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य। अपत्यमन्तर्हितं वृद्धमिति। वृद्धयूनोः सहवचने वृद्धः शिष्यते तल्लक्षणश्चेदेव विशेषः। तदिति वृद्धयूनोर्निर्देशः। लक्षणशब्दो निमित्तपर्यायः। चेच्छब्दो यद्यर्थे, एवकारोऽवधारणे। विशेषो वैरूप्यम्। वृद्धयुवनिमित्तकमेव यदि वैरूप्यं भवति ततो वृद्धः शिष्यते युवा निवर्तते। समानायामाकृतौ (२) वृद्धयुवप्रत्ययौ भिद्येते। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ। वृद्ध इति किम्? गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ। यूनेति किम्? गार्ग्यश्च गर्गश्च गार्ग्यगर्गौ। तल्लक्षण इति किम्? गार्ग्यवात्स्यायनौ। एवकारः किमर्थः? भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ। कुत्सा सौवीरत्वं च भागवित्तिकस्यापरो विशेषो विद्यते॥

### स्त्री पुंवच्च॥ ६६॥

शेष इति वर्त्तते। वृद्धो यूनेति च सर्वम्। स्त्री वृद्धा यूना सहवचने शिष्यते तल्लक्षणश्चेदेव विशेषो भवति। पुंस इवास्याः कार्यं भवति। स्त्र्यर्थः पुमर्थवद्भवति। गार्गी च गार्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ। दाक्षी च दाक्षायणश्च दाक्षी॥

### पुमान् स्त्रिया॥ ६७॥

तल्लक्षणश्चेदेव विशेष इति वर्त्तते। वृद्धो यूनेति निवृत्तम्। स्त्रिया सहवचने पुमान् शिष्यते स्त्री निवर्त्तते। स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति। ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। कुक्कुटश्च कुक्कुटी च कुक्कुटौ। तल्लक्षणश्चेदेव विशेष इत्येव। कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ। एवकारः किमर्थः? इन्द्रश्च इन्द्राणी चेन्द्रेन्द्राण्यौ। पुंयोगादाख्यायामित्यपरो विशेषः। पुमानिति किम्? प्राक्च प्राची च प्राक्प्राच्यौ। प्रागित्यव्ययमलिङ्गम्॥

### भ्रातृपुत्रौ स्वसृदुहितृभ्याम्॥ ६८॥

यथासंख्यं भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्याम्। स्वस्रा सहवचने भ्रातृशब्दः शिष्यते। भ्राता च स्वसा च भ्रातरौ। दुहित्रा सहवचने पुत्रशब्दः शिष्यते। पुत्रश्च दुहिता च पुत्रौ॥

### नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्॥ ६९॥

तल्लक्षणश्चेदेव विशेष इति वर्त्तते। नपुंसकानपुंसकमात्रकृते विशेषे अनपुंसकेन सहवचने नपुंसकं शिष्यते, एकवच्चास्य कार्यं भवति अन्यतरस्याम्। शुक्लश्च कम्बलः

(१) न्यासपदमञ्जरीपर्यालोचनया 'यूनेतिसहयोगे तृतीया' इति पाठः कैश्चित् प्रक्षिप्तः प्रतीयते। पदमञ्जर्यामस्य प्रक्षिप्तत्वं स्पष्टमेवोक्तम्॥

(२) "आकृतौ" अस्य स्थाने प्रकृतौ इति पाठान्तरम्॥

शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लम् । तानीमानि शुक्लानि । अनपुंसकेनेति किम् ? शुक्लं च शुक्लं च शुक्लं च शुक्लानि । एकवच्चेति न भवति ॥

पिता मात्रा ॥ ७० ॥

अन्यतरस्यामिति वर्त्तते, नैकवदिति । मात्रा सह वचने पितृशब्दः शिष्यते अन्यतरस्याम् । माता च पिता च पितरौ । मातापितराविति वा ॥

श्वशुरः श्वश्र्वा ॥ ७१ ॥

अन्यतरस्यामिति वर्तते । श्वश्र्वा सहवचने श्वशुरशब्दः शिष्यते अन्यतरस्याम् । श्वशुरश्च श्वश्रूश्च श्वशुरौ । श्वश्रूश्वशुराविति वा ॥

त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥

त्यदादीनि शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्च । सर्वग्रहणं साकल्यार्थं, नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । स च देवदत्तश्च तौ । यश्च देवदत्तश्च यौ । ॐत्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यतेॐ स च यश्च यौ । यश्च कश्च कौ ॥

ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ७३ ॥

ग्राम्याणां पशूनां संघाः ग्राम्यपशुसंघाः । एतेषु सह विवक्षायां स्त्री शिष्यते । (१)"पुमान् स्त्रिया" इति पुंसः शेषे प्राप्ते स्त्रीशेषो विधीयते । अतरुणग्रहणं सामर्थ्यात्पशुविशेषणम् । गाव इमाः । अजा इमाः । ग्राम्यग्रहणं किम् ? रुरव इमे । पृषता इमे । पशुष्विति किम् ? ब्राह्मणाः क्षत्रियाः । संघेष्विति किम् ? एतौ गावौ चरतः । अतरुणेष्विति किम् ? वत्सा इमे । बर्करा इमे । ॐअनेकशफेष्विति वक्तव्यम्ॐ । इह मा भूत् । अश्वा इमे ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य द्वितीयः पादः ॥

---

## अथ प्रथमाध्यायस्य तृतीयः पादः ।

भूवादयो धातवः ॥ १ ॥

भू इत्येवमादयः शब्दाः क्रियावचना (२) धातुसंज्ञा भवन्ति । भू-भवति । एध-एधते । स्पर्द्ध-स्पर्द्धते । धातुशब्दः पूर्वाचार्यसंज्ञा । ते च क्रियावचनानां संज्ञां कृतवन्तः । तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावाचिनामेव भूवादीनां धातुसंज्ञा

(१) पदमंजरीपर्यालोचनया 'पुमान् स्त्रिया इति वृत्तिग्रन्थस्थपाठो नानुमीयते ।

(२) 'क्रियावाचिन' इति पाठान्तरम् । पदमञ्जरीपर्यालोचनया पाठद्वयमपि केषु चि पुस्तकेषु नासीदिति प्रतीयते।

विधीयते ॥ (१)भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ॥

धातुप्रदेशाः "धातोः" इत्येवमादयः ॥

उपदेशेऽजनुनासिक इत् ॥ २ ॥

उपदिश्यतेऽनेनेत्युपदेशः, शास्त्रवाक्यानि-सूत्रपाठः खिलपाठश्च। तत्र योऽजनुनासिकः स इत्संज्ञो भवति। एध, स्पर्द्ध। प्रतिज्ञानुनासिक्याः (२) पाणिनीयाः। उपदेश इति किम्? अभ्रऑ अप। अजिति किम्? "आतो मनिन् क्वनिब्वनिपश्च"। अनुनासिक इति किम्? सर्वस्याऽयो मा भूत्। इत्प्रदेशाः "आदितश्च" इत्येवमादयः ॥

हलन्त्यम् ॥ ३ ॥

उपदेश इति वर्त्तते। अन्ते भवमन्त्यम्। धात्वादेः समुदायस्य यदन्त्यं हल् तदित्संज्ञं भवति। अ इ उ ण्-णकारः। ऋ ऌ क्-ककारः। ए ओ ङ्-ङकारः। ऐ औ च्-चकारः। उपदेश इत्येव। अग्निचित्। सोमसुत्। हस्य ट् हलिति द्वितीयमत्र हल्ग्रहणं तन्त्रेणोपात्तं द्रष्टव्यम्। तेन प्रत्याहारपाठे हलित्यत्र लकारस्य इत्संज्ञा क्रियते। तथा च सति हलन्त्यमित्यत्र प्रत्याहारे नेतरेतराश्रयदोषो भवति ॥

न विभक्तौ तुस्माः ॥ ४ ॥

पूर्वेण प्राप्तायामित्संज्ञायां विभक्तौ वर्त्तमानानां तवर्गसकारमकाराणां प्रतिषेध उच्यते। तवर्ग-टाङसिङसामिनात्स्याः-वृक्षात्, प्लक्षात्। सकार-जस्-ब्राह्मणाः। तस्, थस्-पचतः, पचथः। मकार-अपचताम्, अपचतम्। विभक्ताविति किम्? "अचो यत्," "ऊर्णाया युस्," "रुधादिभ्यः श्नम्"। "किमोऽत्", "इदमोऽत्" इत्यत्र प्रतिषेधो न भवति अनित्यत्वादस्य प्रतिषेधस्य। "इदमस्थमुः" इत्युकाराऽनुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते(३) ॥

आदिर्ञिटुडवः ॥ ५ ॥

इदिति वर्त्तते। आदिशब्दः प्रत्येकमभिसम्बध्यते। ञि टु डु इत्येतेषां समुदायानामादितो वर्त्तमानानामित्संज्ञा भवति। ञिमिदा-मिन्नः। ञिधृषा-धृष्टः। ञिक्ष्विदा-

(१) भूवादीनामिति। क्रियावचना धातुसंज्ञा भवन्तीत्याश्रयणादतिप्रसङ्गो नास्तीति वाकारस्य मध्ये कल्पनायां प्रयोजनाभावाद् भूरादयो येषामिति बहुव्रीहौ यणादेशे कृते भूवादय इत्यनुपपन्नो निर्देश इत्यत आह वकारोऽयं मङ्गलार्थ इत्यादि प्रकारान्तरमाह भुवो वार्थं वदन्तीति। भूवादय इति निर्देशो भुवो धातोरर्थं वदन्तीत्यर्थः। अन्यं प्रकारान्तरमाह-भ्वर्था वा वादयः स्मृता इति। भवन भू सोऽर्थो येषां ते भ्वर्थाः एवम्भूता वादयो वात्र संज्ञिनः स्मृता इत्यर्थ इति।

(२) 'प्रतिज्ञानुनासिका' इति प्रसिद्धः पाठ इति पदमञ्जरी।

(३) "अनित्यत्वमुपलक्ष्यते" इति पाठो न सार्वत्रिकः।

ञिष्वप्.(१)। ञिइन्धी–इद्धः। टुवेपृ–वेपथुः। टुओश्वि–श्वयथुः। डुपचष्–पक्त्रिमम्। डुवप्–उप्त्रिमम्। डुकृञ्–कृत्रिमम्। आदिरिति किम्? पटूयति, कण्डूयति। उपदेश इत्येव ञिकारीयति॥

षः प्रत्ययस्य॥ ६॥

षकारः प्रत्ययस्यादिरित्संज्ञो भवति। "शिल्पिनि ष्वुन्" नर्त्तकी, रजकी। प्रत्ययस्येति किम्? षोडः, षण्डः(२), षड्किः। आदिरित्येव "(३)अविमह्योष्टिषच्"। अविषः, महिषः॥

चुटू॥ ७॥

चवर्गटवर्गौ प्रत्ययस्यादी इत्संज्ञौ भवतः। "गोत्रे कुञ्जादिभ्यश्च्फञ्" कौञ्जायन्यः। छस्य ईयादेशं वक्ष्यति। जस्–ब्राह्मणाः। झस्यान्तादेशं वक्ष्यति। "शण्डिकादिभ्यो ञ्यः" शाण्डिक्यः। टवर्ग—"चरेष्टः" कुरुचरी, मद्रचरी। ठस्य इकादेशं वक्ष्यति। "सप्तम्यां जनेर्डः" उपसरजः, मन्दुरजः। ढस्यैयादेशं वक्ष्यति। "अश्वाण्णः" आश्वः। पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम्। "तेन वित्तश्चुञ्चुप्चणपौ" केशचुञ्चुः, केशचणः। "अवात्कुटारच्च" "नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः," अवटीटः। आदिरित्येव, "कर्म्मणि घटोऽठच्" कर्मठः॥

लशक्वतद्धिते॥ ८॥

तद्धितवर्ज्जितस्य प्रत्ययस्यादितो वर्त्तमाना लकारशकारकवर्गा इत्संज्ञा भवन्ति। लकार—"ल्युट् च" चयनम्, जयनम्। शकार—"कर्त्तरि शप्" भवति, पचति। कवर्ग–"क्तक्तवतू निष्ठा" भुक्तः, भुक्तवान्। "प्रियवशे वदः खच्" प्रियंवदः, वशंवदः। "ग्लाजिस्थश्च ग्स्नुः"। ग्लास्नुः, जिष्णुः, भूष्णुः। "भञ्जभासमिदो घुरच्" भङ्गुरम्। "टाङसिङसामिनात्स्याः" वृक्षेण, वृक्षस्य। अतद्धित इति किम्? चूडालः, लोमशः, कर्णिका॥

तस्य लोपः॥ ९॥

तस्येत्संज्ञकस्य लोपो भवति। तथा चैवोदाहृतम्। तस्य ग्रहणं सर्वलोपार्थम्। अलोन्त्यस्य मा भूत् आदिर्ञिटुडव इति॥

यथासंख्यमनुदेशः समानाम्॥ १०॥

संख्याशब्देन क्रमो लक्ष्यते। यथासंख्यं यथाक्रममनुदेशो भवति। अनुदिश्यत

(१) ञिष्विदा–'ष्वित्र' इति पाठान्तरम्।

(२) मुद्रितकाशिकापुस्तके अनुपलभ्यमानमपि प्रत्युदाहरणमेतत् न्यासपदमञ्जर्योरुपलम्भात् स्थापितमस्माभिः।

(३) न्यासपदमञ्जर्योः पर्यालोचनया सूत्रोपन्यासस्य मूलपाठत्वं न प्रतीयते।

इत्यनुदेशः । पश्चादुच्चार्यत इत्यर्थः । समानां समसंख्यानां (१)समं पठितानामुद्देशिनामनुदेशिनां च यथाक्रम(२)मुद्देशिभिरनुदेशिनः सम्बध्यन्ते । "तूदीशलातुरवर्मती- [illegible]

[illegible]

यसंज्ञा भवति । इह कस्मान्न भवति । "वेशो यश आदेर्भगाद्यल् ख च" इति । स्वरितेन लिङ्गेन यथासंख्यं, यत्र नेष्यते तत्र स्वरितत्वं न प्रतिज्ञायते । "स्वरितेनाधिकार" इति स्वरितग्रहणं पूर्वेणापि सम्बध्यते ॥

## स्वरितेनाधिकारः ॥ ११ ॥

स्वरितेनेति इत्थम्भूतलक्षणे तृतीया । स्वरितो नाम स्वरविशेषो(३) वर्णधर्म(४) तेन चिन्हेनाधिकारो वेदितव्यः । अधिकारो विनियोगः । स्वरितगुणयुक्तं शब्दरूपमधिकृतं यादुत्तरत्रोपस्थितते । प्रतिज्ञास्वरिताः पाणिनीयाः । "प्रत्यय" "धातो" "ङ्याप्प्रातिपदिकात्" "अङ्गस्य" "भस्य" "पदस्य" ॥

## अनुदात्तङित आत्मनेपदम् ॥ १२ ॥

अविशेषेण धातोरात्मनेपदं परस्मैपदं च विधास्यते तत्रायं नियमः क्रियते । अनुदात्तेतो ये धातवो ङितश्च तेभ्य एव आत्मनेपदं भवति नान्येभ्यः । अनुदात्तेतः— आस्, आस्ते । वस्, वस्ते । ङितः खल्वपि—षूङ्, सूते । शीङ्, शेते ॥

## भावकर्म्मणोः ॥ १३ ॥

"लः कर्म्मणि च भावे चाकर्मकेभ्यः" इति भावकर्म्मणोर्विहितस्य लस्य तिबादयः सामान्येन प्राप्नुवन्ते तत्रेदमुच्यते । भावे कर्म्मणि चात्मनेपदं भवति । भावे ग्लायते भवता, सुप्यते भवता, आस्यते भवता । कर्म्मणि—क्रियते कटः, ह्रियते भारः । कर्मकर्त्तरि—लूयते केदारः स्वयमेवेति परस्मैपदं न भवति । तस्य विधाने द्वितीयं कर्तृग्रहणमनुव(५)र्तते । तेन कर्त्तैव यः कर्त्ता तत्र परस्मैपदं भवति ॥

## कर्त्तरि कर्म्मव्यतिहारे ॥ १४ ॥

कर्मशब्दः क्रियावाची, व्यतिहारो विनिमयः । यत्रान्यसंबन्धिनीं क्रियामन्यः करोति इतरसंबन्धिनीं चेतरः स कर्म्मव्यतिहारः । तद्विशिष्टक्रियावचनाद्धातोरात्मनेपदं

---

(१) "समगणनपरिपठितानाम्" इति न्यासे पाठः ।

(२) पदमञ्जरीदर्शने "उद्देशिभिरिति पाठः केषु चित् पुस्तकेषु नासीदिति प्रतीयते ।

(३) न्यासे अत्र 'स्वरदोष' इति पाठः पदमञ्जर्यां 'स्वरितो नाम वर्णधर्मः' इत्येव पठ्यते 'स्वरविशेष' इति पाठस्तु पुण्यपत्तनस्थपुस्तके समुपलभ्यते ।

(४) 'न स्वरधर्मः' इत्यधिकं क्वचित् । (५) 'उपतिष्ठते' इति न्यासे पाठः ।

भवति । व्यतिलुनते, व्यतिपुनते । कर्म्मव्यतिहार इति किम् ? लुनन्ति । कर्तृग्रहण-मुत्तरार्थं, "शेषात्कर्त्तरि परस्मैपदम्" इति ॥

न गतिहिंसार्थेभ्यः ॥ १५ ॥

पूर्वेणात्मनेपदं प्राप्तं प्रतिषिध्यते । गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्म्मव्यतिहारे आत्मनेपदं न भवति । व्यतिगच्छन्ति, व्यतिसर्पन्ति । हिंसार्थेभ्यः—व्यतिहिंसन्ति, व्यतिघ्नन्ति ॐप्रतिषेधे हसादीनामुपसंख्यानम्ॐ । व्यतिहसन्ति, व्यतिजल्पन्ति, व्यतिपठन्ति । ॐहरतेरप्रतिषेधः ॐ । सम्प्रहरन्ते राजानः ॥

इतरेतरान्योन्योपपदाच्च ॥ १६ ॥

इतरेतरोऽन्योन्य इत्येवमुपपदाद्धातोः कर्म्मव्यतिहारे आत्मनेपदं न भवति । इतरेतरस्य व्यतिलुनन्ति, अन्योन्यस्य व्यतिलुनन्ति । ॐपरस्परोपपदाच्चेति वक्तव्यम्ॐ । परस्परस्य व्यतिलुनन्ति ॥

नेर्विशः ॥ १७ ॥

शेषात्कर्त्तरीति परस्मैपदे प्राप्ते निपूर्वाद्विश आत्मनेपदं विधीयते । नेः परस्माद्विश आत्मनेपदं भवति । निविशते, निविशन्ते । नेरिति किम् ? प्रविशति । "यदागमा-स्तद्ग्रहणेन गृह्यन्ते" । तेनाटा नास्ति व्यवधानम्(१) न्यविशत । नेरुपसर्गस्य ग्रहणम् । "अर्थवद्ग्रहणे नानर्थकस्येति" । तस्मादिह न भवति । मधुनि(२) विशन्ति भ्रमराः ॥

परिव्यवेभ्यः क्रियः ॥ १८ ॥

'डुक्रीञ् द्रव्यविनिमये' ञित्वात्कर्त्रभिप्राये क्रियाफले सिद्धमात्मनेपदम्, अकर्त्रभिप्रायार्थोऽयमारम्भः । परिव्यवेभ्य उत्तरात्क्रीणातेरात्मनेपदं भवति । परिक्रीणीते, विक्रीणीते, अवक्रीणीते । पर्यादय उपसर्गा गृह्यन्ते, तेनेह न भवति । बहुवि क्रीणाति वनम्(३) ॥

विपराभ्यां जेः ॥ १९ ॥

शेषात्कर्त्तरि परस्मैपदमित्यस्यापवादः । विपरापूर्वाज्जयतेर्धातोरात्मनेपदं भवति । विजयते, पराजयते । विपराशब्दावुपसर्गौ गृह्येते साहचर्यात्, तेनेह न भवति । बहुवि जयति वनम् । परा जयति सेनेति(४) ॥

आङो दोऽनास्यविहरणे ॥ २० ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः । आङ्पूर्वाद्ददाते(५)रनास्यविहरणे वर्त्तमानादात्मने

(१) 'अटा व्यवधानेऽपि' भवति इति क्वचित्पाठः । (२) 'क्वचित् 'मधूनि' इति द्वितीयान्तः पाठः । (३) बहुवि वनम् क्रीणातीत्यन्वयः बहुवि=बहुपक्षिकम् ।

(४) परा सेना जयतीत्यन्वयः परा=उत्कृष्टा ।

(५) 'दाण' इति न्यासपदमञ्जर्योः पाठः ।

पदं भवति। विपाशमाददते। अनास्यविहरण इति किम्? आस्यं व्याददाति। *आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः*। विपादिकां व्याददाति, कूलं व्याददाति। *स्वाङ्गकर्मकाच्चेति वक्तव्यम्(१)। इह मा भूत्, व्याददते पिपीलिकाः पतङ्गस्य मुखम्॥

## क्रीडोऽनुसम्परिभ्यश्च॥ २१॥

'क्रीडृ विहारे'। एतस्माद् अनु, सम्, परि इत्येवम्पूर्वाद् आङ्पूर्वाच्चात्मनेपदं भवति। अनुक्रीडते, संक्रीडते, परिक्रीडते। आङः खल्वपि, आक्रीडते। समा साहचर्यादन्वादिरुपसर्गो गृह्यते, तेनेह कर्मप्रवचनीयप्रयोगे न भवति। माणवकमनुक्रीडति। *समोऽकूजने इति वक्तव्यम्*। संक्रीडन्ति शकटानि। *आगमेः क्षमायामात्मनेपदं वक्तव्यम्*। क्षमा उपेक्षा, कालहरणमिति यावत्। आगमयस्व तावन्माणवकम्। *शिक्षेर्जिज्ञासायाम्*। विद्यासु(२) शिक्षते। *आशिषि नाथः*। सर्पिषो नाथते, मधुनो नाथते। आशिषीति किम्, माणवकमनुनाथति। *हरतेर्गत(३)ताच्छील्ये*। पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्ते। गतताच्छील्य इति किम्? मातुरनुहरति। *किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्*। अपस्किरते वृषभो हृष्टः। जीविकायाम्–अपस्किरते कुक्कुटो भक्षार्थी। कुलायकरणे–अपस्किरते श्वाऽऽश्रयार्थी। हर्षादिष्विति किम्? अपकिरति कुसुमम्। *आङि नुप्रच्छ्योरुपसंख्यानम्*। आनुते शृगालः, आपृच्छते गुरुम्। *शप उपलम्भन इति वक्तव्यम्*। वाचा शरीरस्पर्शनमुपलम्भनम्। देवदत्ताय शपते, यज्ञदत्ताय शपते। उपलम्भन इति किम्? शपति॥

## समवप्रविभ्यः स्थः॥ २२॥

सम्, अव, प्र, वि इत्येवं पूर्वात् तिष्ठतेरात्मनेपदं भवति। सन्तिष्ठन्ते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते। *आङः स्थः प्रतिज्ञान इति वक्तव्यम्*। अस्ति सकारमातिष्ठते, आगमौ गुणवृद्धी आतिष्ठते॥

## प्रकाशनस्थेयाख्ययोश्च॥ २३॥

स्वाभिप्रायकथनं प्रकाशनम्। स्थेयस्याख्या स्थेयाख्या। तिष्ठत्यस्मिन्निति स्थेयः। विवादपदनिर्णेता लोके स्थेय इति प्रसिद्धस्तस्य प्रतिपत्त्यर्थमाख्याग्रहणम्। प्रकाशने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति। प्रकाशने तावत्, तिष्ठते कन्या छात्रेभ्यः, तिष्ठते वृषली ग्रामपुत्रेभ्यः। प्रकाशयत्यात्मानमित्यर्थः। स्थेयाख्यायाम्–त्वयि तिष्ठते, मयि तिष्ठते। संशय्य कर्णादिषु तिष्ठते यः।

## उदोऽनूर्ध्वकर्म्मणि॥ २४॥

उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्म्मणि वर्तमानादात्मनेपदं भवति। कर्म्मशब्दः क्रियावाची।

---

(१) 'वक्तव्य'मिति न्यासपदमञ्जर्योर्नास्ति। (२) "मनुषि" इति पदमञ्जरीपाठः।
(३) "गति" इति न्यासपदमञ्जर्योः।

अनूर्ध्वताविशिष्टक्रियावचना(१)त्तिष्ठतेरात्मनेपदं भवति । गेहे उत्तिष्ठते, कुटुम्बे उत्तिष्ठते । तदर्थं यतत इत्यर्थः । ✻उद ईहायामिति वक्तव्यम्✻ । इह मा भूत् । अस्माद् ग्रामात् शतमुत्तिष्ठति । शतमुत्पद्यत इत्यर्थः । ईहाग्रहणमनूर्ध्वकर्मण एव विशेषणं नापवादः । अनूर्ध्वकर्मणीति किम् ? आसनादुत्तिष्ठति ।

उपान्मन्त्रकरणे ॥ २५ ॥

उपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे वर्तमानादात्मनेपदं भवति । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । आग्नेय्या आग्नीध्रमुपतिष्ठते । मन्त्रकरण इति किम् ? भर्तारमुपतिष्ठति यौवनेन । ✻उपाद्देवपूजासङ्गतिकरणमित्रीकरणपथिष्विति वाच्यम्✻ । देवपूजायाम्—आदित्यमुपतिष्ठते । सङ्गतिकरणे—रथिकानुपतिष्ठते । मित्रकरणे—महामात्रानुपतिष्ठते । मित्रकरणसङ्गतिकरणयोः को विशेषः ? सङ्गतिकरणमुपश्लेषः । तद्यथा गङ्गा यमुनामुपतिष्ठते । मित्रकरणं तु विनाप्युपश्लेषेण मैत्रीसम्बन्धः । पथि—अयं पन्थाः स्रुघ्नमुपतिष्ठते । ✻वा लिप्सायामिति वक्तव्यम्✻ । भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा ।

अकर्मकाच्च ॥ २६ ॥

उपादिति वर्तते । उपपूर्वात् तिष्ठतेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति । यावद्भुक्तमुपतिष्ठते, यावदोदनमुपतिष्ठते । भुक्तमिति भावे क्तप्रत्ययः । भोजने भोजने सन्निधीयत इत्यर्थः । अकर्मकादिति किम् ? राजानमुपतिष्ठति ।

उद्विभ्यां तपः ॥ २७ ॥

अकर्मकादिति वर्तते । उद् वि इत्येवम्पूर्वात् तपतेरकर्मकक्रियावचनादात्मनेपदं भवति । उत्तपते, वितपते । दीप्यत इत्यर्थः । अकर्मकादित्येव, उत्तपति सुवर्णं सुवर्णकारः, वितपति पृष्ठं सविता । ✻स्वाङ्गकर्मकाच्चेति वक्तव्यम्✻ । उत्तपते पाणिम्, उत्तपते पृष्ठम्, वितपते पाणिं, वितपते पृष्ठम् । स्वाङ्गं चेह न पारिभाषिकं गृह्यते, अद्रवम्मूर्तिमत्स्वाङ्गमिति । किं तर्हि, स्वमङ्गं स्वाङ्गम् । तेनेह न भवति, देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपतीति । उद्विभ्यामिति किम् ? निष्टपति ॥

आङो यमहनः ॥ २८ ॥

अकर्मकादिति वर्तते 'यम उपरमे' 'हन हिंसागत्योः' इति परस्मैपदिनौ । ताभ्यामकर्मकक्रियावचनाभ्यामाङ्पूर्वाभ्यामात्मनेपदं भवति, आयच्छते, आयच्छेते, आयच्छन्ते । हन खल्वपि, आहते, आघ्नाते, आघ्नते । अकर्मकादित्येव, आयच्छति कूपाद्रज्जुम् । आहन्ति वृषलं पादेन । ✻स्वाङ्गकर्मकाच्चेति वक्तव्यम्✻ । आयच्छते पाणिम्, आहते शिरः । स्वाङ्गं चेह न पारिभाषिकं गृह्यते, किं तर्हि स्वमङ्गं स्वाङ्गम् । तेनेह न भवति आहन्ति शिरः परकीयमिति ॥

(१) अनूर्ध्वकर्मविशिष्टात् क्रियावचनात्' इति न्यासे पाठः ।

समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ २९ ॥

अकर्म्मकादिति वर्त्तते । शेषात् कर्त्तरि परस्मैपदे प्राप्ते सम्पूर्वेभ्यो गमि, ऋच्छि, प्रच्छि, स्वरति, अर्ति, श्रु, विदि इत्येतेभ्योऽकर्म्मकेभ्यो धातुभ्य आत्मनेपदं भवति । सङ्गच्छते, समृच्छते, सम्पृच्छते, संस्वरते, समरन्त । अर्तेर्लुङि च्लेः "सर्तिशास्त्यर्तिभ्यश्च" इत्यङादेशः । तत्र परस्मैपदेष्वित्येतन्नाश्रीयते "बहुलं छन्दस्यमाङ्योगेऽपि" इत्याट् प्रतिषिध्यते । "ऋदृशोऽङि गुणः" इति गुणः । सम्शृणुते, संवित्ते । ऋच्छेरनादेशस्य ग्रहणम्, समृच्छिष्यते । अर्त्यादेशस्य स्वर्त्तेरित्येव सिद्धमात्मनेपदम् । अर्तिरभ्यत्र पठ्यते, 'ऋ गतिप्रापणयोः' इति भ्वादौ, 'ऋ सृ गतौ' इति जुहोत्यादौ । विशेषाभावाद् द्वयोरपि ग्रहणम् । विदेर्ज्ञानार्थस्य ग्रहणं, परस्मैपदिभिर्गमादिभिः साहचर्य्यात् लाभार्थस्य स्वरितेत्त्वादुभयतोभाषस्य । ॐदृशेश्चेति वक्तव्यम्ॐ । सम्पश्यते । अकर्म्मकादित्येव ग्रामं सम्पश्यति ॥

निसमुपविभ्यो ह्वः ॥ ३० ॥

अकर्मकादिति निवृत्तम् । अतः परं सामान्येनात्मनेपदविधानं प्रतिपत्तव्यम् । नि, सम्, उप, वि, इत्येवंपूर्वाद् ह्वयतेर्धातोरात्मनेपदं भवति । निह्वयते, संह्वयते, उपह्वयते । अकर्त्रभिप्रायार्थोऽयमारम्भः । अन्यत्र हि स्वरितेत्त्वादेव सिद्धमेवात्मनेपदम् । ॐउपसर्गादस्यत्यूह्योर्वा वचनम्ॐ । निरस्यति, निरस्यते । समूहते, समूहति ॥

स्पर्द्धायामाङः ॥ ३१ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः । स्पर्धायां विषये आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति । स्पर्द्धा संघर्षः पराभिभवेच्छा स विषयो धात्वर्थस्य । धातुस्तु शब्दक्रिय एव । मल्लो मल्लमाह्वयते । छात्रश्छात्रमाह्वयते । स्पर्द्धमानस्तस्याह्वानं करोतीत्यर्थः । स्पर्द्धायामिति किम् ? गामाह्वयति गोपालः ॥

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥

कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । गन्धनादिष्वर्थेषु वर्त्तमानात् करोतेरात्मनेपदं भवति । गन्धनमपकारप्रयुक्तं हिंसात्मकं सूचनम् । तथाहि—वस्त गन्ध अर्द्दने, अर्द्द हिंसायाम् इति चुरादौ पठ्यते । अवक्षेपणं भर्त्सनम् । सेवनमनुवृत्तिः । साहसिक्यं साहसिकं कर्म्म । प्रतियत्नः सतो गुणान्तराऽऽधानम् । प्रकथनं प्रकर्षेण कथनम् । उपयोगो धर्म्मादिप्रयोजनो विनियोगः । गन्धने तावत्—उत्कुरुते, उदाकुरुते । सूचयतीत्यर्थः । अवक्षेपणे—श्येनो वर्त्तिकामुदाकुरुते । भर्त्सयतीत्यर्थः । सेवने—गणकानुपकुरुते, महामात्रानुपकुरुते । सेवत इत्यर्थः । साहसिक्ये—परदारान् प्रकुरुते । तेषु सहसा प्रवर्तत इत्यर्थः । प्रतियत्ने—एधोदकस्योपस्कुरुते, काण्डं गुडस्योपस्कुरुते । तस्य सतो गुणान्तराधानं करोतीत्यर्थः । षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयेते । प्रकथने—गाथाः प्रकुरुते, जनापवादान्

प्रकुरुते। प्रकर्षेण कथयतीत्यर्थं । उपयोगे–शत प्रकुरुते, सहस्र प्रकुरुते। धर्म्मार्थं शत विनियुङ्क्त इत्यर्थं । एतेष्विति कि? कट करोति॥

अधे प्रसहने ॥ ३३ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भ । अधिपूर्वात् करोते प्रसहने वर्त्तमानादात्मनेपद भवति। प्रसहनमभिभव, अपराजयो वा। तमधिचक्र, तमभिबभूव, न तेन पराजित इति वा। प्रसहन इति किम्? अर्थमधिकरोति। पृथग्योगकरणमुपसर्गनियमार्थम्॥

वे शब्दकर्म्मण ॥ ३४ ॥

कृञ इत्यनुवर्त्तते। विपूर्वात् करोतेरकर्त्रभिप्राय क्रियाफले शब्दकर्म्मण आत्मनेपद भवति। कर्मशब्द इह कारकाभिधायी न क्रियावचन । क्रोष्टा विकुरुते स्वरान्, ध्वाङ्क्षो विकुरुते स्वरान्। शब्दकर्म्मण इति किम्? विकरोति पय ॥

अकर्म्मकाच्च ॥ ३५ ॥

वे, कृञ इत्यनुवर्त्तते। विपूर्वात् करोतेरकर्म्मकादकर्म्मकक्रियावचनादात्मनेपद भवति। विकुर्वते सैन्धवा । साधुदान्ता शोभन वल्गन्तीत्यर्थ । ओदनस्य पूर्णा छात्रा विकुर्वते। निष्फल चेष्टन्त इत्यर्थं ॥

सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥

णीञ् प्रापणेऽस्मात् कर्त्रभिप्राय क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भ । णीञ् प्रापणे इत्येतस्माद्धातोरात्मनेपद भवति सम्माननादिषु विशेषणेषु सत्सु। सम्मानन पूजनम्। नयते चार्वी लोकायते। चार्वी बुद्धि तत्सम्बन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान्नयते, उपपत्तिभि स्थिरीकृत्य शिष्येभ्य प्रापयति, ते युक्तिभि स्थाप्यमाना सम्मानिता पूजिता भवन्ति। उत्सञ्जनमुत्क्षेपणम्। माणवकमुदानयते। उत्क्षिपतीत्यर्थ । आचार्यकरणमाचार्यक्रिया, माणवकमीदृशेन विधिनाऽऽत्मसमीप प्रापयति। यथा स उपनेता स्वयमाचार्य सम्पद्यते। माणवकमुपनयते। आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीप प्रापयतीत्यर्थं । ज्ञान प्रमेयनिश्चय । नयते चार्वी लोकायते। तत्र प्रमेय निश्चिनोतीत्यर्थ । भृतिर्वेतनम्। कर्मकरानुपनयते। भृतिदानेन समीप करोतीत्यर्थं । विगणनमृणादेर्निर्यातनम्। मद्रा कर विनयन्ते। निर्यातयन्तीत्यर्थं । व्ययो धर्म्मादिषु विनियोग । शत विनयते, सहस्र विनयते। धर्माद्यर्थं शत विनियुङ्क्त इत्यर्थ । एतेष्विति किम्? अजा नयति ग्रामम्॥

कर्तृस्थे चाशरीरे कर्म्मणि ॥ ३७ ॥

नयते कर्त्ता देवदत्तादिर्लकारवाच्य । कर्तृस्थे कर्म्मण्यशरीरे सति नयतेरात्मनेपद भवति। शरीर प्राणिकाय, तदेकदेशोऽपि शरीरम्। क्रोध विनयते, मन्यु विनयते।

कर्तृस्थ इति किम्? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति । अशरीर इति किम्? विनयति, घाटां विनयति । कर्मणीति किम्? बुद्ध्या विनयति, प्रज्ञया विनयति ॥

## वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥

शेषात्कर्त्तरि परस्मैपदे प्राप्ते वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति। वृत्तिरप्रतिबन्धः(१)। सर्ग उत्साहः । तायनं स्फीतता। वृत्तौ तावत्-ऋक्ष्वस्य क्रमते बुद्धिः न प्रतिहन्यत इत्यर्थः । यजुष्वस्य क्रमते बुद्धिः । सर्गे—व्याकरणाध्ययनाय क्रमते उत्सहत इत्यर्थः । तायने-अस्मिन् शास्त्राणि क्रमन्ते । स्फीतीभवन्तीत्यर्थः। एतेष्विति किम्(२), अपक्रामति ॥

## उपपराभ्याम् ॥ ३९ ॥

वृत्तिसर्गतायनेष्विति वर्त्तते । उपपरापूर्वात्क्रमतेर्वृत्त्यादिष्वर्थेषु वर्त्तमानादात्मनेपदं भवति । किमर्थं तर्हीदमुच्यते, उपसर्गनियमार्थं सोपसर्गादुपपरापूर्वादेव मा भूदिति। उपक्रमते, पराक्रमते, उपपराभ्यामिति किम्? (३)संक्रामति। वृत्त्यादिष्वेव, उपक्रामति, पराक्रामति ॥

## आङ उद्गमने ॥ ४० ॥

आङ्पूर्वात् क्रमतेरुद्गमने वर्त्तमानादात्मनेपदं भवति। आक्रमते आदित्यः आक्रमते चन्द्रमाः, आक्रमन्ते ज्योतींषि। उद्गमन इति किम्, आक्रामति माणवकः कुतपम्(४)। *ज्योतिरुद्गमन इति वक्तव्यम्*। इह मा भूत् आक्रामति धूमो हर्म्यतलात्(५) ॥

## वेः पादविहरणे ॥ ४१ ॥

विपूर्वात्क्रमतेः पादविहरणेऽर्थे वर्त्तमानादात्मनेपदं भवति। विहरणं विक्षेपः सुष्ठु विक्रमते, साधु विक्रमते। अश्वादीनां गतिविशेषो विक्रमणमुच्यते। यद्यपि क्रमिः पादविहरण एव पठ्यते 'क्रमु पादविक्षेपे' इति तथाप्यनेकार्थत्वाद्धातूनामेवमुक्तम् पादविहरण इति किम्, विक्रामत्यजिनसन्धिः ॥

## प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥

प्र उप इत्येताभ्यां परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थं

(१) न्यासपर्यालोचनया 'शौघरित्यारभ्य स्फीतता इत्यन्तः पाठो मूलग्रन्थस्य न प्रतीयते

(२) 'एतेष्विति किम्, अपक्रामति । अयं मूलग्रन्थस्य पाठो न प्रतिभाति पदमञ्जर्यां वृत्त्यादिष्विति किम्, अपक्रामति' इति दर्शनात्

(३) उपपराभ्यामिति न किमिति । उपसर्गनियमः किमर्थमित्यर्थः । संक्रामतीति । 'क्रमः परस्मैपदेषु' इति दीर्घः ।

(४) 'कुतपम्' इति क्वचित्पाठः । कुतपो दर्भस्तरः । कुतपो हस्वाकृत् ।

(५) "हर्म्यतलम्' इति द्वितीयान्तं क्वचित्।

स्यार्थौ भवतः । क चानयोस्तुल्यार्थता ? आदिकर्म्मणि । प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम् । समर्थाभ्यामिति किम्, पूर्वेद्युः प्रक्रामति । गच्छतीत्यर्थः । अपरेद्युरुपक्रामति । गच्छतीत्यर्थः । अथोपपराभ्यामित्यनेनात्मनेपदमत्र कस्मान्न भवति, वृत्त्यादिग्रहणं नानुवर्त्तते, ततोऽन्यत्रेदं प्रत्युदाहरणम् ॥

अनुपसर्गाद्वा ॥ ४३ ॥

क्रम इति वर्त्तते । अप्राप्तविभाषेयम् । उपसर्गवियुक्तात् क्रमतेरात्मनेपदं वा भवति । क्रमते, क्रामति । अनुपसर्गादिति किम्, सङ्क्रामति ॥

अपह्नवे ज्ञः ॥ ४४ ॥

शेषात्कर्त्तरि परस्मैपदे प्राप्ते जानातेरपह्नवे वर्त्तमानाद् आत्मनेपदं भवति । अपह्नवोऽपह्नुतिरपलापः । सोपसर्गश्चायमपह्नवे वर्त्तते न केवलः । शतमपजानीते, सहस्रमपजानीते । अपलपतीत्यर्थः । अपह्नव इति किम्, न त्वं किञ्चिदपि जानासि ॥

अकर्म्मकाच्च ॥ ४५ ॥

अकर्त्रभिप्रायार्थमिदं, कर्त्रभिप्राये हि "अनुपसर्गाज्ज्ञः" इति वक्ष्यति । जानातेरकर्म्मकादकर्म्मकक्रियावचनादात्मनेपदं भवति । सर्पिषो जानीते, मधुनो जानीते । कथमयमकर्म्मकः । नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितं, किं तर्हि ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन, तथा च "ज्ञोऽविदर्थस्य करणे" इति षष्ठी विधीयते । सर्पिषो जानीते, मधुनो जानीते । सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः । अकर्म्मकादिति किम्, स्वरेण पुत्रं जानाति ॥

संप्रतिभ्यामनाध्याने ॥ ४६ ॥

ज्ञ इति वर्त्तते । सकर्म्मकार्थमिदम् । सम्, प्रति इत्येवम्पूर्वाज्जानातेरनाध्याने वर्त्तमानादात्मनेपदं भवति । आध्यानमुत्कण्ठास्मरणम् । शतं सञ्जानीते, सहस्रं सञ्जानीते शतं प्रतिजानीते, सहस्रं प्रतिजानीते । अनाध्याने इति किम्, मातुः सञ्जानाति, पितुः सञ्जानाति । उत्कण्ठत इत्यर्थः ॥

भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥

शेषात्कर्त्तरि परस्मैपदे प्राप्ते (१)भासनादिषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति । भासनं दीप्तिः । वदते चार्वी लोकायते । भासमानो दीप्यमानस्तत्र पदार्थान् व्यक्तीकरोतीत्यर्थः । उपसम्भाषा उपसान्त्वनम्, कर्मकरानुपवदते । उपसान्त्वयतीत्यर्थः । ज्ञानं सम्यगवबोधः । वदते चार्वी लोकायते, जानाति वदितुमित्यर्थः । यत्न उत्साहः, क्षेत्रे वदते, गेहे वदते । तद्विषयमुत्साहमाविष्करोतीत्यर्थः । विमतिर्नानामतिः । क्षेत्रे विवदन्ते, गेहे विवदन्ते । विमतिपतिता विचित्रं भाषन्त इत्यर्थः ।

---

(१) "भासनादिष्वर्थेषु" इति न्यासधृतः पाठः ।

उपमन्त्रणं रहस्युपच्छन्दनं, कुलभार्यामुपवदते, परदारानुपवदते। उपच्छन्दयतीत्यर्थः। एतेष्विति किम् यत्किञ्चिद् वदति ॥

### व्यक्तवाचां समुच्चारणे ॥ ४८ ॥

वद इति वर्तते। व्यक्तवाचां समुच्चारणं सहोच्चारणं तत्र वर्तमानाद्वदतेरात्मनेपदं भवति। ननु 'वद व्यक्तायां वाचि' इत्येव पठ्यते, तत्र किं व्यक्तवाचामिति विशेषणेन। प्रसिद्ध्युपसंग्रहार्थमेतत्। व्यक्तवाच इति हि मनुष्याः प्रसिद्धाः। तेषां समुच्चारणे यथा स्यात्। संप्रवदन्ते ब्राह्मणाः, संप्रवदन्ते क्षत्रियाः। व्यक्तवाचामिति किम् (१)वरतनु! संप्रवदन्ति कुक्कुटाः। समुच्चारण इति किम्, ब्राह्मणो वदति, क्षत्रियो वदति

### अनोरकर्मकात् ॥ ४९ ॥

वद इति, व्यक्तवाचामिति च वर्तते। अनुपूर्वाद्वदतेरकर्मकाद्व्यक्तवाग्विषयादात्मनेपदं भवति। अनुवदते कठः कलापस्य, अनुवदते मौद्गः पैप्पलादस्य। अनुसादृश्ये। यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः। अकर्मकादिति किम्, पूर्वमेव यजुरुदितमनुवदति। व्यक्तवाचामित्येव। अनुवदति वीणा ॥

### विभाषा विप्रलापे ॥ ५० ॥

वद इति वर्तते, व्यक्तवाचां समुच्चारण इति च। विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्तमानाद्वदतेरात्मनेपदं भवति विभाषा। प्राप्तविभाषेयम्। विप्रवदन्ते सांवत्सराः, विप्रवदन्ति सांवत्सराः। विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति मौहूर्ताः। युगपत्परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः। विप्रलाप इति किम्, सम्प्रवदन्ते ब्राह्मणाः। व्यक्तवाचामित्येव, विप्रवदन्ति शकुनयः। समुच्चारण इत्येव, क्रमेण मौहूर्तो मौहूर्तेन सह विप्रवदन्ति ॥

### अवाद्ग्रः ॥

"गॄ निगरणे" इति तुदादौ पठ्यते तस्येदं ग्रहणं, न तु 'गॄ शब्दे' इति क्र्यादिपठितस्य, तस्य ह्यवपूर्वस्य प्रयोग एव नास्ति। "शेषात्" इति परस्मैपदे प्राप्ते, अवपूर्वाद्गिरतेरात्मनेपदं भवति। अवगिरते, अवगिरेते, अवगिरन्ते। अवादिति किम्, गिरति ॥

### समः प्रतिज्ञाने ॥ ५२ ॥

ग्र इति वर्तते। सम्पूर्वाद्गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदं भवति। प्रतिज्ञान॰

---

(१) अत्र "वरतनु सम्प्रवदन्ति कुक्कुटा" इति न्यासपदमञ्जर्योरन्यतरापि दर्शनात् "वरतनु" इति मूले निवेशितोऽस्माभिः। अयञ्च श्लोकचतुर्थपादः। क्वचित् सम्पूर्ण एव श्लोकः पठ्यते। स चायम्—अयि विजहीहि दृढोपगूहनं, त्यज नवसङ्गमभीरु वल्लभम्। अरुणकरोद्गम, एष वर्तते, वरतनु ·· ·॥ इति न्यासे। पदमञ्जर्यां तु —"अपनय पादसरोजमङ्कतः, शिथिलय गलाद्भुताम्। कच वदनेंशुकमाकुलीकृतम्, वरतनु ·· ····॥

मभ्युपगम । शत संगिरते, नित्य शब्द संगिरते। प्रतिज्ञान इति किम्, संगिरति ग्रासम् ॥

उदश्चर सकर्म्मकात् ॥ ५३ ॥

शेषात्कर्त्तरि परस्मैपदे प्राप्ते उत्पूर्वाच्चरते सकर्म्मकक्रियावचनादात्मनेपद भवति। गेहमुच्चरते, कुटुम्बमुच्चरते, गुरुवचनमुच्चरते। उत्क्रम्य गच्छतीत्यर्थ। सकर्म्मकादिति किम्, बाष्पमुच्चरति ॥

समस्तृतीयायुक्तात् ॥ ५४ ॥

सम्पूर्वाच्चरतेस्तृतीयायुक्तादात्मनेपद भवति। तृतीयेति तृतीया विभक्तिर्गृह्यते। तया चरतेरर्थद्वारको योग अश्वेन सञ्चरते। तृतीयायुक्तादिति किम्, उभौ लोकौ सञ्चरसि इम चामु च देवल। यद्यप्यत्र तदर्थयोग सम्भवति तृतीया तु न श्रूयत इति प्रत्युदाहरण भवति ॥

दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥

'दाण् दाने' परस्मैपदी तत सम्पूर्वात्तृतीयायुक्तादात्मनेपद भवति सा चेत्तृतीया चतुर्थ्यर्थे भवति। कथ पुनस्तृतीया चतुर्थ्यर्थे स्यात्? वक्तव्यमेवैतत्। ॐअशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम्ॐ। (१)दास्या सम्प्रयच्छते, वृषल्या सम्प्रयच्छते। कामुक सन् दास्यै ददातीत्यर्थ। चतुर्थ्यर्थ इति किम्, पाणिना सम्प्रयच्छति। सम प्रशब्देन व्यवधाने कथमात्मनेपद भवति। सम इति विहि(२)तत्रे षष्ठी न पञ्चमी ॥

उपाद्यम स्वकरणे ॥ ५६ ॥

शेषात्कर्त्तरि परस्मैपदे प्राप्ते उपपूर्वाद् यम स्वकरणे वर्तमानादात्मनेपद भवति। पाणिग्रहणविशिष्टमिह स्वकरण गृह्यते, न स्वकरणमात्रम्। भार्यामुपयच्छते। स्वकरण इति किम् देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति ॥

ज्ञाश्रुस्मृदृशा सन ॥ ५७ ॥

ज्ञा श्रु स्मृ दृश इत्येतेषा सन्नन्तानामात्मनेपद भवति। तत्र जानाते "अपह्नवे ज्ञ" इति त्रिभि सूत्रैरात्मनेपद विहित, श्रुदृशोरपि "समो गम्यृच्छि" इत्यत्र विहितम्, तस्मिन्विषये "पूर्ववत्सन" इत्येव सिद्धमात्मनेपद ततोऽन्यत्रानेन विधीयते। स्मरते पुनरप्राप्त एव विधानम्। धर्म्म जिज्ञासते, गुरु शुश्रूषते, नष्ट सुस्मूर्षते, नृप दिदृक्षते सन इति किम्, जानाति, शृणोति, स्मरति, पश्यति ॥

नानोर्ज्ञ ॥ ५८ ॥

पूर्वेण योगेन प्राप्तमात्मनेपद प्रतिषिध्यते। अनुपूर्व्वाज्जानाते सन्नन्तादात्मनेपदं

(१) अत्र 'मालाम्' इत्यधिक पाठो न्याय्य। (२) 'विहितविशेषणषष्ठीति पदमञ्जर्याम्।

न भवति। तथा च सति सकर्मकस्यैवायं प्रतिषेधः सम्पद्यते। पुत्रमनुजिज्ञासति। अनोरिति किम्, धर्मं जिज्ञासते॥

प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥

प्रति आङ् इत्येवंपूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति। प्रतिशुश्रूषति, आशुश्रूषति। उपसर्गग्रहणं चेदं तस्मादिह प्रतिषेधो न भवति। देवदत्तं प्रति शुश्रूषते॥

शदेः शितः ॥ ६० ॥

'शद्लृ शातने' परस्मैपदी, तस्मादात्मनेपदं विधीयते। शदिरयं शित्, शिद्भावी शितो वा सम्बन्धी तस्मादात्मनेपदं भवति। शीयते, शीयेते, शीयन्ते। शित इति किम्, अशत्स्यत्, शत्स्यति, शिशत्सति॥

म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥

'मृङ् प्राणत्यागे'। ङित्वादात्मनेपदमत्र सिद्धमेवेति नियमार्थमिदं वचनम्। म्रियतेर्लुङ्लिङोः शितश्चात्मनेपदं भवति, अन्यत्र न भवति। अमृत, मृषीष्ट। शितः खल्वपि। म्रियते, म्रियेते, म्रियन्ते। नियमः किमर्थं, मरिष्यति, अमरिष्यत्॥

पूर्ववत् सनः ॥ ६२ ॥

सनः पूर्वो यो धातुः, आत्मनेपदी तद्वत्सन्नन्तादात्मनेपदं भवति। येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेनैव सन्नन्तादपि भवति। अनुदात्तङित आत्मनेपदम्, आस्ते, शेते। सन्नन्तादपि तदेव निमित्तम्। आसिसिषते, शिशयिषते। नेर्विशः, निविशते, निविविक्षते। आङ उद्गमने, आक्रमते, आचिक्रंसते। इह न भवति। शिशत्सति, मुमूर्षति। नहि शदिम्रियतिमात्रमात्मनेपदनिमित्तं, किं तर्हि शिदाद्यपि तच्चेह नास्ति। यस्य च पूर्वस्यैव निमित्तभावः प्रतिषिध्यते तत्सन्नन्तेऽप्यनिमित्तम्। अनुचिकीर्षति, पराचिकीर्षति। इह जुगुप्सते मीमांसते इति अनुदात्त इत्येव सिद्धमात्मनेपदमवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति॥

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६३ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। आम् प्रत्ययो यस्मात्सोऽयमाम्प्रत्ययः। आम्प्रत्ययस्येव धातोः कृञोऽनुप्रयोगस्यात्मनेपदं भवति। ईहाञ्चक्रे, ईहाञ्चक्रे(१)। यदि विध्यर्थमेतत् तर्हि उदुब्जांचकार, उदुम्भाञ्चकारेति कर्त्रभिप्राये क्रियाफले आत्मनेपदं नाप्नोति। नैष दोषः। उभयमनेन क्रियते विधिर्नियमश्च। कथम्? पूर्ववदिति वर्तते। स द्वितीयो यत्नो नियमार्थो भविष्यति। कृञ इति किम्, ईक्षामास, ईक्षाम्बभूव। कथं पुनरस्यानुप्रयोगो यावता "कृञ्चानुप्रयुज्यते लिटि" इत्युच्यते। कृञिति प्रत्याहारग्रहणं तत्र विज्ञायते। क्व सन्निविष्टानां प्रत्याहारः? अभूततद्भावे "कृभ्वस्तियोगे

(१) अत्र "ऊहाञ्चक्रे" इत्युदाहरणान्तरमपि प्रतीयते, न्याससम्वादात्।

सम्प्रदकर्तरि चिव." इति कृञादादारभ्य यावत् "कृञो द्वितीयतृतीया" इति ञकारम्।

प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥

युजिर् योगे स्वरितेत्, तस्य कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोयमारम्भः । प्र उप इत्येव पूर्वाद् युजेरयज्ञपात्रप्रयोगविषयादात्मनेपदं भवति । प्रयुङ्क्ते, उपयुङ्क्ते। अयज्ञपात्रेष्विति किम् । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । ॐस्वराद्यन्तोपसृष्टादिति वक्तव्यम्ॐ । उद्युङ्क्ते, नियुङ्क्ते। स्वराद्यन्तोपसृष्टादिति किम्, (१) संयुनक्ति ॥

समः क्ष्णुवः ॥ ६५ ॥

क्ष्णु तेजने परस्मैपदी ततः सम्पूर्वादात्मनेपदं भवति। "समो गम्यृच्छि" इत्यत्रैव कस्मान्न पठितः । अकर्मकादिति तत्र वर्त्तते। संक्ष्णुते शस्त्रम्, संक्ष्णुवाते, संक्ष्णुवते ॥

भुजोऽनवने ॥ ६६ ॥

भुज पालनाभ्यवहारयोरिति रुधादौ पठ्यते। तस्मादनवनेऽपालने वर्त्तमानादात्मनेपदं भवति। भुङ्क्ते, भुञ्जाते, भुञ्जते। अनवने इति किम्। भुनक्त्येनमग्निराहितः। अनवनप्रतिषेधेन रौधादिकस्यैव ग्रहणं विज्ञायते न तौदादिकस्य 'भुजो कौटिल्ये' इत्यस्य । तेनेह न भवति । विभुजति पाणिम् ॥

णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने ॥ ६७ ॥

"णिचश्च" इति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। ण्यन्तादात्मनेपदं भवति, कथम्, अणौ यत्कर्म णौ चेत्तदेव कर्म, स एव कर्त्ता भवति। अनाध्याने, आध्यानं वर्जयित्वा। आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव। उपसिञ्चन्ति हस्तिनं हस्तिपकाः । उपसेचयते हस्ती स्वयमेव। पश्यन्ति भृत्या राजानम्। दर्शयते राजा स्वयमेव। णेरिति किम्, आरोहन्ति हस्तिनं हस्तिपकाः । आरोह्यमाणो हस्ती साध्वारोहति। अणाविति किम्, गणयति गणं गोपालकः । गणयति गणः स्वयमेव । कर्मग्रहणं किम्, लुनाति दात्रेण । लावयति दात्रं स्वयमेव। णौ चेद्ग्रहणं समानक्रियार्थम् । आरोहन्ति हस्तिनं हस्तिपकाः, आरोह्यमाणो हस्ती भीतान् सेचयति मूत्रेण । सग्रहणमनन्यकर्मार्थम् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोह्यमाणो हस्ती स्थलमारोहयति मनुष्यान् । कर्त्तेति किम्, आरोहन्ति हस्तिनं हस्तिपकाः । तानारोहयति महामात्रः । अनाध्यान इति किम्, स्मरति वनगुल्मस्य कोकिलः । स्मरयत्येनं वनगुल्मः स्वयमेव । ननु चात्र कर्मकर्त्तरि सूत्रोदाहरणानि तत्र कर्मवद्भावेनैव सिद्धमात्मनेपदं किमर्थमिदमुच्यते।

( १ ) न्याससम्वादात् "स्वराद्यन्तोपसृष्टादिति किम् ? संयुनक्ति" इति पाठो वृत्तिमन्यस्य न प्रतिभाति ।

... क्रियाणां च कर्मवदतिदेशो विज्ञायते । कर्तृस्थार्थोयमारम्भः । । च रहिः कर्तृस्थक्रियः, दृशिः कर्तृस्थभावक उदाहृतः ॥

## भीस्म्योर्हेतुभये ॥ ६८ ॥

णेरिति वर्त्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं ति हेतुभये । हेतुः प्रयोजकः कर्त्ता तृकारवाच्यस्ततश्चेद्भयं भवति । भयग्रहणमुप- विस्मयोऽपि तत एव । जटिलो भीषयते, मुण्डो भीषयते । (१) जटिलो स्म. यते, मुण्डो विस्मापयते । हेतुभय इति किम्, कुञ्चिकयैनं भाययति, रूपेण ति । अत्र कुञ्चिका भयस्य करणं न हेतुः ॥

## गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥

णेरिति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । गृधु अभिकाङ्क्षायां, वञ्चु गतावि- ... प्रलम्भने वर्तमानयोरात्मनेपदं भवति । प्रलम्भनं विसंवादनं मिथ्या- फलाख्यानम् । माणवकं गर्धयते, माणवकं वञ्चयते । प्रलम्भन इति किम्, श्वानं र्धयति । गर्धनमस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । परिहरतीत्यर्थः ॥

## लियः सम्माननशालीनीकरणयोश्च ॥ ७० ॥

णेरिति वर्त्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । लीङ् श्लेषणे इति दिवादौ पठ्यते, ... इति च क्र्यादौ । विशेषाभावाद् द्वयोरपि ग्रहणम् । लियो ण्यन्तात्सम्मानने ... च वर्तमानादात्मनेपदं भवति, च-शब्दात् प्रलम्भने च । सम्माननं पूजनम् । शालीनीकरणं न्यग्भावनम् । जटाभिरालापयते । पूजां समधिगच्छतीत्यर्थः । ... वर्त्तिकामुल्लापयते । न्यक्करोतीत्यर्थः । प्रलम्भने—कस्त्वामुल्लापयते । विसंवा- दयतीत्यर्थः । "विभाषा लीयतेः" इति वाऽऽत्वं विधीयते । तदस्मिन् विषये नित्य- मन्यत्र विकल्पः । व्यवस्थितविभाषा हि सा । सम्माननादिष्विति किम्, बालक- मुल्लापयति ॥

## मिथ्योपपदात् कृञोऽभ्यासे ॥ ७१ ॥

णेरिति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तात्करोतेर्मिथ्योपपदादात्मने- पदं भवति अभ्यासे । अभ्यासः पुनः पुनः करणमावृत्तिः । पदं मिथ्या कारयते । (२)चारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्योपपदादिति किम्, पदं सुष्ठु ...यति । कृञ इति किम्, पदं मिथ्या वाचयति । अभ्यास इति किम्, पदं मिथ्या कारय... । सकृदुच्चारयति ॥

## स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥

णेरिति निवृत्तम् । शेषात्कर्तरि परस्मैपदे प्राप्ते स्वरितेतो ये धातवो ञितश्च तेभ्य

(१) अत्र पदमञ्जरीसंवादात् 'मुण्डो भापयते' इत्युदाहरणान्तरमपि बोध्यम् ।

(२) "सदोषम्" इति पाठः पदमञ्जर्याम् ।

आत्मनेपदं भवति कर्त्तारं चेत्क्रियाफलमभिप्रैति। क्रियायाः फलं क्रियाफलं यदर्थमसौ क्रिया आरभ्यते, तच्चेत्कर्तुरकारवाच्यस्य भवति। यजते, पचते। खल्वपि। सुनुते, कुरुते। स्वर्गादि प्रधानफलमिह कर्त्तारमभिप्रैति। कर्त्रभिप्राय इति किम्, यजन्ति याजकाः, पचन्ति पाचकाः, कुर्वन्ति कर्मकराः। यद्यपि दक्षिणा भृतिः कर्तुः फलमिहास्ति तथापि न तदर्थं क्रियारम्भः॥

अपाद्वदः ॥ ७३ ॥

कर्त्रभिप्राय इति वर्त्तते। अपपूर्वाद्वदते कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति धनकामो न्यायमपवदते। न्यायापवादेन धनमर्जयिष्यामि इति मन्यते। कर्त्रभिप्राय इत्येव। अपवदति॥

णिचश्च ॥ ७४ ॥

कर्त्रभिप्राये क्रियाफल इति वर्त्तते। णिजन्तादात्मनेपदं भवति कर्त्रभिप्राये फले। कटं कारयते, ओदनं पाचयते। कर्त्रभिप्राय इत्येव। कटं कारयति परस्य॥

समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥

कर्त्रभिप्राय इति वर्त्तते। सम् उद् आङ् इत्येवंपूर्वाद्यमेः कर्त्रभिप्राये आत्मनेपदं भवति ग्रन्थविषयश्चेत्प्रयोगो न भवति। व्रीहीन् संयच्छते। वस्त्रमायच्छते। आङ्पूर्वादकर्मकादाङो यमहन इति सिद्धमेवात्मनेपदं सकर्मकार्थं पुनर्ग्रहणम्। अग्रन्थ इति किम्। उद्यच्छति चिकित्सां वैद्यः। कर्त्रभिप्राय इत्येव। संयच्छति, उद्यच्छति, आयच्छति॥

अनुपसर्गाज्ज्ञः ॥ ७६ ॥

कर्त्रभिप्राय इति वर्त्तते। अनुपसर्गाज्जानाते कर्त्रभिप्राये क्रियाफले [आत्मनेपदं] भवति। गां जानीते, अश्वं जानीते। अनुपसर्गादिति किम्? स्वर्गं लोकं न मूढः। कर्त्रभिप्राय इत्येव। देवदत्तस्य गां जानाति॥

विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥

स्वरितञित इति पञ्चभिः सूत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले [विहितं] तदुपपदेन द्योतिते न प्राप्नोतीति वचनमारभ्यते। समीपे श्रूयमाणं [शब्दा]न्तरं प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषाऽऽत्मनेपदं भवति। स्वं यज्ञं यजति, यज्ञं यजते। स्वं कटं करोति, स्वं कटं कुरुते। स्वं पुत्रमपवदति, स्वं [पुत्रमपवदते]। एवं पञ्चसूत्र्यामुदाहार्यम्॥

शेषात् कर्त्तरि परस्मैपदम् ॥ ७८ ॥

पूर्वेण प्रकरणेनात्मनेपदनियमः कृतः, न परस्मैपदनियमः। तस्मात् [तं] तदर्थमिदमुच्यते। येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदमुक्तं ततो यदन्यत्स शेषात् कर्त्तरि परस्मैपदं भवति शेषादेव नान्यस्मात्। अनुदात्तङित आत्मनेपदम्। आस्ते, शेते। ततोऽन्यत्र परस्मैपदं भवति। याति, वाति। नेर्विश

त्तम । निविशते । ततोऽन्यत्र परस्मैपदम् । आविशति, प्रविशति । कर्त्तरीति किम्, )पच्यते, गम्यते । कर्मकर्त्तरि कस्मात्परस्मैपदं न भवति । पच्यते ओदनः स्वयमेव । र्त्तरि कर्मव्यतिहार इति द्वितीयं कर्तृग्रहणमनुवर्त्तते तेन कर्त्तैव यः कर्त्ता तत्र परस्मै- द्, कर्मकर्त्तरि न भवति ॥

अनुपराभ्यां कृञः ॥ ७९ ॥

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितं तदपवादः परस्मै- द् विधीयते । अनु परा इत्येवंपूर्वात्करोतेः परस्मैपदं भवति । अनुकरोति, पराकरोति ।

अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥

क्षिप प्रेरणे स्वरितेत्, ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मै- द् विधीयते । अभि प्रति अति इत्येवं पूर्वात् क्षिपः परस्मैपदं भवति । अभिक्षिपति, तिक्षिपति, अतिक्षिपति । अभिप्रत्यतिभ्य इति किम्, आक्षिपते । द्वितीयमपि कर्तृ- ग्रहणमनुवर्तते । तेनेह न भवति । अभिक्षिप्यते स्वयमेव ॥

प्राद्वहः ॥ ८१ ॥

वह प्रापणे स्वरितेत्, ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मै- विधीयते । प्रपूर्वाद्वहतेः परस्मैपदं भवति । प्रवहति, प्रवहतः, प्रवहन्ति । प्रादिति म्, आवहते ॥

परेर्मृषः ॥ ८२ ॥

मृष तितिक्षायां स्वरितेत्, ततस्तथैवात्मनेपदे प्राप्ते परस्मैपदं विधीयते । परिपू- मृष्यतेः परस्मैपदं भवति । परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति । परेरिति , आमृष्यते । वहतिमपि केचिदत्रानुवर्तयन्ति । परिवहति ॥

व्याङ्परिभ्यो रमः ॥ ८३ ॥

रमु क्रीडायाम् । अनुदात्तेत्त्वादात्मनेपदे प्राप्ते परस्मैपदं विधीयते । वि आङ् परि त्येवं पूर्वाद्रमतेः परस्मैपदं भवति । विरमति, आरमति, परिरमति । एतेभ्य इति , अभिरमते ॥

उपाच्च ॥ ८४ ॥

रम इत्येव । उपपूर्वाद्रमतेः परस्मैपदं भवति । देवदत्तमुपरमति, यज्ञदत्तमुपर- । उपरमयतीति यावत् । अन्तर्भावितण्यर्थोऽत्र रमिः । पृथग्योगकरणमुत्तरार्थम् । र्मकाद्विभाषां वक्ष्यति सा उपपूर्वादेव यथा स्यात् ॥

विभाषाऽकर्मकात् ॥ ८५ ॥

रमः, उपादिति च वर्तते । पूर्वेण नित्यं परस्मैपदे प्राप्ते विकल्प आरभ्यते । उप- द्रमतेरकर्मकाद्विभाषा परस्मैपदं भवति । यावद्भुक्तमुपरमति, यावद्भुक्तमुपर- । निवर्तत इत्यर्थः ॥

( १ ) अत्र 'पच्यत' इति पदमशुद्धम् ।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥

णिचश्चेति कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते बुधयुधनश जन इङ् प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । योधयति, नाशयति, जनयति, अध्यापयति, प्रावयति, द्रावयति, स्रावयति । कर्मकास्तेषामणावकर्मकाच्चित्तवत्कर्तृकादित्येव सिद्धे वचनमिदमचित्तवत्कर्तृकार्थम् बोधयति पद्मम्, योधयन्ति काष्ठानि, नाशयति दुःखम्, जनयति सुखम् । चलनार्था अपि तेषां निगरणचलनार्थेभ्यश्चेति सिद्धे यदा न चलनार्थास्तदर्थं नम् । प्रवते, प्राप्नोतीति गम्यते । अयो द्रवति, विलीयत इत्यर्थः । कुण्डिका स्यन्दत इत्यर्थः । एतद्विपयाण्युदाहरणानि ॥

निगरणचलनार्थेभ्यश्च ॥ ८७ ॥

णेरिति वर्त्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः दं यते । निगरणमभ्यवहारः । चलनं कम्पनम् । निगरणार्थेभ्यश्चलनार्थेभ्यश्च न्तेभ्यः परस्मैपदं भवति । निगारयति, आशयति, भोजयति । चलनार्थेभ्यः—च चोपयति, कम्पयति । अयमपि योगः सकर्मकार्थ, अचित्तवत्कर्तृकार्थश्च । प्रतिषेधो वक्तव्यः॥ । अत्ति देवदत्तः, आदयते देवदत्तेन ॥

अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥

णेरिति वर्त्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं वि यते । अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माद् ण्यन्तात्परस्मैपदं भवति आस्ते देवदत्तः, आसयति देवदत्तम् । शेते देवदत्तः, शाययति देवदत्तम् । अणा किम्, चेतयमानं प्रयोजयति चेतयते इति केचित् प्रत्युदाहरन्ति, तदयुक्तम् । ण्णिचो विधिः प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तस्मादिह चेतयती स्मैपदेनैव भवितव्यम् । इदं तु प्रत्युदाहरणम्-आरोहयमाण (१)प्रयुङ्क्ते, अकर्मकादिति किम्, कटं कुर्वाणं प्रयोजयति कारयते । चित्तवत्कर्तृकादिति किम् शुष्यन्ति व्रीहयः, शोषयते व्रीहीनातपः ॥

न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९ ॥

पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं हित तस्य प्रतिषेधोऽयमुच्यते । यत्कर्त्रभिप्रायविषयमात्मनेपदं तदवस्थितमेव, प्रतिषिध्यते । पा दमि आङ्यम आङ्यस परिमुह रुचि नृति वद वस ण्यन्तेभ्य परस्मैपदं न भवति । णिचश्चेत्यात्मनेपदं भवति । तत्र पिबतिर्निगरणार्थ. दमिप्रभृतयश्चित्तवत्कर्तृकाः । नृतिश्चलनार्थोऽपि । एषां परस्मैपदं न भवति । ययते । दमि—दमयते । आङ्यम—आयामयते, । 'यमोऽपरिवेषणे' (ग० सू० ) इ

(१) अत्र 'प्रयोजयति' इत्यपपाठः ।

मत्संज्ञा प्रतिपिद्धयते। आङ्यस–आयासयते। परिमुह–परिमोहयते। रुचि–रोचयते। [illegible]ति–नर्त्तयते। वद–वादयते। वस–वासयते। ॐपादिषु धेट उपसंख्यानम्ॐ। धापयते [illegible] ॥

## वा क्यप ॥ ९० ॥

"लोहितादिडाज्भ्य क्यष्" इति वक्ष्यति, तदन्ताद्धातोर्वा परस्मैपद भवति(१)। [illegible]हितायति, लोहितायते। पटपटायति, पटपटायते। अथात्र परस्मैपदेन मुक्ते कथमा[illegible]नद लभ्यते? यावताऽनुदात्तङित इत्येवमादिना प्रकरणेन तन्नियतम्। एव तर्हि [illegible] विकल्प [illegible]विधीयते, तच्चानन्तर परस्मैपदप्रतिषेधेन सन्निधापितमिह [illegible]। तेन मुक्ते शेषात् कर्त्तरि परस्मैपद भवति ॥

## द्युद्भ्यो लुङि ॥ ९१ ॥

[illegible]वेत्येव। द्युत दीप्तौ तस्मादारभ्य वृतु(२)ादयोऽपि कृपूपर्यन्तास्तथैव व्यपदिश्यन्ते। [illegible]न्दशाद्वायर्थो भवति। अनुदात्तेत्त्वान्नियमेनात्मनेपदे प्राप्ते द्युतादिभ्यो लुङि वा [illegible]ति। व्यद्युतत्, व्यद्योतिष्ट। अलुठत्, अलोठिष्ट। लुङीति किम्, द्योतते ॥

## वृद्भ्य स्यसनो ॥ ९२ ॥

द्युतादिष्वेव वृतादय पठ्यन्ते। वृतु वर्त्तने, वृधु वृद्धौ, शृधु शब्दकुत्सायाम्, [illegible] प्रस्रवणे, कृपू सामर्थ्ये। एतेभ्यो धातुभ्य स्ये सनि च परतो वा परस्मैपद भवति। वृत्–वर्त्स्यति, अवर्त्स्यत्, विवृत्सति, वर्त्तिष्यते, अवर्त्तिष्यत, विवर्त्तिषते। [illegible]र्त्स्यति, अवर्त्स्यत्, विवृत्सति, वर्द्धिष्यते, अवर्द्धिष्यत, विवर्द्धिषते। स्यसनोरिति किम्, वर्त्तते ॥

## लुटि च क्लृप ॥ ९३ ॥

वृतादिभ्य एव स्यसनोर्विकल्प सिद्ध, लुटि विधीयते। चकारस्तर्हि स्यसनोरनुकर्षणार्थो न वक्तव्य। एव तर्हीय प्राप्ति पूर्वां प्राप्तिं बाधेत। तस्माच्चकार स्यसनोरनुकर्षणार्थ क्रियते। लुटि च स्यसनोश्च कृपे परस्मैपद वा भवति। कल्प्ता, कल्प्तारौ, कल्प्तार, कल्प्स्यति, अकल्प्स्यत्, चिक्लृप्सति, कल्पिता, कल्पिष्यते, अकल्पिष्यत, चिकल्पिषते(३) ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य तृतीय पाद ॥

---

(१) 'शेषादिति नित्ये प्राप्ते विकल्पार्थं वचनमिति क्वाचित्क पाठ।

(२) क्वचित् 'श्वितादय' इति पाठ।

(३) कुत्रचिदय पाठ—यत्र परस्मैपद तत्र तासि च क्लृप इतीट् प्रतिषेध। यत्रात्मनेपद तत्रेड्भवत्येवेति"।

# अथ प्रथमाध्यायस्य चतुर्थः पादः ।

## आ कडारादेका संज्ञा ॥ १ ॥

"कडाराः कर्मधारये" इति वक्ष्यति आ एतस्मात्सूत्राऽवधेर्यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र एका संज्ञा भवतीति वेदितव्यम् । का पुनरसौ ? या पराऽनवकाशा च । अन्यत्र संज्ञासमावेशान्नियमार्थं वचनमेकैव संज्ञा भवतीति । वक्ष्यति ह्रस्वं लघु, भिदिः, छिदिः-भेत्ता, छेत्ता । संयोगे गुरु, शिक्षा, भिक्षा । संयोगपरस्य ह्रस्वस्य लघुसंज्ञा प्राप्नोति गुरुसंज्ञा च, एका संज्ञेतिवचनाद् गुरुसंज्ञैव भवति । अततक्षत्, अररक्षत् । "सन्वल्लघुनि" इत्येष विधिर्न भवति ॥

## विप्रतिषेधे परं कार्यम् ॥ २ ॥

तुल्यबलविरोधो(१)विप्रतिषेधः । यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत्प्राप्नुतः स तुल्यबलविरोधो विप्रतिषेधः । तस्मिन् विप्रतिषेधे परं कार्यं भवति । नित्यान्तरङ्गापवादा-नित्यबहिरङ्गेषु तुल्यबलता नास्तीति नायमस्य योगस्य विषयो, बलवतैव तत्र भवितव्यम् । अप्रवृत्तौ, पर्यायेण वा प्रवृत्तौ प्राप्तायां वचनमारभ्यते । "अतो दीर्घो यञि" "सुपि च" इत्यस्यावकाशः। वृक्षाभ्याम् , प्लक्षाभ्याम् । "बहुवचने झल्येत्"इत्यस्यावकाशः । वृक्षेषु, प्लक्षेषु । इहोभयं प्राप्नोति वृक्षेभ्यः, प्लक्षेभ्य इति । परं भवति विप्रतिषेधेन ॥

## यू स्त्र्याख्यौ नदी ॥ ३ ॥

ई च ऊ च यू । अविभक्तिको निर्देशः । स्त्रियमाचक्षाते स्त्र्याख्यौ । मूलविभुजादिदर्शनात्कप्रत्ययः । ईकारान्तमूकारान्त च स्त्र्याख्यं शब्दरूपं नदीसंज्ञं भवति । ईकारान्त कुमारी, गौरी, लक्ष्मीः, शार्ङ्गरवी । ऊकारान्त-ब्रह्मबन्धूः, यवागूः । स्त्र्याख्याविति किम् । ग्रामण्ये, खलप्वे । स्त्र्याख्याविति किम् ? ग्रामणीः, सेनानीः, खलपूः । ग्रहणं किम्(२), शब्दार्थे स्त्रीत्व एव यथा स्यात् पदान्तरार्थे मा भूत्।ग्रामण्ये स्त्रियै खलप्वे स्त्रियै । नदीप्रदेशा आण्नद्या इत्येवमादय ॥

## नेयङुवङ्स्थानावस्त्री ॥ ४ ॥

पूर्वेणातिप्रसक्ता नदीसंज्ञा प्रतिषिध्यते । स्थितिः स्थानम् । इयङुवङोः स्थानमनयोरितीयङुवङ्स्थानौ यौ यू तौ नदीसंज्ञौ न भवतः, स्त्रीशब्दं वर्जयित्वा । हे श्रीः, हे भ्रूः । अस्त्रीति किम्, हे स्त्रि ॥

---

( १ ) अत्र न्यासपदमंजरीपर्यालोचनया 'विरोध' इत्येव पाठोऽनुमीयते न तु 'तुल्यबलविरोध' इति ।

( २ ) पदमंजरीदर्शनादत्र 'आख्याग्रहणम्' इति प्रस्तरहितः पाठः प्रतीयते । स्त्रीत्वे' अत्र च 'शब्दार्थस्त्रीत्व' इति पाठ पदमंजर्याम् ।

वाऽऽमि ॥ ५ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्ते आमि विकल्पः क्रियते। इयङुवङ्स्थानौ यू आमि परतो वा नदीसञ्ज्ञौ न भवतः ॥ श्रियाम्, श्रीणाम्। भ्रुवाम्, भ्रूणाम्। अस्त्रीत्येव। स्त्रीणाम्॥

ङिति ह्रस्वश्च ॥ ६ ॥

दीर्घस्य नदीसञ्ज्ञा विहिता ह्रस्वस्य न प्राप्नोति इयङुवङ्स्थानयोश्च प्रतिषिद्धा, तस्माङ्ङिति वा विधीयते। ङिति परतो ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्यः, स्त्र्याख्यौ इयङुवङ्स्थानौ च यू वा नदीसञ्ज्ञौ भवतः। कृत्यै, कृतये। धेन्वै, धेनवे। श्रियै, श्रिये। भ्रुवै, भ्रुवे। अस्त्रीत्येव, स्त्रियै। स्त्र्याख्यावित्येव। अग्नये, वायवे, भानवे ॥

शेषो घ्यसखि ॥ ७ ॥

ह्रस्व इति वर्तते। शेषोऽत्र घिसञ्ज्ञो भवति सखिशब्दं वर्जयित्वा। कश्च शेष (१) ह्रस्वमिवर्णोवर्णान्तं यन्न स्त्र्याख्यं, स्त्र्याख्यं च यन्न नदीसंज्ञकं स शेषः। अग्नये, वायवे, कृतये, धेनवे। असखीति किम्, सख्या, सख्ये, सख्युः, सख्यौ(२) ॥

पतिः समास एव ॥ ८ ॥

पतिशब्दस्य घिसञ्ज्ञायां सिद्धायामयं नियमः क्रियते। पतिशब्दः समास एव घिसञ्ज्ञो भवति। प्रजापतिना, प्रजापतये। समास इति किम्, पत्या, पत्ये। (३)एवकार इष्टतोऽवधारणार्थः। स्वमुष्टिना, स्वमुष्टये ॥

षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥

पतिरिति वर्तते। पूर्वेण नियमेनासमासे न प्राप्नोतीति वचनमारभ्यते। षष्ठ्यन्तेन(४)युक्तः पतिशब्दश्छन्दसि विषये वा घिसञ्ज्ञो भवति। कुलुञ्चानां पतये नमः, कुलुञ्चानां पत्ये नमः। षष्ठीग्रहणं किम्, मया पत्या जरदष्टिर्यथासः। छन्दसीति किम्, ग्रामस्य पत्ये ॥

ह्रस्वं लघु ॥ १० ॥

मात्रिकस्य ह्रस्वसञ्ज्ञा कृता, तस्यानेन लघुसञ्ज्ञा विधीयते। ह्रस्वमक्षरं लघुसंज्ञं भवति। भेत्ता, छेत्ता, अचीकरत्, अजीहरत्। लघुप्रदेशाः "पुगन्तलघूपधस्य च" इत्येवमादयः ॥

संयोगे गुरु ॥ ११ ॥

ह्रस्वमिति वर्तते। पूर्वेण लघुसञ्ज्ञायां प्राप्तायां गुरुसंज्ञा विधीयते। संयोगे परतो ह्रस्वमक्षरं गुरुसञ्ज्ञं भवति। कुण्डा, (५)शिक्षा, भिक्षा। गुरुप्रदेशाः, "गुरोश्च हलः" इत्येवमादयः ॥

---

(१) ह्रस्वेवर्णोवर्णान्तमिति क्वचित् पाठः। (२) "घिप्रदेशा द्वन्द्वे घीत्येवमादयः" इति पाठः।
(३) एवकारकरणमिष्टतोऽवधारणार्थमिति न्यासे पाठः।
(४) अत्र "षष्ठ्यन्तेन शब्देन" इति पदमंजर्यां पाठः। (५) कुण्डा इति अधिकं न्यासे।

दीर्घं च ॥ १२ ॥

संयोग इति नानुवर्त्तते। सामान्येन संज्ञाविधानम्। दीर्घं चाक्षरं गुरुसंज्ञं भवति। ईहांचक्रे, ईक्षांचक्रे(१) ॥

यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १३ ॥

यस्मात्प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद्वा तदादि शब्दरूपं प्रत्यये परतोऽङ्गसंज्ञं भवति। कर्त्ता, हर्त्ता। करिष्यति, (२)अकरिष्यत्। औपगवः, कापटवः। यस्मादिति सन्निनिर्देशार्थं, तदादीतिसम्बन्धात्। प्रत्ययग्रहणं किम्, न्यविशत, व्यकीर्णात। "नेर्विश" इत्युपसर्गाद्विधिरस्ति तदादेरङ्गसंज्ञा स्यात्। विधिग्रहणं किम्, प्रत्ययपरत्वमात्रे मा भूत्। स्त्री इयती। ॐतदादिवचनं स्यादिनुमर्थम्ॐ। करिष्यावः, करिष्यामः, कुण्डानि। पुनः प्रत्ययग्रहणं किमर्थम्,ॐ लुप्तप्रत्यये मा भूत्। स्त्र्यर्थम्। अङ्गप्रदेशा "अङ्गस्य" इत्येवमादयः ॥

सुप्तिङन्तं पदम् ॥ १४ ॥

सुप्तिङिति प्रत्याहारग्रहणम्। सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति। ब्राह्मणाः, पचन्ति। पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधार्थम्। गौरी ब्राह्मणितरा। पदप्रदेशाः "पदस्य" "पदात्" इत्येवमादयः ॥

नः क्ये ॥ १५ ॥

क्य इति क्यच्क्यङ्क्यषां सामान्यग्रहणम्। नान्तं शब्दरूपं क्ये परतः पदसंज्ञं भवति। क्यच्–राजीयति। क्यङ्–राजायते। क्यष–चर्म्मायति(३), चर्म्मायते। सिद्धे सत्यारम्भो नियमार्थः। नान्तमेव क्ये परतः पदसंज्ञं भवति नान्यत्। वाच्यति, स्रुच्यति ॥

सिति च ॥ १६ ॥

यचि भमिति वक्ष्यति। तस्यायं पुरस्तादपवादः। सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति। "भवतष्ठक्छसौ" भवदीयः। "ऊर्णाया युस्" ऊर्णायुः। "ऋतोरण्" "छन्दसि घस्" ऋत्वियः ॥

स्वादिष्वसर्वनामस्थाने ॥ १७ ॥

स्वादिष्विति सुशब्दादेकवचनादारभ्य आकपः प्रत्यया गृह्यन्ते। स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं भवति। राजभ्याम्, राजभिः, राजत्वम्, राजता, राजतरः, राजतमः। असर्वनामस्थान इति किम्। राजानौ, राजानः।

(१) "ईक्षांचक्रे" इत्यस्य स्थाने "ऊहांचक्रे" इति न्यासे।

(२) अत्र मुद्रितकाशिकायां "हरिष्यति" इति उपलभ्यते। न्यासपदमंजरीसंवादात् अस्माभिः परिवर्तितः। (३) अत्र "वर्मायति, वर्मायते" इति न्याससंमतः पाठः।

यचि भम् ॥ १८ ॥

स्वादिष्वसर्वनामस्थान इति वर्तते। पूर्वेण पदसंज्ञायां प्राप्तायां भसंज्ञा विधीयते। यकारादावजादौ च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये पूर्वं भसंज्ञं भवति। यकारादौ—गार्ग्यः, वात्स्यः। अजादौ—दाक्षिः, प्लाक्षिः। ॐनभोऽङ्गिरोमनुषां वत्युपसंख्यानम्ॐ। नभ इव नभस्वत्, अङ्गिरा इव अङ्गिरस्वत्, मनुरिव मनुष्वत्। ॐवृषण्वस्वश्वयोःॐ। वृषन्नित्येतत् वस्वश्वयोः परतो भसंज्ञं छन्दसि विषये। वृषण्वसुः, वृषणश्वस्य मेने। भप्रदेशाः, "भस्य" इत्येवमादयः॥

तसौ मत्वर्थे ॥ १९ ॥

भमिति वर्तते। तकारान्तं सकारान्तं(१) शब्दरूपं मत्वर्थे प्रत्यये परतो भसंज्ञं भवति। उदश्विन्वान् घोषः, विद्युत्वान् बलाहकः। सकारान्तम्—यशस्वी, पयस्वी। तसाविति किम्, तक्षवान् ग्रामः॥

अयस्मयादीनि च्छन्दसि ॥ २० ॥

अयस्मयादीनि शब्दरूपाणि छन्दसि विषये साधूनि भवन्ति। भपदसंज्ञाधिकारे विधानात्तेन मुखेन (२)साधुत्वमयस्मयादीनां विधीयते। अयस्मयं वर्म, अयस्मयानि पात्राणि। क्वचिदुभयमपि भवति। स सुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वं, भत्वाज्जश्त्वं न भवति। छन्दसीति किम्। अयोमयम् वर्म॥ आकृतिगणोऽयम्।(३)

बहुषु बहुवचनम् ॥ २१ ॥

ङ्याप्प्रातिपदिकात्स्वादयः, लस्य तिबादय इति सामान्येन बहुवचनं विहितं तस्यानेन बहुत्वसङ्ख्यावाच्यत्वेन विधीयते। बहुषु बहुवचनं भवति। बहुत्वमस्य वाच्यं भवतीति यावत्। कर्मादयोऽप्यपरे विभक्तीनामर्था वाच्यास्तदीये बहुत्वे बहुवचनम्, कर्मादिषु बहुषु बहुवचनमित्यर्थः। ब्राह्मणाः पठन्ति। यत्र च सङ्ख्या सम्भवति तत्रायमुपदेशः। अव्ययेभ्यस्तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव॥

द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥

द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचने भवतः। एतदपि सामान्यविहितयोर्द्विवचनैकवचनयोरर्थाभिधानम्। द्वित्वे द्विवचनं भवति, एकत्वे एकवचनं भवति। ब्राह्मणौ पचतः, ब्राह्मणः पचति॥

कारके ॥ २३ ॥

कारक इति विशेषणमपादानादि(४)संज्ञाविषयमधिक्रियते। कारक इत्यधिकारो

---

(१) "तकारसकारान्त"मिति पदमंजर्यां पाठः। (२) "तेन द्वारेणे"ति पदमंजरी-सम्मतः पाठः। (३) मुद्रितकाशिकापुस्तकेऽनुपलभ्यमानोऽप्ययं पाठः न्याससंवादात् परिवर्धितः। (४) 'अपादानादिसंज्ञाविषय'मिति पदमंजर्यां न दृश्यते।

दितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामः कारक इत्येवं तद्वेदितव्यम्। कारकशब्दश्च निमित्तपर्यायः। कारकं हेतुरित्यनर्थान्तरम्। कस्य हेतुः? क्रियायाः। वक्ष्यति-ध्रुवमपायेऽपादानम्। ग्रामादागच्छति। पर्वतादवरोहति। कारक इति किम्, वृक्षस्य पर्णं पतति। कुड्यस्य पिण्डः पतति। अकथितं च। अकथितं च कारकं कर्मसंज्ञं भवति। माणवकं पन्थानं पृच्छति। कारक इति किम्, माणवकस्य पितरं पन्थानं पृच्छति। कारकशब्दनेषु चाऽनेनैव विशेषणेन व्यवहारो विज्ञायते॥

## ध्रुवमपायेऽपादानम् ॥ २४ ॥

ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत्कारकमपादानसंज्ञं भवति। ग्रामादागच्छति, पर्वतादवरोहति, *सार्थाद्धीनः, रथात्पतितः*। ॐजुगुप्साविरामप्रमादार्थानामुपसंख्यानम्ॐ। अधर्माज्जुगुप्सते, अधर्माद्विरमति, धर्मात्प्रमाद्यति। अपादानप्रदेशा "अपादाने पञ्चमी" इत्येवमादयः॥

## भीत्रार्थानां भयहेतुः ॥ २५ ॥

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत्कारकमपादानसंज्ञं भवति। चौरेभ्यो बिभेति, चौरेभ्य उद्विजते। त्रायत्यर्थानाम्-चौरेभ्यस्त्रायते, चौरेभ्यो रक्षति। भयहेतुरिति किम्, अरण्ये बिभेति, अरण्ये त्रायते॥

## पराजेरसोढः ॥ २६ ॥

परापूर्वस्य जयतेः प्रयोगे असोढो योऽर्थः सोढुं न शक्यते, तत्कारकमपादानसंज्ञं भवति। अध्ययनात्पराजयते। असोढ इति किम्। शत्रून् पराजयते॥

## वारणार्थानामीप्सितः ॥ २७ ॥

वारणार्थानां धातूनां प्रयोगे य ईप्सितोऽर्थस्तत्कारकमपादानसंज्ञं भवति। प्रवृत्तिविघातो वारणम्। यवेभ्यो(१)गा वारयति, यवेभ्यो गां निवर्त्तयति। ईप्सित इति किम्, यवेभ्यो गां वारयति क्षेत्रे॥

## अन्तर्द्धौ येनादर्शनमिच्छति ॥ २८ ॥

व्यवधानमन्तर्द्धिः। अन्तर्द्धिनिमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं भवति। उपाध्यायादन्तर्द्धत्ते, उपाध्यायान्निलीयते। मा मामुपाध्यायो द्राक्षीदिति निलीयते। अन्तर्द्धाविति किम्, चौरान्न दिदृक्षते। इच्छतिग्रहणं किम्, अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्॥

## आख्यातोपयोगे ॥ २९ ॥

आख्याता प्रतिपादयिता, उपयोगो नियमपूर्वकं विद्याग्रहणम्। उपयोगे साध्ये

---

(१) "गाः" इति बहुवचनान्तो न्यासे पाठः।

आख्याता तत्कारकमपादानसंज्ञं भवति। उपाध्यायादधीते, उपाध्यायादागमयति। उपयोग इति किम्। नटस्य(१) शृणोति॥

जनिकर्तुः प्रकृतिः॥ ३०॥

जनेः कर्ता जनिकर्ता। जन्यर्थस्य जन्मनः कर्ता जायमानः, तस्य या प्रकृतिः कारण हेतुः तत् कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते, गोमयाद्वृश्चिको जायते॥

भुवः प्रभवः॥ ३१॥

कर्तुरिति वर्तते। भवनं भूः। प्रभवत्यस्मादिति प्रभवः भूकर्तुः प्रभवो यस्तत्कारकमपादानसंज्ञं भवति। हिमवतो गङ्गा प्रभवति, काश्मीरेभ्यो वितस्ता प्रभवति। प्रथमत उपलभ्यत इत्यर्थः॥

कर्मणा यमभिप्रैति स सम्प्रदानम्॥ ३२॥

कर्मणा करणभूतेन कर्ता यमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं भवति। अन्वर्थसंज्ञाविज्ञानाद्ददातिकर्मणेति विज्ञायते। उपाध्यायाय गां ददाति, माणवकाय भिक्षां ददाति। क्रियाग्रहणमपि कर्तव्यम्। ॐक्रियया यमभिप्रैति स सम्प्रदानम्ॐ। श्राद्धाय निगर्हते(२), युद्धाय सन्नह्यते, पत्ये शेते। सम्प्रदानप्रदेशाः "चतुर्थी सम्प्रदाने इत्येवमादयः। ॐकर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञाॐ। पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः॥

रुच्यर्थानां प्रीयमाणः॥ ३३॥

रुचिना समानार्था रुच्यर्थाः। अन्यकर्तृकोऽभिलाषो रुचिः। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थस्तत् कारकं सम्प्रदानसंज्ञं भवति। देवदत्ताय रोचते मोदकः, यज्ञदत्ताय स्वदतेऽपूपः। देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता। प्रीयमाण इति किम्? देवदत्ताय रोचते मोदकः पथि॥

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः॥ ३४॥

श्लाघ ह्नुङ् स्था शप इत्येतेषां ज्ञीप्स्यमानो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति। ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो बोधयितुमभिप्रेतः। देवदत्ताय श्लाघते। देवदत्तं श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः। एवं देवदत्ताय ह्नुते, यज्ञदत्ताय(३) ह्नुते। देवदत्ताय तिष्ठते, यज्ञदत्ताय तिष्ठते। देवदत्ताय शपते, यज्ञदत्ताय शपते। ज्ञीप्स्यमान इति किम्। देवदत्ताय श्लाघते पथि॥(४)

धारेरुत्तमर्णः॥ ३५॥

धारयतेः प्रयोगे उत्तमर्णो योऽर्थः तत्कारकं सम्प्रदानसंज्ञं भवति। उत्तममृणं

(१) "नटस्य गाथा शृणोति" इति न्यासे। क्वचित् 'ग्रन्थिकस्य गाथा शृणोति' इति पाठान्तरम्।
(२) 'निगल्हते' इति न्यासे पाठः। (३) 'अपह्नुते' इति न्यासे।
(४) 'देवदत्तं श्लाघते' 'देवदत्तः श्लाघते' इति पाठः पदमञ्जर्याम्। 'पथि' इति तु तत्र नास्ति।

यस्य स उत्तमर्णः । कस्य चोत्तमऋण, यदीयं धनम् । धनस्वामी प्रयोक्ता उत्तमर्णः स सम्प्रदानसंज्ञो भवति । देवदत्ताय शतं धारयति, यज्ञदत्ताय शतं धारयति । उत्तमर्ण इति किम्, देवदत्ताय शतं धारयति ग्रामे ॥

स्पृहेरीप्सितः ॥ ३६ ॥

स्पृह ईप्सायां, चुरादावदन्तः पठ्यते, तस्य ईप्सितो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । ईप्सित इत्यभिप्रेत उच्यते । पुष्पेभ्यः स्पृहयति, फलेभ्यः स्पृहयति । ईप्सित इति किम्, पुष्पेभ्यो वने स्पृहयति ॥

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३७ ॥

अमर्षः क्रोधः, अपकारो द्रोहः, अक्षमा ईर्ष्या, गुणेषु दोषाविष्करणमसूया । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत्कारकं सम्प्रदानसंज्ञं भवति । क्रोधस्तावत्कोप एव, द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते तस्मात्सामान्येन विशेषणं यं प्रति कोप इति । देवदत्ताय क्रुध्यति, देवदत्ताय द्रुह्यति, देवदत्तायेर्ष्यति, देवदत्तायासूयति । यं प्रति कोप इति किम्, भार्यामीर्ष्यति, मैनामन्यो द्राक्षीदिति ॥

क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥

पूर्वेण सम्प्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । क्रुधद्रुहोरुपसृष्टयोः(१)उपसर्गसम्बद्धयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति । देवदत्तमभिक्रुध्यति, देवदत्तमभिद्रुह्यति । उपसृष्टयोरिति किम्, देवदत्ताय क्रुध्यति, यज्ञदत्ताय द्रुह्यति ॥

राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥

राधेरीक्षेश्च कारकं सम्प्रदानसंज्ञं भवति, कीदृशं ? यस्य विप्रश्नः, विविधः प्रश्नः विप्रश्नः । स कस्य भवति ? यस्य(२)शुभाशुभं पृच्छ्यते । देवदत्ताय राध्यति, देवदत्तायेक्षते । नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः ॥

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता ॥ ४० ॥

प्रति आङ् इत्येवपूर्वस्य शृणोतेः कारकं सम्प्रदानसंज्ञं भवति । कीदृशं ? पूर्वस्य कर्त्ता । प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमे प्रतिज्ञाने वर्त्तते, स चाभ्युपगमः परेण प्रयुक्तस्य सतो भवति । तत्र प्रयोक्ता पूर्वस्याः क्रियायाः कर्त्ता सम्प्रदानसंज्ञो भवति । देवदत्ताय गां प्रतिशृणोति, देवदत्ताय गामाशृणोति । प्रतिजानीत इत्यर्थः ॥

अनुप्रतिगृणश्च ॥ ४१ ॥

पूर्वस्य कर्त्तेति वर्त्तते । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं सम्प्रदानसंज्ञं भवति । होता प्रथमं शंसति तमन्यः प्रोत्साहयति । अनुगरः प्रतिगर इति हि शंसितुः प्रोत्साहने वर्त्तते । होत्रेऽनुगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ॥

---

( १ ) "उपसर्गयोरिति" पदमञ्जर्याम् ॥ ( २ ) अत्र "यत्सम्बन्धि" इति पदमञ्जर्याम् पाठः॥

साधकतमं करणम् ॥ ४२ ॥

क्रियासिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं तत्साधकतमं कारकं करणसंज्ञं भवति । दात्रेण लुनाति, परशुना छिनत्ति । तमब्ग्रहणं किम् । गङ्गायां घोषः, कूपे गर्गकुलम् । करणप्रदेशाः "कर्तृकरणयोस्तृतीया" इत्येवमादयः ॥

दिवः कर्म च ॥ ४३ ॥

पूर्वेण करणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । दिवः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति, चकारात्करणसंज्ञं च । अक्षान् दीव्यति, अक्षैर्दीव्यति ॥

परिक्रयणे सम्प्रदानमन्यतरस्याम् ॥ ४४ ॥

साधकतममिति वर्तते । पूर्वेण करणसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञा पक्षे विधीयते । परिक्रयणे साधकतमं कारकमन्यतरस्यां सम्प्रदानसंज्ञं भवति । परिक्रयणं नियतकालं वेतनादिना स्वीकरणं, नात्यन्तिकः क्रय एव । शतेन परिक्रीतोऽनुब्रूहि, शताय परिक्रीतोऽनुब्रूहि । सहस्रेण परिक्रीतोऽनुब्रूहि, सहस्राय परिक्रीतोऽनुब्रूहि ॥

आधारोऽधिकरणम् ॥ ४५ ॥

आध्रियन्तेऽस्मिन् क्रिया(१)इत्याधारः । कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति यः आधारस्तत्कारकमधिकरणसंज्ञं भवति । कटे आस्ते, कटे शेते, स्थाल्यां पचति । अधिकरणप्रदेशाः "सप्तम्यधिकरणे च" इत्येवमादयः ॥

अधिशीङ्स्थासां कर्म ॥ ४६ ॥

पूर्वेणाधिकरणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । अधिपूर्वाणां शीङ्स्थासाम् इत्येतेषामाधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममधिशेते, ग्राममधितिष्ठति, पर्वतमध्यास्ते ॥

अभिनिविशश्च ॥ ४७ ॥

अभिनिपूर्वस्य विशतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते । कथं कल्याणेऽभिनिवेशः, पापेऽभिनिवेशः । या या संज्ञा यस्मिन् यस्मिन् सन्निन्यभिनिविशत इति । अन्यतरस्यामिति वर्तते "परिक्रयणे सम्प्रदानमन्यतरस्याम्" इत्यतः । सा च व्यवस्थितविभाषा विज्ञायते ॥

उपान्वध्याङ्वसः ॥ ४८ ॥

उप अनु अधि आङ् इत्येवं पूर्वस्य वसतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममुपवसति सेना, पर्वतमुपवसति, ग्राममनुवसति, ग्राममधिवसति, ग्राममावसति ॥ *वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः* । ग्रामे उपवसति । भोजननिवृत्तिं करोतीत्यर्थः ॥

---

(१) 'क्रियाश्रयाः' इति न्यासे पाठः ।

कर्तुरीप्सिततमं कर्म ॥ ४९ ॥

कर्त्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति। कटं करोति, ग्रामं गच्छति। कर्त्तुरिति किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा न कर्तुः। तमब्ग्रहणं किम्? पयसौदनं भुङ्क्ते। कर्मण्यनुवर्तमाने पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। इतरथाऽऽधारस्यैव हि स्यात्। गेहं प्रविशतीति। ओदनं पचति, सक्तून् पिबतीत्यादिषु न स्यात्। पुनः कर्मग्रहणात् सर्वत्र सिद्धं भवति। कर्मप्रदेशाः "कर्मणि द्वितीया" इत्येवमादयः ॥

तथायुक्तं चानीप्सितम् ॥ ५० ॥

येन प्रकारेण कर्त्तुरीप्सिततमं क्रियया युज्यते तेनैव प्रकारेण यदनीप्सितं युक्तं भवति तस्य कर्मसंज्ञा विधीयते। ईप्सितादन्यत्सर्वमनीप्सितं द्वेष्यमितरच्च। विषं भक्षयति, चौरान् पश्यति, ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ॥

अकथितं च ॥ ५१ ॥

अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति। केनाऽकथितम्, अपादानादिविशेषकथाभिः। परिगणनं कर्त्तव्यम्।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना ॥

उपयुज्यत इत्युपयोगः, पयःप्रभृति, तस्य निमित्तं गवादि, तस्योपयुज्यमानपयःप्रभृतिनिमित्तस्य गवादेः कर्मसंज्ञा विधीयते। पाणिना कांस्यपात्र्यां गां दोग्धि पयः। पाण्यादिकमप्युपयोगनिमित्तं तस्य कस्मान्न भवति। नैतदस्ति। विहिता हि तत्र करणादिसंज्ञा। तदर्थमाह—अपूर्वविधाविति। ब्रुविशासिगुणेन च यत् सचते। ब्रुविशास्योर्गुणः साधनं प्रधानं कर्म धर्मादिकं, तेन यत्सम्बध्यते, तदकीर्तितमाचरितं कविना, तदकथितमुक्तं सूत्रकारेण। दुहि—गां दोग्धि पयः। याचि—पौरवं गां याचते। रुधि—गामवरुणद्धि व्रजम्। प्रच्छि—माणवकं पन्थानं पृच्छति। भिक्षि—पौरवं गां भिक्षते। चिञ्—वृक्षमवचिनोति फलानि। ब्रुवि—माणवकं धर्मं ब्रूते। शासि—माणवकं धर्ममनुशास्ति ॥

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ ॥ ५२ ॥

अर्थशब्दः प्रत्येकमभिसम्बध्यते। गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां तथा शब्दकर्मकाणामकर्मकाणां च अण्यन्तानां यः कर्त्ता स ण्यन्तानां कर्मसंज्ञो भवति। गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम्। याति ॥ यापयति माणवकं ग्रामम्। *अन्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः*। नयति भारं देवदत्तः, नाययति भारं देवदत्तेन। वहति भारं देवदत्तः, वाहयति भारं देवदत्तेन। *वहेरनियन्तृकर्तृकस्येति वक्तव्यम्*। इह प्रतिषेधो मा भूत्।

वाहयति यवान् बलीवर्दानिति। बुद्धि—बुध्यते माणवको धर्मम्, बोधयति माणवकं धर्मम्। वेत्ति माणवको धर्मम्, वेदयति माणवकं धर्मम्। प्रत्यवसानमभ्यवहारः। भुङ्क्ते माणवक ओदनम्, भोजयति माणवकमोदनम्। अश्नाति माणवक ओदनम्, आशयति माणवकमोदनम्। ॐआदिखाद्योः प्रतिषेधो वक्तव्यॐ। अत्ति माणवक ओदनम्, आदयते माणवकेनौदनम्। खादति माणवकः, खादयति माणवकेन। ॐभक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यॐ। भक्षयति पीण्डीं देवदत्तः, भक्षयति पीण्डीं देवदत्तेनेति। अहिंसार्थस्येति किम्। भक्षयन्ति बलीवर्दाः सस्य, भक्षयन्ति बलीवर्दान् सस्यम्। शब्दकर्मणाम्—अधीते माणवको वेदम्, अध्यापयति माणवकं वेदम्। पठति माणवको वेदम्, पाठयति माणवकं वेदम्। अकर्मकाणाम्—आस्ते देवदत्तः, आसयति देवदत्तम्। शेते देवदत्तः, शाययति देवदत्तम्। एतेषामिति किम्? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेनेति। अण्यन्तानामिति किम्? गमयति देवदत्तो यज्ञदत्तं समपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः॥

इकोरन्यतरस्याम् ॥ ५३ ॥

अणि कर्ता स णाविति वर्तते। हरतेः करोतेश्चाण्यन्तयोर्यः कर्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति। हरति भारं माणवकः, हारयति भारं माणवकं, माणवकेनेति वा। करोति कटं देवदत्तः, कारयति कटं देवदत्तं, देवदत्तेनेति वा। ॐअभिवादिदृशोरात्मनेपद उपसंख्यानम्ॐ। अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तं, देवदत्तेनेति वा। पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजानं, भृत्यैरिति वा। आत्मनेपद इति किम्, दर्शयति चैत्रं मैत्रमपरः। प्राप्तविकल्पत्वाद् द्वितीयैव। अभिवादयति गुरुं माणवकेन पिता। अप्राप्तविकल्पत्वात्तृतीयैव॥

स्वतन्त्रः कर्ता ॥ ५४ ॥

स्वतन्त्र इति प्रधानभूत उच्यते(१)। अगुणीभूतो यः क्रियाप्रसिद्धौ स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवति। देवदत्तः पचति, स्थाली पचति। कर्तृप्रदेशाः "कर्तृकरणयोस्तृतीया" इत्येवमादयः॥

तत्प्रयोजको हेतुश्च ॥ ५५ ॥

तदिति अनन्तरः कर्ता परामृश्यते(२)। तस्य प्रयोजकः तत्प्रयोजकः। निपातनात् समासः। स्वतन्त्रस्य प्रयोजको योऽर्थः तत्कारकं हेतुसंज्ञं भवति, चकारात्कर्तृसंज्ञं च। संज्ञासमावेशार्थश्चकारः। कुर्वाणं प्रयुङ्क्ते, कारयति। हारयति। हेतुत्वाद् णिचो निमित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते। हेतुप्रदेशाः, "हेतुमति च" इत्येवमादयः॥

---

(१) अत्र न्यासे "उच्यते" इति नास्ति। "अगुणीभूत" इत्यत्र च "अप्रगुणभूत" इति पाठः।
(२) "तदित्यनेन कर्ता संबध्यते" इति पद०।

प्राग्रीश्वरान्निपाताः ॥ ५६ ॥

"अधिरीश्वर" इति वक्ष्यति । प्रागेतस्मादवधेर्यानित ऊर्ध्वमनुक्रमिष्यामो, तसञ्ज्ञास्ते वेदितव्याः । वक्ष्यति "चादयोऽसत्वे" च वा ह अह । प्राग्वचनं वेशार्थम् । गत्युपसर्गकर्मप्रवचनीयसञ्ज्ञाभिस्सह निपातसञ्ज्ञा समाविशति । यम् "ईश्वरे तोसुन्कसुनौ" इत्ययमवधिर्मा विज्ञायीति ॥

रीश्वराद्वो(१)श्वरान्मा भूत् कृन्मेजन्त- परोऽपि सः ।
समासेष्वव्ययीभावो लौकिकं चातिवर्तते ॥

चादयोऽसत्त्वे ॥ ५७ ॥

चादयो निपातसञ्ज्ञा भवन्ति, न चेत्सत्त्वे वर्तन्ते । प्रसज्ज्यप्रतिषेधोऽयम् ।
मिति प्रत्युच्यते ॥ च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् ।
सूपत् । कूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकि
नकिम् । माङ् । माङो ङकारो विशेषणार्थः "माङि लुङ्" इति । इह न भवति ।
भवतु, मा भविष्यति । नञ् । यावत् । तावत् । त्वा । त्वै । द्वै । रै । श्रौषट् ।
स्वाहा । वषट् । स्वधा । ओम् । किल । तथा । अथ । सु । स्म । अस्मि । अ । ५
उ । ऋ । लृ । ए । ऐ । ओ । औ । अम् । तक् । उञ् । उकञ् । वेलायाम् ।
यथा । यत् । यम् । तत् । किम् । पुरा । अद्धा । धिक् । हाहा । हे । है । प्याट् ।
थाट् । अहो । उताहो । हो । तुम् । तथाहि । खलु । आम् । आहो । अथो । ननु
मन्ये । मिथ्या । असि । ब्रूहि । तु । नु । इति । इव । वत् । चन । यत । ६
शम् । कम् । अनुकम् । नहिकम् । हिकम् । सुकम् । सत्यम् । ऋतम्(२) । श्रद्धा
इद्धा । मुधा । नोचेत् । नचेत् । नहि । जातु । कथम् । कुतः । कुत्र । अव । अनु
हाहौ । हैहा । ईहा । आहोस्वित् । छम्बट् । खम् । दिष्ट्या । पशु । वट् । सह ।
पक् । अङ्ग । फट् । ताजक । अये । अरे । चटु । वाट् । कुम् । खुम् । घुम् । हुम्
आईम् । शीम् । सीम् । वै । (३)उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः । ७
प्रतिरूपकाः ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

---

(१) अत्र न्यासे "वीश्वर" इति पाठः । स च संहितापाठे वीश्वर इति यो ... स्तदाश्रय । (२) ऋतमित्यनन्तरम्—"वाकिर्, नकिर्, आङ्, म, नो, ना, प्रतिषेधे, उत, दाह," इति क्वचित्पाठः ।

(३) "स्वे, तुवै, न्वै, नुवै, अध, अधस्, रिम, अच्छ, अदल, दह, हे हे, है है, नौ, आस्, शस्, शुकम्, सम्, वव, वात्, डिकम्, हिलुक्, वशम्, शिकम्, अकम् सनुकम्, नुकम्, अन्न, चो, सुक्, माजक्, अले, वट्, वाट्, कीम्," पाठः क्वचित्।

"अच उपसर्गात्तः" इति तत्वं न भवति। दुर्नीतम्। दुर्नयः। दुर्निर्णयः। "उपसर्गात्" इति णत्वं न भवति। असत्त्व इति किम्। पशुर्वै पुरुषः। पशुः पुरोडाशः। च निपातप्रदेशाः "स्वरादिनिपातमव्ययम्" इत्येवमादयः॥

प्रादयः॥ ५८॥

प्रादयोऽसत्त्वे निपातसंज्ञा भवन्ति। प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ्। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप। पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम्। "उपसर्गाः क्रियायोगे" इति (१)चादीनामुपसर्गसंज्ञा मा भूत्। असत्त्व इत्येव। परा जयति सेना(२)॥

उपसर्गाः क्रियायोगे॥ ५९॥

प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति। प्रणयति। परिणयति। प्रणायकः। परिणायकः। क्रियायोग इति किम्। प्रगतो नायकोऽस्माद्देशात् प्रनायको देशः। ॥मरुच्छब्दस्य चोपसंख्यानम् कर्तव्यम्॥ मरुद्भिर्दत्तो मरुत्तः। संज्ञाविधानसामर्थ्याद् अनजन्तत्वेऽपि अच उपसर्गात्तः इति तत्वं भवति॥ श्रच्छब्दस्योपसंख्यानम्॥ "आतश्चोपसर्गे" इति अङ् भवति। श्रद्धा। उपसर्ग प्रदेशाः "उपसर्गे घोः किः" इत्येवमादयः।

गतिश्च॥ ६०॥

गतिसंज्ञकाश्च प्रादयो भवन्ति क्रियायोगे। प्रकृत्य। प्रकृतम्। यत् प्रकरोति। योगविभाग उत्तरार्थः। उत्तरत्र गतिसंज्ञैव यथा स्यात्, उपसर्गसंज्ञा मा भूत्। ऊरीस्यादिष्वत्र "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" इति षत्वं प्रसज्येत। चकारः संज्ञासमावेशार्थः। प्रणीतम्। अभिषिक्तम्। "गतिरनन्तरः" इति स्वरः, "उपसर्गात्" इति णत्वषत्वे च भवतः। ॥कारिकाशब्दस्योपसंख्यानम्॥। कारिकाकृत्य। कारिकाकृतम्। यत्कारिकाकरोति। ॥पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम्॥। पुनरुत्स्यूतं वासो देयम्। "गतिर्गतौ" इति निघातो भवति। चनोहितः। "गतिरनन्तरः" इति स्वरः। गतिप्रदेशाः "कुगतिप्रादयः" इत्येवमादयः॥

ऊर्यादिच्विडाचश्च॥ ६१॥

ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधानं तत्साहचर्यादूर्यादीनामपि तैरेव योगे गतिसंज्ञा विधीयते। ऊरीउररीशब्दावङ्गीकरणे विस्तारे च। ऊरीकृत्य। ऊरीकृतम्। यदूरीकरोति। उररीकृत्य। उररीकृतम्। यदुररीकरोति। पापी। ताली। आताली। वेताली। धूसी। शकला। संशकला। ध्वंसकला। भ्रंशकला। एते शकलादयो हिंसायाम्। शकला-

(१) 'चादीनामिति' पदमञ्जर्यां पाठः।

(२) अत्र 'पराः सेना' इति न्यासे, पराजयन्ति सेना' इति च पदमञ्जर्याम्।

कृत्य। संशकलाकृत्य। ध्वंसकलाकृत्य। भ्रंसकलाकृत्य। गुलुगुधा पीडार्थे। गु
धाकृत्य। सजूः सहार्थे। सजूः कृत्य। फलू, फली, विक्ली, आक्ली, इति
फलूकृत्य। फलीकृत्य। विक्लीकृत्य। आक्लीकृत्य। आलोष्टी, कराली,
दोवाली, वर्पाली, मस्मसा, मसमसा, एते हिंसायाम्। वषट्। वौषट्।
स्वाहा। स्वधा। वन्धा। प्रादुस्। श्रत्। आविस्। च्व्यन्ता' खल्वपि।
शुक्लीकृतम्। यच्छुक्लीकरोति। डाच्। पटपटाकृत्य। पटपटाकृतम्।

## अनुकरणं चानितिपरम् ॥ ६२ ॥

इति परो यस्मादिति बहुव्रीहिः। अनुकरणमनितिपर [illegible] संज्ञं
खाट्कृत्य। खाट्कृतम्। यत् खाट्करोति। अनितिपरमिति किम्? खाडिति
निरष्ठीवत् (१)॥

## आदरानादरयोः सदसती ॥ ६३ ॥

प्रीत्यतिशय आदरः(२)। परिभवौदासीन्यमनादरः। आदरानादर [illegible]
सदसच्छब्दौ गतिसंज्ञौ भवतः। सत्कृत्य। सत्कृतम्। यत्सत्करोति। [illegible]
असत्कृतम्। यदसत्करोति। आदरानादरयोरिति किम्? सत्कृत्वा काण्ड [illegible]
असत्कृत्वा काण्डं गतः॥

## भूषणेऽलम् ॥ ६४ ॥

अलमिति प्रतिषेधे सामर्थ्ये पर्याप्तौ भूषणे चेति विशेषणमुपादीयते।
योऽलंशब्दः स गतिसंज्ञो भवति। अलंकृत्य अलंकृतम्। यदलंकरोति। भूषण
किम्? अलं भुक्त्वा ओदनं गतः॥

## अन्तरपरिग्रहे ॥ ६५ ॥

अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसंज्ञो भवति। परिग्रहः स्वीकरणं तदभावे
संज्ञा विधीयते। अन्तर्हत्य। अन्तर्हतम्। यदन्तर्हन्ति। अपरिग्रह इति
अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः। *अन्तः [illegible]
णत्वेषूपसर्गसंज्ञा वक्तव्या*। अन्तर्द्धा। अन्तर्द्धिः। अन्तर्णयति॥

## कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः। कणेहत्य पयः पिब
मनोहत्य पयः पिबति। तावत्पिबति यावदस्याभिलाषो निवृत्तः। श्रद्धा
त्यर्थः। श्रद्धाप्रतीघात इति किम्? कणे हत्वा गतः। मनो हत्वा गत॥

(१) कस्यचित्कवेरयं प्रयोगः। सम्पूर्णोऽयं श्लोकः—चुम्बनसक्तः सोऽस्याः [illegible]
मात्मनो वदने। जिह्वामूलस्पृष्टं खाडिति कृत्वा निरष्ठीवत्॥

(२) 'प्रीतिसम्भ्रम-' इति पाठः क्वचित्।

पुरोऽव्ययम् ॥ ६७ ॥

असिप्रत्ययान्त पुर शब्दोऽव्यय स गतिसञ्ज्ञो भवति। समासस्वरोपचारा योजनम्। पुरस्कृत्य। पुरस्कृतम्। यत्पुरस्करोति। अव्ययमिति किम्? पुरः, पुरौ, कृत्वा काण्ड गत ॥

अस्त च ॥ ६८ ॥

अस्तशब्दो मकारान्तोऽव्ययमनुपलब्धौ वर्त्तते स गतिसञ्ज्ञो भवति। अस्तगत्य यित्वा पुनरुदेति। अस्तगतानि धनानि। यदस्तगच्छति। अव्ययमित्येव। अस्त ण्डम्। क्षिप्तमित्यर्थः ॥

अच्छ गत्यर्थवदेषु ॥ ६९ ॥

अच्छशब्दोऽव्ययमभिशब्दस्यार्थे वर्त्तते। स गत्यर्थेषु धातुषु वदतौ च गतिसञ्ज्ञो वति। अच्छगत्य। अच्छगतम्। यदच्छगच्छति। वदतौ-अच्छोद्य। अच्छोदितम्। दच्छवदति। अव्ययमित्येव। उदकमच्छ गच्छति ॥

अदोऽनुपदेशे ॥ ७० ॥

अद शब्दस्त्यदादिषु पठ्यते सोऽनुपदेशे गतिसञ्ज्ञो भवति। उपदेश परार्थ योग। स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेश इति सोऽस्य विषय। द कृत्य। अद कृतम्। यदद करोति। अनुपदेश इति किम्? अद कृत्वा काण्ड त इति परस्य कथयति ॥

तिरोऽन्तर्द्धौ ॥ ७१ ॥

अन्तर्द्धिर्व्यवधानम्। तत्र तिर शब्दो गतिसञ्ज्ञो भवति। तिरोभूय। तिरोभूतम्। द् तिरोभवति। अन्तर्द्धाविति किम्? तिरो भूत्वा स्थित। पार्श्वतो(१)भूत्वेत्यर्थ ॥

विभाषा कृञि ॥ ७२ ॥

अन्तर्द्धाविति वर्त्तते। प्राप्तविभाषेयम्। तिर शब्द करोतौ परतो विभाषा गतिञ्ज्ञो भवति। तिर कृत्य तिरस्कृत्य। तिरस्कृतम्। यत्तिरस्करोति। तिरस्कृत्वा, र कृत्वा। अन्तर्द्धावित्येव। तिर कृत्वा काण्ड तिष्ठति ॥

उपाजेऽन्वाजे ॥ ७३ ॥

विभाषा कृञीति वर्त्तते। उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ र्बलस्य सामर्थ्याधाने वर्त्तेते तौ कृञि विभाषा गतिसञ्ज्ञौ भवत। उपाजेकृत्य। पाजे कृत्वा। अन्वाजेकृत्य। अन्वाजे कृत्वा ॥

साक्षात्प्रभृतीनि च ॥ ७४ ॥

विभाषा कृञीति वर्त्तते। साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि

---

१) पाठोऽयं न्यासपदमञ्जरीसंवादान्मूलग्रन्थयो न प्रतीयते।

भवन्ति । ॐसाक्षात्प्रभृतिषु च्व्यर्थवचनम्ॐ । साक्षात्कृत्य । साक्षात्कृत्वा । ि
कृत्य । मिथ्या कृत्वा । साक्षात् । मिथ्या । चिन्ता । भद्रा । लोचना । ि
सपत्का । आस्था । अमा । श्रद्धा । प्राजर्या । प्राजरुहा । बीजर्या । बीजरुहा ।
अर्थे । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । ... न
दीना मकारान्तत्व निपात्यते । अग्नौ । वशे । विकम्पने । विहसने । प्रहसने ।
प्रादुस् । नमस् । आविस् ॥

अनत्याधान उरसिमनसी ॥ ७५ ॥

विभाषा कृञीति वर्त्तते । अत्याधानमुपश्लेषण तदभावेऽनत्याधाने उर
शब्दौ विभाषा कृञि गतिसंज्ञौ भवत । उरसिकृत्य उरसि कृत्वा ।
मनसि कृत्वा । अनत्याधान इति किम् ? उरसि कृत्वा पाणि शेते ॥

मध्येपदेनिवचने च ॥ ७६ ॥

विभाषा कृञीति वर्त्तते । चकारादनत्याधान इति च । मध्ये पदे निवचने
शब्दा अनत्याधाने विभाषा कृञि गतिसंज्ञा भवन्ति । मध्येकृत्य मध्ये
पदेकृत्य पदे कृत्वा । निवचन वचनाभाव । निवचनेकृत्य निवचने कृत्वा ।
नियम्येत्यर्थ । अनत्याधान इत्येव । हस्तिन पदे कृत्वा शिर शेते ॥

नित्य हस्ते पाणावुपयमने ॥ ७७ ॥

कृञीति वर्तते । हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्य गतिसंज्ञौ भवत
मने । उपयमन दारकर्म । पाणौकृत्य । हस्तेकृत्य । दारकर्म कृत्वेत्यर्थ ।
इति किम् ? हस्ते कृत्वा कार्षापण गत ॥

प्राध्व बन्धने ॥ ७८ ॥

कृञीति वर्त्तते । प्राध्वमिति मकारान्तमव्ययमानुकूल्ये वर्त्तते, तदानुकूल्य
नहनुक यदा भवति तदा प्राध्वशब्द कृञि नित्य गतिसंज्ञो भवति ।
बन्धन इति किम् ? प्राध्व कृत्वा शकट गत ॥

जीविकोपनिषदावौपम्ये ॥ ७९ ॥

कृञीति वर्त्तते । जीविका उपनिषदित्येतौ शब्दौ औपम्ये विषये कृञि
भवत । जीविकाकृत्य । उपनिषत्कृत्य । औपम्य इति किम् । जीविका कृत्वा गत

ते प्राग्धातो ॥ ८० ॥

ते गत्युपसर्गसंज्ञका धातो प्राक् प्रयोक्तव्या । तथा चैवोदाहृता । ...
गोर्थम । गतयो ह्यनन्तरा ॥

छन्दसि परेऽपि ॥ ८१ ॥

प्राक् प्रयोगे प्राप्ते छन्दसि परेऽप्यभ्यनुज्ञायन्ते । छन्दसि विषये

ऽपि पूर्वेऽपि प्रयोक्तव्याः। न च परेषां प्रयुज्यमानानां संज्ञाकार्यं किंचिदस्ति। ...लं परप्रयोगेऽपि क्रियायोग एषामस्तीति ज्ञाप्यते। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना॥

व्यवहिताश्च ॥ ८२ ॥

व्यवहिताश्च गत्युपसर्गसंज्ञकाश्छन्दसि दृश्यन्ते। आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। आयाहि॥

कर्मप्रवचनीयाः ॥ ८३ ॥

कर्मप्रवचनीया इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसंज्ञास्ते वेदितव्याः। अधिरीश्वर इति यावदनुवर्तते। कर्मप्रवचनीयप्रदेशाः "कर्मप्रवचनीययुक्ते द्वितीया" इत्येवमादयः॥

अनुर्लक्षणे ॥ ८४ ॥

अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। शाकल्यस्य संहितामनु प्रावर्षत्। अगस्त्यमन्वसिञ्चत्। अगस्त्यमन्वसिञ्चन् प्रजाः। किमर्थमिदमुच्यते, यावता ...येऽयम्भूताख्याने इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा। हेत्वर्थं तु वचनं, हेतुतृतीयां बाधित्वा द्वितीयैव यथा स्यात्॥

तृतीयार्थे ॥ ८५ ॥

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। नदीमन्ववसिता सेना। ...तमन्ववसिता सेना। पर्वतेन सम्बद्धेत्यर्थः॥

हीने ॥ ८६ ॥

हीन इति न्यून उच्यते स चोत्कृष्टापेक्षः। तेनेयं हीनोत्कृष्टसम्बन्धे सप्तमी विज्ञा... हीने द्योत्येऽयमनुः कर्मप्रवचनीयसंज्ञो भवति। अनुशाकटायनं वैयाकरणाः। अर्जुनं योद्धारः॥

उपोऽधिके च ॥ ८७ ॥

उपशब्दः, अधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। उपखार्यां द्रोणः। ...निष्के कार्षापणम्। हीने-उपशाकटायनं वैयाकरणाः॥

अपपरी वर्जने ॥ ८८ ॥

अपपरी शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः। प्रकृतेन सम्बन्धिना ...चिदनभिसम्बन्धो वर्जनम्। अप-अप त्रिगर्तेभ्यो वृष्टो देवः। परि-परि त्रिगर्तेभ्यो वृष्टो देवः। वर्जन इति किम्। ओदनं परिषिञ्चति॥

आङ् मर्यादावचने ॥ ८९ ॥

आङित्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति। अवधिर्मर्यादा। वच-

) अत्र न्यासपर्यालोचनया 'हेतौ तृतीयायां प्राप्तायां ताम्' इति पाठोऽनुमीयते।

नग्रहणादभिविधिरपि गृह्यते। आ पाटलिपुत्राद् वृष्टो देवः। आकुमारं यशः पाणिनेः आ सांकाश्यात्। आ मथुरायाः। मर्यादावचन इति किम्? ईषदर्थे क्रियायोगे मा भूत्॥

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः॥ ९०॥

लक्षणे इत्थंभूताख्याने भागे वीप्सायां च विषयभूतायां प्रति परि अनु कर्मप्रवचनीयसंज्ञा भवन्ति। लक्षणे तावत्—वृक्ष प्रति विद्योतते विद्युत्। वृक्षं परि वृक्षमनु। इत्थंभूताख्याने—साधुर्देवदत्तो मातरं प्रति। मातरं परि। भागे—यदत्र मां प्रतिस्यात्। मां परि स्यात्। मामनु स्यात्। वृक्षं प्रति सिञ्चति। लक्षणादिष्विति किम्। ओदनं परिपिञ्चति। अथ पञ्चमी कस्मान्न भवति, "पञ्चम्यपाङ्परिभिः" इति। वर्जनविषये सा अपशब्दसाहचर्यात्॥

अभिरभागे॥ ९१॥

लक्षणादिष्वेव भागवर्जितेष्वभिः कर्मप्रवचनीयसंज्ञो भवति। वृक्षमभि [illegible] तते। साधुर्देवदत्तो मातरमभि। वृक्षमभि सिञ्चति। अभाग इति किम्। स्वीक्रियमाणोंऽशः यदत्र ममा(१)भिष्यात् तद्दीयताम्। यदत्र मम भवति तद्दी[illegible]मित्यर्थः॥

प्रतिः प्रतिनिधिप्रतिदानयोः॥ ९२॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रति निर्यातनं प्रतिदानम्। प्र[illegible] प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति। अभिमन्युरर्जुनतः प्रति माषानस्मै तिलेभ्यः प्रति यच्छति॥

अधिपरी अनर्थकौ॥ ९३॥

अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः। [illegible]ऽध्यागच्छति। कुतः पर्यागच्छति। स उपसर्गसंज्ञाबाधनार्था [illegible] विधीयते॥

सुः पूजायाम्॥ ९४॥

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति। सुसिक्तं भवता, सुस्तुतं भ[illegible] धात्वर्थः स्तूयते। उपसर्गसंज्ञाश्रयं षत्वं न भवति। पूजायामिति किम्। सु[illegible] कि तवात्र॥

अतिरतिक्रमणे च॥ ९५॥

अतिशब्दः अतिक्रमणे चकारात् पूजायां च कर्मप्रवचनीयसंज्ञो भवति। [illegible] ऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणम्। अतिसिक्तमेव भवता। अति[illegible]

(१) 'मामि'ति न्यासे पाठः।

भवता। पूजायाम्। अतिसिक्तं भवता। अतिस्तुतं भवता। शोभनं कृतमित्यर्थः॥

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु॥ ९६॥

पदार्थे सम्भावनेऽन्ववसर्गे गर्हायां समुच्चये च वर्तमानोऽपिः कर्मप्रवचनीयसंज्ञो भवति। पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः। सर्पिषोऽपि स्यात्। मधुनोऽपि स्यात्। मात्रा बिन्दुः। स्तोकमित्यस्यार्थेऽपिशब्दो वर्तते। सम्भावनमधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणम्। अपि सिञ्चेन्मूलकसहस्रम्। अपि स्तुयाद्राजानम्। अन्ववसर्गः कामचारानुज्ञा(१)। अपि सिञ्च। अपि स्तुहि। गर्हा निन्दा। धिग्जाल्मं देवदत्तम्, अपि सिञ्चेत् पलाण्डुम्। अपि स्तुयाद्वृषलम्। समुच्चये। अपि सिञ्च। अपि स्तुहि। सिञ्च च स्तुहि च। उपसर्गसंज्ञाबाधनात् षत्वं न भवति॥

अधिरीश्वरे॥ ९७॥

ईश्वरः स्वामी स च स्वमपेक्षते। तदयं स्वस्वामिसम्बन्धः कर्मप्रवचनीयसंज्ञो भवति कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति कदाचित् स्वात्। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्तः॥

विभाषा कृञि॥ ९८॥

अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति। यदत्र मामधिकरिष्यति। कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् "तिङि चोदात्तवति" इति निघातो न भवति।

लः परस्मैपदम्॥ ९९॥

ल इति षष्ठी आदेशापेक्षा। लादेशाः परस्मैपदसंज्ञा भवन्ति। तिप्, तस्, झि। सिप्, थस्, थ। मिप्, वस्, मस्। शतृक्वसू च। परस्मैपदप्रदेशाः, "सिचि वृद्धिः परस्मैपदेषु" इत्येवमादयः॥

तङानावात्मनेपदम्॥ १००॥

तङिति प्रत्याहारो नवानां वचनानाम्। आन इति शानच्कानचोर्ग्रहणम्। पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञा विधीयते। त, आताम्, झ। थास्, आथाम्, ध्वम्। इट्, वहि, महिङ्, आनः खल्वपि। शानच्कानचौ। पचमान इत्येव। कवीह निघ्नान। आत्मनेपदप्रदेशाः "अनुदात्तङित आत्मनेपदम्" इत्येवमादयः॥

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः॥ १०१॥

तिङोऽष्टादश प्रत्ययाः, नव परस्मैपदसंज्ञकाः, नवाऽऽत्मनेपदसंज्ञकाः, तत्र परस्मैपदेषु त्रयस्त्रिका यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति। आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति। तिप्, तस्, झि इति प्रथमः। सिप्, थस्, थ इति मध्यमः। मिप्, वस्, मस् इत्युत्तमः। आत्मनेपदेषु—त, आताम्, झ इति

(१) 'अभ्यनुज्ञानम्' इति न्यासे।

प्रथम । थास, आथाम्, ध्वम् इति मध्यम । इट, वहि, महिङ् इत्युत्तम । प्रथममध्यमोत्तमप्रदेशा "शेषे प्रथम" इत्येवमादय ॥

तान्येकवचनद्विवचनबहुवचनान्येकश ॥ १०२ ॥

तान्येकवचनद्विवचनबहुवचनसञ्ज्ञानि भवन्ति(१) एकश एकैक पदम्। तिबित्येकवचनम्। तसिति द्विवचम्। झि इति बहुवचनम्। एव सर्वत्र। एकवचनद्विवचनबहुवचनप्रदेशा 'बहुषु बहुवचनम्' इत्येवमादय ॥

सुप ॥ १०३ ॥

तिङा त्रिकेष्वेकवचनादिसञ्ज्ञा विहिता सम्प्रति सुपा त्रिकेषु विधीयन्ते। सुपश्च त्रीणित्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसञ्ज्ञानि भवन्ति। सु इत्येकवचनम्। औ इति द्विवचनम्। जसिति बहुवचनम्। एव सर्वत्र ॥

विभक्तिश्च ॥ १०४ ॥

त्रीणित्रीणीत्यनुवर्तते। त्रीणि त्रीणि विभक्तिसञ्ज्ञाश्च भवन्ति सुपस्तिङश्च। विभक्तिप्रदेशा, 'अष्टन आ विभक्तौ' इत्येवमादय ॥

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम ॥ १०५ ॥

लस्यन्यधिकृत्य सामान्येन तिबादयो विहितास्तेषामय पुरुष नियम क्रियते। युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे समानाभिधेये तुल्य कारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति। त्व पचसि। युवा पचथ। यूय पचथ। अप्रयुज्यमानेऽपि। पचसि। पचथ। पचथ ॥

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

प्रहास परिहास क्रीडा। प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तम स चैकवद्भवति। एहि मन्ये ओदन भोक्ष्यस इति, नहि भोक्ष्यसे, भुक्त सोऽतिथिभि। एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता। मध्यमोत्तमयो प्राप्तयो उत्तममध्यमौ विधीयते। प्रहास इति किम्। एहि मन्यसे ओदन भोक्ष्य इति। सुष्ठु मन्यसे साधु मन्यसे ॥

अस्मद्युत्तम ॥ १०७ ॥

उत्तमपुरुषो नियम्यते। अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति। अह पचामि। आवा पचाव। वय पचाम। अप्रयुज्यमानेऽपि, पचामि। पचाव। पचाम ॥

शेषे प्रथम ॥ १०८ ॥

शेष इति मध्यमोत्तमविषयादन्य उच्यते। यत्र युष्मदस्मदी समानाधिकरणे

(१) 'तानि तिङ्क्षाणि त्रीणि त्रीण्येकवचनद्विवचनबहुवचनसञ्ज्ञानि भवन्ति' इत्यपि पाठ।

उपपदे न स्त, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचत। पचन्ति॥

परः सन्निकर्षः संहिता॥ १०९॥

परशब्दोऽतिशये वर्त्तते। सन्निकर्षः प्रत्यासत्ति। परो यः सन्निकर्षो वर्णानामर्धमात्राकालव्यवधान स संहितासञ्ज्ञो भवति। दध्यत्र, मध्वत्र। संहिताप्रदेशा, "संहितायाम्" इत्येवमादय॥

विरामोऽवसानम्॥ ११०॥

विरतिर्विराम, विरम्यतेऽनेनेति वा विराम, सोऽवसानसञ्ज्ञो भवति। दधिँ, मधुँ, वृक्ष, प्लक्ष। अवसानप्रदेशा "खरवसानयोर्विसर्जनीय" इत्येवमादय॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य चतुर्थ पाद॥१॥४॥

समाप्तश्चाध्याय॥ शुभम्॥

---

## अथ द्वितीयाध्यायस्य प्रथमः पादः॥

समर्थः पदविधिः॥ १॥

परिभाषेयम्। यः कश्चिदिह शास्त्रे पदविधि श्रूयते स समर्थो वेदितव्य। विधीयत इति विधि, पदानां विधि, पदविधि। स पुन समासादि। समर्थ शक्तः। विग्रहवाक्यार्थाभिधाने यः शक्त स समर्थो वेदितव्य। अथवा समर्थपदाश्रयत्वात् समर्थ। समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्य। वक्ष्यति—"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नै"। कष्टं श्रित, कष्टश्रित। समर्थग्रहणं किम्? पश्य देवदत्त कष्ट, श्रितो विष्णुमित्रो गुरुकुलम्। "तृतीया तत्कृतार्थेन गुणवचनेन"। शङ्कुलया खण्ड, शङ्कुलाखण्ड। समर्थग्रहणं किम्? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन। "चतुर्थी तदर्थार्थबलिहितसुखरक्षितै"। यूपाय दारु, यूपदारु। समर्थग्रहणं किम्? तक्षु त्वं यूपाय, दारु देवदत्तस्य गेहे। "पञ्चमी भयेन"। वृकेभ्यो भयं, वृकभयम्। समर्थग्रहणं किम्? एह त्वं मा वृकेभ्यो, भयं देवदत्तस्य यज्ञदत्तात्। "षष्ठी"। राज्ञ पुरुषो, राजपुरुष। समर्थग्रहणं किम्? भार्या राज्ञ, पुरुषो देवदत्तस्य। "सप्तमी शौण्डै"। अक्षेषु शौण्ड, अक्षशौण्ड। समर्थग्रहणं किम्? शक्तस्त्वमक्षेषु, शौण्ड पिबति पानागारे। पदग्रहणं किम्? वर्णविधौ समर्थ परिभाषा मा भूत्। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कुमारी च्छत्रं हर देवदत्तात्। यणादेशो नित्यश्च तुग्भवति॥

सुबामन्त्रिते पराङ्गवत् स्वरे॥ २॥

सुबन्तमामन्त्रिते परत परस्याङ्गवद्भवति, स्वरे, स्वरलक्षणे कर्तव्ये। तादात्म्या-

तिदेशोऽयम्। सुबन्तमामन्त्रितमनुप्रविशति। वक्ष्यति—"आमन्त्रितस्य च"। आमन्त्रितस्यादिरुदात्तो भवति। स समुदायस्यापि यथा स्यात्। कुण्डेनाटन्। परशुना वृश्चन्। मद्राणा राजन्। कश्मीराणा राजन्। सुबिति किम्? पीड्ये पीड्यमान। आमन्त्रित इति किम्? गेहे गार्ग्य। परग्रहण किम्? पूर्वस्य मा भूत्। देवदत्त कुण्डेनाटन्। अङ्गग्रहण किम्? यथा मृत्पिण्डीभूत स्वर लभेत। उभयोराद्युदात्तत्व मा भूत्। वत्करण किम्? स्वाश्रयमपि यथा स्यात्। आ कुण्डेनाटन्। "आम एकान्तरमामन्त्रितमनन्तिके" इत्येकान्तरता भवति। स्वर इति किम्? कूपे सिञ्चन्। चर्म नमन्। परवणत्वे प्रति पराङ्गवत्त्व भवति। ॐसुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसख्यानमनन्तत्वात्ॐ। (१) तीक्ष्णया सूच्या सीव्यन्। तीक्ष्णेन परशुना वृश्चन्। ॐअव्ययाना प्रतिषेधो वक्तव्य ॐ। उच्चैरधीयान। नीचैरधीयान॥

प्राक्कडारात् समास ॥ ३ ॥

कडारसशब्दनात् प्राग् (२)यानित ऊर्ध्वमनुक्रमिष्यामस्ते समाससज्ञा वेदितव्या। वक्ष्यति। "यथाऽसादृश्ये"। यथावृद्ध ब्राह्मणानामन्त्रयस्व। प्राग्वचन सज्ञासमावेशार्थम्। समासप्रदेशा "तृतीयासमास" इत्येवमादय॥

सह सुपा ॥ ४ ॥

सुबिति वर्तते। सहेति सुपेति च त्रयमप्यधिकृत वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रेदमुपस्थित द्रष्टव्यम्। वक्ष्यति—"द्वितीया श्रितेति"। द्वितीयान्त श्रितादिभि सह समस्यते। कष्ट श्रित, कष्टश्रित। सहग्रहण योगविभागार्थं तिङापि सह यथा स्यात्। अनुव्यचलत्। अनुप्रावर्षत्॥

अव्ययीभाव ॥ ५ ॥

अव्ययीभाव इत्यधिकारो वेदितव्य। यानित ऊर्ध्वमनुक्रमिष्यामोऽव्ययीभावसज्ञास्ते वेदितव्या। वक्ष्यति—"यथाऽसादृश्ये"। यथावृद्ध ब्राह्मणानामन्त्रयस्व। अन्वर्थसज्ञा चेय महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। अव्ययीभावप्रदेशा "अव्ययीभावश्च" इत्येवमादय॥

अव्यय विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥ ६ ॥

सुप् सुपेति च वर्तते। विभक्त्यादिष्वर्थेषु यदव्यय वर्तते तत्समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहण प्रत्येक सबध्यते। विभक्तिवचने

(१) ॐसुबन्तस्य पराङ्गवद्भावे कर्तव्ये तत्समानाधिकरणस्योपसख्यानम्ॐ। अनन्तरत्वात् हि न प्राप्नोतीति कचित्पाठान्तरम्। (२) "अधिकारोऽयम्, "कडारा कर्मधारये" इति वक्ष्यति प्रागेतस्मात्" इति पाठान्तरम्।

तावत्–स्त्रीष्वधिकृत्य कथा प्रवर्त्तते। अधिस्त्रि, अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम्। समीपवचने–कुम्भस्य समीपम्, उपकुम्भम्, उपमणिकम्। समृद्धि ऋद्धेराधिक्यम्, समृद्धिर्मद्राणाम्–सुमद्रं, सुमगधं वर्त्तते। व्यृद्धिः ऋद्धेरभावः। गवदिकानामृद्धेरभावः–दुर्गवदिकं, दुर्यवनं वर्त्तते। अर्थाभावो वस्तुनोऽभावः, अभावो मक्षिकाणाम्–निर्मक्षिकं, निर्मशकं वर्त्तते। अत्ययो भूतत्वमतिक्रमः, अतीतानि हिमानि–निर्हिमं निःशीतं, वर्त्तते।

असंप्रति उपभोगस्य वर्त्तमानकालप्रतिषेधः। अतितैसृकम्(१)। तैसृकमाच्छादनं, तस्यायमुपभोगकालो न भवतीत्यर्थः। शब्दप्रादुर्भावः प्रकाशता शब्दस्य। इतिपाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः। पश्चात्–अनुरथं पादातम्। रथानां पश्चात्। यथार्थे यदव्ययं वर्त्तते तत्समस्यते। योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। योग्यतायाम्–अनुरूपम्। रूपयोग्यं भवतीत्यर्थः। वीप्सायाम्–अर्थमर्थं प्रति, प्रत्यर्थम्। पदार्थानतिवृत्तौ–यथाशक्ति। आनुपूर्व्यमनुक्रमः। अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्या भवन्तः प्रविशन्त्वित्यर्थः। यौगपद्यमेककालता। सचक्रं धेहि। युगपच्चक्रं धेहीत्यर्थः। सादृश्यं तुल्यता। किमर्थमिदमुच्यते, यथार्थे इत्येव सिद्धम्। गुणभूतेऽपि सादृश्ये यथा स्यात्। सदृशः सख्या ससखि। संपत्तिरनुरूप आत्मभावः समृद्धेरन्यः। सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम्। साकल्यमशेषता। सतृणमभ्यवहरति। सबुसम्। न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते। अन्तवचने। अन्त इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्न्यधीते। सेष्टिपशुबन्धम्। पशुबन्धान्तमधीत इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते॥

यथाऽसादृश्ये॥ ७॥

यथेत्येतदव्ययमसादृश्ये वर्त्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः यथावृद्धम्। यथाध्यापकम्। असादृश्य इति किम्? यथा देवदत्तस्तथा यज्ञदत्तः। यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम्॥

यावदवधारणे॥ ८॥

यावदित्येतदव्ययमवधारणे वर्त्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। (२)अवधारणमियत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावन्त्यमत्राणि सम्भवन्ति पञ्च षड् वा तावत आमन्त्रयस्व। अवधारण इति किम्। यावद्दत्तं तावद्भुक्तम्। नावधारयामि कियन्मया भुक्तमिति(३)॥

---

(१) "तैष्टकम्" इति पाठः। (२) 'अवधारणम्' इति–इयतो भाव इयत्ता परिमाणं तस्याः परिच्छेदो निश्चयः। (३) "कियद्दत्तं त्वया कियद्भुक्तं मया" इति पाठः।

### सुप्प्रतिना मात्रार्थे ॥ ९ ॥

मात्रा बिन्दुः स्तोकमल्पमिति पर्यायाः । मात्रार्थे वर्त्तमानेन प्रतिना सह सुवन्तं समस्यते, अव्ययीभावश्च समासो भवति । अस्त्यत्र किञ्चित् शाकम्(१), शाकप्रति । सूपप्रति । मात्रार्थे इति किम् ? वृक्षं प्रति विद्योतते विद्युत् । सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम् ॥

### अक्षशलाकासंख्याः परिणा ॥ १० ॥

(२)अक्षशब्दः शलाकाशब्दः संख्याशब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति । कितवव्यवहारे समासोऽयमिष्यते । पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति, तत्र यदा सर्वे उत्तानाः पतन्त्यवाञ्चो वा तदा पातयिता जयति, तस्यैवास्य विघातोऽन्यथा (३) पाते सति जायते । अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये, अक्षपरि शलाकापरि । एकपरि । द्विपरि । त्रिपरि । परमेण(४) चतुष्परि । पञ्चसु त्वेक(५)रूपासु जय एव भविष्यति ।

अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् ।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥

### विभाषा ॥ ११ ॥

विभाषेत्ययमधिकारो वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा भवति । वक्ष्यति–"अपपरिबहिरञ्चवः पञ्चम्या" । अपत्रिगर्तं वृष्टो देवः । अप त्रिगर्तेभ्यः ॥

### अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥

अप परि बहिस् अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति । अपत्रिगर्त्तं वृष्टो देवः । अप त्रिगर्त्तेभ्यः । परित्रिगर्त्तम्, परि त्रिगर्त्तेभ्यः । बहिर्ग्रामम्, बहिर्ग्रामात् । प्राग्ग्रामम्, प्राग् ग्रामात् । बहिः शब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम् ॥

### आङ्मर्यादाभिविध्योः ॥ १३ ॥

आङित्येतन्मर्यादायामभिविधौ च वर्त्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति । आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात् । अभिविधौ–आकुमारं यशः पाणिनेः, आ कुमारेभ्यः ॥

### लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥

लक्षणं चिह्नं, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्त्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति । अभ्यग्निशलभाः पतन्ति, अग्निमभि ।

(१) अत्र 'सूप' इति पदमवर्याम् । (२) अक्षशलाकासंख्याशब्दा इति पदमञ्जर्याम् पाठः । (३) विघात —पराजयः । क्वचित् 'विपात' इति पाठ । तत्रापि स एवार्थः । (४) अतिशयेनेत्यर्थः । (५) "एकरूपेषु" इति पाठान्तरम् ।

प्रत्यग्नि, अग्निं प्रति। अग्निं लक्षीकृत्य अभिमुखं पतन्तीत्यर्थः। लक्षणेनेति किम्? स्रुघ्नं प्रति गतः। प्रतिनिवृत्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम्? येनाग्निस्तेन गतः। आभिमुख्य इति किम्? अभ्यङ्का गावः, प्रत्यङ्का गावः। नवाङ्का इत्यर्थः॥

अनुर्यत्समया॥ १५॥

समया समीपम्। अनुर्यस्य(१)समीपवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः। अनुरिति किम्? वनं समया। यत्समयेति किम्? वृक्षमनु विद्योतते विद्युत्। "अव्ययं विभक्तिसमीप" इत्येव सिद्धे पुनर्वचनं विभाषार्थम्॥

यस्य चायामः॥ १६॥

लक्षणेनेति वर्तते। आयामो दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी, अनुयमुनं मथुरा। यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते। आयाम इति किम्? वृक्षमनु विद्योतते विद्युत्॥

तिष्ठद्गुप्रभृतीनि च॥ १७॥

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञानि भवन्ति। तिष्ठद्गु कालविशेषः। तिष्ठन्ति गावो यस्मिन् काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नैव सम्बध्यन्ते, अन्यपदार्थे च काले वर्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति, परमतिष्ठद्गुविति। तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेबुसम्। खलेयवम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। (२)समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपसमम्। आयतीसमम्। प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्। सम्प्रति। असम्प्रति। पापसमम्। पुण्यसमम्॥ इच् कर्मव्यतिहारे (ग० सू०)। दण्डादण्डि। मुसलामुसलि॥

पारे मध्ये षष्ठ्या वा॥ १८॥

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते। वावचनाच्च षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते। पारं गङ्गायाः, पारेगङ्गम्। मध्यं गङ्गायाः, मध्येगङ्गम्। षष्ठीसमासपक्षे, गङ्गापारम्। गङ्गामध्यम्। महाविभाषया वाक्यविकल्पः क्रियते॥

(१) अत्र "यत्समया, समयावाची" इति पदमञ्जर्यां पाठः। (२) समंभूमि, समंपदाति, सम्भूमि सपदाति, इति पा०।

संख्या वंश्येन ॥ १९ ॥

विद्यया जन्मना वा प्राणिनामेकलक्षण(१)सन्तानो वंश इत्यभिधीयते । तत्र भवो वंश्यः । तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । द्वौ मुनी व्याकरणस्य वंश्यौ, द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य । यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति । द्विमुनि व्याकरणं, त्रिमुनि व्याकरणमिति । जन्मना–एकविंशति भारद्वाजम् ॥

नदीभिश्च ॥ २० ॥

संख्येत्यनुवर्त्तते । नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । समाहारे चायमिष्यते । सप्तगङ्गम्, द्वियमुनम्, पञ्चनदम्, सप्तगोदावरम् ॥

अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

संख्येति निवृत्तं, नदीग्रहणमनुवर्त्तते । नदीभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति । विभाषाधिकारेऽपि नित्यसमास एवायम् । नहि वाक्येन संज्ञा गम्यते । उन्मत्तगङ्गं नाम देशः, लोहितगङ्गम्, कृष्णगङ्गम्, शनैर्गङ्गम् । अन्यपदार्थ इति किम् ? कृष्णवेण्णा । संज्ञायामिति किम् ? शीघ्रगङ्गो देशः ॥

तत्पुरुषः ॥ २२ ॥

तत्पुरुष इति संज्ञाऽधिक्रियते प्राग्बहुव्रीहेः, यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः । वक्ष्यति, "द्वितीयाश्रितातीतपतित" इति । कष्टश्रितः । पूर्वसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम् । उत्तरपदार्थप्रधानस्तत्पुरुष इति । तत्पुरुषप्रदेशाः "तत्पुरुषे कृति बहुलम्" इत्येवमादयः ॥

द्विगुश्च ॥ २३ ॥

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति । द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् । पञ्चराजम्,(२) दशराजम् । द्व्यहः, त्र्यहः, पञ्चगवम्, दशगवम् ॥

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतद् द्वितीया । द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । कष्टं श्रितः, कष्टश्रितः । नरकश्रितः । कान्तारमतीतः, कान्तारातीतः । पतित–नरकं पतितः, नरकपतितः । गतः, ग्रामगतः । अत्यस्त–तरङ्गानत्यस्तः, तरङ्गात्यस्तः । तुहिनात्यस्तः ।

(१) एकलक्षण एकस्वभावः । सन्तान प्रबन्धः । सन्तानिनामेकलक्षणत्वात् नानामेकलक्षणत्वम् ।　　(२) यद्यप्यत्र 'पञ्चराजी' 'दशराजी' इति पाठः उपलभ्यते व्याख्यातश्चैष पाठो न्यासे तथापि भाष्यपदमञ्जर्यनुरोधात् परिवर्तितं पदमञ्जर्यामस्य पाठस्य अपपाठत्वं स्पष्टमेवोक्तम् ।

प्राप्तः, सुखप्राप्तः। आपन्न-सुखमापन्नः, सुखापन्नः। दुःखापन्नः॥ ॐश्रितादिषु गमिगाम्यादीनामुपसंख्यानम्ॐ। ग्रामं गमी, ग्रामगमी। ग्रामं गामी, ग्रामगामी। ओदनं बुभुक्षुः, ओदनबुभुक्षुः॥

### स्वयं क्तेन॥ २५॥

स्वयमेतदव्ययमात्मनेत्यस्यार्थे वर्त्तते। तस्य द्वितीयया(१)सम्बन्धोऽनुपपन्न इति द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते। स्वयमित्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयन्धौतौ पादौ। स्वयंविलीनमाज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति॥

### खट्वा क्षेपे॥ २६॥

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपो निन्दा स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायं, नहि वाक्येन क्षेपो गम्यते। खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः खट्वारूढ इत्युच्यते। खट्वारूढो जाल्मः, खट्वाप्लुतः। अपथप्रस्थित इत्यर्थः। क्षेप इति किम्? खट्वामारूढः॥

### सामि॥ २७॥

सामीत्येतदव्ययमर्द्धशब्दपर्यायस्तस्यासत्त्ववाचित्वात् द्वितीयया नास्ति सम्बन्धः। तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। सामिकृतम्, सामिपीतम्, सामिभुक्तम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति॥

### कालाः॥ २८॥

द्वितीया, क्तेनेति वर्त्तते। कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। अनत्यन्तसंयोगार्थं वचनम्। काला इति न स्वरूपविधिः। षण्मुहूर्त्ताश्चराचराः। ते कदा (२)चिदहर्गच्छन्ति कदा चिद्रात्रिम्। अहरतिसृता मुहूर्त्ताः। अहस्सङ्क्रान्ताः। रात्र्यतिसृता मुहूर्त्ताः। रात्रिसङ्क्रान्ताः। मासप्रमितश्चन्द्रमाः। मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः॥

### अत्यन्तसंयोगे च॥ २९॥

काला इति वर्त्तते, क्तेनेति निवृत्तम्। अत्यन्तसंयोगः कृत्स्नसंयोगः। कालस्य स्वेन सम्बन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्त्तं सुखम्, मुहूर्त्तसुखम्, सर्वरात्रं कल्याणी, सर्वरात्रशोभना॥

---

(१) 'सह सम्बन्धो नोपपद्यते' इति न्यासे पाठः। (२) कदाचिदहः —उत्तरायणे, कदाचिद्रात्रि-र्दक्षिणायने।

## तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

सुप्सुपेति वर्त्तते, तस्य विशेषणमे(१)तत् तृतीया । तृतीयान्तं सुबन्तं गुणवचनेनाऽर्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति । कीदृशेन गुणवचनेन ? तत्कृतेन, तदर्थकृतेन तृतीयान्तार्थकृतेनेति यावत् । शङ्कुलया खण्डः, शङ्कुलाखण्डः किरिणा काणः, किरिकाणः । अर्थशब्देन-धान्येनार्थं, धान्यार्थः । तत्कृतेनेति किम्, अक्ष्णा काणः । गुणवचनेनेति किम् ? गोभिर्वपावान्(२) ॥

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

पूर्व सदृश सम ऊनार्थ कलह निपुण मिश्र श्लक्ष्ण एतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति । अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या । पूर्व-मासेन पूर्वः, मासपूर्वः । संवत्सरपूर्वः । सदृश-मातृसदृशः, पितृसदृशः । सम-मातृसमः, पितृसमः । ऊनार्थ-माषोनम्, कार्षापणोनम्, माषविकलम्, कार्षापणविकलम् । कलह-असिकलहः, वाक्कलहः । निपुण-वाङ्निपुणः, आचारनिपुणः । मिश्र-गुडमिश्रः, तिलमिश्रः । श्लक्ष्ण-आचारश्लक्ष्णः ॥ *पूर्वादिष्ववरस्योपसंख्यानम्* । मासेनावरः, मासावरः । संवत्सरावरः ॥

## कर्तृकरणे कृता बहुलम् ॥ ३२ ॥

तृतीयेति वर्त्तते । कर्त्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते तत्पुरुषश्च समासो भवति । (३)सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम् । कर्त्तरि-अहिना हत, अहिहतः । करणे-नखैर्निर्भिन्नो, नखनिर्भिन्नः । परशुना छिन्नः, परशुच्छिन्नः । कर्तृकरणे इति किम् ? भिक्षाभिरुषितः । बहुलग्रहणं किम् ? दात्रेण लूनवान्, छिन्नवान् । इह समासो न भवति । पादहारको, गलेचोपक, इति च भवति ॥

## कृत्यैरधिकार्थवचने ॥ ३३ ॥

(४)स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम् । तृतीया तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, पक्ष समासो भवति । कर्त्ता-काकपेया नदी, श्वलेह्यः कूपः । तृणानि, कण्टकसंचेय ओदनः । पूर्वस्यैवायं प्रपञ्चः ॥ *कृत्यग्रहणे कर्त्तव्यम्* । इह मा भूत् । काकैः पातव्या इति ॥

---

(१) अत्र मुद्रितपुस्तकेषु 'तृतीया' इति पाठो नोपलभ्यते तथाप्यौचित्यादुपन्यस्तम् एव चतुर्थी तदर्थेष्वपि बोध्यम् । (२) वपावान्—पीवरः । (३) स[illegible] धीति—अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः । (४) स्तु[illegible] वा [illegible] स्तुत्या निन्दया वा यत्प्रयुक्तं प्रवर्त्तितं वस्तुनिनिन्दाप्रयुक्तम् । तदर्थमुच्च[illegible] त्यर्थः । अध्यारोपितार्थवचनमिति—अध्यारोपितोऽर्थोऽसन्नेव बुद्ध्या [illegible]पितस्तस्य वचनम् ।

अन्नेन व्यञ्जनम् ॥ ३४ ॥

तृतीयेति वर्त्तते। व्यञ्जनवाचि तृतीयान्तमन्नवाचिना सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। संस्कार्यमन्नं, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः, दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावाद्न्नव्यञ्जनयोः सामर्थ्यम्॥

भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुषश्च समासो भवति। (१)खरविशदमभ्यवहार्यं भक्ष्यं, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः, गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यम्॥

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतच्चतुर्थी। तदिति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ अर्थ बलि हित सुख रक्षित इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते। यूपाय दारु, यूपदारु। कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम्। इह न भवति। रन्धनाय स्थाली, अवहननायोलूखलमिति। चतुर्थी चास्मादेव ज्ञापकात्तादर्थ्ये भवति॥ *अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या*। ब्राह्मणार्थं पयः, ब्राह्मणार्था यवागूः। बलि—कुबेराय बलिः, कुबेरबलिः। महाराजबलिः। हित—गोहितम्, अश्वहितम्। सुख—गोसुखम्, अश्वसुखम्। रक्षित—गोरक्षितम्, अश्वरक्षितम्॥

पञ्चमी भयेन ॥ ३७ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतत् पञ्चमी। पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयम्, वृकभयम्। चौरभयम्, दस्युभयम्॥ *भयभीतभीतिभीभिरिति वक्तव्यम्*। वृकेभ्यो भीतः वृकभीतः। वृकभीतिः, वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा च ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति॥

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥

अपेत अपोढ मुक्त पतित अपत्रस्त इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। अपेत—सुखापेतः। अपोढ—कल्पनापोढः। मुक्त—चक्रमुक्तः। पतित—स्वर्गपतितः। अपत्रस्त—तरङ्गापत्रस्तः। अल्पश इति समासस्याल्पविषयतामाचष्टे। अल्पा (२) पञ्चमी समस्यते न सर्वा। प्रासादात्पतितः, भोजनादपत्रस्त इत्येवमादौ न भवति। "कर्तृकरणे कृता बहुलम्" इत्यस्यैवायं प्रपञ्चः॥

(१) खरविशदमिति—खरं कठिनं, विशदं विभक्तावयवं, खरं च तद्विशदं च खरविशदं दन्तचर्वणेनादनीयमित्यर्थः। (२) अल्पापञ्चमीति। अल्पाभ्यः प्रकृतिभ्य उत्पन्नेत्यर्थः।

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥

स्तोक अन्तिक दूर इत्येवमर्था शब्दा कृच्छ्रशब्दश्च पञ्चम्यन्ता क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। स्तोक–स्तोकान्मुक्त। अन्तिक–अन्तिकादागत, अभ्याशादागत। दूरादागत, विप्रकृष्टादागत। कृच्छ्रान्मुक्त, कृच्छ्राल्लब्ध। पञ्चम्या स्तोकादिभ्य इत्यलुक्‌ ॥शतसहस्रौ परेणेति वक्तव्यम्॥। शतात्परे, परश्शता। सहस्रात्परे, परस्सहस्रा। राजदन्तादित्वात्परनिपात। निपातनात्सुडागम ॥

सप्तमी शौण्डै ॥ ४० ॥

सप्तम्यन्त शौण्डादिभि सह समस्यते, तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डो ऽक्षशौण्ड, अक्षधूर्त्त, अक्षकितव। शौण्ड। धूर्त्त। कितव। व्याड। प्रवीण। संवीत अन्तर्। अन्तरशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते। अधिपटु। पण्डित। कुशल चपल। निपुण(१)। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी ॥

सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

सप्तमीति वर्त्तते। सिद्ध शुष्क पक्व बन्ध इत्येतै सह सप्तम्यन्त समस्यते, तत्पुरुषश्च समासो भवति। (२) साङ्काश्यसिद्ध, काम्पिल्यसिद्ध। शुष्क–आतपशुष्क, छायाशुष्क। पक्व–स्थालीपक्व, कुम्भीपक्व। बन्ध–चक्रबन्ध। ... हरणप्रपञ्च ॥

ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

ध्वाङ्क्षेणेत्यर्थग्रहणम्। ध्वाङ्क्षवाचिना सह सप्तम्यन्त सुबन्त समस्यते, त... पश्च समासो भवति, क्षेपे गम्यमाने। तीर्थे ध्वाङ्क्ष इव, तीर्थध्वाङ्क्ष। इत्यर्थ। तीर्थकाक, तीर्थवायस। क्षेप इति किम्? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

कृत्यैर्ऋणे ॥ ४३ ॥

सप्तमीति वर्त्तते। कृत्यप्रत्ययान्तै सह सप्तम्यन्त समस्यते, तत्पुरुषश्च भवति, ऋणे गम्यमाने। यत् प्रत्ययेनैवेष्यते(३)। मासे देयमृण मासदेयम्। ...देयम्, त्र्यहदेयम्। ऋणग्रहण(४)नियोगोपलक्षणार्थं तेनेहापि समासो भवति। ...गेय साम, प्रातरध्येयोऽनुवाक। ऋण इति किम्। मासे देया भिक्षा ॥

सञ्ज्ञायाम् ॥ ४४ ॥

सञ्ज्ञाया विषये सप्तम्यन्त सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। समुदायोपाधि। तेन नित्यसमास एवाय, नहि वाक्येन सञ्ज्ञा गम्यते। ...ति

(१) संव्याड, मन्य, समीर, एते शब्दा अपि क्वचिद्दृश्यन्ते। (२) साङ्काश्य इत्यनेन निर्वृत्तं नगरं साङ्काश्यम्। कम्पिलेन निर्वृत्त नगर काम्पिल्यम्। तत्र सिद्ध इत्यर्थ। (३) यत् प्रत्ययान्तेनैवेति पदमञ्जर्याम्। यत्प्रत्ययान्तेनैव समास न्यासे पाठ। (४) नियोगोऽवश्यभाव।

का, अरण्येमाषा, वनेकिंशुका, वनेबिल्वका, कूपेपिशाचका । "हलदन्तात् सप्तम्याः सञ्ज्ञायाम्" इत्यलुक् ॥

क्तेनाहोरात्रावयवाः ॥ ४५ ॥

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वाह्णकृतम्, अपराह्णकृतम् । पूर्वरात्रकृतम्, अपररात्रकृतम् । अवयवग्रहणं किम्(१) अहनि भुक्तम्, रात्रौ वृत्तम् । बहुलग्रहणात् रात्रिवृत्तम्, सन्ध्यागर्जितमित्यादि ॥

तत्र ॥ ४६ ॥

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । तत्रभुक्तम्, तत्रकृतम्, तत्रपीतम् । एकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥

क्षेपे ॥ ४७ ॥

क्षेपो निन्दा । तस्मिन् गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । अवतप्तेनकुलस्थितं तवैतत् । चापलमेतत्, अनवस्थितत्वं तवैतदित्यर्थः । उदकेविशीर्णम्, प्रवाहेमूत्रितम्, भस्मनिहुतम् । निष्फलं यत्क्रियते तदेवमुच्यते । "तत्पुरुषे कृति बहुलम्" इत्यलुक् ॥

पात्रेसमितादयश्च ॥ ४८ ॥

समुदाया एव निपात्यन्ते । पात्रेसमितादयः शब्दास्तत्पुरुषसञ्ज्ञा भवन्ति क्षेपे गम्यमाने । ये चात्र क्तान्तेन सह समस्तास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः । पूर्वपदाद्युदात्तत्वं यथा स्यादिति । युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यन्ते । पात्रेसमिताः । पात्रेबहुलाः । अवधारणेन क्षेपो गम्यते । पात्र एव समिताः, न पुनः क्वचित्कार्य इति । उदुम्बरमशकादिषु उपमया क्षेपः । मातरिपुरुष इति प्रतिषिद्धसेवनेन । पिण्डीशूरादिषु निरीहतया । अन्यत्त वास्त्वाकृतिगणोऽयम् (२) । पात्रेसमिताः, पात्रेबहुलाः (३), उदरकृमिः, कूपकच्छपः, कूपचूर्णकः, अवटकच्छपः, कूपमण्डूकः, कुम्भमण्डूकः, उदपानमण्डूकः, नगरकाकः, नगरवायसः, मातरिपुरुषः, पिण्डीशूरः, गेहेशूरः, गेहेनर्दी, गेहेक्ष्वेडी, गेहेविजिती, गेहेव्याडः, गेहेदृप्तः, गेहेधृष्टः, गर्भेतृप्तः, आखनिकबकः, गोष्ठेशूरः, गोष्ठेविजिती, गोष्ठेक्ष्वेडी, गेहेमेही, गोष्ठेपटुः, गोष्ठेपण्डितः, गोष्ठेप्रगल्भः, कर्णेटिट्टिभः, कर्णेचुरचुरा । चकारोऽवधारणार्थः । तेन समासान्तरं न भवति, परमपात्रेसमिता इति ॥

---

(१) अवयवग्रहणं किम्, 'अलूखलैराभरणे पिशाचो यदभ्याहरं पततु ते दिवावृत्तं रात्रौ वृत्तं च द्रक्ष्यसि ॥' इति पाठान्तरम् । अयमेव पाठः न्यासपदमञ्जर्योर्दृश्यते । (२) "अकृत्करणादाकृतिगणोऽयम्" इति पाठान्तरम् । (३) उदुम्बरमशकाः ।

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥

सुप्सुपेति वर्त्तते, तस्य विशेषणमेतत्। पूर्वकाल एक सर्व जरत् पुराण नव केवल इत्येते सुबन्ता समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तस्य(१) शब्दस्यैकस्मिन्नर्थे वृत्ति सामानाधिकरण्यम्। पूर्वकाल इत्यर्थनिर्देश, परिशिष्टाना स्वरूपग्रहणम्। (२)पूर्वकालोऽपरकालेन समस्यते। स्नातानुलिप्त, कृष्टसमीकृतम्, दग्धप्ररूढम्,(३)एकशाटी, एकभिक्षा सर्वदेवा, सर्वमनुष्या, जरद्धस्ती, जरद्गृष्टि, जरद्वृत्ति, पुराणान्नम्, पुराणावसथम्, नवान्नम्, नवावसथम्, केवलान्नम्। समानाधिकरणेनेति किम्? एकस्या शाटी॥

## दिक्सङ्ख्ये सञ्ज्ञायाम् ॥ ५० ॥

समानाधिकरणेनेत्यापादसमाप्तेरनुवर्त्तते। दिग्वाचिन शब्दा सङ्ख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति, सञ्ज्ञाया [illegible] पूर्वेषुकामशमी, अपरेषुकामशमी। सङ्ख्या पञ्चाम्रा, सप्तर्षय। [illegible] किम्? उत्तरा वृक्षा, पञ्च ब्राह्मणा॥

## तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

दिक्सङ्ख्ये इत्यनुवर्त्तते। तद्धितार्थे विषये(४) उत्तरपदे च परत [illegible] चाभिधेये दिक्सङ्ख्ये समानाधिकरणेन सुपा सह समस्येते,तत्पुरुषश्च समासो भवति तद्धितार्थे तावत्—पूर्वस्या शालायां भव, 'दिक्पूर्वपदादसञ्ज्ञाया ञ', पौर्वशाल आपरशाल। उत्तरपदे–पूर्वशालाप्रिय, अपरशालाप्रिय। समाहारे दिक्शब्दो न सम्भवति। सङ्ख्या, तद्धितार्थे–पाञ्चनापिति, पञ्चकपाल। उत्तरपदे–[illegible] दशगवधन। समाहारे–पञ्चफली, दशपूली। पञ्चकुमारि, दशकुमारि। ((५) [illegible] सकम्" इति नपुंसकत्व, "ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्)॥

## सङ्ख्यापूर्वो द्विगु ॥ ५२ ॥

"तद्धितार्थोत्तरपदसमाहारे च' इत्यत्र य सङ्ख्यापूर्व समास स [illegible] भवति। तद्धितार्थे तावत्–पञ्चसु कपालेषु संस्कृत, पञ्चकपाल। दशकपाल। "संस्कृत भक्षा इतीहाण, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। [illegible] प्रिय। 'नावो द्विगो' इति समासान्तो भवति। समाहारे–पञ्चमूली। [illegible] ङीप् भवति। द्विगुप्रदेशा 'द्विगो' इत्येवमादय॥

---

(१) 'भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्ये'ति पाठ। (२) पूर्वकाल इति—पूर्वं कालोऽस्येति पूर्वमनुष्ठित इत्यर्थ। अपरकालेन पश्चाद् अनुष्ठितेन। (३) एकशाटी। द्विनेचेति ह्रस्व। (४) 'तद्धितार्थे विषयभूते' इति पदमञ्जर्याम्। (५) कोष्ठगत पाठ प्रक्षिप्तो न्यासपदमञ्जर्यो सवादात्।

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। (१)शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते। "विशेषणं विशेष्येण" इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। वैयाकरणखसूचिः। निष्प्रतिभ इत्यर्थः। याज्ञिककितवः, अयाज्ययाजनतृष्णापरः(२)। मीमांसकदुर्दुरूढः, नास्तिकः। कुत्सितानीति किम्? वैयाकरणश्चौरः। न ह्यत्र वैयाकरणत्वं कुत्स्यते। कुत्सनैरिति किम्? कुत्सितो ब्राह्मणः॥

## पापाणके कुत्सितैः ॥ ५४ ॥

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पूर्वनिपातार्थमिदमारभ्यते। पाप अणक एते सुबन्ते कुत्सितवचनैस्सह समस्येते, तत्पुरुषश्च समासो भवति। पापनापितः, पापकुलालः। अणकनापितः, अणककुलालः॥

## उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमीयतेऽनेनेत्युपमानम्। उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। उपमानोपमेययोः साधारणो धर्मः सामान्यं, तद्विशिष्टोपमेयवचनैरयं समासः। शस्त्रीव श्यामा, शस्त्रीश्यामा देवदत्ता। कुमुदश्येनी, हंसगद्गदा, न्यग्रोधपरिमण्डला। उपमानानीति किम्? देवदत्ता श्यामा। सामान्यवचनैरिति किम्? फाला इव तन्दुलाः, पर्वता इव बलाहकाः॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमेयमुपमितं, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाची शब्दः प्रयुज्यते। "विशेषणं विशेष्येण" इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। पुरुषोऽयं व्याघ्र इव, पुरुष व्याघ्रः। पुरुषसिंहः। सामान्याप्रयोग इति किम्? पुरुषो व्याघ्र इव शूरः। व्याघ्र। सिंह। ऋक्ष। ऋषभ। चन्दन। वृक। वृष। वराह। हस्तिन्। कुञ्जर। रुरु। पृषत। पुण्डरीक। बलाहक। आकृतिगणश्चायम्। तेनेदमपि भवति। मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः। इत्येवमादि।

## विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥

भेदकं विशेषणं, भेद्यं विशेष्यम्। विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। नीलोत्पलम्, रक्तोत्पलम्। बहुलवचनं व्यवस्थार्थम्। क्वचिन्नित्यसमास एव। कृष्णसर्पः,

---

(१) "शब्देनस्य इष्यते" इत्यंशः प्राप्तो पदसंस्कारपक्षाश्रयः। न्यासेऽस्याधैर्य स्वयमुक्तत्वात्। पदसंस्कारपक्षस्याश्रितत्वाच्च। (२) "उच्यते" इति न्यासेऽधिकम्।

लोहितशालिः। क्वचिन्न भवत्येव। रामो जामदग्न्य, अर्जुन कार्त्तवीर्य। क्वचिद्विकल्प। नीलमुत्पलम्, नीलोत्पलम्। विशेषणमिति किम्? तक्षक सर्प। विशेष्येणेति किम्? लोहितस्तक्षक ॥

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५८ ॥

पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर इत्येते सुबन्ता समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वपुरुष, अपरपुरुष, प्रथमपुरुष, चरमपुरुष, जघन्यपुरुष, समानपुरुष, मध्यपुरुष, मध्यमपुरुष, वीरपुरुष। पूर्वस्यैवाय प्रपञ्च ॥

श्रेण्यादय कृतादिभि ॥ ५९ ॥

श्रेण्यादय सुबन्ता कृतादिभि समानाधिकरणै सह समस्यन्ते, तत्पुरुषश्च समासो भवति। *श्रेण्यादिषु च्व्यर्थवचनम्*। अश्रेणय श्रेणय कृता, श्रेणिकृता। एककृता। श्रेण्यादय पठ्यन्ते। कृतादिराकृतिगण। च्व्यन्ताना तु "कुगतिप्रादय" इत्यनेन नित्यसमास। श्रेणीकृता। श्रेणि। एक। पूग। कुण्ड। राशि। विशिख। निचय। निधान। इन्द्र। देव। मुण्ड। भूत। श्रवण। वदान्य। अध्यापक। ब्राह्मण। क्षत्रिय। पटु। पण्डित। कुशल। चपल। निपुण। कृपण। इति श्रेण्यादि ॥ कृत। मित। मत। भूत। उक्त। समाज्ञात। समाम्नात। समाख्यात। सभावित। अवधारित। निराकृत। अवकल्पित। उपकृत। उपाकृत। इति कृतादि ॥

क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥

नञैव विशेषो यस्य सर्वमन्यत् प्रकृत्यादिक तुल्य तन्नञ्विशिष्ट, तेन नञ्विशिष्टेन(१) क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्त समस्यते, तत्पुरुषश्च समासो भवति कृत च तदकृत च, कृताकृतम्। भुक्ताभुक्तम्, पीतापीतम्, उदितानुदितम्। नुडिटौ तद्भक्तत्वान्नैव भेदकौ। अशितानशितेन जीवति, क्लिष्टाक्लिशितेन वर्तते। *शाकपार्थिवादीनामुपसंख्यानम्*। कृतापकृतम्। भुक्तविभुक्तम्। पीतविपीतम्। गतप्रत्यागतम्, यातानुयातम्, क्रयाक्रयिका, पुटापुटिका, फलाफलिका, मानोन्मानिका। *समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च*। शाकप्रधान पार्थिव (२), शाकपार्थिव। कुतपसौश्रुत, अजातौल्वलि ॥

सन्महत्परमोत्तमोत्कृष्टा पूज्यमानै ॥ ६१ ॥

सत् महत् परम उत्तम उत्कृष्ट इत्येते पूज्यमानै सह समस्यन्ते, तत्पुरुषश्च भवति। पूज्यमानैरिति वचनात् पूजावचना सदादयो विज्ञायन्ते। सत्पुरुष,

---

(१) विशिष्टेन–अधिकेन। भुक्तविभक्तम्–अत्र विशब्दोऽशोभनार्थो विरूपवत्। क्रयिका–महान् क्रय क्रय उच्यते। अल्पक्रय क्रयिका। समासे 'ङ्यापो संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वत्व इति दीर्घ। (२) अत्र "पार्थिव" इत्यादि पाठ पदमञ्जर्यामभिमत।

पुरुष, परमपुरुष, उत्तमपुरुष, उत्कृष्टपुरुष । पूज्यमानैरिति किम्? उत्कृष्टो(१)गौः कर्दमात्॥

वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥

वृन्दारक, नाग, कुञ्जर इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। पूज्यमानमिति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते। गोवृन्दारकः, अश्ववृन्दारकः। गोनागः, अश्वनागः। गोकुञ्जरः, अश्वकुञ्जरः। पूज्यमानमिति किम्? सुसीमो(२) नागः॥

कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। कतरकठः, कतरकालापः, कतमकठः, कतमकालापः। ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते किं जातिपरिप्रश्नग्रहणेन। एवं तर्ह्येतज्ज्ञापयति कतमशब्दोऽन्यत्रापि वर्त्तत इति तथा च प्रत्युदाहरणम्—कतरो भवतोर्देवदत्तः, कतमो भवतां देवदत्तः॥

किं क्षेपे ॥ ६४ ॥

किमित्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति किंराजा, यो न रक्षति। किंसखा, योऽभिद्रुह्यति। किंगौः, यो न वहति। "किमः क्षेपे" इति समासान्तो न भवति। क्षेप इति किम्? को राजा पाटलिपुत्रे॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥

उभयव्यञ्जना पोटेत्यभिधीयते। (३)गृष्टिरेकवारप्रसूता। धेनुः प्रत्यग्रप्रसूता। वशा वन्ध्या। वेहद् गर्भपातिनी। बष्कयणी तरुणवत्सा। पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। इभपोटा, इभयुवतिः, अग्निस्तोकः। उदश्वित्कतिपयम्। गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोबष्कयणी, कठप्रवक्ता, कठश्रोत्रियः, कठाध्यापकः, कठधूर्तः। जातिरिति किम्? देवदत्तः प्रवक्ता। धूर्त्तग्रहणमकुत्सार्थम्॥

प्रशंसावचनैश्च ॥ ६६ ॥

जातिरिति वर्त्तते। जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति। रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयस्ते च आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति। गोप्रका-

(१) 'उत्कृष्टा' इति स्त्रीलिङ्गपाठो न्यासे। (२) सुषोम इति प० म०। (३) युवतिर्नवयौवना स्त्री। स्तोकमल्पपर्यायः। कतिपयश्च इति पाठः।

ण्डम्, अश्वप्रकाण्डम्, गोमतल्लिका, अश्वमतल्लिका, गोमचर्चिका, अश्वमचर्चिका ।
जातिरिति किम् ? कुमारी मतल्लिका ॥

युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति । जरतीभिरिति(१) स्त्रीलिङ्गनिर्देशः, *प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्* इति ज्ञापनार्थः । युवा खलतिः, युवखलतिः । युवतिः खलती, युवखलती । युवा पलितः, युवपलितः । युवतिः पलिता, युवपलिता । युवा वलिनः, युववलिनः । युवतिर्वलिना, युववलिना । युवा जरन्, युवजरन् । युवतिर्जरती, युवजरती ॥

कृत्यतुल्याख्या अजात्या ॥ ६८ ॥

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति । भोज्योष्णम्, भोज्यलवणम्, पानीयशीतम् । तुल्याख्याः—तुल्यश्वेतः, तुल्यमहान्, सदृशश्वेतः, सदृशमहान् । अजात्येति किम् ? भोज्य ओदनः ॥

वर्णो वर्णेन ॥ ६९ ॥

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति । कृष्णसारङ्गः(२), लोहितसारङ्गः, कृष्णशबलः, लोहितशबलः । अवयवद्वारेण कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति ॥

कुमारः श्रमणादिभिः ॥ ७० ॥

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । येऽत्र स्त्रीलिङ्गाः पठ्यन्ते श्रमणा प्रव्रजिता कुलटेत्येवमादयस्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः समस्यते, ये पुंलिङ्गा अध्यापकोऽभिरूपकः पण्डित इति तैरुभयथा । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति । कुमारी श्रमणा, कुमारश्रमणा । श्रमणा । प्रव्रजिता । कुलटा । गर्भिणी । तापसी । दासी । बन्धकी । अध्यापक । अभिरूपक । पण्डित । पटु । मृदु । कुशल । चपल । निपुण ॥

चतुष्पादो गर्भिण्या ॥ ७१ ॥

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति । गोगर्भिणी, अजागर्भिणी । *चतुष्पाज्जातिरिति वक्तव्यम्* । इह मा भूत्—कालाक्षी गर्भिणी, स्वस्तिमती गर्भिणी । चतुष्पाद इति किम् ? ब्राह्मणी गर्भिणी ॥

मयूरव्यंसकादयश्च ॥ ७२ ॥

समुदाया एव निपात्यन्ते । मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति । चकारोऽवधारणार्थः, परममयूरव्यंसक इति समासान्तरं न भवति । मयूरव्यंसकः, छात्र

---

(१) 'स्त्रीलिङ्गेन' इति न्यासः ।   (२) नानावर्णसमाहारः सारङ्गः ।

ध्वंसकः। काम्बोजमुण्डः, यवनमुण्डः। छन्दसि—हस्तेगृह्य, पादेगृह्य, लाङ्गलेगृह्य। पुनर्दाय। एहीडादयोऽन्यपदार्थे॥ एहीडम्, एहियवं वर्त्तते। एहिवाणिजा क्रिया, अपेहिवाणिजा। प्रेहिवाणिजा। एहिस्वागता। अपेहिस्वागता। प्रेहिस्वागता। एहिद्वितीया। अपेहिद्वितीया। प्रोहकटा। अपोहकटा। प्रोहकर्दमा। अपोहकर्दमा। उद्धरचूडा। आहरचेला। आहरवसना। आहरवनिता। कृन्तविचक्षणा। उद्धरोत्सृजा। उद्धमविधमा। उत्पचविपचा। उत्पतनिपता। उच्चावचम्। उच्चनीचम्। अचितोपचितम्। अवचितपराचितम्। निश्चप्रचम्। अकिंचनम्। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यपाकला। निपत्यरोहिणी। निषण्णश्यामा। अपेहिप्रघसा। इहपञ्चमी। इहद्वितीया॥ जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति॥ जहिजोडः। उज्जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः॥ आख्यातमाख्यातेन क्रियासातत्ये॥ अश्नीतपिबता। पचतभृज्जता। खादतमोदता। खादताचमता। आहरनिवपा। आवपनिष्किरा। उत्पचविपचा। भिन्द्धिलवणा। छिन्द्धिविचक्षणा। पचलवणा। पचप्रकूटा। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः॥२।१॥

---

## अथ द्वितीयाध्यायस्य द्वितीयः पादः॥

### पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे॥१॥

एकदेशोऽस्यास्तीत्येकदेशी अवयवी, तद्वाचिना सुबन्तेन सह पूर्वापराधरोत्तरशब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एकाधिकरणग्रहणमेकदेशिनो विशेषणम्, एकं(१)चेदधिकरणमेकद्रव्यमेकदेशि भवति। षष्ठीसमासापवादोऽयं योगः। पूर्वं कायस्य, पूर्वकायः। अपरकायः, अधरकायः, उत्तरकायः। एकदेशिनेति किम्? पूर्वं नाभेः कायस्य(२)। एकाधिकरण इति किम्? पूर्वं छात्राणामामन्त्रय(३)। कथं मध्याह्नः, सायाह्न इति। "संख्याविसायपूर्वस्याह्नस्य" इति ज्ञापकात्सर्वेणैकदेशशब्देनाह्नः समासो भवति॥

### अर्द्धं नपुंसकम्॥२॥

एकदेशिनैकाधिकरणे इति वर्त्तते। समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गस्तस्येदं ग्रहणम्। अर्द्धमित्येतद् नपुंसकमेकदेशिनैकाधिकरणेन समस्यते, तत्पुरुषश्च

(१) एकश्चेद् एकत्वसंख्याविशिष्टमित्यर्थः। (२) "पूर्वं नाभेरिति"—कायसम्बन्धी नाभ्यपेक्षया पूर्वोभाग इत्यर्थः॥ नाभिशब्देन सह समासो न भवतीति क्वचिदधिकम्। (३) "पूर्वं छात्राणां आमन्त्रयस्व" इति न्यासे।

समासो भवति । षष्ठीसमासाऽपवादोयं योगः। अर्द्धं पिप्पल्याः, अर्द्धपिप्पली। अर्द्धकोशातकी । नपुंसकमिति किम् ? ग्रामार्द्धः (१), नगरार्द्धः । एकदेशिनेत्येव । अर्द्धं(२) पशोर्देवदत्तस्य । देवदत्तेन सह समासो न भवति । एकाधिकरण इत्येव । अर्द्धं पिप्पलीनाम् ॥

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥

एकदेशिनैकाधिकरण इति वर्तते । षष्ठीसमासापवादोऽयं योगः । अन्यतरस्यांग्रहणात् सोऽपि(३)भवति। "पूरण" इति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्यान्न प्रवर्त्तते । द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्याम् समस्यन्ते, तत्पुरुषश्च समासो भवति। द्वितीयं भिक्षायाः द्वितीयभिक्षा । षष्ठीसमासपक्षे-भिक्षाद्वितीयं वा । तृतीयं भिक्षायाः, तृतीयभिक्षा । भिक्षातृतीयं वा । चतुर्थं भिक्षायाः, चतुर्थभिक्षा । भिक्षाचतुर्थं वा । तुर्यं भिक्षायाः, तुर्यभिक्षा । भिक्षातुर्यं वा ॥ तुरीयशब्दस्यापीष्यते । तुरीयं भिक्षायाः, तुरीयभिक्षा । भिक्षातुरीयं वा(४) । एकदेशिनेत्येव । द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरण इत्येव । द्वितीयं भिक्षाणाम् ॥

प्राप्तापन्ने च द्वितीयया ॥ ४ ॥

एकदेशिनैकाधिकरण इति निवृत्तम्। द्वितीयासमासे प्राप्ते वचनमिदम् । विधानसामर्थ्यात्सोपि भवति । प्राप्त आपन्न इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति । प्राप्तो जीविकां, प्राप्तजीविकः । जीविकाप्राप्त इति वा । आपन्नो जीविकाम् , आपन्नजीविकः । जीविकापन्न इति वा ॥

कालाः परिमाणिना ॥ ५ ॥

परिमाणमस्यास्तीति परिमाणी तद्वाचिना सुबन्तेन सह सामर्थ्यात्परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति । षष्ठीसमासविषये योगारम्भः(५)। मासो जातस्य, मासजातः । संवत्सरजातः, द्व्यहजातः, त्र्यहजातः ॥

नञ् ॥ ६ ॥

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । ॥ अब्राह्मणः, अवृषलः । नञो नलोपस्तिङि क्षेपे । अपचसि त्वं जाल्म(६) ॥

ईषदकृता ॥ ७ ॥

ईषदित्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति।

(१) ग्रामार्द्धः ग्रामस्यैकदेश इत्यर्थः । (२) अर्द्धं पशो रित्यादि-देवदत्तोऽत्र स्वामी नत्वेकदेशी ॥ (३) "षष्ठी समास" इत्यधिकं न्यासे । (४) प्राप॰ सर्वत्र तुरीयशब्दादिः भिक्षातुरीय वेत्यन्तः पाठो नास्ति । (५) 'षष्ठीसमासापवादोऽयं योगः' इति पाठ क्वचित् । (६) प्राय॰ सर्वत्र नञो नलोपेत्यत जाल्मपर्यन्त॰ पाठो नास्ति, न्यासपदमञ्जर्योरपि व्याख्यातम् न दृश्यते ।

ईषद्गुणवचनेनेति वक्तव्यम्। ईषत्कडारः, ईषत्पिङ्गलः, ईषद्विकटः, ईषदुन्नतः, ईषत्पीतम्, ईषद्रक्तम्। (१)गुणवचनेनेति किम्? इह न भवति। ईषद्गार्ग्यः(२)॥

षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते। तत्पुरुषश्च समासो भवति। राज्ञः पुरुषो राजपुरुषः। ब्राह्मणकम्बलः। कृद्योगा(३) च षष्ठी समस्यत इति वक्तव्यम्। इध्मप्रव्रश्चनः। पलाशशातनः। किमर्थमिदमुच्यते प्रतिपदविधाना षष्ठी न समस्यते इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः(४)॥

याजकादिभिश्च ॥ ९ ॥

पूर्वेण समासः सिद्ध एव, तस्य "कर्तरि च" इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते(५) प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। ब्राह्मणयाजकः। क्षत्रिययाजकः। याजक। पूजक। परिचारक। परिषेचक(६)। स्नातक। अध्यापक। उत्सादक। उद्वर्तक। (७)होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक। तत्स्थैश्च(८) गुणैः षष्ठी समस्यत इति वक्तव्यम्। चन्दनगन्धः। कपित्थरसः। गुणात्तरेण तरलोपश्चेति वक्तव्यम्। सर्वेषां श्वेततरः, सर्वश्वेतः। सर्वेषां महत्तरः, सर्वमहान्। "न निर्धारणे" इति प्रतिषेधे प्राप्ते वचनमिदम्। सर्वशुक्ला गौः(९)

न निर्द्धारणे ॥ १० ॥

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्द्धारणे या षष्ठी सा न समस्यते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम्। क्षत्रियो मनुष्याणां शूरतमः। कृष्णा(१०) गवां सम्पन्नक्षीरतमा। धावतामध्वगानां शीघ्रतमः। प्रतिपद(११)विधाना च षष्ठी न समस्यत इति वक्तव्यम्। सर्पिषो ज्ञानम्। मधुनो ज्ञानम्(१२)॥

---

(१) "गुणेनेति किम्, ईषद्गुरुकम्" इत्यधिकं क्वचित्। (२) ईषद्गार्ग्यः—गार्ग्यशब्दोऽयं जातिवचनो न गुणवचनः। (३) कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या विहिता सा कृद्योगा। (४) अपकर्षः अपवादः। (५) प्रतिप्रसवः इति—अन्येन निवर्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानं प्रतिप्रसवः। (६) क्वचित् "परिवेषक" इति पाठान्तरम्। (७) "हर्तृ, वर्तक" इत्यधिकं क्वचित्। (८) तत्स्थैरिति—तच्छब्देन सन्निधानाद्गुणा एव परामृश्यन्ते। तस्मिन्नात्मनि ये गुणाः स्थितास्तैः। (९) प्रायः सर्वत्र गुणात्तरेणेत्यादि सर्वशुक्लागौरित्यन्तः पाठो नास्ति, न्यासपदमञ्जर्योरपि न व्याख्यातमेतत्। (१०) 'कृष्णा गवामिति'—नात्रायमर्थः गवां मध्ये या कृष्णा सा सम्पन्नक्षीरतमेति, एवं हि कृष्णाशब्दस्य गोभिर्यनेन सम्बन्धः, न च तस्य समासप्रसङ्गः, गुणेन नेति प्रतिषेधात्, तस्माद्गवां मध्ये या सम्पन्नक्षीरतमा सा कृष्णेत्ययमत्रार्थः इति पदमञ्जरी॥ (११) "प्रतिपदेति"—"षष्ठी शेषे" इति सामान्यविहितां षष्ठीं मुक्त्वा विशेषलक्षणविहिता षष्ठी प्रतिपदविधाना॥ (१२) क्वचिदधिकः पाठः। "ज्ञोऽविदर्थस्य करणे इति षष्ठीति"।

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥

पूरणगुणसुहितार्थ, सद्, अव्यय, तव्य, समानाधिकरण, इत्येतैः सह षष्ठी न समस्यते। अर्थशब्दः प्रत्येकमभिसम्बध्यते, तेन स्वरूपविधिर्न भवति। पूरणार्थ-छात्राणां पञ्चमः, छात्राणां दशमः। गुण-बलाकायाः शौक्ल्यम्, काकस्य कार्ष्ण्यम्। सुहितार्थास्तृप्त्यर्थाः-फलानां सुहितः, फलानां तृप्तः। सत्-ब्राह्मणस्य (१)कुर्वन्, ब्राह्मणस्य कुर्वाणः। अव्यय-ब्राह्मणस्य कृत्वा, ब्राह्मणस्य हृत्वा। तव्य-ब्राह्मणस्य कर्त्तव्यम्। तव्यता सानुबन्धकेन समासो भवत्येव। ब्राह्मणकर्त्तव्यम्। समानाधिकरण-शुकस्य माराविदस्य(२), राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्य। किं च स्यात्, पूर्वनिपातस्यानियमः स्यात्। अनन्तराया ■ प्राप्तौ प्रागपि द्वाया 'विशेषणं विशेष्येण' इति भवत्येव समासः। पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव(३) ॥

## क्तेन च पूजायाम् ॥ १२ ॥

"मतिबुद्धिपूजार्थेभ्यश्च" इति वक्ष्यति, तस्येदं ग्रहणम्। पूजाग्रहणमुपलक्षणार्थम्। क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। पूजायामिति किम्(४)? छात्रस्य हसितं, छात्रहसितम् ॥

## अधिकरणवाचिना च ॥ १३ ॥

"क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इति वक्ष्यति, तस्येदं ग्रहणम्। अधिकरणवाचिना क्तेन षष्ठी न समस्यते। इदमेषां यातम्(५) इदमेषां भुक्तम् ॥

## कर्मणि च ॥ १४ ॥

क्तेनेति निवृत्तम्। कर्मग्रहणं षष्ठीविशेषणम्। कर्मणि च या षष्ठी सा न समस्यते। 'उभयप्राप्तौ कर्मणि' इति षष्ठ्या इदं ग्रहणम्। आश्चर्यो गवां दोहो-ऽगोपालकेन(६)। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना ॥

## तृजकाभ्यां कर्तरि ॥ १५ ॥

कर्तृग्रहणं षष्ठीविशेषणम्। कर्त्तरि या षष्ठी सा तृचाऽकेन च सह न समस्यते। भवतः शायिका, भवत आसिका भवतोऽग्रगामिका। तृच कर्त्तर्येव विधीयते,

---

(१) ब्राह्मणस्य कुर्वन्—अत्र कुर्वन् शब्दः किङ्करपर्यायः। (२) 'माराविदस्य'—मारावीति दर्शनीति माराविद्। सहैष शुकविशेषस्य ॥ (३) प्रायः सर्वत्र अनन्तराया मित्यादि 'विशेषणस्यैवेति पर्यन्तं पाठो नास्ति। (४) "पूजायामित्यारभ्य हसितमित्यन्तः पाठो न्यासे स्वयमुक्तत्वापदमञ्जर्याम् व्याख्यातत्वाच्च मूले अर्पित प्रतिभाति। (५) न्यासे तु 'इदमेषामासितम्' इत्युदाहरणं—व्याख्यातम् दृश्यते॥ (६) क्वचित् पाठः "आश्चर्यो गवां दोहोऽशिक्षितेन गोपालकेन" इति।

तत्प्रयोगे कर्तरि षष्ठी नास्ति। तस्मात्तृज्ग्रहणमुत्तरार्थम्। कर्तरीति किम्? इक्षुभक्षिकां मे (१)धारयसि।

कर्तरि च ॥ १६ ॥

कर्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते। सामर्थ्यादकस्य विशेषणार्थं कर्तृग्रहणमितरत्र व्यभिचाराभावात्। अपां स्रष्टा, पुरां भेत्ता, वज्रस्य भर्ता। ननु च भर्तृशब्दो याजकादिषु पठ्यते(२)। सम्बन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम्(३)। अकः खल्वपि। ओदनस्य भोजकः, सक्तूनां पायकः॥

नित्यं क्रीडाजीविकयोः ॥ १७ ॥

नेति निवृत्तम्, न तृजकौ। नित्यं समासो विधीयते, क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। तृच्क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते। उद्दालकपुष्पभञ्जिका, वारणपुष्पप्रचायिका। जीविकायाम्—दन्तलेखकः, नखलेखकः। क्रीडाजीविकयोरिति किम्? ओदनस्य भोजकः॥

कुगतिप्रादयः ॥ १८ ॥

नित्यमिति वर्तते। कुशब्दोऽव्ययं गृह्यते गत्यादिसाहचर्यात्, न द्रव्यवचनः। कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति। कुः पापार्थे—कुपुरुषः। गति—उररीकृतम्, यदूरीकरोति। प्रादयः दुर्निन्दायाम्—दुष्पुरुषः। स्वती पूजायाम्—सुपुरुषः, अतिपुरुषः। आङीषदर्थे—आपिङ्गलः। प्रायिकं चैतदुपाधिवचनम्, अन्यत्रापि हि समासो दृश्यते। कोष्णम्, कदुष्णम्, कवोष्णम्। दुष्कृतम्। सुस्तुतम्, अतिस्तुतम्। आबद्धम्(४) इति। *प्रादयो गताद्यर्थे प्रथमया* प्रगत आचार्यः, प्राचार्यः। प्रान्तेवासी। *अत्यादयः क्रान्ताद्यर्थे द्वितीयया* अतिक्रान्तः खट्वाम्, अतिखट्वः। अतिमालः। *अवादयः क्रुष्टाद्यर्थे तृतीयया* अवक्रुष्टः कोकिलया, अवकोकिलः। *पर्यादयो ग्लानाद्यर्थे चतुर्थ्या* परिग्लानोऽध्ययनाय, पर्यध्ययनः। अलं कुमार्यै, अलंकुमारिः। *निरादयः क्रान्ताद्यर्थे पञ्चम्या* निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः। निर्वाराणसिः। *इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्* वाससी इव। *प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः* वृक्षं प्रति विद्योतते विद्युत्, साधुर्देवदत्तो मातरं प्रति॥

---

(१) "इक्षुभक्षिकां मे इति"—कर्मणि षष्ठ्या समासः। "मे" इति धारेरुत्तमर्ण इति सम्प्रदाने चतुर्थी, न्यासकारस्त्वत्र कर्तरि षष्ठीमाह॥ (२) "तत्र पाठसामर्थ्यात्समासेन भवितव्यम्। नैतदस्ति" इत्यधिकं क्वचित्। (३) "इह तु क्रियाशब्दस्य" इति क्वचित्पाठः। (४) "आविद्धम्" इति न्यासे।

उपपदमतिङ् ॥ १९ ॥

नित्यमिति वर्त्तते। उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यं, तत्पुरुषश्च समासो भवति । कुम्भकारः, नगरकारः । अतिङिति किम् ? एधानाहारको व्रजति । ननु च "सुप् सुपा" इति वर्त्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः । एवं तर्हि ज्ञापयति एतयोर्योगयोः सुप् सुपेति न सम्बध्यत इति । तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इत्येतदुपपन्नं भवति । अश्वक्रीती, धनक्रीती ॥

अमैवाव्ययेन ॥ २० ॥

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम् । अव्ययेनोपपदस्य यः समासः सोऽमैव भवति नान्येन । स्वादुङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते । अमैवेति किम् ? "कालसमयवेलासु तुमुन्" । कालो भोक्तुम्(१) । एवकारकरणमुपपदविशेषणार्थम् । अमैव(२) यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत् । अग्रे भुक्त्वा, अग्रे भोजम् ॥

तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥

अमैवेत्यनुवर्त्तते । "उपदंशस्तृतीयायाम्" इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उभयत्र विभाषेयम् । यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा "उपदंशस्तृतीयायाम्" इति । यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा "अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इति । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते, उच्चैःकारमाचष्टे, उच्चैः(३)कारम् । अमैवेत्येव । "पर्याप्तिवचनेष्वलमर्थेषु" पर्याप्तो भोक्तुम्, प्रभुर्भोक्तुम् ॥

क्त्वा च ॥ २२ ॥

अमैवेति पूर्वयोगेऽनुवृत्तं, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते । क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उच्चैःकृत्य । उच्चैः कृत्वा । "अव्यये यथाभिप्रेताख्याने" इति क्त्वाप्रत्ययः । समासपक्षे ल्यबेव । तृतीयाप्रभृतीनीत्येव । अलं कृत्वा । खलु कृत्वा ॥

शेषो बहुव्रीहिः ॥ २३ ॥

---

(१) क्वचिदयमधिकः पाठः 'समयो भोक्तुम् । वेला भोक्तुम्' इति । (२) "तुल्यविधानमिति"—येन वाक्येनामेव प्रत्ययो विधीयते न तु प्रत्ययान्तरं तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम् । (३) 'उच्चैः कारमिति"—यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, 'आदिर्णमुल्यन्यतरस्याम्' इत्याद्युदात्तत्वं, यदा तु न समासस्तदोच्चैरित्यन्तोदात्तं, स्वरादिषु तथा पाठात् । कारकमित्याद्युदात्तम् । इति पदमञ्जर्यां स्पष्टम् ॥

(१) उपयुक्तादन्यः शेषः । शेषः समासो बहुव्रीहिसंज्ञो भवति । कश्च शेषः । यत्रान्यः समासो नोक्तः । वक्ष्यति "अनेकमन्यपदार्थे"। चित्रगुः, शबलगुः, कृष्णोत्तरासङ्गः । शेष इति किम् ? उन्मत्तगङ्गम्, लोहितगङ्गम् । बहुव्रीहिप्रदेशाः, "न बहुव्रीहौ" इत्येवमादयः ॥

अनेकमन्यपदार्थे ॥ २४ ॥

अनेकं सुबन्तमन्यपदार्थे वर्तमानं(२)समस्यते, बहुव्रीहिश्च समासो भवति । प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति । प्राप्तमुदकं यं ग्रामं, प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । चित्रगुर्देवदत्तः । वीरपुरुषको ग्रामः । प्रथमार्थे तु न भवति । वृष्टे देवे गतः । अनेकग्रहणं किम् । बहूनामपि यथा स्यात् ।

सुसूक्ष्मजटकेशेन सुन(३)ताजिनवाससा ।
पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता (४) ॥

॥बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्॥ । व्यधिकरणानां मा भूत् । पञ्चभिर्भुक्तमस्य । ॥अव्ययानां च (५)बहुव्रीहिर्वक्तव्यः॥ । उच्चैर्मुखः, नीचैर्मुखः । ॥सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः॥ । कण्ठे स्थितः (६) कालोऽस्य, कण्ठेकालः । उरसिलोमा । उष्ट्रस्य मुखमिव मुखं यस्य सः, उष्ट्रमुखः । खरमुखः । ॥समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम्॥ । केशानां सङ्घातः केशसङ्घातः, केशसङ्घातश्चूडाऽस्य केशचूडः । सुवर्णस्य विकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः । ॥प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः॥ । प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः । प्रपतितं पलाशमस्य प्रपलाशः, प्रपतितपलाशः । ॥नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः॥ । अविद्यमानः पुत्रो यस्य, अपुत्रः, अविद्यमानपुत्रः । अभार्यः, अविद्यमानभार्यः । ॥सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः॥ । अस्तिक्षीरा ब्राह्मणी । अस्त्यादयो निपाताः ॥

सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये ॥ २५ ॥

सङ्ख्येये या सङ्ख्या वर्तते तया सहाव्ययासन्नादूराधिकसङ्ख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति । अव्यय–उपदशाः । उपविंशाः । आसन्नदशाः । आसन्नविंशाः । अदूरदशाः । अदूरविंशाः । अधिकदशाः । अधिकविंशाः । सङ्ख्या–द्वित्राः । त्रिच-

(१) तत्पुरुष इति निवृत्तमिति क्वचिदधिकः पाठः । 'उपयुक्ताद् योऽन्यः स शेषः', इति न्यासीयः पाठः । (२) सह' इति अधिकं पद० । (३) सुलभेत्यत्र ' "सुगजेति" पदमजय्याम् । (४) क्वचिदीदृशः पाठो दृश्यते, सचायम्—सुसूक्ष्मजटकेशेन सुनताजिनवाससा । समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ॥ इति । (५) "बहुव्रीहिर्वक्तव्यः" इति पाठो न्यासे नास्ति । (६) अत्र 'स्थः' इति पदमजय्याम् ।

तुरा। द्विदशा। सङ्ख्येति किम्? पञ्च ब्राह्मणा। अव्ययासन्नादूराधिकसङ्ख्या इति किम्? ब्राह्मणा पञ्च। सङ्ख्येये इति किम्? अधिका विंशतिर्गवाम्॥

दिङ्नामान्यन्तराले॥ ७६॥

दिशां नामानि दिङ्नामानि। दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति। दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा। पश्चिमदक्षिणा। ॐसर्वनाम्नो वृत्तिमात्रे(१) पुंवद्भावः ॐ। नामग्रहणं रूढ्यर्थम्। इह मा भूत्। ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति।

तत्र तेनेदमिति सरूपे॥ ७७॥

तत्रेति सप्तम्यन्तं गृह्यते, तेनेति तृतीयान्तम्। सरूपग्रहणं प्रत्येकमभिसम्बध्यते। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति। इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति। ततो ग्रहणं प्रहरणं कर्मव्यतिहारो युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते। यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेत्तद्भवति। केशेषु केशेषु च गृहीत्वा इदं युद्धं वृत्तं, केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं, दण्डादण्डि। मुसलामुसलि। "इच् कर्मव्यतिहारे" इति इच् समासान्तः, स चाव्ययम्। "अन्येषामपि दृश्यते" इति पूर्वपदस्य दीर्घत्वम्। सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्॥

तेन सहेति तुल्ययोगे॥ ७८॥

सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति। सह(२) पुत्रेणागतः, सपुत्रः। सच्छात्रः। सकर्मकरः। तुल्ययोग इति किम्? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानैरेव दशभिर्भारं वहतीत्यर्थः। कथं सकर्मकः, सलोमकः, सपक्षक इति। नह्यत्र तुल्ययोगो गम्यते, किं तर्हि विद्यमानता। प्रायिकं तुल्ययोग इति विशेषणम्, अन्यत्रापि समासो दृश्यते॥

चार्थे द्वन्द्वः॥ ७९॥

अनेकमिति वर्तते। अनेकं सुबन्तं चार्थे वर्तमानं समस्यते, द्वन्द्वसंज्ञश्च भवति। (३)समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र

(१) वृत्तिमात्रे इत्यस्याग्रे पूर्वपदस्येत्यपि क्वचित्पाठः। (२) "सह पुत्रेणागतः" विग्रहो न्यासस्वरसात् मूले नासीदिति अनुमीयते। (३) यदा परस्परनिरपेक्षाः पदार्थाः क्वचित् अप्रतिसम्बन्धिनि समुच्चीयन्ते तदा "समुच्चयः"॥ यत्रैकस्य प्राधान्यादन्यस्यानुरोधेन चीयते "तदान्वाचयः"। परस्परापेक्षाणामवयवभेदानुगत "इतरेतरयोगः"॥ तिरोहितावयवभेदः संहतिप्रधानः "समाहारः"॥

सामर्थ्यान्नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। प्लक्षश्च न्यग्रोधश्च, प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च, धवखदिरपलाशाः। वाक्च त्वक्च वाक्त्वचम्। वाग्दृषदम्। द्वन्द्वप्रदेशाः, "द्वन्द्वे च" इत्येवमादयः।

उपसर्जनं पूर्वम् ॥ ३० ॥

समास इति वर्त्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्। अनियमो हि स्यात्। द्वितीया—कष्टश्रितः। तृतीया—शङ्कुलाखण्डः(१)। चतुर्थी—यूपदारु। पञ्चमी—वृकभयम्। षष्ठी—राजपुरुषः। सप्तमी—अक्षशौण्डः॥

राजदन्तादिषु परम् ॥ ३१ ॥

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम्। राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम्। न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यापवादः। परनिपातो विधीयते। दन्तानां राजा, राजदन्तः। वनस्याग्रे, अग्रेवणम्, निपातनादलुक्। राजदन्तः। अग्रेवणम्। लिप्तवासितम्। नग्नमुषितम्। सिक्तसंमृष्टम्। मृष्टलुञ्चितम्। अवक्लिन्नपक्वम्। अर्पितोप्तम्। उप्तगाढम्। पूर्वकालस्य परनिपातः। उलूखलमुसलम्। तण्डुलकिण्वम्। दृषदुपलम्। आरग्वायनबन्धकी। चित्ररथबाह्लीकम्। आवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अनियमश्चात्रेष्यते। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। तत्कथं, वक्तव्यमिदम्, धर्मादिषूभयमिति। वैकारिमतम्। गजवाजम्। गोपालधानीपूलासम्। पूलासककरण्डम्। स्थूलपूलासम्। उशीरबीजम्। सिञ्जास्थम्। चित्रास्वाती। भार्यापती। जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रू। श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ॥

द्वन्द्वे घि ॥ ३२ ॥

पूर्वमिति वर्त्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। पटुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः। द्वन्द्व इति किम्? विस्पष्टपटुः॥

अजाद्यदन्तम् ॥ ३३ ॥

द्वन्द्व इति वर्त्तते(२)। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम्। उष्ट्रशशकम्। *बहुष्वनियमः*। (३)अश्वरथेन्द्राः। इन्द्ररथाश्वाः। *द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन*। इन्द्राग्नी। इन्द्रवायू। तपरकरणं किम्? अश्वावृषौ वृषाश्वे इति वा॥

---

(१) क्वचिदधिकमिदं दृश्यते। अन्नेदम्—"किरिकाण" इति। (२) "पूर्वमिति च" इति क्वचित्पाठेऽधिकम्। (३) "अश्वेन्द्ररथाः" "रथाश्वेन्द्राः" इति पदमञ्जर्यां पाठः।

अल्पाच्तरम् ॥ ३४ ॥

द्वन्द्व इति वर्तते, अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवखदिरपलाशाः। बहुष्वनियमः। शङ्खदुन्दुभिवीणाः। वीणाशङ्खदुन्दुभयः। ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वक्तव्यः। हेमन्तशिशिरवसन्ताः। चित्रास्वाती। कृत्तिकारोहिण्यौ। समानाक्षराणामिति किम्? ग्रीष्मवसन्तौ। लघ्वक्षरं पूर्वं निपततीति वक्तव्यम्। कुशकाशम्। शरशादम्। अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्। मातापितरौ। श्रद्धामेधे। दीक्षातपसी। वर्णानामानुपूर्व्येण पूर्वनिपातः। ब्राह्मणक्षत्रियविट्शूद्राः। समानाक्षराणामिति यत्र नास्ति। भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः। युधिष्ठिरार्जुनौ। संख्याया अल्पीयस्याः (१) पूर्वनिपातो वक्तव्यः। द्वित्राः। त्रिचतुराः। नवतिशतम्॥

सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥

सर्वोपसर्जनत्वाद्बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम्। सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। उरसिलोमा। विशेषणम्—चित्रगुः। शबलगुः। सर्वनामसंख्ययोरुपसंख्यानम्। सर्वश्वेतः। सर्वकृष्णः। द्विशुक्लः। द्विकृष्णः। अनयोरेव मिथः (२)सम्प्रधारणायां परत्वात्संख्यायाः पूर्वनिपातः। द्व्यन्यः। त्र्यन्यः। वा प्रियस्य पूर्वनिपातः। गुडप्रियः। प्रियगुडः। सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम्। गडुकण्ठः। गडुशिराः। कथं, बहुगडुः। प्राप्तस्य चाबाधा व्याख्येया॥

निष्ठा ॥ ३६ ॥

(३)निष्ठान्तं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कृतकटः। भिक्षितभिक्षः। अवमुक्तोपानत्कः। आहूतसुब्रह्मण्यः। ननु च विशेषणमेवात्र निष्ठा, नैष नियमो, विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात्। (४)कटे कृतमनेनेति वा विग्रहीतव्यम्। निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्। शार्ङ्गजग्धी। पलाण्डुभक्षिती। मासजातः। संवत्सरजातः। सुखजातः। दुःखजातः। कथं कृतकटः, भुक्तौदनः। प्राप्तस्य चाबाधा व्याख्येया। प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्। अस्युद्यतः। दण्डपाणिः। कथमुद्यतगदः। उद्यतासिः। प्राप्तस्य चाबाधा व्याख्येया॥

वाऽऽहिताग्न्यादिषु ॥ ३७ ॥

निष्ठेति पूर्वनिपाते प्राप्ते विकल्प उच्यते। आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयो-

(१) 'अल्पीयस' इत्यपि क्वचित्पाठः। (२) इदमस्तु इदमेवात्र निरूपणा "सम्प्रधारणा" (३) क्वचिदधिकः पाठो—"बहुव्रीहाविति वर्तते" इति। (४) "कटे कृतेन कृतमिति वा विग्रहोऽस्यमिति" इति पदमञ्जरीसम्मतः पाठः।

ग्यम् । अग्न्याहितः । आहिताग्निः । जातपुत्रः । पुत्रजातः । जातदन्तः । जातश्मश्रुः । तैलपीतः । घृतपीतः । ऊढभार्यः । गतार्थः । आकृतिगणश्चायम् । तेन गड्वुकण्ठप्रभृतय इहैव द्रष्टव्याः ॥

कडाराः कर्मधारये ॥ ३८ ॥

गुणशब्दानां विशेषणत्वात्पूर्वनिपाते प्राप्ते विकल्प उच्यते । कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्याः । कडारजैमिनिः । जैमिनिकडारः । कडार । गडुल । काण । खञ्ज । कुण्ठ । खञ्जर । खलति । गौर । वृद्ध । भिक्षुक । पिङ्गल । तनु । वटर । कर्मधारय इति किम् ? कडारपुरुषो ग्रामः ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः॥२॥२॥

---

## अथ द्वितीयाध्यायस्य तृतीयः पादः ।

अनभिहिते ॥ १ ॥

अनभिहित इत्यधिकारोऽयं वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामोऽनभिहित इत्येवं तद्वेदितव्यम् । अनभिहिते अनुक्ते अनिर्दिष्टे कर्मादौ विभक्तिर्भवति । केनानभिहिते ? तिङ्कृत्तद्धितसमासैः, (१) परिसंख्यानम् । वक्ष्यति—"कर्मणि द्वितीया" कटं करोति । ग्रामं गच्छति । अनभिहित इति किम् ? तिङ्—क्रियते कटः । कृत्—कृतः कटः । तद्धित—शत्यः । शातिकः । समासः-प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः । परिसंख्यानं किम् ? कटं करोति, भीष्ममुदारं दर्शनीयम् । बहुषु बहुवचनमित्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टाः, तत्र विशेषणार्थमिदमारभ्यते, अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्या इति ॥

कर्मणि द्वितीया ॥ २ ॥

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते, तैरेवात्र व्यवहारः । कर्मणि कारके या संख्या तत्र द्वितीया विभक्तिर्भवति । कटं करोति । ग्रामं गच्छति ।

॥उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥ ॥

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्देवदत्तम् । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो ग्रामम् । ॥अभितः परितःसमयानिकषाहाप्रतियोगेषु च दृश्यते॥ । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । बुभुक्षितं न प्रति भाति किंचित् ॥

---

(१) "बहुषु प्रयुक्तेषु केषांचिद्वर्जनेन कर्षांचित्कार्यान्वयप्रतिपादनं "परिसंख्यानम्" ।

## तृतीया च होश्छन्दसि ॥ ३ ॥

कर्मणीति वर्त्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते, चशब्दात्सा च भवति । छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति, द्वितीया च । यवाग्वाऽग्निहोत्रं जुहोति। यवागूमग्निहोत्रं जुहोति। छन्दसीति किम्? यवागूमग्निहोत्रं जुहोति।

## अन्तरान्तरेण युक्ते ॥ ४ ॥

द्वितीया स्वर्यते, न तृतीया । अन्तराऽन्तरेणशब्दौ निपातौ साहचर्याद् गृह्येते । आभ्यां योगे द्वितीया विभक्तिर्भवति । षष्ठ्यपवादो योगः । तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे। अन्तरेणशब्दस्तु तच्च विनार्थं च। अन्तरा त्वां च मां च कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः। अन्तरेण पुरुषकारं न किंचिल्लभ्यते। युक्तग्रहणं किम्? अन्तरा तक्षशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकारः ।

## कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥

कालशब्देभ्योऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवति अत्यन्तसंयोगे गम्यमाने । क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धोऽत्यन्तसंयोगः । मासमधीते । संवत्सरमधीते । मासं कल्याणी । संवत्सरं कल्याणी । मासं गुडधानाः। संवत्सरं गुडधानाः। अध्वनः खल्वपि-क्रोशमधीते । योजनमधीते । क्रोशं कुटिला नदी । योजनं कुटिला नदी । क्रोशं पर्वतः । योजनं पर्वतः । अत्यन्तसंयोग इति किम्? मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः(१) ॥

## अपवर्गे तृतीया ॥ ६ ॥

"कालाध्वनोरत्यन्तसंयोगे" इति वर्त्तते । अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः । अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति । मासेनानुवाकोऽधीतः । संवत्सरेणानुवाकोऽधीतः । अध्वनः–क्रोशेनानुवाकोऽधीतः । योजनेनानुवाकोऽधीतः । अपवर्ग इति किम्? क्रोशमधीतोऽनुवाकः । मासमधीतः । (२) कर्तृव्यावृत्तौ फलसिद्धेरभावात् तृतीया न भवति । मासमधीतोऽनुवाको न चानेन गृहीतः ॥

## सप्तमीपञ्चम्यौ कारकमध्ये ॥ ७ ॥

कालाध्वनोरिति वर्त्तते। कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः। अद्य भुक्त्वा देवदत्तो द्व्यहे द्व्यहाद्वा भोक्ता । त्र्यहे त्र्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्ये कालः । इहस्थोऽयमिष्वासः क्रोशे लक्ष्यं विध्यति । क्रोशाल्लक्ष्यं विध्यति । कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः । संख्यातानुदेशो न भवत्यस्वरितत्वात् ॥

---

(१) "योजनस्यैकदेशे पर्वत" इति न्यासेऽधिकम् । (२) "कर्तृव्यावृत्ताविति" मासवत्यादिना कर्तुरुपरमादित्यर्थः, तत्र मध्ये क्रिया विच्छिन्नेति प्रकृतिरर्थो न सम्पूर्णेति ।

कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥

कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति। अनुर्लक्षणे। शाकल्यस्य संहितामनु प्रावर्षत्। आगस्त्यमन्वसिञ्चत् प्रजाः ॥

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥

कर्मप्रवचनीययुक्त इति वर्त्तते। यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्तं तत्र सप्तमी विभक्तिर्भवति। उपखार्यां द्रोणः। उपनिष्के कार्षापणम्। यस्य चेश्वरवचनमिति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति। अधिब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति। द्वितीयापवादो योगः ॥

पञ्चम्यपाङ्परिभिः ॥ १० ॥

अप आङ् परि इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति। अप त्रिगर्तेभ्यो वृष्टो देवः। आ पाटलिपुत्राद् वृष्टो देवः। परिपरि त्रिगर्तेभ्यो वृष्टो देवः। अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणम्। तेनेह न भवति। वृक्षं परि विद्योतते विद्युत् ॥

प्रतिनिधिप्रतिदाने च यस्मात् ॥ ११ ॥

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति। अभिमन्युरर्जुनतः प्रति। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रतियच्छति। ननु च प्रतिनिधिप्रतिदाने कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने। नैष दोषः। (१) सम्बन्धसम्बन्धात्तस्यापि योगोऽस्त्येव ॥

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥

गत्यर्था धातवः चेष्टाक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारकेऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। ग्रामं व्रजति। ग्रामाय व्रजति। गत्यर्थग्रहणं किम्? ओदनं पचति। कर्मणीति किम्? अश्वेन व्रजति। चेष्टायामिति किम्? मनसा पाटलिपुत्रं गच्छति। अनध्वनीति किम्? अध्वानं गच्छति। अध्वन्यर्थग्रहणम्। पन्थानं गच्छति। मार्गं गच्छति। आस्थितप्रतिषेधश्चायं विज्ञेयः। आस्थितः सम्प्राप्तः, आक्रान्त उच्यते। यत्र तूत्पथेन पन्थानं गच्छति तत्र भवितव्यमेव चतुर्थ्या। पथे गच्छतीति। द्वितीयाग्रहणं किम्? न चतुर्थ्येव विकल्प्येत। अपवादविषयेऽपि यथा स्यात्। ग्रामं गन्ता। ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति ॥

---

(१) 'सम्बन्धसम्बन्धा'दिति सम्बध्यत इति सम्बन्धः प्रतिनिधिः प्रतिदानञ्च। तदुभयमपि कर्मप्रवचनीयेन प्रतिना युज्यते। तेन सम्बन्धेन यः सम्बन्धः स "सम्बन्धसम्बन्धः"। प्रतिनिधिर्मुख्यमपेक्ष्य भवति, प्रतिदानमपि पूर्वदत्तं, ततश्च यस्य कर्मप्रवचनीयस्य प्रतिनिधिप्रतिदानाभ्यां योगस्तस्य ताभ्यामपि मुख्यपूर्वदत्ताभ्यां तद्द्वारको योगोऽस्तीत्यर्थः ॥

चतुर्थी सम्प्रदाने ॥ १३ ॥

सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति । उपाध्यायाय गां ददाति । माणवकाय भिक्षां ददाति । देवदत्ताय रोचते । पुष्पेभ्यः स्पृहयति । इत्यादि ॥ ॐचतुर्थीविधाने तादर्थ्ये उपसंख्यानम्ॐ । यूपाय दारु । कुण्डलाय हिरण्यम् । रन्धनाय स्थाली । अवहननायोलूखलम् । ॐक्लृपिसम्पद्यमाने चतुर्थी वक्तव्याॐ । मूत्राय कल्पते यवागूः । उच्चाराय कल्पते यवागूः । क्लृपीत्यर्थनिर्देशः । मूत्राय सम्पद्यते यवागूः । मूत्राय जायते यवागूः ॥ ॐउत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्याॐ ।

वाताय कपिला विद्युदातपायातिलोहिनी । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥

ॐहितयोगे चतुर्थी वक्तव्याॐ । गोभ्यो हितम् । अरोचकिने हितम् ॥

क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ १४ ॥

क्रिया क्रियार्था उपपदं यस्य सोऽयं क्रियार्थोपपदः । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इत्येष विषयो लक्ष्यते । क्रियार्थोपपदस्य च (१)स्थानिनोऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति । द्वितीयापवादोऽयं योगः । एधेभ्यो व्रजति । पुष्पेभ्यो व्रजति । क्रियार्थोपपदस्येति किम्? प्रविश पिण्डीम् । प्रविश तर्पणम् । भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः । कर्मणीति किम्? एधेभ्यो व्रजति शकटेन । स्थानिन इति किम्? एधानाहर्तुं व्रजति ॥

तुमर्थाच्च भाववचनात् ॥ १५ ॥

तुमुना समानार्थस्तुमर्थः । तुमर्थभाववचनप्रत्ययान्तात् प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति । "भाववचनाश्च" इति वक्ष्यति, तस्येदं ग्रहणम् । पाकाय व्रजति । त्यागाय व्रजति । भूतये व्रजति । सम्पत्तये व्रजति । तुमर्थादिति किम्? पाकः, त्यागः, रागः । भाववचनादिति किम्? कारको व्रजति ॥

नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ॥ १६ ॥

नमः स्वस्ति स्वाहा स्वधाऽलं वषट् इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । नमो देवेभ्यः । स्वस्ति प्रजाभ्यः । स्वाहाऽग्नये । स्वधा पितृभ्यः । अलं मल्लो मल्लाय । अलमिति पर्याप्त्यर्थग्रहणम् । प्रभुर्मल्लो मल्लाय । शक्तो मल्लो मल्लाय । वषडग्नये । वषडिन्द्राय । चकारः पुनरस्यैव समुच्चयार्थः । तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । स्वस्ति ब्राह्मणेभ्यः ॥

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ १७ ॥

मन्यते कर्मणि, मन्यकर्मणि । मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवति अनादरे गम्यमाने । अनादरस्तिरस्कारः । न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये । न त्वा बुसं मन्ये । न त्वा बुसाय मन्ये । मन्यतिग्रहणं किम्? न त्वा

(१) "यत्र क्रियते चार्थो न च प्रयुज्यते शब्दः स 'स्थानी'"।

चिन्तयामि । विकरणनिर्देशः किमर्थः । न त्वा तृणं मन्ये । अनादर इति किम् ?—

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धायास्त्वं सुतं मन्ये यस्य माता न पश्यति ॥

अप्राणिष्विति किम् ? न त्वा शृगालं मन्ये ॥ *यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम्* । व्यवस्थितविभाषा च ज्ञेया । (१)न त्वा नावं मन्ये । यावत्तीर्णं न नाव्यम् । न त्वाऽन्नं मन्ये । यावद्भुक्तं श्राद्धम् । प्राणिषु तूभयम् । न त्वा काकं मन्ये । न त्वा शृगालं मन्ये । इह चतुर्थी द्वितीया च भवतः । न त्वा श्वानं मन्ये । न त्वा शुने मन्ये । युष्मदः कस्मान्न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म । व्यवस्थितविभाषाविज्ञानादेव न भवति ।

## कर्तृकरणयोस्तृतीया ॥ १८ ॥

कर्तरि करणे च कारके तृतीया विभक्तिर्भवति । देवदत्तेन कृतम् । यज्ञदत्तेन भुक्तम् । करणे—दात्रेण लुनाति । परशुना छिनत्ति ॥ *तृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम्* । प्रकृत्याऽभिरूपः । प्रकृत्या दर्शनीयः । प्रायेण याज्ञिकः । प्रायेण वैयाकरणः । गार्ग्योऽस्मि गोत्रेण । समेन धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । सहस्रेण पशून्(२)क्रीणाति ॥

## सहयुक्तेऽप्रधाने ॥ १९ ॥

सहार्थेन युक्तेऽप्रधाने तृतीया विभक्तिर्भवति । पुत्रेण सहागतः पिता । (३)पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । पितुरत्र क्रियादिसंबन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम् । सहार्थेन च योगे विधानात्तत्पर्यायप्रयोगेऽपि भवति । पुत्रेण सार्द्धमिति । विनापि सहशब्देन भवति । "वृद्धो यूना" इति निदर्शनात् । अप्रधान इति किम् ? शिष्येण सहोपाध्यायस्य गौः ॥

## येनाङ्गविकारः ॥ २० ॥

अङ्गशब्दोऽत्राङ्गसमुदाये शरीरे वर्तते, येनेति च तदवयवो हेतुत्वेन निर्दिश्यते । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया विभक्तिर्भवति । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुण्टः(४) । अवयवधर्मेण समुदायो व्यपदिश्यते । (५)अङ्गविकार इति किम् ? अक्षि काणमस्य ॥

---

(१) "न त्वा नावं मन्ये यावत्तीर्णं न नाव्यमिति"। 'यावत्'—यतो, 'नाव्य' नावा स्वल्पनौकया वार्यमपि त्वया महत्यापि न तीर्णमतस्त्वां 'नावमुडुपमथ' न मन्ये इत्यर्थः । "नौ" शब्देनोडुप स्वल्पनौकोच्यते। 'त्वा' शब्दार्थस्तु महती नौः । एवं ह्यनादरो भवतीत्याहुः । एवं 'नत्वाऽन्नं मन्ये यावद्भुक्तं न श्राद्ध'मित्यस्य यत् श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामस्यरूपमन्नमोदनमपि न मन्ये इत्यर्थः । इति उद्योते स्पष्टम् । (२) अश्वानिति न्यासे । (३) यद्यप्येतदुदाहरणं मुद्रितपुस्तकेषु न दृश्यते तथापि न्यासपदमञ्जरीस्वारस्यादुपन्यस्तम् (४) कुणिरिति पाठः क्वचित् । (५) क्वचिदङ्ग इति किमिति पाठः ।

इत्थंभूतलक्षणे ॥ २१ ॥

कञ्चि(१)त्प्रकारं प्राप्त(२) इत्थंभूतः तस्य लक्षणमित्थंभूतलक्षणं, ततस्तृतीया विभक्तिर्भवति । अपि भवान् कमण्डलुना छात्रमद्राक्षीत् । छात्रेणोपाध्यायम् । शिखया परिव्राजकम् । इह न भवति-कमण्डलुपाणिश्छात्र इति । लक्षणस्य समासेऽन्तर्भूतत्वात् । इत्थंभूत इति किम् ? वृक्षं प्रति विद्योतनम्(३) ॥

संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥

सम्पूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति । पित्रा संजानीते । पितरं संजानीते । मात्रा संजानीते । मातरं संजानीते(४) ॥

हेतौ ॥ २३ ॥

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते । तद्वाचिनस्तृतीया विभक्तिर्भवति । धनेन कुलम् । कन्यया शोकः । विद्यया यशः ॥

अकर्तर्यृणे पञ्चमी ॥ २४ ॥

हेताविति वर्त्तते । कर्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी विभक्तिर्भवति । तृतीयापवादो योगः । शताद् बद्धः । सहस्राद् बद्धः । अकर्त्तरीति किम् ? शतेन बन्धितः । शतमृणं च भवति, प्रयोजकत्वाच्च कर्तृसंज्ञम् ॥

विभाषा गुणेऽस्त्रियाम् ॥ २५ ॥

हेताविति वर्त्तते । गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति । जाड्याद् बद्धः । जाड्येन बद्धः । पाण्डित्याद् मुक्तः । पाण्डित्येन मुक्तः । गुणग्रहणं किम् ? धनेन कुलम् । अस्त्रियामिति किम् ? बुद्ध्या मुक्तः । प्रज्ञया मुक्तः ॥

षष्ठी हेतुप्रयोगे ॥ २६ ॥

हेतोः प्रयोगो हेतुप्रयोगः । हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति । अन्नस्य हेतोर्वसति ॥

सर्वनाम्नस्तृतीया च ॥ २७ ॥

सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति षष्ठी च । पूर्वेण षष्ठ्यामेव प्राप्तायामिदमुच्यते । कस्य हेतोर्वसति । केन हेतुना वसति । यस्य हेतोर्वसति । येन हेतुना वसति । ॐनिमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्ॐ । किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति । कस्मान्निमित्तात्

---

(१) 'सामान्यस्य भेदको विशेषः प्रकार" उच्यते । (२) अत्र "आपन्न"इति स्थाने पाठः । (३) इत्थंभूत—इत्यादितः विद्योतनमित्यन्तः पाठः प्रायो न दृश्यते । (४) क्वचिदधिकः पाठोऽत्र—"सम्पूर्वं किम्, मातरं जानाति । पितरं जानाति । कर्मणीति किम्, पुत्रं संजानीते पिता' इति ।

वसति। कस्य निमित्तस्य वसति। कस्मिन्निमित्ते वसति। एवं कारणहेत्वोरप्युदाहार्यम्। अर्थग्रहणं चैतत्। पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति। तेनेहापि भवति। किं प्रयोजनं वसति। केन प्रयोजनेन वसति। कस्मै प्रयोजनाय वसति। कस्मात्प्रयोजनाद् वसति। कस्य प्रयोजनस्य वसति। कस्मिन् प्रयोजने वसति॥

अपादाने पञ्चमी ॥ २८ ॥

अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात्पराजयते। ⊛पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम्⊛। प्रासादमारुह्य प्रेक्षते, प्रासादात्प्रेक्षते। ⊛अधिकरणे चोपसंख्यानम्⊛। आसने उपविश्य प्रेक्षते, आसनात् प्रेक्षते, शयनात् प्रेक्षते। ⊛प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या⊛। कुतो भवान्? पाटलिपुत्रात्। ⊛यतश्चाध्वकालनिर्माणं(१) तत्र पञ्चमी वक्तव्या⊛। गवीधुमतः साङ्काश्यं चत्वारि योजनानि। कार्तिक्या आग्रहायणी मासे। ⊛तद्युक्तात्काले सप्तमी वक्तव्या⊛। कार्तिक्या आग्रहायणी मासे। ⊛अध्वनः प्रथमा सप्तमी च वक्तव्या⊛। गवीधुमतः साङ्काश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा॥

अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २९ ॥

अन्य आरात् इतर ऋते दिक्शब्द अञ्चूत्तरपद आच् आहि इत्येतैर्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणो देवदत्तात्। आराच्छब्दो दूरान्तिकार्थे वर्तते। तत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति प्राप्ते पञ्चमी विधीयते। आराद्देवदत्तात्। आराद्यज्ञदत्तात्। इतर इति निर्दिष्टप्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्। ऋते इति अव्ययं वर्जनार्थे। ऋते देवदत्तात्। ऋते यज्ञदत्तात्। दिक्शब्द-पूर्वो ग्रामात् पर्वतः। उत्तरो ग्रामात्। पूर्वो ग्रीष्माद्वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। दिक्शब्द इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्शब्देन योगे यथा स्यात्। इतरथा हि दिग्वृत्तिनैव स्यात्। इयमस्याः पूर्वेति। इह [illegible] स्यात्। अस्म-स्मात् पूर्वं काल इति। अञ्चूत्तरपद-प्राग् ग्रामात्। प्रत्यग् ग्रामात्। ननु चायमपि दिक्शब्द एव। "षष्ठ्यतसर्थप्रत्ययेन" इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः। आच्—दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि—दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्॥

षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥

दक्षिणोत्तराभ्यामतसुजिति वक्ष्यति, तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरो ग्रामस्य। पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य॥

---

(१) निर्माणम्—इयत्तापरिच्छेदः।

एनपा द्वितीया ॥ ३१ ॥

"एनबन्यतरस्यामदूरे पञ्चम्याः" इति वक्ष्यते। तेन युक्ते द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्या प्राप्तायामिदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्। षष्ठ्यपीष्यते। दक्षिणेन ग्रामस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः ॥

पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ ३२ ॥

पञ्चमीग्रहणमनुवर्तते। पृथक् विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवति अन्यतरस्यां पञ्चमी च। पृथग् देवदत्तेन। पृथग् देवदत्तात्। विना देवदत्तेन। विना देवदत्तात्। नाना देवदत्तेन। नाना देवदत्तात्। पृथग् विनानाना भिर् म योगविभागो द्वितीयार्थः॥ विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ ॥

करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ॥ ३३ ॥

स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करण इत्येव सिद्धा। यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यं, तदा स्तोकादीनामसत्त्ववचनता। स्तोकान्मुक्तः। स्तोकेन मुक्तः। अल्पान्मुक्तः। अल्पेन मुक्तः। कृच्छ्रान्मुक्तः। कृच्छ्रेण मुक्तः। कतिपयान्मुक्तः। कतिपयेन मुक्तः। असत्त्ववचनस्येति किम्? स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। करण इति किम्? क्रियाविशेषणे कर्मणि मा भूत्। स्तोकं मुञ्चति॥

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥ ३४ ॥

पञ्चम्यनुवर्तते। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च। दूरं ग्रामात्। दूरं ग्रामस्य। विप्रकृष्टं ग्रामात्। विप्रकृष्टं ग्रामस्य। अन्तिकं ग्रामात्। अन्तिकं ग्रामस्य। अभ्याशं ग्रामात्। अभ्याशं ग्रामस्य। अन्यतरस्याग्रहणं पञ्चम्यर्थम्। इतरथा हि तृतीया पक्षे स्यात्॥

दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३५ ॥

पञ्चम्यनुवर्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति, चकारात्पञ्चमी तृतीया च समुच्चीयते। दूरं ग्रामस्य। दूराद्ग्रामस्य। दूरेण ग्रामस्य। अन्तिकं ग्रामस्य। अन्तिकाद् ग्रामस्य। अन्तिकेन ग्रामस्य। प्रातिपदिकार्थे विधानम्। असत्त्ववचनग्रहणं चानुवर्तते। सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति। दूरः पन्थाः। दूराय पथे देहि। दूरस्य पथः स्वम्॥

सप्तम्यधिकरणे च ॥ ३६ ॥

सप्तमी विभक्तिर्भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि। दूरे ग्रामस्य। अन्तिके

ग्रामस्य। अभ्याशे ग्रामस्य। दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीयातृतीयापञ्चमीसप्तम्यः। ॐसप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्ॐ। अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि। ॐसाध्वसाधुप्रयोगे च सप्तमी वक्तव्याॐ। साधुर्देवदत्तो मातरि। असाधुः पितरि। ॐकारकार्हाणां च कारकत्वे सप्तमी वक्तव्याॐ। ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते। ॐअकारकार्हाणां च अकारकत्वे सप्तमी वक्तव्याॐ। दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति। ॐतद्विपर्यासे च सप्तमी वक्तव्याॐ। ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति। ॐनिमित्तात्कर्मसंयोगे सप्तमी वक्तव्याॐ। चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।

केशेषु(१)चमरीं हन्ति सीम्नि पुष्कलको हतः॥

## यस्य च भावेन भावलक्षणम्॥ ३७॥

सप्तमीति वर्त्तते। भावः क्रिया। यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते ततो भाववतः सप्तमी विभक्तिर्भवति। प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः। दुग्धास्वागतः। अग्निषु हूयमानेषु गतः। हुतेष्वागतः। भावेनेति किम्? यो जटाभिः स भुङ्क्ते। पुनर्भावग्रहणं किम्? यो भुङ्क्ते स देवदत्तः।

## षष्ठी चानादरे॥ ३८॥

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात् सापि भवति। अनादराधिके भावलक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः। रुदतः प्राव्राजीत्। रुदति प्राव्राजीत्। क्रोशतः प्राव्राजीत्। क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः॥

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च॥ ३९॥

षष्ठीसप्तम्यौ वर्त्तेते। स्वामिन् ईश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतैर्योगे षष्ठीसप्तम्यौ विभक्ती भवतः। गवां स्वामी। गोषु स्वामी। गवामीश्वरः। गोष्वीश्वरः। गवामधिपतिः। गोष्वधिपतिः। गवां दायादः। गोषु दायादः। गवां साक्षी। गोषु साक्षी। गवां प्रतिभूः। गोषु प्रतिभूः। गवां प्रसूतः। गोषु प्रसूतः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थं वचनम्॥

## आयुक्तकुशलाभ्यां चासेवायाम्॥ ४०॥

षष्ठीसप्तम्यौ वर्त्तेते। आयुक्तो व्यापारित (२), कुशलो निपुणः ताभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः। आसेवा तात्पर्यम्। आयुक्तः कटकरणस्य। आयुक्तः कटकरणे। कुशलः कटकरणस्य। कुशलः कटकरणे। (३)आसेवा-

---

(१) "वालेषु" इति पाठः। (२) "व्यापृत" इति प्राय पाठः। (३) "आसेवायामित्यारभ्य इत्यर्थ इत्यन्तः" पाठो न्यासपर्य्यालोचनया मूले नासीदिति प्रतीयते। पदमंजर्यादर्शपुस्तके प्रत्युदाहरणमालोचदर्थश्च नासीदिति प्रतीयते।

यामिति किम्? आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः। तत्र सप्तम्येवाधिकरणे भवति।

यतश्च निर्द्धारणम् ॥ ४१ ॥

षष्ठीसप्तम्यौ वर्तेते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम्। यतो निर्द्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवतः। मनुष्याणां क्षत्रियः शूरतमः। मनुष्येषु क्षत्रियः शूरतमः। गवां कृष्णा सम्पन्नक्षीरतमा। गोषु कृष्णा सम्पन्नक्षीरतमा। अध्वगानां धावन्तः शीघ्रतमाः। अध्वगेषु धावन्तः शीघ्रतमाः॥

पञ्चमी विभक्ते ॥ ४२ ॥

यतश्च निर्धारणमिति वर्तते। षष्ठीसप्तम्यपवादो योग। विभागो विभक्तम्। यस्मिन्निर्द्धारणाश्रये विभक्तमस्यास्ति ततः पञ्चमी विभक्तिर्भवति। माथुराः पाटलिपुत्रेभ्यः सुकुमारतराः, आढ्यतराः॥

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४३ ॥

साधु निपुण इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति, न चेत् प्रति. प्रयुज्यते। मातरि साधुः। पितरि साधुः। मातरि निपुणः। पितरि निपुणः। अर्चायामिति किम्? साधुर्भृत्यो राज्ञः। तत्त्वकथने न भवति। अप्रतेरिति किम्? साधुर्देवदत्तो मातरं प्रति। ॐअप्रत्यादिभिरिति वक्तव्यम्ॐ। साधुर्देवदत्तो मातरं परि, मातरमनु॥

प्रसितोत्सुकाभ्यां तृतीया च ॥ ४४ ॥

प्रसित उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर्भवति, चकारात्सप्तमी च। प्रसितः प्रसक्तो, यस्तत्र नित्यमेवावबद्धः स(१) उच्यते। केशैः प्रसितः। केशेषु प्रसितः। केशैरुत्सुकः। केशेषूत्सुकः॥

नक्षत्रे च लुपि ॥ ४५ ॥

तृतीयासप्तम्यावनुवर्तेते। लुबन्तान्नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भवतः। पुष्येण पायसमश्नीयात्। पुष्ये पायसमश्नीयात्। मघाभिः पललौदनम्। मघासु पललौदनम्। नक्षत्र इति किम्? पञ्चालेषु वसति। लुपीति किम्? मघासु ग्रहः इह कस्मान्न भवति। अद्य पुष्यः। अद्य कृत्तिका। अधिकरण इति वर्तते, वचन पक्षे तृतीयाविधानार्थम्॥

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ ४६ ॥

प्रातिपदिकार्थ–सत्ता। लिङ्ग—स्त्रीलिङ्गपुँल्लिङ्गनपुंसकानि। परिमाण(२)–द्रोण खारी, आढकम्। वचनम्–एकत्वद्वित्वबहुत्वानि। मात्रशब्द प्रत्येकमभिसम्बध्यते प्रातिपदिकार्थमात्रे लिङ्गमात्र परिमाणमात्र वचनमात्रे प्रथमा विभक्तिर्भवति। प्राति पदिकार्थमात्रे–उच्चैः। नीचैः। लिङ्गग्रहणं किम्? कुमारी, वृक्षः, कुण्डम् २ ०

(१) 'प्रतिबद्धश्चित्तेनोच्यते' इति न्यासपाठः। (२) 'परिमाण इत्यादि' इत्यधिक. पाठः।

यथा स्यात्। परिमाणग्रहणं किम्? द्रोणः, खारी, आढकम् इत्यत्रापि यथा स्यात्। वचनग्रहणं किम्? एकत्वादिषूक्तेष्वपि यथा स्यात्। एकः, द्वौ, बहवः। प्रातिपदिकग्रहणं किम्? निपातस्यानर्थकस्य प्रातिपदिकत्वमुक्तं, ततोऽपि यथा स्यात्। प्रलम्बते, अध्यागच्छति॥

संबोधने च ॥ ४७ ॥

आभिमुख्यकरणं संबोधनम्, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमारभ्यते। संबोधने च प्रथमा विभक्तिर्भवति। हे देवदत्त। हे देवदत्तौ। हे देवदत्ताः॥

साऽऽमन्त्रितम् ॥ ४८ ॥

संबोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति। तथा चैवोदाहृतम्। आमन्त्रितप्रदेशाः "आमन्त्रितं पूर्वमविद्यमानवत्" इत्येवमादयः(१)॥

एकवचनं संबुद्धिः ॥ ४९ ॥

आमन्त्रितप्रथमाया यदेकवचनं तत्संबुद्धिसंज्ञं भवति। हे पटो। हे देवदत्त। संबुद्धिप्रदेशाः "एङ्ह्रस्वात् संबुद्धेः" इत्येवमादयः॥

षष्ठी शेषे ॥ ५० ॥

(२)कर्मादिभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसम्बन्धादिः शेषस्तत्र षष्ठी विभक्तिर्भवति। राज्ञः पुरुषः। पशोः पादः। पितुः पुत्रः॥

ज्ञोऽविदर्थस्य करणे ॥ ५१ ॥

(३)जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति। सर्पिषो जानीते। मधुनो जानीते। (४)सर्पिषा करणेन प्रवर्तत इत्यर्थः। प्रवृत्तिवचनो जानातिरविदर्थः। अथवा मिथ्याज्ञानवचनः। सर्पिषि रक्तः प्रतिहतो वा चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते। मिथ्याज्ञानमज्ञानमेव। अविदर्थस्येति किम्? स्वरेण पुत्रं जानाति॥

अधीगर्थदयेशां कर्मणि ॥ ५२ ॥

शेष इति वर्तते। अधीगर्थाः स्मरणार्थाः। 'दय दानगतिरक्षणेषु'। 'ईश ऐश्वर्ये'।

---

( १ ) क्वचित् "आमन्त्रितस्य च इत्येवमादयः" इति पाठः। ( २ ) अत्र न्यासे "कर्मादिभ्यो योऽन्यः प्रातिपदिकार्थव्यतिरेकः स्वस्वामिकसम्बन्धादिः स शेषः इति पाठो दृश्यते। कर्मादीनां प्रकृतत्वात् तदपेक्षया शेषत्वं विज्ञायत इत्याह कर्मादिभ्यो योऽन्य इति। कर्मादयः कारकविशेषास्तस्य सम्बन्धस्य हेतुभूताः। स तु फलभूतः। हेतुफलयोश्च प्रसिद्धमन्यत्वमिति तेभ्योऽन्यो भवति। प्रातिपदिकार्थव्यतिरेक इति। व्यतिरेक आधिक्यम्। अथवा येन प्रातिपदिकार्थो व्यतिरिच्यते व्यतिरेकीक्रियते स व्यतिरेकः। प्रातिपदिकार्थस्य व्यतिरेकः प्रातिपदिकार्थव्यतिरेकः, स शेषः। ( ३ ) क्वचित् "शेष इत्यनुवर्तते" इति विद्यते। ( ४ ) "सर्पिषेत्यस्य इत्यर्थ इत्यन्तः" पाठो न्यासेऽदर्शनात् मूले नासीदित्यनुमीयते।

एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। मातुरध्येति। मातुः स्मरति। सर्पिषो दयते। सर्पिष ईष्टे। मधुन ईष्टे। कर्मणीति किम्? मातुर्गुणैः स्मरति। शेषे इति किम्? मातरं स्मरति॥

कृञः प्रतियत्ने॥ ५३॥

सतो गुणान्तराधानं प्रतियत्नः। करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति। एधोदकस्योपस्कुरुते। शत्रपत्रस्योपस्कुरुते। प्रतियत्न इति किम्? कटं करोति। कर्मणीति किम्? एधोदकस्योपस्कुरुते प्रज्ञया। शेष इत्येव। एधोदकमुपस्कुरुते॥

रुजार्थानां भाववचनानामज्वरेः॥ ५४॥

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। चौरस्य रुजति रोगः। चौरस्यामयत्यामयः। रुजार्थानामिति किम्?

एति जीवन्तमानन्दो नरं वर्षशतादपि। जीव पुत्रक मा मैवं तपः साहसमाचर॥(१)

भाववचनानामिति। किम्? नदी कूलानि रुजति। अज्वरेरिति किम्? चौरं ज्वरयति ज्वरः। ॐअसंतापिसन्ताप्योरिति वक्तव्यम्ॐ। चौरं सन्तापयति तापः। शेष इत्येव। चौरं रुजति रोगः॥

आशिषि नाथः॥ ५५॥

'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' पठ्यते, तस्याशीःक्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति। सर्पिषो नाथते। मधुनो नाथते। आशिषीति किम्? माणवकमुपनाथति, अङ्ग पुत्रकाधीष्व॥

जासिनिप्रहणनाटक्राथपिषां हिंसायाम्॥ ५६॥

जासि निप्रहण नाट क्राथ पिष इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर्भवति। 'जसु हिंसायां' 'जसु ताडने' इति चुरादौ पठ्यते तस्येदं ग्रहणं न दैवादिकस्य 'जसु मोक्षणे' इत्यस्य(२)। चौरस्योज्जासयति। वृषलस्योज्जासयति। निप्रहण इति संघातविगृहीतविपर्यस्तग्रहणम्। चौरस्य निप्रहन्ति। चौरस्य निहन्ति। चौरस्य प्रहन्ति। चौरस्य प्रणिहन्ति। चौरस्योन्नाटयति। वृषलस्योन्नाटयति। चौरस्य क्राथयति। वृषलस्य क्राथयति निपातनाद्वृद्धिः। अथ हि घटादौ पठ्यते 'क्रथ क्नथ क्रथ क्लथ हिंसार्थाः' इति, तत्र 'घटादयो मितः' इति मित्संज्ञायां '(३)मितां ह्रस्वः' इति ह्रस्वत्वं स्यात्। चौरस्य पिनष्टि। वृषलस्य पिनष्टि। हिंसा-

(१) अत्रेदं पाठान्तरम् दरिद्रयन् तत्त्वतम्—कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे। एति जीवन्तमानन्दो नरं वर्षशतादपि। (२) 'अहिंसार्थत्वात्' इति हेतुपदं क्वचित्। (३) 'मितां ह्रस्वः' इति न्यासपर्यालोचनया सूत्रं प्रक्षिप्तं प्रतिभाति।

यामिति किम्? धाना पिनष्टि। शेष इत्येव। चौरमुज्जासयति। एषामिति किम्? चौरं हिनस्ति। निप्रहण इति किम्? चौरं विहन्ति(१)॥

व्यवहृपणोः समर्थयोः ॥ ५७॥

व्यवहृपण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर्भवति। द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः। शतस्य(२) व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। आयप्रत्ययः कस्माद्व भवति। स्तुत्यर्थस्य पणतेरायप्रत्यय(३) इष्यते॥। समर्थयोरिति किम्? शलाकां व्यवहरति। (४)गणयतीत्यर्थः। ब्राह्मणान् पणायते। स्तौतीत्यर्थः। शेष इत्येव। शतं पणते॥

दिवस्तदर्थस्य ॥ ५८॥

व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति। शतस्य दीव्यति। सहस्रस्य दीव्यति। तदर्थस्येति किम्? ब्राह्मणं दीव्यति(५)। योगविभाग उत्तरार्थः॥

विभाषोपसर्गे ॥ ५९॥

दिवस्तदर्थस्येति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते। उपसर्गे सति दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति। शतस्य प्रतिदीव्यति सहस्रस्य प्रतिदीव्यति। शतं प्रतिदीव्यति। सहस्रं प्रतिदीव्यति। उपसर्गस्येति किम्? शतस्य दीव्यति। तदर्थस्येत्येव। शलाकां प्रतिदीव्यति॥

द्वितीया ब्राह्मणे ॥ ६०॥

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति (६)गामस्य तदहः सभायां दीव्येयुः। अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम् सोपसर्गस्य ॥ छन्दसि व्यवस्थितविभाषयापि सिद्ध्यति॥

प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ॥ ६१॥

प्रेष्य इति इष्यतेर्दिवादिकस्य लोण्मध्यमपुरुषस्यैकवचनं, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यब्रुवोर्हविषः कर्मणः षष्ठी विभक्तिर्भवति देवतासम्प्रदाने सति। अग्नये छागस्य हविषो वपाया मेदस (७) प्रेष्य। अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि। प्रेष्यब्रुवोरिति किम्? अग्नये छागं हविर्वपां मेदो जुहुधि। हविष इति

(१) एषामित्यारभ्य विहन्तिपर्यन्त पाठः क्वापि नास्ति। (२) शतस्य व्यवहरति शतं क्रयविक्रयेण विनियुङ्क्ते, दीव्यतीति वाऽर्थः एवं 'शतस्य पणते' इत्यस्याप्ययमेवार्थः। (३) 'न तु व्यवहारार्थस्य' इत्यतिरिक्तं कुत्रचित्। (४) मूले प्रत्युदाहरणयोरर्थनिर्देश प्रक्षिप्तो भाति न्यासे तदर्शनात्। (५) ब्राह्मणानिति न्यासे, ब्राह्मणं दीव्यति स्तौतीत्यर्थः। (६) "गामस्ये"ति— 'गामस्य सभायां' मिति क्व। "तदह"—इत्युदाहरणम्। (७) 'प्रेष्य' इत्यत्र 'अनुब्रूही'ति न्यासे।

किम्? अग्नये गोमयानि प्रेष्य। देवतासम्प्रदान इति किम्? माणवकाय पुरोडाशं प्रेष्य। *हविष प्रस्थितस्य प्रतिषेधो वक्तव्यः*। इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य॥

चतुर्थ्यर्थे बहुलं छन्दसि॥ ६२॥

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति(१) बहुलम्। पुरुषमृगश्चन्द्रमसः। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। ते वनस्पतिभ्य। बहुलग्रहणं किम्? कृष्णो(२) रात्र्यै हिमवतो हस्ती। *षष्ठ्यर्थे चतुर्थी वक्तव्या*। या खर्वेण पिबति तस्यै खर्वो जायते। या दतो धावते तस्यै श्यावदन्। या नखानि कृन्तते तस्यै कुनखी। याऽङ्क्ते तस्यै काणः। याऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशान् प्रलिखति तस्यै खलतिः। अहल्यायै जारः॥

यजेश्च करणे॥ ६३॥

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति। घृतस्य यजते। घृतेन यजते। सोमस्य यजते। सोमेन यजते(३)॥

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे॥ ६४॥

छन्दसि बहुलमिति निवृत्तम्। कृत्वोऽर्थानां प्रत्ययानां प्रयोगे कालेऽधिकरणे षष्ठी विभक्तिर्भवति। पञ्चकृत्वोऽह्नो भुङ्क्ते। द्विरह्नोऽधीते। कृत्वोऽर्थग्रहणं किम्? [illegible] शते, रात्रौ शेते। प्रयोगग्रहणं किम्? अहनि भुक्तम्। गम्यते हि द्विस्त्रिश्चतुर्वारत्, न त्वप्रयुज्यमाने भवति। कालग्रहणं किम्? द्विः कांस्यपात्र्यां भुङ्क्ते। अधिकरण इति किम्? द्विरह्नो भुङ्क्ते। शेष इत्येव। द्विरहन्यधीते॥

कर्तृकर्मणोः कृति॥ ६५॥

कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति। भवतः शायिका। भवत आसिका। कर्मणि—अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। कर्तृकर्मणोरिति किम्? भर्ता। कृतीति किम्? तद्धितप्रयोगे मा भूत्। कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। शेष इति निवृत्तं, पुनः कर्मग्रहणात्। इतरथा हि कर्तरि च कृतीति ब्रूयात्॥

उभयप्राप्तौ कर्मणि॥ ६६॥

पूर्वेण षष्ठी प्राप्ता नियम्यते। उभयप्राप्ताविति बहुव्रीहिः। उभयोः प्राप्तिः [illegible] कृति सोऽयमुभयप्राप्तिस्तत्र कर्मण्येव षष्ठी विभक्तिर्भवति, न कर्तरि। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते म ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। बहुव्रीहिविज्ञानादिह नियमो न भवति। आश्चर्यमिदमोदनस्य नाम [illegible] ब्राह्मणानां च प्रादुर्भाव इति। *अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम्*

(१) 'देवताभ्रम्प्रदाने सति' इत्यपि क्वचित्। (२) 'कृष्णः' इति बहुलग्रहणात् रात्र्यै इत्यत्र सम्प्रदाने चतुर्थी। (३) 'करण इति किम्? अन्यत्र मा भूत्' इति क्वचित्।

भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य कटस्य । *शेषे विभाषा* । अका-कारयोः स्त्रीप्रत्यययोर्ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते । विचित्रा हि सूत्रस्य कृतिः पाणिनेः, पाणिनिना वा ॥ केचिदविशेषेणैव विभाषामिच्छन्ति ॥ शब्दानामनुशासनमाचार्येण, आचार्यस्येति वा ॥

क्तस्य च वर्तमाने ॥ ६७ ॥

"न लोकाव्ययनिष्ठा" इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते । क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः । क्तस्येति किम् ? ओदनं पचमानः । वर्तमान इति किम् ? ग्रामं गतः । *नपुंसके भाव उपसंख्यानम्* । छात्रस्य हसितम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतम् । *शेषविज्ञानात् सिद्धम्* । तथा च कर्तृविवक्षायां तृतीयापि भवति । छात्रेण हसितमिति

*अधिकरणवाचिनश्च* ॥ ६८ ॥

"क्तोऽधिकरणे च" इति वक्ष्यति, तस्य प्रयोगे षष्ठी विभक्तिर्भवति । अयमपि प्रतिषेधापवादो योगः । इदमेषामासितम् , इदमेषां शयितम् । इदमेषां गतम् । इदमेषां भुक्तम् । इदमेषामशितम् । द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी द्वितीयावत् । नेताऽश्वस्य ग्रामस्य चैत्रः । अन्ये प्रधाने कर्मण्याहुः । तदा नेता अश्वस्य ग्रामं चैत्र(१) ॥

न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ ६९ ॥

कर्तृकर्मणोः कृतीति षष्ठी प्राप्ता प्रतिषिध्यते । ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति । ल इति शतृशानचौ कानच्क्वसू किकिनौ च गृह्यन्ते । ओदनं पचन् । ओदनं पचमानः । ओदनं पेचानः । ओदनं पेचिवान् । पपिः सोमम् । ददिर्गाः । उ–कटं चिकीर्षुः । ओदनं बुभुक्षुः । कन्यामलंकरिष्णुः । इष्णुचोऽपि प्रयोगे निषेध(२) । उक–आगामुक(३) वाराणसीं रक्ष आहुः । *उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः* । दास्याः कामुकः । अव्यय–कटं कृत्वा । ओदनं भुक्त्वा । *अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः* । पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपो विरप्शिन् । निष्ठा–ओदनं भुक्तवान् । देवदत्तेन कृतम् । खलर्थ–ईषत्करः कटो भवता । ईषत्पानः सोमो भवता । तृन्निति प्रत्याहारग्रहणं, लटः शतृशानचावित्यारभ्य आ तृनो नकारात् । तेन शानन्चानश्शतृतृनामपि प्रतिषेधो भवति । सोमं पवमानः । नटमाघ्नानः । अधीयन् पारायणम् । कर्ता कटान् । वदिता जनापवादान् । *द्विषः शतुर्वा वचनम्* । चौरं द्विषन् । चौरस्य द्विषन् ॥

(१) द्विकर्मकाणामित्यतः चैत्र इत्यन्तग्रन्थः प्रायो नास्ति । (२) इष्णुचोऽपि प्रयोगे निषेध इति प्रायः सर्वत्र नास्ति । (३) "आगामुकमिति"—रक्षांसि वाराणसीं प्रत्यागमनशीलानि भवन्ति, शापादिमोक्षार्थमित्यर्थः ।

अकेनोर्भविष्यदाधमर्ण्ययोः ॥ ७० ॥

अकस्य भविष्यति काले विहितस्येनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्ठी विभक्तिर्न भवति । कटं कारको व्रजति । ओदनं भोजको व्रजति । इन खल्वपि—ग्रामं गमी । ग्रामं गामी । आधमर्ण्ये—शतं दायी । सहस्रंदायी । भविष्यदाधमर्ण्ययोरिति किम् ? । यवानां लावकः । सक्तूनां पायकः । अवश्यं कारी कटस्य । इह कस्मान्न भवति, वर्षशतस्य पूरकः, पुत्त्रपौत्त्राणां दर्शक इति । भविष्यदधिकारे विहितस्याकस्येद ग्रहणम् ॥

कृत्यानां कर्तरि वा ॥ ७१ ॥

कर्तृकर्मणोः कृतीति नित्यं षष्ठी प्राप्ता कर्तरि विकल्प्यते । कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति, न कर्मणि(१) । भवता कटः कर्तव्यः । भवतः कटः कर्तव्यः । कर्तरीति किम् ? गेयो माणवकः साम्नाम् । *उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः* । नेतव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा देवदत्तेन ॥

तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ॥ ७२ ॥

तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम्, पक्षे षष्ठी च, तुलोपमाशब्दौ वर्जयित्वा । शेषविषये तृतीयाविधानात् तया मुक्ते षष्ठ्येव भवति । तुल्यो देवदत्तेन । तुल्यो देवदत्तस्य । सदृशो देवदत्तेन । सदृशो देवदत्तस्य । अतुलोपमाभ्यामिति किम् ? तुला देवदत्तस्य नास्ति । उपमा कृष्णस्य न विद्यते । वेति वर्तमानेऽन्यतरस्याग्रहणमुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम् । इतरथा हि तृतीयानुकृष्येत ॥

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥

आशिषि गम्यमानायाम् आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । चकारो विकल्पानुकर्षणार्थः । शेषे चतुर्थीविधानात्तया मुक्ते षष्ठी विभक्तिर्भवति । *अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम्*(२) । आयुष्यं देवदत्ताय भूयात् । आयुष्यं देवदत्तस्य भूयात् । चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात् । मद्रं देवदत्ताय भूयात् । मद्रं देवदत्तस्य । भद्रं देवदत्ताय, भद्रं देवदत्तस्य । कुशलं देवदत्ताय, कुशलं देवदत्तस्य । निरामयं देवदत्ताय, निरामयं देवदत्तस्य । सुखं देवदत्ताय, सुखं देवदत्तस्य । शं देवदत्ताय, शं देवदत्तस्य । अर्थो देवदत्ताय, अर्थो देवदत्तस्य । प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य । हितं देवदत्ताय, हितं देवदत्तस्य । पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य । आशिषीति किम् ? आयुष्यं देवदत्तस्य तपः ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ।२।३।

---

(१) 'न कर्मणि' इति क्वचिन्नास्ति । (२) वार्तिकमिदं क्वचिन्नोपलभ्यते ।

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

## द्विगुरेकवचनम् ॥ १ ॥

द्विगुः समास एकवचनं भवति। एकस्य वचनमेकवचनम्। एकस्यार्थस्य वाचको भवतीत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्यैकवद्भावो विधीयते, द्विग्वर्थ एकवद्भवतीति। (१)समाहारद्विगोश्चेदं ग्रहणं नान्यस्य। पञ्चपूल्यः समाहृताः पञ्चपूली। दशपूली। द्विग्वर्थस्यैकत्वात्तदनुप्रयोगेऽप्येकवचनं भवति। पञ्चपूलीयं शोभनेति ॥

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥

एकवचनमिति वर्त्तते। अङ्गशब्दस्य प्रत्येकं वाक्यपरिसमाप्त्या त्रीणि वाक्यानि सम्पद्यन्ते। प्राण्यङ्गानां द्वन्द्व एकवद्भवति, तथा तूर्याङ्गानां सेनाङ्गानां च। प्राण्यङ्गानां तावत्—पाणिपादम्। शिरोग्रीवम्। तूर्याङ्गानाम्—मार्दङ्गिकपाणविकम्। (२)वीणावादकपरिवादकम्। सेनाङ्गानाम्—रथिकाश्वारोहम्। रथिकपादातम्। हस्त्यश्वादिषु परत्वात् पशुद्वन्द्वे विभाषयैकवद् भवति। इतरेतरयोगे समाहारे च द्वन्द्वो विहितः, तत्र समाहारस्यैकत्वात्सिद्धमेवैकवचनम्। इह तु प्रकरणे विषयविभागार्थम्। प्राण्यङ्गादीनां समाहार एव द्वन्द्वः। दधिपयआदीनामितरेतरयोग एव। वृक्षमृगादीनामुभयथेति ॥

## अनुवादे चरणानाम् ॥ ३ ॥

चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्त्तते। चरणानां द्वन्द्व एकवद्भवति, अनुवादे गम्यमाने। प्रमाणान्तरावगतस्यार्थस्य शब्देन सङ्कीर्त्तनमात्रमनुवादः। उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्। कठकालापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुनः शब्देनानूद्येते तदेदमुदाहरणम्। यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम्। अनुवाद इति किम्? उदगुः कठकालापाः। प्रत्यष्ठुः कठकौथुमाः। *स्थेणोरद्यतन्यां चेति वक्तव्यम्*। स्थेणोरिति किम्? अनन्दिषुः कठकालापाः। अद्यतन्यामिति किम्? उद्यन्ति कठकालापाः ॥

## अध्वर्युक्रतुरनपुंसकम् ॥ ४ ॥

अध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुः। अध्वर्युक्रतुवाचिनां शब्दानामनपुंसकलिङ्गानां द्वन्द्व एकवद्भवति। अध्वर्युक्रतुरनपुंसकं द्वन्द्व इति गौणो निर्देशः। अर्काश्वमेधम्। सायाह्नातिरात्रम्। अध्वर्युक्रतुरिति किम्? इषुवज्रौ। उद्भिद्बलभिदौ। अनपुंसकमिति किम्? राजसूयवाजपेये। इह कस्मान्न भवति दर्शपौर्णमासौ। क्रतुशब्दः सोमयज्ञेषु (३)रूढः ॥

---

(१) "समाहारे द्विगो" रिति न्यासे। (२) "वीणावादकेति" नित्यं क्रीडाजीविकयोरिति समासः, विपञ्ची परिवादिनी तज्जीविकः परिवादकः। इति। (३) 'सोमयागेषु' इति न्यासे पाठः।

अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥

अध्ययनेन निमित्तेन येषामविप्रकृष्टा प्रत्यासन्ना आख्या तेषां द्वन्द्व एकवद्भवति । पदकक्रमकम् । क्रमकवार्तिकम्(१) । सम्पाठः पदानां क्रमस्य च प्रत्यासन्नः । अध्ययनेन इति किम् ? पितापुत्रौ । अविप्रकृष्टाख्यानामिति किम् ? याज्ञिकवैयाकरणौ ॥

जातिरप्राणिनाम् ॥ ६ ॥

जातिवाचिनां शब्दानां द्वन्द्व एकवद्भवति, प्राणिनो वर्जयित्वा । (२)आराशस्त्रि । धानाशष्कुलि । जातिरिति किम् ? नन्दकपाञ्चजन्यौ । अप्राणिनामिति किम् ? ब्राह्मणक्षत्रियविट्शूद्राः । नञिवयुक्तन्यायेन द्रव्यजातीनामयमेकवद्भावो न गुणक्रियाजातीनाम् । रूपरसगन्धस्पर्शाः । गमनाकुञ्चनप्रसारणानि । (३)जातिपरत्वे च जातिशब्दानामयमेकवद्भावो विधीयते, न(४) नियतद्रव्यविवक्षायाम् । इह कुण्डे बदराऽऽमलकानि तिष्ठन्तीति ॥

विशिष्टलिङ्गो नदी देशोऽग्रामाः ॥ ७ ॥

विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवद्भवति । नद्यवयवो द्वन्द्वो नदी उच्यते । देशावयवश्च देशः । नदी देश इत्यसमस्तनिर्देश एवायम् । उद्ध्यश्च इरावती च, उद्ध्येरावति । गङ्गाशोणम् । देशः खल्वपि-कुरवश्च कुरुक्षेत्रं च, कुरुकुरुक्षेत्रम् । कुरुकुरुजाङ्गलम् । विशिष्टलिङ्ग इति किम् ? गङ्गायमुने । मद्रकेकयाः । नदी देश इति किम् ? कुक्कुटमयूर्यौ । अग्रामा इति किम् ? जाम्बवश्च शालूकिनी च, जाम्बवशालूकिन्यौ । नदीग्रहणमदेशत्वात् । जनपदो हि देशः । तथा च पर्वतानां ग्रहणं न भवति । कैलासश्च गन्धमादनं च, कैलासगन्धमादने । ॥अग्रामा इत्यत्र नगराणां प्रतिषेधो वक्तव्यः॥ । इह मा भूत् । मथुरा च पाटलिपुत्रं च, मथुरापाटलिपुत्रम् ॥उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः॥ । सौर्यं च नगरं, केतवता च ग्रामः, सौर्यकेतवते ॥

क्षुद्रजन्तवः ॥ ८ ॥

अपचितपरिमाणः क्षुद्रः । क्षुद्रजन्तुवाचिनां द्वन्द्व एकवद्भवति । दंशमशकम् । यूकालिक्षम् । क्षुद्रजन्तव इति किम् ? ब्राह्मणक्षत्रियौ ॥

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । (५)शतं वा प्रसृतौ येषां केचिदानकुलादपि ।
आ नकुलादपीतीयमेव स्मृतिः प्रमाणमितरासां तद्विरोधात् ॥

---

(१) वार्त्तिकम् इति वृत्ति सहिता तामधीते वार्त्तिकः (२) आरा प्रतोद "शष्कुली घृणा रसानां कुल शष्कुलीति (३) जातिपरत्वे जातिप्राधान्ये । (४) 'नियते'ति यदा कांचिदशानी नियतानां द्रव्यविशेषाणां विवक्षा तदा जातिशब्दे ष्वेकवद्भावो न भवतीत्यर्थः । (५) "शतं वेति प्रसृतिरञ्जल्यर्द्धं येषां शतं प्रसृतौ भवति शतेन दीअस्ति पूर्णं इत्यर्थः । द्वा प्रसृतिरञ्जलि ।

येषां च विरोधः शाश्वतिकः ॥ ९ ॥

विरोधो वैरं, शाश्वतिको नित्यः। येषां शाश्वतिको विरोधस्तद्वाचिनां शब्दानां द्वन्द्व एकवद्भवति। मार्जारमूषकम्। अहिनकुलम्। शाश्वतिक इति किम्? गौपालिशालङ्कायनाः कलहायन्ते। चकारः पुनरस्यैव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनामनेन नित्यमेकवद्भावो भवति। अश्वमहिषम्। श्वशृगालम्। काकोलूकम्॥

शूद्राणामनिरवसितानाम् ॥ १० ॥

निरवसानं बहिष्करणम्। कुतो बहिष्करणं, पात्रात्। यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः, न निरवसिताः अनिरवसिताः। अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद्भवति। तक्षायस्कारम्। रजकतन्तुवायम्। अनिरवसितानामिति किम्? चण्डालमृतपाः॥

गवाश्वप्रभृतीनि च ॥ ११ ॥

गवाश्वप्रभृतीनि कृतैकवद्भावानि द्वन्द्वरूपाणि साधूनि भवन्ति। गवाश्वम्। गवाविकम्। गवैडकम्। अजाविकम्। अजैडकम्। कुब्जवामनम्। कुब्जकैरातकम्। पुत्रपौत्रम्। श्वचाण्डालम्। स्त्रीकुमारम्। दासीमाणवकम्। (१)शाटीपिच्छकम्। उष्ट्रखरम्। उष्ट्रशशम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भशरम्। दर्भपूतीकम्। अर्जुनशिरीषम्। तृणोलपम्। दासीदासम्। कुटीकुटम्। भागवतीभागवतम्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं, रूपान्तरे तु नायं विधिर्भवति। गोश्वम्। गोश्वौ। पशुद्वन्द्वविभाषैव भवति॥

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥ १२ ॥

वृक्ष मृग तृण धान्य व्यञ्जन पशु शकुनि अश्ववडव पूर्वापर अधरोत्तर इत्येतेषां द्वन्द्वो विभाषैकवद्भवति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे। *बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्*। एषां बहुप्रकृतिरेव द्वन्द्व एकवद्भवति, न द्विप्रकृतिः। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। रुरुपृषतौ। हंसचक्रवाकौ। यूकालिक्षे। व्रीहियवौ। कुशकाशौ॥

विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥

परस्परविरुद्धं विप्रतिषिद्धम्। विप्रतिषिद्धार्थानां शब्दानामनधिकरणवाचिनाम्-

(१) "शाटीपटीक" मिति पदमञ्जर्याम्।

द्रव्यवाचिनां द्वन्द्व एकवद्भवति । विभाषानुकर्षणार्थश्चकारः । शीतोष्णम्, शीतोष्णे । सुखदुःखम्, सुखदुःखे । जीवितमरणम्, जीवितमरणे । विप्रतिषिद्धमिति किम् ? कामक्रोधौ । अनधिकरणवाचीति किम् ? शीतोष्णे उदके ॥

न दधिपयआदीनि ॥ १४ ॥

यथायथमेकवद्भावे प्राप्ते प्रतिषेध आरभ्यते । दधिपयआदीनि शब्दरूपाणि नैकवद्भवन्ति । दधिपयसी । सर्पिर्मधुनी । मधुसर्पिषी । ब्रह्मप्रजापती । शिववैश्रवणौ । स्कन्दविशाखौ । (१)परिव्राट्कौशिकौ । प्रवर्ग्योपसदौ । शुक्लकृष्णौ । इध्माबर्हिषी । निपातनाद्दीर्घः । दीक्षातपसी । श्रद्धातपसी । मेधातपसी । अध्ययनतपसी । उलूखलमुसले । आद्यावसाने । श्रद्धामेधे । ऋक्सामे । वाङ्मनसे ॥

अधिकरणैतावत्त्वे च ॥ १५ ॥

नेति वर्त्तते । अधिकरणं (२) वर्त्तिपदार्थः, स हि समासस्यार्थस्याधारः तस्यैतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो नैकवद्भवति । यथायथमेकवद्भावः प्राप्तः प्रतिषिध्यते । दश ( दश ) दन्तोष्ठाः । दश मार्दङ्गिकपाणविकाः ॥

विभाषा समीपे ॥ १६ ॥

अधिकरणैतावत्त्वस्य समीपे विभाषा द्वन्द्व एकवद्भवति । उपदशं दन्तोष्ठम् । उपदशा दन्तोष्ठाः । उपदशं मार्दङ्गिकपाणविकम् । उपदशाः मार्दङ्गिकपाणविकाः । अव्ययस्य सङ्ख्ययाऽव्ययीभावोऽपि विहितो बहुव्रीहिरपि, तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः ॥

स नपुंसकम् ॥ १७ ॥

यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर्द्वन्द्वश्च । पञ्चगवम् । दशगवम् । द्वन्द्वः खल्वपि । पाणिपादम् । शिरोग्रीवम् । परलिङ्गतापवादो योगः । ॐअकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यतेॐ । पञ्चमूली । दशरथी । ॐवाऽऽबन्तः स्त्रियामिष्टः । ॐपञ्चखट्वम् । पञ्चखट्वी । ॐअनो नलोपश्च वा च द्विगुः स्त्रियाम्ॐ । पञ्चतक्षम् । पञ्चतक्षी । ॐपात्राद्भ्यः प्रतिषेधो वक्तव्यःॐ । पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥

अव्ययीभावश्च ॥ १८ ॥

अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति । अधिस्त्रि । उपकुमारि । उन्मत्तगङ्गम् । लोहितगङ्गम् । पूर्वपदार्थप्रधानस्याऽलिङ्गतैव प्राप्ताऽन्यपदार्थप्रधानस्याभिधेयवल्लिङ्गता, अत इदमुच्यते । अनुक्तसमुच्चयार्थश्चकारः । ॐपुण्यसुदिनाभ्यामह्नः

( १ ) परिव्राट्कौशिकौ इत्यस्य स्थाने क्वचित्तारमाश्वक इति पाठः । ( २ ) 'वर्त्तने वर्त्ते समासः' । भावे घञ् । वर्त्तो व्याख्यातो वर्त्ति समासावयवभूतम् । वर्त्ति च तत्पदं चेति वर्त्तिपदं तस्य पदस्यार्थो वर्त्तिपदार्थः ।

क्लीबतेष्यते॥ । पुण्याहम् । सुदिनाहम् । ॥पथः संख्याव्ययादेः क्लीबतेष्यते॥ । त्रिपथम् । चतुष्पथम् । विपथम् । सुपथम् । ॥क्रियाविशेषणानां च क्लीबतेष्यते॥ । (१)मृदु पचति । शोभनं पचति ॥

तत्पुरुषोऽनञ्कर्मधारयः ॥ १९ ॥

अधिकारोऽयमुत्तरसूत्रेषूपतिष्ठते । नञ्समासं कर्मधारयं च वर्जयित्वाऽन्यस्तत्पुरुषो नपुंसकलिङ्गो भवतीत्येतदधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र । वक्ष्यति—"विभाषा सेनासुरा" इति । ब्राह्मणसेनम् । ब्राह्मणसेना । तत्पुरुष इति किम् ? दृढसेनो राजा । अनञिति किम् ? असेना । अकर्मधारय इति किम् ? परमसेना ॥

संज्ञायां कन्थोशीनरेषु ॥ २० ॥

संज्ञायां विषये कन्थान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेषु भवति । सौशमिकन्थम् । आह्वरकन्थम् । संज्ञायामिति किम् ? वीरणकन्था । उशीनरेष्विति किम् ? दाक्षिकन्था । परवल्लिङ्गतापवाद इदं प्रकरणम् ॥

उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २१ ॥

उपज्ञायत इत्युपज्ञा, उपक्रम्यत इत्युपक्रमः । उपज्ञा च उपक्रमश्च उपज्ञोपक्रमम् । तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति तदाद्याचिख्यासायां तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम् । आख्यातुमिच्छा आचिख्यासा । यदुपज्ञेयस्योपक्रम्यस्य चार्थस्यादिराख्यातुमिष्यते तत्र एतद्भवति । पाणिन्युपज्ञमकालकं (२)व्याकरणम् । पाणिनेरुपज्ञानेन प्रथमतः प्रणीतमकालकं (३) व्याकरणम् । व्याड्युपज्ञं (४)दुष्करणम् । आढ्योपक्रमं प्रासादः । नन्दोपक्रमाणि मानानि । दर्शनीयोपक्रमं सुकुमारम् । उपज्ञोपक्रममिति किम् ? वाल्मीकिश्लोकाः । तदाद्याचिख्यासायामिति किम् ? देवदत्तोपज्ञो रथः । यज्ञदत्तोपक्रमो रथः ॥

---

(१) 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्या' इति वार्तिकं क्वचिदधिकं दृश्यते । (२) 'अकालापकम्' इति मुद्रितः पाठः । (३) "अकालकमि"ति—पूर्वाणि व्याकरणानि अद्यतनादिकालपरिभाषायुक्तानि तद्रहितं तु व्याकरणं पाणिनिप्रभृति प्रवृत्तमित्यस्ति तदादिवस्याख्यानम् ॥ (४) दुष्करणमिति संकेतः शब्दः यथा न दुष्करणम् । 'दशदुष्करण'मिति न्यासपाठे, व्याडिरत्र युगपत्कालमानिना विधिना मध्ये दशदुष्करणानि कृत्वा परिभाषितवान् 'पूर्वं पूर्वं कालमिति" । पूर्वं पूर्वं कालमिति। पूर्वं प्रथमं पूर्वं भूताख्यं कालं परिभाषितवान् । पश्चात् वर्तमानादिकमित्यर्थः । अथवा पूर्वं पूर्वमिति । प्रथमतरमित्यर्थः । पूर्वप्रथमयोरर्थातिशयविवक्षायां द्विर्वचनं भवति (८।१।१२ वा०) द्विर्वचनम् । अस्य दशदुष्करणानीत्यनेन सम्बन्धस्तदयमर्थः प्रथमतरं दश दुष्करणानि कृत्वा कालमद्यतनादिकं परिभाषितवान् ॥ इति तन्त्रप्रदीपे मैत्रेयरक्षितः ॥

छाया बाहुल्ये ॥ २२ ॥

"विभाषा सेनासुराच्छाया" इति विभाषां वक्ष्यति, नित्यार्थमिदं वचनम्। छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने। पूर्वपदार्थधर्मो बाहुल्यम्। शलभादीनां हि बहुत्वं गम्यते। शलभच्छायम्। इक्षुच्छायम्। बाहुल्य इति किम्? कुड्यच्छाया॥

सभा राजामनुष्यपूर्वा ॥ २३ ॥

सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत्सभा राजपूर्वाऽमनुष्यपूर्वा च भवति। इनसभम्। ईश्वरसभम्। इह कस्मान्न भवति? राजसभा। पर्यायवचनस्यैवेष्यते, तदुक्तम्—"जित्पर्यायस्यैव राजाद्यर्थम्" इति। अमनुष्यपूर्वा—रक्षःसभम्। पिशाचसभम्। इह कस्मान्न भवति? काष्ठसभा। अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्त्तते। राजामनुष्यपूर्वेति किम्? देवदत्तसभा॥

अशाला च ॥ २४ ॥

अशाला च या सभा तदन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति। सङ्घातवचनोऽत्र सभाशब्दो गृह्यते। स्त्रीसभम्। दासीसभम्। दासीसंघात इत्यर्थः। अशालेति किम्? अनाथसभा। अनाथकुटीत्यर्थः॥

विभाषा सेनासुराच्छायाशालानिशानाम् ॥ २५ ॥

सेना सुरा छाया शाला निशा इत्येवमन्तस्तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा। ब्राह्मणसेनम्, ब्राह्मणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। (१)श्वनिशम्, श्वनिशा॥

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २६ ॥

समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वाद् इतरेतरयोगद्वन्द्वस्येदं ग्रहणम्। परस्य यल्लिङ्गं तद्भवति द्वन्द्वस्य तत्पुरुषस्य च। उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर्विधीयते। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तत्पुरुषस्य—अर्द्धं पिप्पल्याः, अर्द्धपिप्पली। अर्द्धकोशातकी। अर्द्धनखरञ्जनी॥ ✽द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः✽। द्विगुः—पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। प्राप्तो जीविकां, प्राप्तजीविकः। आपन्नो जीविकाम्, आपन्नजीविकः। अलं जीविकायै, अलञ्जीविकः। गतिसमासः—निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः॥

पूर्ववदश्ववडवौ ॥ २७ ॥

अश्ववडवयोर्विभाषैकवद्भाव उक्तस्तत्रैकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायामिदमारभ्यते। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च वडवा चाश्ववडवौ। अर्थातिदे-

(१) "श्वनिशमिति"। यस्यां निशायां श्वानो मत्ता विहरन्ति सा श्वनिशा श्वनिशेति चोच्यते। इति न्यासे। यस्यां निशायां श्वान उपवसन्ति सा श्वनिशमित्युच्यते। सा पुनः कृष्णचतुर्दशी। इति पदमञ्जर्याम्॥

शार्थायं, न निपातनम्। तत्र द्विवचनमतन्त्रं वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति। अश्ववडवान्, अश्ववडवैरिति॥

हेमन्तशिशिरावहोरात्रे च च्छन्दसि॥ २८॥

पूर्ववदिति वर्तते। हेमन्तशिशिरौ अहोरात्रे इत्येतयोश्छन्दसि विषये पूर्ववल्लिङ्गं भवति। हेमन्तशिशिरावृतूनां प्रीणामि। अहोरात्रे इदं भूमः। परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्चायं न निपातनं, तेन द्विवचनमतन्त्रं, वचनान्तरेऽपि पूर्ववल्लिङ्गता भवति। पूर्वपक्षाश्चितयः, अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः। छन्दसीति किम्? हुर्पे हेमन्तशिशिरे। अहोरात्राविमौ पुण्यौ। छन्दसि लिङ्गव्यत्यय उक्तस्तस्यैवायं प्रपञ्चः।

रात्राह्नाहाः पुंसि॥ २९॥

कृतसमासान्तानां निर्देशः। रात्र अह्न अह इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतायां स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्विरात्रः। त्रिरात्रः। चतूरात्रः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। द्व्यहः। त्र्यहः। ॐअनुवाकादयः पुंसीति वक्तव्यम्ॐ। अनुवाकः। शंयुवाकः। सूक्तवाकः॥

अपथं नपुंसकम्॥ ३०॥

अपथशब्दो नपुंसकलिङ्गो भवति। अपथमिदम्। अपथानि गाहते मूढः। इह कस्मान्न भवति? अपथो देशः, अपथा नगरी। तत्पुरुष इति वर्तते॥

अर्धर्चाः पुंसि च॥ ३१॥

अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्धर्चः। अर्धर्चम्। गोमयः। गोमयम्। शब्दरूपाश्रया चेयं द्विलिङ्गता क्वचिदर्थभेदेनापि व्यवतिष्ठते। यथा पद्मशङ्खशब्दौ निधिवचनौ पुंल्लिङ्गौ। जलजे उभयलिङ्गौ। भूतशब्दः पिशाचे उभयलिङ्गः। क्रियाशब्दस्याभिधेयवल्लिङ्गम्। (१)सैन्धवशब्दो लवणे उभयलिङ्गः। यौगिकस्याभिधेयवल्लिङ्गम्। सारशब्द उत्कर्षे पुंल्लिङ्गो, न्यायादनपेते नपुंसकं, नैतत्सारमिति। धर्मं इत्यपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम्। तानि धर्माणि प्रथमान्यासन्(२)। अर्धर्च। गोमय। कषाय। कार्षापण। कुतप। कपाट। शङ्ख। गूथ। यूथ। ध्वज। कबन्ध। पद्म। गृह। सरक। कंस। दिवस। यूप। अन्धकार। दण्ड। कमण्डलु। मण्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। पिधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन। पात्रीव। षष्टिक। वार। बाण। प्रोथ। कपित्थ। शुष्क। शील। शुल्ब। सीधु। कवच।

(१) अत्र न्यासपर्यालोचनया 'सैन्धव' शब्दस्थाने 'लवण' शब्दस्य पाठोऽनुमीयते।
(२) "कर्मशब्दो नकारान्त एवोभयलिङ्गः" इति पाठोऽत्र विच्छिन्न इति न्यासेक्षणादनुमीयते।

रेणु । कपट । सीकर । मुसल । सुवर्ण । यूप । चमस । वर्ग । क्षीर । कर्ष । आकाश । अष्टापद । मङ्गल । निधन । निर्यास । जृम्भ । वृत्त । पुस्त । क्ष्वेडित । शृङ्ग । शृङ्खल । मधु । मूल । मूलक । शराव । शाल । वप्र । विमान । मुख । प्रग्रीव । शूल । वज्र । कर्पट । शिखर । कल्क । नाट । मस्तक । वलय । कुसुम । तृण । पङ्क । कुण्डल । किरीट । अर्बुद । अङ्कुश । तिमिर । आश्रम । भूषण । इल्कस । मुकुल । वसन्त । तडाग । पिटक । विटङ्क । माष । कोश । फलक । दिन । दैवत । पिनाक । समर । स्थाणु । अनीक । उपवास । शाक । कर्पास । चषाल । खण्ड । दर । विटप । रण । बल । मल । मृणाल । हस्त । सूत्र । ताण्डव । गाण्डीव । मण्डप । पटह । सौध । पार्श्व । शरीर । फल । छल । पुर । राष्ट्र । विश्व । अम्बर । कुट्टिम । मण्डल । ककुद । तोमर । तोरण । मञ्चक । पुङ्ख । मध्य । बाल । वल्मीक । वर्ष । वस्त्र । देह । उद्यान । उद्योग । स्नेह । स्वर । सङ्गम । निष्क । क्षेम । शूक । छत्र । पवित्र । यौवन । पानक । मूषिक । वल्कल । कुञ्ज । विहार । लोहित । विषाण । भवन । अरण्य । पुलिन । दृढ । आसन । ऐरावत । शूर्प । तीर्थ । लोमश । तमाल । लोह । दण्डक । शपथ । प्रतिसर । दारु । धनुष् । मान । तङ्क । वितङ्क । मव । सहस्र । ओदन । प्रवाल । शकट । अपराह्ण । नीड । सकल । अर्द्धर्चादि(१) ॥

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ ३२ ॥

आदेशः कथनम् । (२)अन्वादेशोऽनुकथनम् । इदमोऽन्वादेशविषयस्याशादेशो भवत्यनुदात्तस्तृतीयादौ विभक्तौ परतः । आभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम् । अस्मै छात्राय कम्बलं देहि, अथो अस्मै शाटकमपि देहि । अस्य छात्रस्य शोभनं शीलम्, अथो अस्य प्रभूतं स्वम्(३) । अशादेशवचनं साकच्कार्थम् । इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम् । नेह पश्चादुच्चारणमात्रमन्वादेशः, किं तर्हि एकस्यैवाभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेशः । तेनेह न भवति । देवदत्त भोजय, इमं च यज्ञदत्तमिति ॥

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥ ३३ ॥

अन्वादेशे अनुदात्त इति वर्तते । एतदोऽन्वादेशविषयस्य अशादेशो भवति अनु-

(१) कुणप । मुण्ड । पूत । मस । कम । लोमन् । लिङ्ग । सीर । क्षत्र । रूप । कटार । दुर्ग । पूर्ण । पणव । विशाल । बुस । पुस्तक । पल्लव । निगड । खल । स्थूल । क्षार । नाग । शिखर । कटक । कण्टक । चाल । कुमुद । पुराण । जाल । स्कन्ध । ललाट । कुङ्कुम । कुशल । विडङ्ग । पिण्याक । आर्द्र । हल । कटक । योध । बिम्ब । कुक्कुट । कुडप । खण्टल । पत्रक । वसु । उद्यम । स्तन । स्तैन । क्षत्र । कल्क । पालक । वर्चस्क । कूर्च । तण्डक । तण्डुल । एते शब्दा अधिका क्वचित् । (२) 'शब्देने'ति न्यासे अधिकः पाठः । (३) "अस्माच्छात्राच्छन्दोऽधीष्व, अथोऽस्माद्व्याकरणमप्यधीष्व" ईदृशो ग्रन्थः कुत्रचिदधिकः ।

दात्रत्रतसोः परतः । तौ चापि त्रतसावनुदात्तौ भवतः। एतस्मिन् ग्रामे सुखं वसाम। अथो अत्र युक्ता अधीमहे । एतस्माच्छात्राच्छन्दोऽधीष्व । अथो अतो व्याकरणमध्यधीष्व । सर्वोऽनुदात्त पदं भवति । एतदोऽशित्यशादेशे लब्धे पुनर्वचनमनुदात्तार्थम् ॥

द्वितीयाटौस्स्वेनः ॥ ३४ ॥

अन्वादेशे अनुदात्त इति वर्त्तते । द्वितीया टा ओस् इत्येतेषु परत इदमेतदोरन्वादेशविषययोरेनदशब्द आदेशो भवति अनुदात्तः । इदमो मंडूकप्लुतिन्यायेनानुवृत्तिः । इमं छात्रं छन्दोऽध्यापय । अथो एनं व्याकरणमध्यापय । अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम् । एतदः खल्वपि-एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमप्यध्यापय। एतेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम् । एतयोश्छात्रयोः शोभनं शीलम् । अथो एनयोः प्रभूतं स्वम् । ॐएनदिति नपुंसकैकवचने वक्तव्यम् ॐ । प्रक्षालयैनत् । परिवर्त्तयैनत् । इह कस्मान्न भवति ? अयं दण्डो हरानेन । एतमातं ङित विद्यादिति । यत्र किञ्चिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोन्वादेशः । इह तु वस्तुनिर्देशमात्रं कृत्वा (1)एकमेव विधानम् ॥

आर्द्धधातुके ॥ ३५ ॥

आर्द्धधातुके इत्यधिकारोऽयं, "ण्यक्षत्रियार्षञितः" इति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तदार्द्धधातुके वेदितव्यम् । वक्ष्यति—"हनो वध लिङि" वध्यात् । आर्द्धधातुक इति किम् ? हन्यात् । विषयसप्तमी चेयं न परसप्तमी । तेनार्द्धधातुकविवक्षायामादेशेषु कृतेषु पश्चाद्यथाप्राप्तं प्रत्यया भवन्ति । भव्यम् । प्रवेयम् । आख्येयम् ॥

अदो जग्धिर्ल्यप्ति किति ॥ ३६ ॥

अदो जग्धिरादेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये। प्रजग्ध्य । विजग्ध्य । जग्धः । जग्धवान् । इकार उच्चारणार्थो, नानुबन्धः । तेन लुङ्न भवति । एवं घस्यादीनामपि । इह कस्मान्न भवति ? अन्नम् । "अन्नाण्ण" इति निपातनात् ॥

जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते ।
ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ॥

तीति किम् ? अद्यते । कितीति किम् ? अत्तव्यम् ॥

---

(१) "एकमेव विधानम्" इति—अयं दण्ड इत्यनेन दण्डस्य सत्तोपलक्षणमात्रं कृत्वा हरानेनेत्यनेनैव हरणक्रियां प्रति दण्डस्य करणभावो निर्दिश्यते इत्येकं विधानम् । एतमातं ङित विद्यादित्यत्रापीषदर्थे क्रियायोगे मर्यादाभिविधौ च य इतीषदाद्यर्थस्याकारस्य निर्देशमात्रं कृत्वा एतमातं ङित विद्यादित्यनेन वेदनक्रिया प्रत्याकारमात्रस्य कर्मभाव एव विधीयते इत्येकमेव विधानम् ॥

लुङ्सनोर्घस्लृ ॥ ३७ ॥

लुङि सनि च परतोऽदो घस्लृ आदेशो भवति । लृदित्करणमङर्थम् । लुङि—अघसत् । अघसताम् । अघसन् । सनि—जिघत्सति । जिघत्सतः । जिघत्सन्ति ॥ ॐघस्लृभावेऽच्युपसंख्यानम्ॐ । प्रात्तीति प्रघसः ॥

घञपोश्च ॥ ३८ ॥

घञि अपि च परतोऽदो घस्लृ आदेशो भवति । घासः । प्रघसः । "उपसर्गेऽदः" इत्यप् ॥

बहुलं छन्दसि ॥ ३९ ॥

छन्दसि विषये बहुलमदो घस्लृ आदेशो भवति । (१)घस्तान्नूनम् । सग्धिश्च मे । न च भवति—आत्तामद्य मध्यतो मेद उद्भृतम् । अन्यतरस्याग्रहणमेव कस्मान्न क्रियते ? तद्धयोत्तरार्थमपि भविष्यति । कार्यान्तरार्थं बहुलग्रहणम् । घस्तामित्यत्रो-पधालोपो न भवति ॥

लिट्यन्यतरस्याम् ॥ ४० ॥

लिटि परतोऽदोऽन्यतरस्यां घस्लादेशो भवति । जघास । जक्षतुः । जक्षुः । आद । आदतुः । आदुः ॥

वेञो वयिः ॥ ४१ ॥

लिट्यन्यतरस्यामिति वर्त्तते । वेञो वयिरादेशो भवति अन्यतरस्यां लिटि परतः । इकार उच्चारणार्थः । उवाय । ऊयतुः, ऊयुः । पक्षे—ऊवतुः, ऊवुः । "लिटि वयो यः" इति यकारस्य सम्प्रसारणं प्रतिषिध्यते । "वश्चास्यान्यतरस्यां किति" इति वकारो विधीयते । ववौ । ववतुः । ववुः । "वेञः" इति सम्प्रसारणं न भवति ॥

हनो वध लिङि ॥ ४२ ॥

हन्तेर्धातोर्वध इत्ययमादेशो भवति लिङि परत आर्धधातुके । वध्यात् । वध्यास्ताम् । वध्यासुः । अकारान्तश्चायमादेशः, तत्राकारस्य लोपो भवति । तस्य स्थानिवद्भावादवधीदिति हलन्तलक्षणा वृद्धिः "अतो हलादेर्लघोः" इति न भवति ॥

---

(१) "घस्तामिति"—लुङ् । तस्य ताम्, अदादित्वाच्छपो लुक् । बहुलं छन्दस्यमाङ्योगेऽपीत्यडागमाभावः । अथवा लुङ्युदाहरणमेतत् । मन्त्रे घसह्वरेत्यादिना च्लेर्लुक् । "सग्धिरिति" स्त्रियां क्तिन् । घसिभसोर्हलि चेत्युपधालोपः । 'झलो झलीति' सकारलोपः । अथ यदि सिचोऽनेन लोपो विधीयते तदा छान्दसो वर्णलोपो द्रष्टव्यो यथेष्कर्तारमध्वर इति । पूर्ववत् घकारस्य ककारः । धकारस्य गत्वम् । समानस्य छन्दसीति पूर्वपदप्र-धनेत्यादिना समासः । समानस्य छन्दस्यमूर्धप्रभृत्युदर्केष्विति समानस्य सभावः । सग्धिः सहभोजनमित्यमरः ।

लुङि च ॥ ४३ ॥

लुङि च परतो हनो वध इत्ययमादेशो भवति। अवधीत्। अवधिष्टाम्। अवधिषुः। योगविभाग उत्तरार्थः। आत्मनेपदेषु लिङि विकल्पो मा भूत्॥

आत्मनेपदेष्वन्यतरस्याम् ॥ ४४ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति। आवधिष्ट। आवधिषाताम्। आवधिषत। न च भवति-आहत। आहसाताम्। आहसत(१)॥

इणो गा लुङि ॥ ४५ ॥

इणो गा इत्ययमादेशो भवति लुङि परतः। अगात्। अगाताम्। अगुः। लुङीति वर्तमाने पुनर्लुङ्ग्रहणम् "आत्मनेपदेष्वन्यतरस्याम्" इत्येतन्मा भूत्। इह स्थानिवद्भावेन नित्यं च भवति। अगायि भवता। ॐइण्वदिक इति वक्तव्यम्ॐ। अध्यगात्। अध्यगाताम्। अध्यगुः॥

णौ गमिरबोधने ॥ ४६ ॥

णौ परत इणोऽबोधनार्थस्य गमिरादेशो भवति। इकार उच्चारणार्थः। गमयति। गमयतः। गमयन्ति। अबोधन इति किम्? प्रत्याययति, "इण्वदिक" इत्येव। अधिगमयति॥

सनि च ॥ ४७ ॥

सनि परत इणोऽबोधनार्थस्य गमिरादेशो भवति। जिगमिषति। जिगमिषतः। जिगमिषन्ति। अबोधन इत्येव। अर्थान् प्रतीषिषति। इण्वदिक इत्येव। अधिजिगमिषति। योगविभाग उत्तरार्थः। इङश्चेति सन्येव यथा स्यात्(२)॥

इङश्च ॥ ४८ ॥

इङश्च सनि परतो गमिरादेशो भवति। अधिजिगांसते। अधिजिगांसेते। अधिजिगांसन्ते॥

गाङ् लिटि ॥ ४९ ॥

गाङादेशो भवतीङो लिटि परतः। अधिजगे। अधिजगाते। अधिजगिरे। गाङो ङनुबन्धग्रहणं विशेषणार्थं "गाङ्कुटादिभ्यः" इत्यत्रास्य ग्रहणं यथा स्यात्। न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते॥

विभाषा लुङ्लृङोः ॥ ५० ॥

लुङि लृङि च परत इङो विभाषा गाङादेशो भवति। आदेशपक्षे "गाङ्कुटादि-

(१) 'आङो यमहन इत्यात्मनेपदम्। हन सिच् इति कित्वम्। अनुदात्तोपदेशेति नलोपः। ह्रस्वादङ्गादिति सिचो लोपः'। इति अन्यत्रपुस्तकेऽधिकं लभ्यते। (२) "णौ मा भूत्" इति अधिकमुपलभ्यते क्वचित्।

भ्य" इति ङित्त्वं, "घुमास्थागापाजहातिसां हलि" इतीत्वम्। अध्यगीष्ट। अध्यगीषाताम्। अध्यगीषत। न च भवति-अध्यैष्ट। अध्यैषाताम्। अध्यैषत। लृङि खल्वपि-अध्यगीष्यत। अध्यगीष्येताम्। अध्यगीष्यन्त। न च भवति-अध्यैष्यत। अध्यैष्येताम्। अध्यैष्यन्त॥

णौ च संश्चङोः॥ ५१॥

इङो गाङ् विभाषेति वर्त्तते। णाविनीडपेक्षा परसप्तमी, सञ्चङोरिति च ण्यपेक्षा। णौ सन्परे चङ्परे च परत इङो विभाषा गाङादेशो भवति। अधिजिगापयिषति। न च भवति-अध्यापिपयिषति। चङि खल्वपि—अध्यजीगपत्। अध्यापिपत्॥

अस्तेर्भूः॥ ५२॥

अस्तेर्धातोर्भू इत्ययमादेशो भवति आर्द्धधातुके। भविता। भवितुम्। भवितव्यम्(१)। इह कस्मान्न भवति? ईहामास, ईहामासतुः, ईहामासुः। "कृञ्चानुप्रयुज्यते लिटि" इति प्रत्याहारग्रहणेनास्तेर्ग्रहणसामर्थ्यात्। तथा चोच्यते॥

(२)अनुप्रयोगे तु भुवाऽस्त्यबाधनं स्मरन्ति कर्तुर्वचनात् मनीषिणः॥ इति।

ब्रुवो वचिः॥ ५३॥

ब्रुवो वचिरादेशो भवति आर्धधातुकविषये। इकार उच्चारणार्थः। वक्ता। वक्तुम्। वक्तव्यम्। स्थानिवद्भावेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदं भवति। ऊचे। वक्ष्यते॥

चक्षिङः ख्याञ्॥ ५४॥

चक्षिङः ख्याञादेशो भवत्यार्धधातुके। आख्याता। आख्यातुम्। आख्यातव्यम्। स्थानिवद्भावेन नित्यमात्मनेपदं न भवति। अकारानुबन्धकरणसामर्थ्यात्(३)। *क्शादिरप्ययमादेश इष्यते*। आक्शाता। आक्शातुम्। आक्शातव्यम्। *वर्जने प्रतिषेधो वक्तव्यः*। दुर्जनाः सञ्चक्ष्याः। वर्जनीया इत्यर्थः। *असनयोश्च प्रतिषेधो वक्तव्यः*। नृचक्षा राक्षसाः। हिंसार्थोऽत्र धातुः। अने खल्वपि-विचक्षणः पण्डितः। (४) *बहुलं सञ्ज्ञाच्छन्दसोरिति वक्तव्यम्*। अन्नवधकगात्रविचक्षणाजिराद्यर्थम्॥

वा लिटि॥ ५५॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। लिटि परतश्चक्षिङः ख्याञादेशो वा भवति। आचख्यौ। आचख्यतुः। आचख्युः। न च भवति-आचचक्षे। आचचक्षाते। आचचक्षिरे॥

---

१ (१) "आर्धधातुक इति किम्? अस्ति। स्तः। सन्ति" इति कुत्रचिदधिकम्। (२) 'न्यसौ विदाम्याभ्यधिनैष कृत्स्नपदं गृहीतुकामस्त्रितयं तदेव हि" इति पूर्वार्द्धभाग॥ (३) "आख्यास्यति। आख्यास्यते"। इति कुत्रचिदुपलभ्यते। (४) "बहुलम्" इति-"संज्ञायां छन्दसि च जग्ध्यादेशादिकार्यं बहुलं न भवतीत्यर्थः" ॥

अजेर्व्यघञपोः ॥ ५६ ॥

अजेर्धातोर्वीत्ययमादेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा। प्रवायकः। प्रवयणीयः। अघञपोरिति किम्? समाजः। उदाजः। अपि तु-समजः। उदजः। "समुदोरजः पशुषु" इत्यप्। दीर्घोच्चारणं किम्? प्रवीतः। ॐघञपोः प्रतिषेधे क्यप उपसंख्यानम्ॐ। समज्या। ॐवलादावार्धधातुके विकल्प इष्यतेॐ। प्रवेता। प्राजिता। प्रवेतुम्। प्राजितुम्॥

यौ यौ ॥ ५७ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। यु इति ल्युटो ग्रहणम्। यौ परभूते अजेर्धातोर्वी इत्ययमादेशो भवति। प्रवयणो दण्डः। प्राजनो दण्डः। प्रवयणमानय। प्राजनमानय॥

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५८ ॥

ण्यादयो गोत्रप्रत्ययाः। ण्यान्तात् क्षत्रियगोत्राद् आर्षाद् ञितश्च परयोरणिञोर्यूनि लुग्भवति। ण्यान्तात्तावत्—"कुर्वादिभ्यो ण्यः" तस्माद्यूनि इञ्। तस्य लुक्। कौरव्यः पिता। कौरव्यः पुत्रः। ननु च कौरव्यशब्दस्तिकादिषु पठ्यते, ततः फिञा भवितव्यं कौरव्यायणिरिति? क्षत्रियगोत्रस्य तत्र ग्रहणं, "कुरुनादिभ्यो ण्यः" इत्यनेन विहितस्य। [illegible] तु ब्राह्मणगोत्रम्। "कुर्वादिभ्यो ण्यः" इति ण्यः। क्षत्रिय—"ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यण्। तस्माद्यूनि इञ्। तस्य लुक्। श्वाफल्कः पिता। श्वाफल्कः पुत्रः। आर्ष—ऋष्यण्। तस्माद्यूनि इञ्। तस्य लुक्। वासिष्ठः पिता। वासिष्ठः पुत्रः। ञित्—"अनृष्यानन्तर्ये बिदादिभ्योऽञ्"। तस्माद्यूनि इञ्। तस्य लुक्। बैदः पिता। बैदः पुत्रः। अणः खल्वपि—"तिकादिभ्यः फिञ्"। तस्माद्यूनि "प्राग्दीव्यतोऽण्"। तस्य लुक्, तैकायनिः पिता। तैकायनिः पुत्रः। एतेभ्य इति किम्? "शिवादिभ्योऽण्" तस्माद् यूनि, "अत इञ्"। तस्य न लुग्भवति। कौहडः पिता। कौहडिः पुत्रः। यूनीति किम्? वामरथ्यस्य छात्राः वामरथाः। "कुर्वादिभ्यो ण्यः" इति ण्यस्तस्मात् "कण्वादिभ्यो गोत्रे" इति शैषिकोऽण्। तस्य लुग्न भवति। अणिञोरिति किम्? दाक्षेरपत्यं युवा दाक्षायण (१)। ॐअब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्ॐ। बौधिः पिता। बौधिः पुत्रः। जाबालिः पिता। जाबालिः पुत्रः। औदुम्बरिः पिता। औदुम्बरिः पुत्रः। भाण्डीजङ्घिः पिता। भाण्डीजङ्घिः पुत्रः। साल्वावयवलक्षण इञ्। तस्मात्फक्। तस्य लुक्। पैलादिदर्शनात् सिद्धम्॥

पैलादिभ्यश्च ॥ ५९ ॥

पैल इत्येवमादिभ्यो युवप्रत्ययस्य लुग्भवति। "पीलाया वा" इत्यण्। तस्मादणो "द्व्यचः" इति फिञ्। तस्य लुक्। पैलः पिता। पैलः पुत्रः। अन्ये पैलादय इञ-

(१) "अत्र यञञोश्च" इति फको लुग्भवतीति कचिदधिकम्।

न्तास्तेभ्य "इञः प्राचाम्" इति लुकि सिद्धेऽऽगर्य-पाठः। पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि। औदमेधि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षिति। भौलिङ्गि। औद्राह्मानि। औज्जिहानि(१)। "तद्राजाचाणः"। आकृतिगणोऽयम्॥

इञः प्राचाम्॥ ६०॥

गोत्रे य इञ् तदन्तात्युवप्रत्ययस्य लुग्भवति। गोत्रविशेषणं प्राग्ग्रहणं, न विकल्पार्थम्। पान्नागारेरपत्यं युवा। "यञिञोश्च" इति फक्। तस्य लुक्। पान्नागारिः पिता। पान्नागारिः पुत्रः। मान्थरैषणिः पिता। मान्थरैषणिः पुत्रः। प्राचामिति किम्? दाक्षिः पिता। दाक्षायणः पुत्रः।

न तौल्वलिभ्यः॥ ६१॥

अनन्तरेण प्राप्तो लुक् प्रतिषिध्यते। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग्भवति। तौल्वलिः पिता। तौल्वलायनः पुत्रः। तौल्वलि। धारणि। रावणि। पारणि। दैलीपि। दैवलि। दैवमति। दैवयज्ञि। प्राचाहणि। मान्धातकि। आनुहारति। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। वैकि। पौष्करसादि। वैरकि। वैलकि। वैहति। वैकर्णि। कारेणुपालि। कामालि(२)॥

तद्राजस्य बहुषु तेनैवास्त्रियाम्॥ ६२॥

"ते तद्राजाः" "ञ्याद्यस्तद्राजाः" इति वक्ष्यति, तस्य तद्राजसंज्ञस्य बहुषु वर्त्तमानस्य अस्त्रीलिङ्गस्य लुग्भवति, तेनैव चेत्तद्राजेन कृतं बहुत्वं भवति। अङ्गाः। वङ्गाः। पुण्ड्राः। मगधाः। लोहध्वजाः। व्रीहिमन्तः। तद्राजस्येति किम्? गवाः। बहुष्विति किम्? आङ्गः। तेनैवग्रहणं किम्? प्रियो वाङ्गो येषां त इमे प्रियवाङ्गाः। अस्त्रियामिति किम्? आङ्ग्यः स्त्रियः॥

यस्कादिभ्यो गोत्रे॥ ६३॥

बहुषु तेनैवास्त्रियामिति सर्वमनुवर्तते। यस्क इत्येवमादिभ्यः परस्य बहुषु वर्त्तमानस्यास्त्रीलिङ्गस्य लुग्भवति, तेनैव चेद् गोत्रप्रत्ययेन कृतं बहुत्वं भवति प्रत्ययविधेश्चान्यत्र लौकिकस्य गोत्रस्य ग्रहणमित्यनन्तरापत्येऽपि लुग्भवत्येव। यस्काः। बहुष्वित्येव, यास्कः। तेनैवेत्येव, प्रिययास्काः। अस्त्रियामित्येव, यास्क्यः स्त्रियः। गोत्र इति किम्? यास्काश्छात्राः। यस्क। लभ्य। दुह्य। अयःस्थूण। कर्ण। एते पञ्च शिवादिषु पठ्यन्ते। ततः परेभ्यः षड्भ्य इञ्(३)। सदामत्त। कम्भार। वहियोग। कर्णाटक। पिण्डीजङ्घ। बकसक्थ। ततः परेभ्यश्चतुर्भ्यो

---

(१) "राणक्षिति राणि सौमनि कद्मानि" इत्यधिकं क्वचित्। (२) 'रान्धकि। राहवि। प्राचाहति। पौष्कि। कान्दकि। दौवकयति। आन्तराहति। एते शब्दा कचिदधि' (३) "सप्तभ्य इञ्" इति क्वचित्, तदनुसारेण कर्णाटकशब्दादनन्तरं "पर्णाटक" इत्य

दिभ्यश्च" इति ढञ्। वस्ति। कुद्रि(१)। अजवस्ति। मित्रयु। ततः परेभ्यो द्वादशभ्य इञ्। रक्षोमुख। जङ्घारथ। मन्थक। उत्कास। कटुक। मन्थक। पुष्करसत्। विपथुः। उपरिमेखल। क्रोष्टमान। क्रोष्टुपाद। शीर्षमाय। पुष्करसच्छब्दात् बाह्वादिपाठादिञ्। खरपशब्दो नडादिषु पठ्यते। ततः फक्। पदक। वर्मक। एताभ्यामत इञ्। भलन्दनशब्दात् "शिवादिभ्योऽण्"। भण्डिल। भण्डिल। भडित। भण्डित। एतेभ्यश्चतुर्भ्यः "अश्वादिभ्यः फञ्"॥

यञञोश्च॥ ६४॥

बहुषु तेनैवास्त्रियां गोत्र इति चानुवर्तते। यञोऽञश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग्भवति। "गर्गादिभ्यो यञ्। गर्गाः। वत्साः। अञः खल्वपि–"अनृष्यानन्तर्ये विदादिभ्योऽञ्"। विदाः। उर्वाः। बहुष्वित्येव, गार्ग्यः। वैदः। तेनैवेत्येव, प्रियगार्ग्याः। प्रियवैदाः। अस्त्रियामित्येव, गार्ग्यः स्त्रियः। वैद्यः स्त्रियः। गोत्र इत्येव, "द्वीपादनुसमुद्रं यञ्"। द्वैप्याः। "उत्सादिभ्योऽञ्"। औत्साश्छात्राः। *यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्*। गार्ग्यस्य कुलं, गार्ग्यकुलं, गर्गकुलं वा। गार्ग्ययोः कुलं, गार्ग्यकुलं, गर्गकुलं, वा। एवं वैदस्य कुलं, वैदकुलं, विदकुलं वा। वैदयोः कुलं, वैदकुलं, विदकुलं वा। यञादीनामिति किम्? आङ्गकुलम्। एकद्वयोरिति किम्? गर्गाणां कुलं, गर्गकुलम्। तत्पुरुष इति किम्? गार्ग्यस्य समीपमुपगार्ग्यम्। षष्ठ्या इति किम्? परमगार्ग्यः॥

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च॥ ६५॥

अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति। अत्रिशब्दात् "इतश्चानिञः" इति ढक्। इतरेभ्य ऋष्यण्। अत्रयः, भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः। बहुष्वित्येव–आत्रेयः। भार्गवः। तेनैवेत्येव, प्रियात्रेयाः। प्रियभार्गवाः। अस्त्रियामिति किम्? आत्रेय्यः स्त्रियः॥

यस्कादिभ्यो गोत्रे॥ ६६॥

यत्कः प्रातिपदिकाद् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च वर्तते तस्य बहुषु लुग्भवति। पन्नागाराः। मन्थरैषणाः। भरतेषु खल्वपि–युधिष्ठिराः। अर्जुनाः। बह्वच इति किम्? वैरयः। पौष्पयः। प्राच्यभरतेष्विति किम्? बालाकयः। हास्तिदासयः। भरताः प्राच्या एव तेषां पुनर्ग्रहणं ज्ञापनार्थम्, अन्यत्र प्राग्ग्रहणे भरतग्रहणं न भवति, तेन "इञः प्राचाम्" इति भरतानां युवप्रत्ययस्य लुग्न भवति। आर्जुनिः पिता। आर्जुनायनः पुत्रः॥

न गोपवनादिभ्यः॥ ६७॥

गोपवनादिभ्यः परस्य प्रत्ययस्य लुग्न भवति। विदाद्यन्तर्गणोऽयम्। ततोऽञो

(१) अत्र "वित्रि। कद" इति पाठान्तरम्।

गोत्रप्रत्ययस्य "यञञोश्च" इति लुक् प्राप्तः प्रतिषिध्यते। गौपवनाः। शैग्रवाः। गोपवन। शिग्रु। बिन्दु। भाजन। अश्व। अवतान। श्यामाक। श्वापर्ण। एतावन्त एवाष्टौ गोपवनादयः। परिशिष्टानां हरितादीनां प्रमादपाठः। ते हि चतुर्थे बिदादिषु पठ्यन्ते। तेभ्यश्च बहुषु लुग्भवत्येव। हरिताः। किंदासाः इति॥

तिककितवादिभ्यो द्वन्द्वे ॥ ६८ ॥

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग्भवति। तैकायनयश्च कैतवायनयश्च—"तिकादिभ्यः फिञ्", तस्य लुक्, तिककितवाः। वाङ्खरयश्च भाण्डीरथयश्च—"अत इञ्", तस्य लुक्, वङ्खरभण्डीरथाः। औपकायनाश्च लामकायनाश्च—"नडादिभ्यः फक्" तस्य लुक्, उपकलमकाः। पाफकयश्च नारकयश्च—"अत इञ्", तस्य लुक्, पफकनरकाः। वाकनखयश्च श्वागुदपरिणद्धयश्च—"अत इञ्", तस्य लुक्, बकनखश्वगुदपरिणद्धाः। उब्जशब्दादत इञ् ककुभशब्दाच्छिवादित्वादण्, तयोर्लुक्। औब्जयश्च काकुभाश्च उब्जककुभाः। लाङ्कयश्च शान्तमुखयश्च—"अत इञ्", तस्य लुक्, लङ्कशान्तमुखाः। उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्, लङ्कशब्दादिञ्, तयोर्लुक्। औरसायनयश्च लाङ्कयश्च, उरसलङ्काः। भ्राष्टकयश्च कापिष्ठलयश्च—"अत इञ्", तस्य लुक्, भ्रष्टककपिष्ठलाः। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च—"अत इञ्", तस्य लुक्, कृष्णाजिनकृष्णसुन्दराः। आग्निवेश्याश्च दासेरकयश्च—अग्निवेशशब्दाद् "गर्गादिभ्यो यञ्", दासेरकशब्दात् "अत इञ्", तयोर्लुक्, अग्निवेशदासेरकाः॥

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥ ६९ ॥

उपक इत्येवमादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग्भवति अन्यतरस्यां द्वन्द्वे चाद्वन्द्वे च। अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्। एतेषां च मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते। उपकलमकाः। भ्रष्टककपिष्ठलाः। कृष्णाजिनकृष्णसुन्दराः, इति। तेषां पूर्वेणैव नित्यमत्र लुग्भवति। अद्वन्द्वे त्वनेन विकल्पः। उपकाः, औपकायनाः। लमकाः, लामकायनाः। भ्रष्टकाः, भ्राष्टकयः। कपिष्ठलाः, कापिष्ठलयः। कृष्णाजिनाः, कार्ष्णाजिनयः। कृष्णसुन्दराः, कार्ष्णसुन्दरयः इति। परिशिष्टानां च द्वन्द्वेऽद्वन्द्वे च विकल्प इति। पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ट। मयूरकर्ण। खारीजङ्घ। शलाथल। पतञ्जल। कठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। बधिरक। जन्तुक। अनुलोम। अर्धपिङ्गलक। प्रतिलोम। प्रतान। अनभिहित(१)॥

(१) चूडारक। उदङ्क। सुधायुक। अबन्धक। पदजन्तु। अनुपद। अपनद्ध। कमक। रेखाभ्र। कमन्दक। पिञ्जल। मयूरकर्ण। मसाघ। कदामत्त। दामकण्ठ। इत्यधिकं क्वचित्।

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥

आगस्त्यकौण्डिन्ययोरणो यञश्च बहुषु लुग्भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासंख्यमगस्ति कुण्डिनच् इत्येतावादेशौ भवतः। अगस्तयः। कुण्डिनाः। चकारः स्वरार्थः। मध्योदात्तो हि कुण्डिनिशब्दस्तदादेशोऽपि तथा स्यात्। अगस्त्यशब्दादृष्यण्। कुण्डिनिशब्दाद्गर्गादित्वाद्यञ्। तयोः "गोत्रे लुगचि" इति लुकि प्रतिपिद्धे आगस्तीयाश्छात्रा इति वृद्धलक्षणश्छो भवति। कौण्डिन्ये त्वणैव भवितव्यं, "कण्वादिभ्यो गोत्रे" इति, तत्र विशेषो नास्ति। कौण्डिनाश्छात्राः॥

सुपो धातुप्रातिपदिकयोः ॥ ७१ ॥

सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग्भवति। तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते। धातोस्तावत्-पुत्रीयति। घटीयति। प्रातिपदिकस्य-कष्टश्रितः। राजपुरुषः। धातुप्रातिपदिकयोरिति किम्? वृक्षः। प्लक्षः॥

अदिप्रभृतिभ्यः शपः ॥ ७२ ॥

अदिप्रभृतिभ्य उत्तरस्य शपो लुग्भवति। अत्ति। हन्ति। द्वेष्टि॥

बहुलं छन्दसि ॥ ७३ ॥

छन्दसि विषये शपो बहुलं लुग्भवति। अदिप्रभृतिभ्य उक्तस्ततो न भवत्यपि। वृत्रं हनति। अहिः शयते। अन्येभ्यश्च भवति। त्राध्वं नो देवाः॥

यङोऽचि च ॥ ७४ ॥

यङो लुग्भवति अचि प्रत्यये परतः। चकारेण बहुलग्रहणमनुकृष्यते, न तु छन्दसीति, तेन छन्दसि भाषायां च यङो लुग्भवति। लोलुवः। पोपुवः। सनीस्रंसः। दनीध्वंसः। बहुलग्रहणादन्यत्रापि भवति। शाकुनिको लालपीति। दुन्दुभिर्वावदीति॥

जुहोत्यादिभ्यः श्लुः ॥ ७५ ॥

शबनुवर्तते, न यङ्। जुहोत्यादिभ्य उत्तरस्य शपः श्लुर्भवति। लुकि प्रकृते श्लुविधानं द्विर्वचनार्थम्। जुहोति। (१)बिभर्ति। नेनेक्ति॥

बहुलं छन्दसि ॥ ७६ ॥

छन्दसि विषये बहुलं शपः श्लुर्भवति। यत्रोक्तं तत्र न भवति, अन्यत्रापि भवति। जुहोत्यादिभ्यस्तावन्न भवति। दाति प्रियाणि। धाति प्रियाणि। अन्येभ्यश्च भवति। पूर्णां विवष्टि। जनिमा(२)विवक्ति॥

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥

लुगनुवर्तते, न श्लुः। गाति स्था घु पा भू इत्येतेभ्यः परस्य सिचो लुग्भवति परस्मैपदेषु परतः। अगात्। अस्थात्। घु-अदात्। अधात्। अपात्। अभूत्। गापो-

(१) मुद्रितपुस्तकेषु "बिभेती"ति पाठ उपलभ्यते। (२) "विवक्तीति पाठोऽपि न्यासे।

ग्रहणे इणपिस्त्योर्ग्रहणम्॥ । गायते पातेश्च न भवति । अगासीज्ञ । अपासीन्नृप । परस्मैपदेष्विति किम् ? अगासाता ग्रामौ देवदत्तेन ॥

विभाषा घ्राधेट्शाच्छासः ॥ ७८ ॥

घ्रा धेट् शा छा सा इत्येतेभ्य उत्तरस्य सिचः परस्मैपदेषु विभाषा लुग्भवति । धेट पूर्वेण प्राप्ते विभाषार्थं वचनम् । परिशिष्टानामप्राप्ते । अघ्रात् । अघ्रासीत् । अधात् । अधासीत् । अशात् । अशासीत् । अच्छात् । अच्छासीत् । असात् । असासीत् । परस्मैपदेष्वित्येव । अघ्रासाता सुमनसौ देवदत्तेन ॥

तनादिभ्यस्तथासोः ॥ ७९ ॥

तनादिभ्य उत्तरस्य सिचस्तथासोः परतो विभाषा लुग्भवति । अतत । अतथाः । अतनिष्ट । अतनिष्ठाः । असात । असाथाः । असनिष्ट । असनिष्ठाः । "जनसनखनाम्" इत्यात्वम् । थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणं, परस्मैपदे न भवति । अतनिष्ट यूयम् ॥

मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥ ८० ॥

मन्त्रविषये घस, ह्वर, णश वृ, दह, आत्, वृच् कृ गमि, जनि, इत्येतेभ्य उत्तरस्य लेर्लुग्भवति । घस–अक्षन्नमीमदन्त पितरः । ह्वरेति ह्वृकौटिल्ये–माह्वर्मित्रस्य त्वम् । णश–(१)प्रणङ्मर्त्यस्य । वृ इति वृङ्वृञो सामान्येन ग्रहणम्–सुरुचो वेन आवः । दह–मा न (२)आधक् । आदिति–आकारान्तग्रहणम्, प्रा पूरणे–आप्रा द्यावापृथिवी अन्तरिक्षम् । वृच–मा नो अस्मिन्महाधने परावर्क् । कृ–अक्रन् कर्म कर्मकृतः । गमि–अग्मन् । जनि–अज्ञत वा अस्य दन्ताः । ब्राह्मणे प्रयोगोऽयम् । मन्त्रग्रहणं छन्दस उपलक्षणार्थम् ॥

आमः ॥ ८१ ॥

आमः परस्य लेर्लुग् भवति । ईहाचक्रे । ऊहाचक्रे । ईक्षाचक्रे ॥

अव्ययादाप्सुपः ॥ ८२ ॥

अव्ययादुत्तरस्याप सुपश्च लुग्भवति । तत्र शालायाम् । यत्र शालायाम् । कृत्वा । ह्रित्वा ॥

नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥ ८३ ॥

पूर्वेण लुक् प्राप्तः प्रतिषिध्यते । अदन्तादव्ययीभावादुत्तरस्य सुपो न लुग्भवति अमादेशस्तु तस्य सुपो भवत्यपञ्चम्याः । तस्मिन् प्रतिषिद्धे पञ्चम्याः भवति । उपकुम्भं तिष्ठति । उपकुम्भं पश्य । उपमणिकं तिष्ठति । उपमणिकं अत इति किम् ? अधिस्त्रि । अधिकुमारि । अपञ्चम्या इति किम् ? उपकुम्भादानय

(१) 'प्रणङ्' इति पाठान्तरम् (२) धगित्येव पाठः । बहुल योगेऽपि इत्यागमाभावः ।

### तृतीयासप्तम्योर्बहुलम् ॥ ८४ ॥

पूर्वेण नित्यमम्भावे प्राप्ते वचनमिदम्। तृतीयासप्तम्योर्विभक्त्योर्बहुलमम्भावो भवति, अव्ययीभावे। उपकुम्भेन कृतम्। उपकुम्भं कृतम्। उपकुम्भे निधेहि। उपकुम्भं निधेहि। ॐसप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वक्तव्यम्ॐ। सुमद्रम्। सुमगधम्। उन्मत्तगङ्गम्। लोहितगङ्गम्। एकविंशतिभारद्वाजम्। बहुल वचनात् सिद्धम् ॥

### लुटः प्रथमस्य डारौरसः ॥ ८५ ॥

लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्यात्मनेपदस्य च डा रौ रस् इत्येते आदेशा भवन्ति यथासंख्यम्। कर्ता। कर्तारौ। कर्तारः। आत्मनेपदस्य—अध्येता। अध्येतारौ। अध्येतारः। प्रथमस्येति किम्? श्व कर्तासि श्वोऽध्येतासे ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः ॥ २ ॥ ४ ॥ समाप्तश्चाध्यायः ॥ २ ॥

---

## अथ तृतीयाध्यायस्य प्रथमः पादः।

### प्रत्ययः ॥ १ ॥

अधिकारोऽयम्। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते। आ पञ्चमाध्यायपरिसमाप्ते- र्यानित ऊर्ध्वमनुक्रमिष्यामः प्रत्ययसंज्ञास्ते वेदितव्याः, प्रकृत्युपपदोपाधिविकारागमान् वर्जयित्वा। वक्ष्यति—"तव्यत्तव्यानीयरः"। कर्तव्यम्। करणीयम्। (१)तैत्तिरीयम्। प्रत्ययप्रदेशाः "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्येवमादयः ॥

### परश्च ॥ २ ॥

अयमप्यधिकारो योगे योग उपतिष्ठते, परिभाषा वा। परश्च स भवति धातोर्वा प्रातिपदिकाद्वा यः प्रत्ययसंज्ञः। कर्तव्यम्। तैत्तिरीयम्। चकार पुनरस्यैव समुच्चयार्थः, तेनोणादिषु परत्वं न विकल्प्यते ॥

### आद्युदात्तश्च ॥ ३ ॥

अयमप्यधिकारः, परिभाषा वा। आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः। अनिश्चितस्वरप्रत्ययप्रसङ्गेऽनेकाच्सु च प्रत्ययेषु देशस्यानियमे सति वचनमिदमाद्युदात्ता- र्थम्। कर्तव्यम्। तैत्तिरीयम् ॥

---

(१) न्यासपदमञ्जर्योरिदमुदाहरणमत्र नोपलभ्यते।

अनुदात्तौ सुप्पितौ ॥ ४ ॥

पूर्वस्यायमपवादः । सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति । दृषदौ, दृषदः । पितः खल्वपि—पचति । पठति ॥

गुप्तिज्किद्भ्यः सन् ॥ ५ ॥

"गुप गोपने" "तिज निशाने" "कित निवासे" एतेभ्यो धातुभ्यः सन्प्रत्ययो भवति । प्रत्ययसञ्ज्ञा चाधिकृतैव । जुगुप्सते । तितिक्षते । चिकित्सति । *निन्दाक्षमाव्याधिप्रतीकारेषु सनिष्यते, अन्यत्र यथाप्राप्तं प्रत्यया भवन्ति* । गोपायति । तेजयति । सङ्केतयति । गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् ॥

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥

"मान पूजायां" "बध बन्धने" "दान अवखण्डने" "शान् अवतेजने इत्येतेभ्यो" धातुभ्यः सन्प्रत्ययो भवति, अभ्यासस्य चेकारस्य दीर्घादेशो भवति । मीमांसते । बीभत्सते । दीदांसते । शीशांसते । उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिन्न भवत्यपि । मानयति । बाधयति । दानयति । निशानयति । *अत्रापि सन्नर्थविशेष इष्यते* । *मानेर्जिज्ञासायाम्* । *बधेर्वैरूप्ये* । *दानेरार्जवे* । *शानेर्निशाने* ॥

धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥

इषिकर्म यो धातुरिषिणैव समानकर्तृकस्तस्मादिच्छायामर्थे वा सन्प्रत्ययो भवति । कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकम् । कर्तुमिच्छति, चिकीर्षति । जिहीर्षति । धातुग्रहणं किम् ? सोपसर्गादुत्पत्तिर्मा भूत् । प्रकर्तुमैच्छत् प्राचिकीर्षत् । कर्मण इति किम् ? करणान्मा भूत् । गमनेनेच्छति । समानकर्तृकादिति किम् ? देवदत्तस्य भोजनमिच्छति यज्ञदत्तः । इच्छायामिति किम् ? कर्तुं जानाति । वावचनाद्वाक्यमपि भवति । धातोरिति विधानादत्र सन आर्धधातुकसंज्ञा भवति, न पूर्वत्र । *आशङ्कायामुपसंख्यानम्* । शङ्के पतिष्यति कूलम् । पिपतिषति कूलम् । श्वा मुमूर्षति । *इच्छासन्नन्तात्प्रतिषेधो वक्तव्यः* । चिकीर्षितुमिच्छति । विशेषणं किम् जुगुप्सिषते । मीमांसिषते ॥

*तौपिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते* ॥

सुप आत्मनः क्यच् ॥ ८ ॥

कर्मण इच्छायां वेत्यनुवर्तते । इषिकर्मण एषितुरेवात्मसंबन्धिनः सुबन्तादिच्छायामर्थे वा क्यच्प्रत्ययो भवति । आत्मनः पुत्रमिच्छति पुत्रीयति । सुब्ग्रहणं किम् वाक्यान्मा भूत् । महान्तं पुत्रमिच्छति । आत्मन इति किम् ? राज्ञः पुत्रमिच्छति ककारो "नः क्ये" इति सामान्यग्रहणार्थः । चकारस्तद्विघातार्थः ।

मान्ताव्ययप्रतिषेधो वक्तव्यः॥। इदमिच्छति। उच्चैरिच्छति। नीचैरिच्छति। ॥छन्दसि परेच्छायामिति वक्तव्यम्॥। मा त्वा वृका अघायवो विदन्॥

काम्यच्च ॥ ९ ॥

सुबन्तात्कर्मण आत्मेच्छायां काम्यच् प्रत्ययो भवति। आत्मनः पुत्रमिच्छति पुत्रकाम्यति। वस्त्रकाम्यति। योगविभाग उत्तरत्र क्यचोऽनुवृत्त्यर्थः। ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति। चकारादिग्वाद्य काम्यचः। उपयट्काम्यति॥

उपमानादाचारे ॥ १० ॥

क्यजनुवर्त्तते, न काम्यच्। उपमानात् कर्मणः सुबन्तादाचारेऽर्थे वा क्यच्प्रत्ययो भवति। आचारक्रियायाः प्रत्ययार्थत्वात्तदपेक्षयैवोपमानस्य कर्मता। पुत्रमिवाचरति पुत्रीयति छात्रम्। प्रावारीयति कम्बलम्। ॥ अधिकरणाच्चेति वक्तव्यम्॥। प्रासादीयति कुट्याम्(१)। पर्यङ्कीयति मञ्चके॥

कर्त्तुः क्यङ् सलोपश्च ॥ ११ ॥

आचार इत्यनुवर्त्तते। उपमानात्कर्त्तुः सुबन्तादाचारेऽर्थे वा क्यङ् प्रत्ययो भवति, सकारस्य च लोपो भवति। अन्वाचयशिष्टः सलोपस्तदभावेऽपि (२)क्यङ् भवत्येव। श्येन इवाचरति काकः श्येनायते। कुमुद पुष्करायते। सलोपविधावपि वाग्रहण सम्बध्यते, व्यवस्थितविभाषा च भवति। ओजायते, अप्सरायते, पयायते, पयस्यते॥

॥ ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया ॥। (३)

सलोपविधौ च कर्त्तुरिति स्थानषष्ठी संपद्यते, तत्रालोऽन्त्यनियमे सति, हंसायते, सारसायते इति सलोपो न भवति। ॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः॥। अवगल्भते। अवगल्भायते। क्लीबते। क्लीबायते। होडते। होडायते। ॥सर्वप्रातिपदिकेभ्य इत्येके॥। अश्व इवाचरत्यश्वायते। गर्दभायते। अश्वति। गर्दभति॥

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ १२ ॥

भृश इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ्प्रत्ययो भवति, हलन्तानां च लोपः। अच्वेरिति प्रत्येकमभिसम्बध्यते। किमर्थं पुनरिदमुच्यते, यावता भूसयोगे च्विर्विधीयते, तेनोक्तार्थत्वाच्च्व्यन्तेभ्यो न क्यङ् भविष्यति। तत्साद्दृश्यप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते। अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ्प्रत्ययः। अभृशो भृशो भवति भृशायते। शीघ्रायते। भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्।

(१) "कुड्ये" इति क्वचित् पाठः। (२) "तदसम्भवेऽपि" इति पदमञ्जर्यां पाठः। (३) "सकारस्यैव लोपः स्याच्छब्दशास्त्रविचक्षणे"। इति उत्तरार्धघटितसम्पूर्णः श्लोकः क्वचिदुपलभ्यते।

रेहस । शश्वत् । बृहत् । वेहत् । नृपत् । शुधि । अधर । ओजस् । वर्चस(१)।
भृशादि । अच्वेरिति किम् ? भृशीभवति ॥

लोहितादिडाज्भ्यः क्यष् ॥ १३ ॥

लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति । लोहितायति ।
लोहितायते । डाजन्तेभ्य —पटपटायति । पटपटायते । लोहितडाज्भ्यः क्यष्वचनं,
भृशादिष्वितराणि यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव अपरिपठितेभ्यस्तु क्यषेव
भवति । घनायति । वर्मायते । निद्रायति । निद्रायते । करुणायति । करुणायते ।
कृपायति । कृपायते । आकृतिगणोऽयम् । तथाच ककार सामान्यग्रहणाऽथाऽनुब
न्धस्य-' न क्ष इति । न हि पठितानां मध्ये नकारान्तः शब्दोऽस्ति । कृभ्वस्तिभि
रिव क्यषापि योगे डाच् भवतीत्यतदेव वचनं ज्ञापकम् । अच्वेरित्यनुवृत्तेरभूततद्भावे
क्यष् विज्ञायते । लोहित । नील । हरित । पीत । मद्र । फेन । मन्द । लोहितादि ॥

कष्टाय क्रमणे ॥ १४ ॥

क्यङनुवर्त्तते, न क्यष् । कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽनार्जवे क्यङ् प्रत्ययो
भवति । कष्टाय क्रमणे क्रामति(२) कष्टायते । अयमर्थ इदमुच्यते । सत्रकक्ष
कष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् । कण्वचिकीर्षा पापचिकीर्षा,
तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति । सत्रायते । कष्टायते । कक्षायते । कृच्छ्रायते ।
गहनायते । कण्वचिकीर्षायामिति किम् ? (३) अग्निं कष्ट क्रामति ॥

कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः ॥ १५ ॥

रोमन्थशब्दात्तपःशब्दाच्च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ् प्रत्ययो
भवति । रोमन्थं वर्त्तयति (४)रोमन्थायते गौः । हनुचलन इति वक्तव्यम् । इह
मा भूत्—(५)कीटो रोमन्थं वर्त्तयति । तपसः परस्मैपदं च । तपश्चरति, तपस्यति॥

बाष्पोष्मभ्यामुद्वमने ॥ १६ ॥

कर्मण इति वर्त्तते । बाष्पशब्दादूष्मशब्दाच्च कर्मण उद्वमनेऽर्थे क्यङ् प्रत्ययो
भवति । बाष्पमुद्वमति, बाष्पायते । ऊष्मायते । फेनाच्चेति वक्तव्यम् । फेन
मुद्वमति, फेनायते ॥

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १७ ॥

शब्द वैर कलह अभ्र कण्व मेघ इत्येतेभ्यः करणे करोत्यर्थे क्यङ् प्रत्ययो भवति ।

(१) विमनस् रमन् । हन् रहत् । शुचिस अरजस् एतं पुस्तकान्तरेऽधिका ।
(२) कष्टायक्रमणमनार्जव करोतीत्यर्थः । (३) 'अग्नि कष्टमिति' अत्र कष्ट गहनदेश
क्रामतीत्यर्थः । (४) रोमन्थायते इति—अभ्यवहृत पुनराकृष्य चर्वयतीति । (५) 'कीटो
रोमन्थं' उद्गीर्णं बहिर्निरस्तमवगणं वा पृष्ठान्तेन निर्गतं रोमन्थमस्य द्रव्यं वर्त्तयति,
गुटिका करोतीत्यर्थः ॥

शब्दं करोति, शब्दायते । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । ॐसुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्ॐ । सुदिनायते । दुर्दिनायते । नीहारायते । ॐअटाट्टाशीकाकोटापोटासोटाकष्टाग्रहणं कर्तव्यम्ॐ । अटायते । अट्टायते । शीकायते । कोटायते । पोटायते । सोटायते । कष्टायते(१) ॥

## सुखादिभ्यः कर्तृवेदनायाम् ॥ १८ ॥

कर्मग्रहणमनुवर्तते । सुख इत्येवमादिभ्यः कर्मभ्यो वेदनायामर्थेऽनुभवे यण् प्रत्ययो भवति, वेदयितुश्चेत् कर्तुः सम्बन्धीनि सुखादीनि भवन्ति । सुखं वेदयते, सुखायते । दुःखायते । कर्तृग्रहणं किम् ? सुखं वेदयति प्रसाधको देवदत्तस्य । सुख । दुःख । (२)तृप्त । गहन । कृच्छ्र । अस्र । अलीक । प्रतीप । करुण । कृपण । सोढ । सुखादि ॥

## नमोवरिवश्चित्रङः क्यच् ॥ १९ ॥

करण इति वर्तते । नमस् वरिवस् चित्रङ् इत्येतेभ्यो वा क्यच्प्रत्ययो भवति करणविशेषे पूजादौ । नमस पूजायाम्—नमस्यति देवान् । वरिवस परिचर्यायाम् (३)वरिवस्यति गुरून् । चित्रङ आश्चर्ये—चित्रीयते । ङकार आत्मनेपदार्थः ॥

## पुच्छभाण्डचीवराण्णिङ् ॥ २० ॥

करण इति वर्तते । पुच्छ भाण्ड चीवर इत्येतेभ्यो णिङ् प्रत्ययो भवति, करणविशेषे । ॐपुच्छादुदसने पर्यसने वाॐ । उत्पुच्छयते । परिपुच्छयते । ॐभाण्डात् समाचयनेॐ । सम्भाण्डयते । ॐचीवरादर्जने परिधाने वाॐ । सचीवरयते भिक्षुः । ङकार आत्मनेपदार्थः । णकारः सामान्यग्रहणार्थः—"णेरनिटि" इति ॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ २१ ॥

मुण्ड मिश्र श्लक्ष्ण लवण व्रत वस्त्र हल कल कृत तूस्त इत्येतेभ्यः करणे णिच् प्रत्ययो भवति । मुण्डं करोति, मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रताद्भोजने तन्निवृत्तौ च । पयो व्रतयति । वृषलान्नं व्रतयति । वस्त्रात् समाच्छादने । संवस्त्रयति । हलिं गृह्णाति, हलयति । कलिं गृह्णाति । कलयति । हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् । अजहलत् । अचकलत् । कृतं गृह्णाति, कृतयति । तूस्तानि विहन्ति, वितूस्तयति केशान् । विशदीकरोतीत्यर्थः ॥

---

(१) अट्टाटाशाकाकोटापोटामोटाघ्रघृष्टाग्रहणं कर्तव्यमिति पुस्तकान्तरे पाठः । भाष्ये अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यमिति पाठः । (२) तृप्तशब्दस्य स्थाने तीव्रेति पाठः । (३) वरिवस्यति परिचरतीत्यर्थः । चित्रीयते'—विस्मयत इत्येके, विस्मापयत इत्यर्थ इत्यन्ये ॥

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ २२ ॥

एकाज् यो धातुर्हलादिः क्रियासमभिहारे (१)वर्तते तस्माद्यङ् प्रत्ययो भवति । पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । पुनः पुनः पचति, पापच्यते । यायज्यते । भृशं ज्वलति, जाज्वल्यते । देदीप्यते । धातोरिति किम् ? सोपसर्गादुत्पत्तिर्मा भूत्—भृशं प्राटति । एकाच इति किम् ? भृशं जागर्ति । हलादेरिति किम् ? भृशमीक्षते । ॐसूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ्विधावनेकाजहलाद्यर्थम्ॐ । सोसूच्यते । मामूत्र्यते । मोमूत्र्यते । अटाट्यते । अरार्यते । अशाश्यते । प्रोर्णोनूयते । भृशं शोभते, भृशं रोचत इत्यत्र नेष्यतेऽनभिधानात् ॥

नित्यं कौटिल्ये गतौ ॥ २३ ॥

गतिवचनाद्धातोः कौटिल्ये गम्यमाने नित्यं यङ् प्रत्ययो भवति । कुटिलं क्रामति, चङ्क्रम्यते(२) । दन्द्रम्यते । नित्यग्रहणं विषयनियमार्थं, गतिवचनाद्धि तस्य कौटिल्य एव यङ् भवति, न तु क्रियासमभिहारे—भृशं क्रामति ॥

लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥ २४ ॥

लुप सद चर जप जभ दह दश गॄ इत्येतेभ्यो भावगर्हायां (धात्वर्थगर्हायां) यङ् प्रत्ययो भवति । गर्हितं (३)लुम्पति, लोलुप्यते । एवं सासद्यते । चञ्चूर्यते । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । निजेगिल्यते । भावगर्हायामिति किम् ? साधु जपति । भावग्रहणं किम् ? साधनगर्हायां मा भूत्—मन्त्रं जपति वृषलः । नित्यग्रहणं विषयनियमार्थमनुवर्तते । एतेभ्यो नित्यं भावगर्हायामेव भवति, न तु क्रियासमभिहारे—भृशं लुम्पति ॥

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म-
वर्णचूर्णचुरादिभ्यो णिच् ॥ २५ ॥

सत्यादिभ्यश्चूर्णपर्यन्तेभ्यश्चुरादिभ्यश्च णिच् प्रत्ययो भवति । सत्यमाचष्टे, सत्यापयति । ॐअर्थवेदसत्यानामापुग्वक्तव्यःॐ । अर्थमाचष्टे—अर्थापयति । वेदापयति । आपुग्वचनसामर्थ्याट्टिलोपो न भवति । पाशाद्विमोचने—विपाशयति । रूपाद्दर्शने—रूपयति । वीणयोपगायति—उपवीणयति । तूलेनानुकुष्णाति—अनुतूलयति । श्लोकैः

(१) विप्रकीर्णानामेकत्र राशीकरणं समुदायभावापत्तिमुख्यः "समभिहारः" । स च क्रियाणामुत्पन्नापवर्गिणीनां सङ्घातावस्थानादेकेन च धातुनाऽनेकस्याः क्रियाया युगपदनभिधानान्न सम्भवतीति गौणं समभिहारं दर्शयितुमाह—पौनःपुन्यमित्यादि ॥ फलातिरेको वा भृशार्थता । (२) योऽन्तोऽनस्यन्वर्तनि गत्वा गतानि करोति स कुटिलां गतिं सम्पादयश्चङ्क्रम्यते दन्द्रम्यत इति चोच्यते । (३) गर्हितमिति—क्रियाविशेषणं, तेन गर्हात्र गम्यते, गर्हितत्वं तु च्छेदनस्य निषिद्धतृणादिविषयत्वात् ।

रुपश्लोकयति–उपश्लोकयति । सेनयाऽभियाति–अभिषेणयति । लोमान्यनुमार्ष्टि–अनुलोमयति । त्वच गृह्णाति–त्वचयति । अकारान्तस्त्वचशब्दः । वर्मणा सन्नह्यति–संवर्मयति । वर्णं गृह्णाति–वर्णयति । चूर्णैरवध्वंसयति–अवचूर्णयति । चुरादिभ्यः स्वार्थे–चोरयति । चिन्तयति । स्वाभाविकत्वादर्थाभिधानस्य यथास्वं(१)प्रत्ययार्था निर्दिश्यन्ते।

हेतुमति च ॥ २६ ॥

हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः, तदीयो व्यापारः प्रेषणादिलक्षणो हेतुमान्, तस्मिन्नभिधेये धातोर्णिच् प्रत्ययो भवति । कटं कारयति । ओदनं पाचयति । *तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम्* । सूत्रं करोति, सूत्रयति । *आख्यानात् कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्* । आख्यानात् कृदन्तात्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे, कृल्लुक् प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकं भवति । कंसवधमाचष्टे–कंसं घातयति । बलिबन्धमाचष्टे–बलिं बन्धयति । राजागमनमाचष्टे–राजानमागमयति । *आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्* । आरात्रि विवासमाचष्टे–रात्रिं विवासयति । *चित्रीकरणे प्रापि* । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते–सूर्यमुद्गमयति । *नक्षत्रयोगे ज्ञि* । पुष्ययोगं जानाति–पुष्येण योजयति । मघाभिर्योजयति ।

कण्ड्वादिभ्यो यक् ॥ २७ ॥

कण्डूञ् इत्येवमादिभ्यो यक् प्रत्ययो भवति । द्विविधाः कण्ड्वादयो धातवः प्रातिपदिकानि च । तत्र धात्वधिकाराद्धातुभ्य एव प्रत्ययो विधीयते, न प्रातिपदिकेभ्यः । तथा च गुणप्रतिषेधार्थः ककारोऽनुबध्यते ।

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥

कण्डूञ्–कण्डूयति । कण्डूयते । ञित्त्वात्कर्त्रभिप्राये क्रियाफले इत्यात्मनेपदम् । कण्डूञ् । मन्तु । 'हृणीङ् । वल्गु । अस्मनस् । महीङ् । लेट् । लोट् । इरस् । इरज् । इरञ् । द्रवस् । मेधा । कुषुभ । मगध । तन्तस् । पम्पस् । सुख । दुःख । सपर । अरर । भिषज् । भिष्णज् । इषुध । चरण । चुरण । भुरण । तुरण । गद्गद । एला । केला । खेला । लिट् । लोट्(२)

गुपूधूपविच्छिपणिपनिभ्य आयः ॥ २८ ॥

'गुपू रक्षणे' 'धूप संतापे' 'विच्छ गतौ' 'पण व्यवहारे स्तुतौ च' 'पन च' इत्येतेभ्यो धातुभ्य आयप्रत्ययो भवति । गोपायति । धूपायति । विच्छायति । पणायति । पनायति । स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयति न व्यवहारार्थः । शतस्य पणते । सहस्रस्य पणते । अनुबन्धश्च केवले चरितार्थस्तेनायप्रत्ययान्तान्नात्मनेपदं भवति ॥

---

(१) 'यथायथमिति' न्यासे। (२) "अगुञ्। हृणीञ्। रूपय। पुरण" इति क्वचित्।

ऋतेरीयङ् ॥ २९ ॥

ऋतिः सौत्रो धातुर्घृणायां वर्तते, तत ईयङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। ऋतीयते। ऋतीयेते। ऋतीयन्ते। (१)ऋतेश्छङिति सिद्धे ईयङ्वचनं ज्ञापनार्थं धातुविहितानां प्रत्ययानामायन्नाद्यो न भवन्तीति ॥

कमेर्णिङ् ॥ ३० ॥

कमेर्धातोर्णिङ् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। ङकार आत्मनेपदार्थः। कामयते। कामयेते। कामयन्ते ॥

आयादय आर्द्धधातुके वा ॥ ३१ ॥

आर्द्धधातुकविषये आर्द्धधातुकविवक्षायामायादयः प्रत्यया वा भवन्ति। गोप्ता, गोपायिता। अर्तिता, ऋतीयिता। कमिता, कामयिता। नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुकविषये विकल्प्यते, तत्र यथायथ प्रत्यया भवन्ति। गुप्तिः। गोपाया ॥

सनाद्यन्ता धातवः ॥ ३२ ॥

सन् आदिर्येषां ते सनादयः, सनादयोऽन्ते येषां ते सनाद्यन्ताः(२)। सनाद्यन्ताः समुदाया धातुसंज्ञा भवन्ति। प्रत्ययग्रहणपरिभाषैव पदसंज्ञायामन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिहान्तवचनेन प्रतिप्रसूयते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति ॥

स्यतासीलृलुटोः ॥ ३३ ॥

लृरूपमुत्सृष्टानुबन्धं सामान्यमेकमेव, तस्मिन् लुटि च परतो धातोर्यथासङ्ख्यं स्यतासी प्रत्ययौ भवतः। करिष्यति। अकरिष्यत्। श्वः कर्ता। इकारोच्चारणमनुनासिकलोपप्रतिषेधार्थम्(३)। मन्ता। सगन्ता(४) ॥

सिब्बहुलं लेटि ॥ ३४ ॥

धातोः सिप् प्रत्ययो भवति बहुलं लेटि परतः। जोषिषत्। तारिषत्। मन्दिषत्। न च भवति, पताति(५) विद्युत्। उदधिं च्यावयाति ॥

कास्प्रत्ययादाममन्त्रे लिटि ॥ ३५ ॥

'कासृ शब्दकुत्सायां' ततः, प्रत्ययान्तेभ्यश्च धातुभ्य आम् प्रत्ययो भवति लिटि परतोऽमन्त्रविषये। कासाञ्चक्रे। प्रत्ययान्तेभ्यः—लोलूयाञ्चक्रे। अमन्त्र इति किम्?

---

(१) "ऋतेरङ्ङित्यारभ्य" न भवन्तीत्यन्त पाठो वृत्तिपाठो नास्तीति न्यासपर्यालोचनया ज्ञायते। पदमंजर्यामपि 'क्वचिदेव पाठो वृत्तावेव पठ्यते' इत्युक्तं, "स च वृत्तौ न पठनीय" इति च तदुक्तिः। (२) सनादयोऽन्ते येषां ते सनाद्यन्ताः, तद्गुणसंविज्ञानश्चायं बहुव्रीहिः। (३) "प्रतिषेधार्थम्" इति न्यासे। (४) "सहन्ते"ति पाठान्तरम्। (५) "पताति दि" न्यासे पाठ, तत्र पतताविति धातुः॥

वृष्णो नोनाव । कास्यनेकाच इति वक्तव्यं चुलुम्पाद्यर्थम् । चुलुम्पाञ्चकार । चकासाञ्चकार । दरिद्राञ्चकार ॥

आमोऽमित्त्वमदन्तत्वाद्गुणश्च विदेस्तथा ।(१) आस्कासोराविधानाच्च पररूपं कृतान्तवत् ॥

इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥

इजादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितस्तस्माच्च लिटि परत आम्प्रत्ययो भवति । 'ईह चेष्टायाम्' ।(२)'ऊह वितर्के' । ईहाञ्चक्रे । ऊहाञ्चक्रे । इजादेरिति किम्? ततक्ष । ररक्ष । गुरुमत इति किम्? इयज(३) । उवप । अनृच्छ इति किम्? आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । ऊर्णोतेश्च प्रतिषेधो वक्तव्यः । प्रोर्णुनाव । अथवा,

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् (४) ॥

दयायासश्च ॥ ३७ ॥

'दय दानगतिरक्षणेषु', 'अय गतौ', 'आस उपवेशने', इत्येतेभ्यो लिटि परत आम्प्रत्ययो भवति । दयाञ्चक्रे । पलायाञ्चक्रे । आसाञ्चक्रे ॥

उषविदजागृभ्योऽन्यतरस्याम् ॥ ३८ ॥

'उष दाहे' 'विद ज्ञाने' 'जागृ निद्राक्षये' एतेभ्यो लिटि परतोऽन्यतरस्यामाम्प्रत्ययो भवति । ओषाञ्चकार, उवोष । विदाञ्चकार, विवेद । जागराञ्चकार, जजागार । विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति ॥

भीह्रीभृहुवां श्लुवच्च ॥ ३९ ॥

'ञिभी भये', 'ह्री लज्जायाम्' 'डुभृञ् धारणपोषणयोः' 'हु दानादानयोः' इत्येतेभ्यो लिटि परत आम्प्रत्ययो भवत्यन्यतरस्याम्, श्लाविव चास्मिन् कार्यं भवति । किं पुनस्तत्, (५)द्वित्वमित्त्वञ्च । बिभयाञ्चकार, बिभाय । जिह्रयाञ्चकार, जिह्राय । बिभराञ्चकार, बभार । जुहवाञ्चकार, जुहाव ॥

कृञ्चानुप्रयुज्यते लिटि ॥ ४० ॥

आम्प्रत्ययस्य पश्चात् कृञनुप्रयुज्यते लिटि परतः । कृञिति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत्सामर्थ्यादस्तेर्भूभावो न भवति । पाचयाञ्चकार । पाचयाम्बभूव । पाचयामास ॥

(१) "आस्कासो"रिति न्यासे पाठः ।(२) अनयोन्यासे दर्शनात् मूले प्रक्षिप्ताविमौ । (३) इयेष, उवोषेति पाठान्तरम् । (४) "इडुपग्रहादिति" —इडुपग्रह इण्निषेधः 'विभाषा गुणः' इति पञ्चमी, फलस्य चात्र हेतुत्वं यथाध्ययनेन वसतीति, एकाच इति वर्तमाने "श्र्युकः किति" इति य इट्प्रतिषेधः ततोऽपि हेतोर्णुवद्भावो वाच्य इत्यर्थः । न्यासे 'इडुपग्रह' इति प्रथमान्तपाठोऽपि । तत्रेडुपग्रहमुद्दिश्योर्णोर्णुवद्भावो वाच्य इत्यर्थः ॥ (५) "द्वित्वे त्वे"ति पदमञ्जरीसम्मतः पाठः ॥

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ ४१ ॥

विदाङ्कुर्वन्त्वित्येतदन्यतरस्यां निपात्यते । किं पुनरिह निपात्यते ? विदेर्लोट्याम्प्रत्ययो गुणाभावो लोटो लुक्कृञश्च लोट्परस्यानुप्रयोगः । अत्र भवन्तो विदाङ्कुर्वन्तु । विदन्तु । (१) इतिकरणः प्रदर्शनार्थो, न केवलं प्रथमपुरुषबहुवचनं, किं तर्हि, सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते । विदाङ्करोतु । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुरु । विदाङ्कुरुत इत्यादि ॥

अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रिया-
द्विदामक्रन्निति च्छन्दसि ॥ ४२ ॥

अभ्युत्सादयामित्येवमादयश्छन्दसि विषयेऽन्यतरस्यां निपात्यन्ते । सदिजनिरमीणां ण्यन्तानां लुङ्याम्प्रत्ययो निपात्यते । चिनोतेरपि तत्रैवाम्प्रत्ययो (२)द्विर्वचनं कुत्वं च । अकरिति चतुर्भिरपि प्रत्येकमनुप्रयोगः सम्बध्यते । पावयांक्रियादिति पवतेः पुनातेर्वा ण्यन्तस्य लिङ्याम् निपात्यते, क्रियादिति चास्यानुप्रयोगः । विदामक्रन्निति विदेर्लुङ्याम् निपात्यते, गुणाभावश्च, अक्रन्निति चास्यानुप्रयोगः । अभ्युत्सादयामकः । अभ्युदसीषददिति भाषायाम् । प्रजनयामकः । प्राजीजनदिति भाषायाम् । चिकयामकः । अचैषीदिति भाषायाम् । रमयामकः । अरीरमदिति भाषायाम् । पावयांक्रियात् । पाव्यादिति भाषायाम् । विदामक्रन् । अवेदिषुरिति भाषायाम् (इतिकरणः (३) प्रयोगप्रदर्शनार्थः) ॥

च्लि लुङि ॥ ४३ ॥

धातोश्च्लिः प्रत्ययो भवति लुङि परतः । इकार उच्चारणार्थः, चकारः स्वरार्थः । अस्य सिजादीनादेशान् वक्ष्यति तत्रैवोदाहरिष्यामः ॥

च्लेः सिच् ॥ ४४ ॥

च्लेः सिजादेशो भवति । इकार उच्चारणार्थः, चकारः स्वरार्थः । अकार्षीत् । अहार्षीत् । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव चित्स्वरमपि बाधेतेति स्थानिन्यादेशे च द्विश्चकारोऽनुबध्यते । * स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः * । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । अत्राप्सीत् । अतार्प्सीत् । अतृपत् । अद्राप्सीत् । अदार्प्सीत् । अदृपत् ।

शल इगुपधादनिटः क्सः ॥ ४५ ॥

शलन्तो यो धातुरिगुपधस्तस्मात्परस्य च्लेरनिटः क्स आदेशो भवति । दुह-

---

(१) "इतिकरणमुपलक्षणार्थम्" इति न्यासे पाठः । (२) "द्विर्वचनं च" इत्येव पदमञ्जर्याम् । ततोऽत्र "कुत्वं च" इति न पाठः ॥ (३) कोष्ठान्तर्गतः पाठो मुद्रितपुस्तकेष्वनुपलभ्यमानोऽपि न्याससंवादात् परिवर्धितः ॥

अधुक्षत्। लिह-अलिक्षत्। शल इति किम्? अभैत्सीत्। अच्छैत्सीत्। इगुपधादिति किम्? अधाक्षीत्। अनिट इति किम्? अकोषीत्। अमोषीत्॥

श्लिष आलिङ्गने॥ ४६॥

श्लिषधातोरालिङ्गनक्रियावचनात्परस्य च्लेः क्स आदेशो भवति। आलिङ्गनमुपगूहनं परिष्वङ्गः। अत्र नियमार्थमेतत्। आश्लिक्षत् कन्यां देवदत्तः। आलिङ्गन इति किम्? समाश्लिषज्जतु काष्ठम्॥

न दृशः॥ ४७॥

पूर्वेण क्सः प्राप्तः प्रतिषिध्यते। दृशेर्धातोः परस्य च्लेः क्सादेशो न भवति। अस्मिन् प्रतिषिद्धे "इरितो वेऽ"त्यङ्सिचौ भवतः। अदर्शत्। अद्राक्षीत्॥

णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्॥ ४८॥

सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः श्रि द्रु स्रु इत्येतेभ्यश्च परस्य च्लेश्चङादेशो भवति कर्तृवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेधार्थः, चकारश्चङीति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्त्तरीति किम्? अकारयिषातां कटौ देवदत्तेन। ॐकमेरुपसंख्यानम्ॐ। "आयादय आर्धधातुके वा" इति यदा णिङ्नास्ति तदैतदुपसंख्यानम्। अचकमत। णिङ्पक्षे सन्वद्भावः। अचीकमत।

(१)नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः। अथ पत्कापिणो यान्ति येऽचीकमतभाषिणः॥

विभाषा धेट्श्व्योः॥ ४९॥

'धेट् पाने' 'टुओश्वि गतिवृद्ध्योः' इत्येताभ्यामुत्तरस्य च्लेर्विभाषा चङादेशो भवति। धेटस्तावत्-अदधत्। सिच्पक्षे, "विभाषा घ्राधेट्" इति लुक्। अधात्। अधासीत्। श्वयतेः खल्वपि-अशिश्वियत्। (२) अङोऽप्यत्र विकल्पः। अश्वत्। अश्वयीत्। कर्त्तरीत्येव। अधिषातां गावौ वत्सेन॥

गुपेश्छन्दसि॥ ५०॥

गुपेः परस्य च्लेश्छन्दसि विषये विभाषा चङादेशो भवति। यत्रायप्रत्ययो नास्ति तत्रायं विधिः। इमान्नो मित्रावरुणौ गृहानजूगुपतम्। अगौप्तम्, अगोपिष्टम्, अगोपायिष्टमिति वा। भाषायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति॥

नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः॥ ५१॥

'ऊन परिहाणे' 'ध्वन शब्दे' 'इल प्रेरणे' 'अर्द गतौ याचने च' इत्येतेभ्यो धातुभ्यो ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते छन्दसि विषये न भवति। काम्यमूनयीः (३) औननः

---

(१) न्यासपदमञ्जर्योरयं श्लोको न व्याख्यातस्तस्मात् पश्चात् मूले प्रक्षिप्त इति प्रतिभाति।
(२) "अङप्यत्र विकल्प्यते" इति न्यासे। (३) उदाहरणे "औनयीदिति" प्रत्युदाहरणे च "औननदिति" न्यासधृतपाठः। मुद्रितमूलपुस्तके "औननदि"ति तिबन्त पाठः उदाहरणविरुद्धः।

इति भाषायाम् । मा त्वाग्निर्ध्वनयीत् । अदिध्वनदिति भाषायाम् । काममैलयी । ऐलिलदिति भाषायाम् । मैनमर्दयीत् । आर्दिददिति भाषायाम् ॥

अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ५२ ॥

'असु क्षेपणे' 'वच परिभाषणे' ब्रूञादेशो वा । 'ख्या प्रकथने' चक्षिङादेशो वा । इत्येतेभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुङि परतः । अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम् । पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त । वक्ति-अवोचत्, अवोचताम्, अवोचन् । ख्याति-आख्यत्, आख्यताम्, आख्यन् । कर्तरीति किम् ? पर्यासिषाता गावौ वत्सेन ॥

लिपिसिचिह्वश्च ॥ ५३ ॥

'लिप उपदेहे' 'षिच क्षरणे' 'ह्वेञ् स्पर्धायाम्' इत्येतेभ्यश्च परस्य च्लेरङादेशो भवति । अलिपत् । असिचत् । आह्वत् । पृथग्योग उत्तरार्थः ॥

आत्मनेपदेष्वन्यतरस्याम् ॥ ५४ ॥

पूर्वेण प्राप्ते विभाषा आरभ्यते । लिपि सिचि ह्व आत्मनेपदेषु परतश्च्लेरङादेशो भवति अन्यतरस्याम् । 'स्वरितञितः' इत्यात्मनेपदम् । अलिपत, अलिप्त । असिचत, असिक्त । अह्वत, अह्वास्त ॥

पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥ ५५ ॥

पुषादिभ्यो, द्युतादिभ्य, ॢदिद्भ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतोऽङादेशो भवति । पुषादिर्दिवाद्यन्तर्गणो गृह्यते, न भ्वादिक्र्याद्यन्तर्गणः । पुष-अपुषत् । द्युतादि-अद्युतत् । अश्वितत् । ॢदिद्भ्यः, गम्लृ-अगमत् । शक्लृ-अशकत् । परस्मैपदेष्विति किम् ? व्यद्योतिष्ट । अलोठिष्ट ॥

सर्त्तिशास्त्यर्त्तिभ्यश्च ॥ ५६ ॥

'सृ गतौ' 'शासु अनुशिष्टौ' 'ऋ गतौ' इत्येतेभ्यः परस्य च्लेरङादेशो भवति । सर्त्ति-असरत् । शास्ति-अशिषत् । अर्त्ति-आरत् । पृथग्योगकरणमात्मनेपदार्थम्, समरन्त । चकारः परस्मैपदेष्वित्यनुकर्षणार्थः । तस्योत्तरत्रोपयोगो यास्यति ॥

इरितो वा ॥ ५७ ॥

इरितो धातोः परस्य च्लेरङादेशो वा भवति । भिदिर्-अभिदत्, अभैत्सीत् । छिदिर्-अच्छिदत्, अच्छैत्सीत् । परस्मैपदेष्वित्येव, अभित्त । (१)अच्छित्त ॥

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥

वेति वर्त्तते । 'जॄष् वयोहानौ' 'स्तम्भु' सौत्रो धातुः, 'म्रुचु म्लुचु गत्यर्थाः' ग्रुचु ग्लुचु स्तेयकरणे' 'ग्लुञ्चु षस्ज गतौ' 'टुओश्वि गतिवृद्ध्योः' इत्येतेभ्यो धातुभ्यः परस्य च्ले

(१) 'अच्छित्त' इत्यस्य स्थाने 'अच्छिद' इति न्यासपाठः ॥

वोऽङादेशो भवति। अजरत्, अजारीत्। अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। अग्रुचत्, अग्रोचीत्। अग्लुचत्, अग्लोचीत्। (अग्लुचत्) अग्लुञ्चीत्। अश्वत्, अश्वयीत्, अशिश्वियत्। ग्रुचुग्लुचुग्लुञ्चोरेव(१)नोपादानेऽपि रूपस्य सिद्धत्वार्थभेदात्तु द्वयोरुपादानं कृतम्। केचित्तु वर्णयन्ति द्वयोरुपादानसामर्थ्याद् ग्लुचेर्नुनासिकलोपो न भवति—अग्लुञ्चदिति॥

## शृसृद्रुहिभ्यश्छन्दसि ॥ ५९॥

शृ सृ द्रु रुहि इत्येतेभ्य परस्य च्लेश्छन्दसि विषयेऽङादेशो भवति। शकलाङ्गुष्ठकोऽशरत्। अथोऽसरत्। अद्रदर्यान्। पर्वतमारुहत्। अन्तरिक्षाद्दिवमारुहम्। छन्दसीति किम्? अशारीत्। असार्षीत्। अद्रावीत्। अरुक्षत्॥

## चिण् ते पदः ॥ ६०॥

'पद गतौ' अस्माद्धातो परस्य च्लेश्चिणादेशो भवति तशब्दे परत । सामर्थ्याद्

आत्मनेपदैकवचनं गृह्यते। उदपादि सस्यम्। समपादि भैक्षम्। ते इति किम्? उदपत्साताम्, उदपत्सत॥

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६१॥

चिण् ते इति वर्त्तते। 'दीपी दीप्तौ' 'जनी प्रादुर्भावे' 'बुध अवगमने' 'पूरी आप्यायने' 'ताय् सन्तानपालनयो' 'ओप्यायी वृद्धौ' इत्येतेभ्य परस्य च्लेस्तशब्दे परतोऽन्यतरस्या चिणादेशो भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि अप्यायिष्ट॥

## अच कर्मकर्त्तरि ॥ ६२॥

अजन्ताद्धातो परस्य च्ले कर्मकर्त्तरि तशब्दे परतश्चिणादेशो भवति। प्राप्तविभाषेयम्। अकारि कट स्वयमेव, अकृत कट स्वयमेव। अलावि केदार स्वयमेव, अलविष्ट केदार स्वयमेव। अच इति किम्? अभेदि काष्ठ स्वयमेव। कर्मकर्त्तरीति किम्? अकारि कटो देवदत्तेन॥

## दुहश्च ॥ ६३॥

'दुह प्रपूरणे' अस्मात्परस्य च्लेश्चिणादेशो भवत्यन्यतरस्याम्। अदोहि गौ स्वयमेव, अदुग्ध गौ स्वयमेव। कर्मकर्त्तरीत्येव, अदोहि गौर्गोपालकेन॥

## न रुधः ॥ ६४॥

'रुधिर आवरणे' अस्मात्परस्य च्ले कर्मकर्त्तरि चिणादेशो न भवति। अन्ववारुद्ध गौ स्वयमेव। कर्मकर्त्तरीत्येव। अन्ववारोधि गौर्गोपालकेन॥

---

(१) 'ग्रुचुग्लुचोरुपादानेऽपी' ति पदमजरोसम्मत पाठ ॥

तपोऽनुतापे च ॥ ६५ ॥

नेति वर्त्तते। 'तप सतापे' अस्मात्परस्य च्लेश्चिणादेशो न भवति, कर्मकर्त्तर्यनुतापे च। अनुताप पश्चात्ताप, तस्य ग्रहणमकर्मकार्थं, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति। अतप्त तपस्तापस। अन्ववातप्त (१)पापेन कर्मणा ॥

चिण् भावकर्मणो ॥ ६६ ॥

धातो परस्य च्लेश्चिणादेशो भवति भावे (२)कर्मणि तशब्दे परत। भाव तावत्-अशायि भवता। कर्मणि खल्वपि-अकारि कटो देवदत्तेन। अहारि भारो यज्ञदत्तेन। चिण्ग्रहण चिरपणार्थम् ॥

सार्वधातुके यक् ॥ ६७ ॥

भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक्प्रत्ययो भवति। आस्यते भवता। शय्यते भवता। कर्मणि-क्रियते कट। गम्यते ग्राम। ककारो गुणवृद्धिप्रतिषेधार्थ। यग्विधाने कर्मकर्त्तर्युपसख्यान, विप्रतिषेधाद्धि यक शपो बलीयस्त्वम्। क्रियते कट स्वयमेव। पच्यते ओदन स्वयमेव ॥

कर्त्तरि शप् ॥ ६८ ॥

कर्तृवाचिनि सार्वधातुके परतो धातो शप्प्रत्ययो भवति। पकार स्वरार्थ, शकार सार्व (३)धातुकार्थ। भवति। पचति ॥

दिवादिभ्य श्यन् ॥ ६९ ॥

दिव इत्येवमादिभ्यो धातुभ्य श्यन्प्रत्ययो भवति। शपोऽपवाद। नकार स्वरार्थ, शकार सार्वधातुकार्थ। दीव्यति। सीव्यति ॥

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष ॥ ७० ॥

उभयत्र विभाषेयम्। 'टुभ्राशृ टुभ्लाशृ दीप्तौ' 'भ्रमु अनवस्थाने' 'भ्रमु च' इत्यनयोरपि ग्रहणम्, 'क्रमु पादविक्षेपे' 'क्लमु ग्लानौ' 'त्रसी उद्वेगे' 'त्रुटी छेदने' 'लष कान्तौ' इत्येतेभ्यो वा श्यन्प्रत्ययो भवति। भ्राशते भ्राश्यते। भ्लाशते, भ्लाश्यते भ्रमति, भ्राम्यति। क्रामति, क्राम्यति। क्लामति, क्लाम्यति। त्रसति, त्रस्यति त्रुटति, त्रुट्यति। लषति, लष्यति ॥

यसोऽनुपसर्गात् ॥ ७१ ॥

'यसु प्रयत्ने' दैवादिक, तस्माद्दिव्ये श्यनि प्राप्तेऽनुपसर्गाद्विकल्प उच्यते। यसोऽनुपसर्गाद्वा श्यन्प्रत्ययो भवति। यस्यति। यसति। अनुपसर्गादिति किम्? आयस्यति। प्रयस्यति ॥

(१) 'अन्ववावसान' पूर्वमपाप कर्म कृत तेन पश्चात्ततोऽभ्याहृत इत्यर्थ ॥

(२) 'भावकर्मणोरर्थयो'रिति न्यासस्थ पाठ। (३) "सार्वधातुकसज्ञार्थ" इति न्यासे

सयसश्च ॥ ७२ ॥

सोपसर्गार्थ आरम्भः। सम्पूर्वाद्य यसेर्वा श्यन्प्रत्ययो भवति। संयस्यति। संयसति॥

स्वादिभ्यः श्नुः ॥ ७३ ॥

'षुञ् अभिषवे' इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति। शपोऽपवादः। सुनोति। सिनोति॥

श्रुवः शृ च ॥ ७४ ॥

श्रुवः श्नुप्रत्ययो भवति, तत्सन्नियोगेन श्रुवः शृ इत्ययमादेशो भवति। शृणोति। शृणुतः। शृण्वन्ति॥

अक्षोऽन्यतरस्याम् ॥ ७५ ॥

'अक्षू व्याप्तौ' भौवादिकः, अस्मादन्यतरस्यां श्नुप्रत्ययो भवति। अक्ष्णोति। अक्षति॥

तनूकरणे तक्षः ॥ ७६ ॥

'तक्षू त्वक्षू तनूकरणे' अस्मात्तनूकरणे वर्तमानादन्यतरस्यां श्नुप्रत्ययो भवति। अनेकार्थत्वाद्धातूनां विशेषणेनोपादानम्। तक्षति काष्ठम्। तक्ष्णोति काष्ठम्। तनूकरण इति किम्? सन्तक्षति(१)वाग्भिः॥

तुदादिभ्यः शः ॥ ७७ ॥

'तुद व्यथने' इत्येवमादिभ्यो धातुभ्यः शप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। तुदति। नुदति॥

रुधादिभ्यः श्नम् ॥ ७८ ॥

'रुधिर् आवरणे' इत्येवमादिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति। शपोऽपवादः। मकारो (२) देशविध्यर्थः। शकारः "श्नसोरल्लोपः" इति विशेषणार्थः। रुणद्धि। भिनत्ति॥

तनादिकृञ्भ्य उः ॥ ७९ ॥

'तनु विस्तारे' इत्येवमादिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति। शपोऽपवादः। तनोति। सनोति। क्षणोति। कृञ् खल्वपि–करोति। तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानं नियमार्थम्—अन्यत् तनादिकार्यं मा भूदिति। 'तनादिभ्यस्तथासोः' इति विभाषा सिचो लुग् न भवति। अकृत। अकृथाः॥

धिन्विकृण्व्योर च ॥ ८० ॥

'हिवि धिवि जिवि प्रीणनार्थाः' 'कृवि हिंसाकरणयोः' इत्येतयोर्धातुयोरुप्रत्ययो भव

(१) 'सन्तक्ष्णोति'—विमलमतीयः॥ (२) 'मकारः' इति—विशिष्टे देशे विधानार्थ इत्यर्थः। स पुनर्देशोऽचोऽन्त्यात्परः॥

स्यकारश्चान्तादेशः। धिनोति। कृणोति। अतो लोपस्य स्थानिवद्भावाद् गुणो न भवति।

क्र्यादिभ्यः श्ना ॥ ८१ ॥

'डुक्रीञ् द्रव्यविनिमये' इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययो भवति। शपोऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। क्रीणाति। प्रीणाति॥

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥

आद्याश्चत्वारो धातवः सौत्राः, 'स्कुञ् आप्रवणे' इत्येतेभ्यः श्ना प्रत्ययो भवति श्नुश्च। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कुनाति, स्कुनोति। उदित्त्वप्रतिज्ञानात् सौत्राणामपि धातूनां सर्वार्थत्वं विज्ञायते, नैतद्विकरणविषयत्वमेव॥

हलः श्नः शानज्झौ ॥ ८३ ॥

हल उत्तरस्य श्नाप्रत्ययस्य शानजादेशो भवति हौ परतः। मुषाण। पुषाण। हल इति किम्? क्रीणीहि। हाविति किम्? मुष्णाति। श्न इति स्थानिनिर्देश आदेशसंप्रत्ययार्थः। इतरथा हि प्रत्ययान्तरमेव सर्वविषयं विज्ञायेत॥

छन्दसि शायजपि ॥ ८४ ॥

छन्दसि विषये श्नः शायजादेशो भवति, शानजपि। (१)गृभाय जिह्वया मधु। शानचः खल्वपि–बधान पशुम्॥

व्यत्ययो बहुलम् ॥ ८५ ॥

यथायथं(२)विकरणाः शबादयो विहितास्तेषां छन्दसि विषये बहुलं व्यत्ययो भवति। व्यतिगमनं व्यत्ययो व्यतिहारः(३)—विषयान्तरे विधानं, क्वचिद्द्विविकरणता, क्वचित्त्रिविकरणता च। आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्ते। [illegible] च न मरति। न ह्रियत इति प्राप्ते। द्विविकरणता–इन्द्रो वस्तेन नेषतु। नयत्विति प्राप्ते। त्रिविकरणता–इन्द्रेण युजा तरुषेम वृत्रम्(४)। (५)तीर्यास्मेति प्राप्ते। [illegible]
(६)सर्वविधिव्यभिचारार्थम्।

---

(१) "गृह्णाये"ति पाठान्तरम्॥ (२) यथायथम्—'यस्मिन् यस्मिन् विषये' इत्यर्थः। (३) "व्यतिकर" इति न्यासे॥ (४) "दुषदमि"ति न्यासे॥ (५) "तरेमे"ति पदमन्तरोऽसम्मतः पाठः॥ (६) "सर्वेति" सर्वस्य प्रकृतस्याप्रकृतस्य विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थं बहुलग्रहणम्। 'उपग्रह'—'लादेशव्यञ्ज्यक्रियाविशेषो मुख्य उपग्रहः। इह तु तद्व्यक्तिनिमित्तात् परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्तते। नरः—पुरुषः, प्रथमादिः। कालः—कालशब्दोऽत्र कालविषयत्वाल्लुङादिप्रत्ययेषु वर्तते। कर्तृ—कर्तृशब्दः कारकपरः। विभक्तीनां व्यत्यय इत्यर्थः। यङ्—यङिति "सार्वधातुके यक्" इति यकारादारभ्य "लिङ्याशिष्यङ्" इति ङकारान्तः प्रत्याहारः। शाकटायन—पाणिनिः॥

मुषिद्युपमहार्त्तिन्नराणां कालहल्चस्वरकर्तृयङा च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

लिङ्याशिष्यङ् ॥ ८६ ॥

आशिषि विषये यो लिङ् तस्मिन् परतश्छन्दसि विषयेऽङ् प्रत्ययो भवति। शपोऽपवादः। "छन्दस्युभयथा" इति लिङः सार्वधातुकसंज्ञाप्यस्ति। स्थागागमिवचिविदिशकिरुहिभ्यः प्रयोजनम्। स्था—उपस्थेयं वृषभं तुग्रियाणाम्। गा—सत्यमुपगेयम्। गमि—गमेम जानतो गृहान्। वचि—मन्त्रं वोचेमाग्नये। विदि—विदेयमेनां मनसि प्रविष्टाम्। शकि—व्रतं चरिष्यामि तच्छकेयम्। रुहि—स्वर्गं लोकमारुहेयम्। दृशेरग्वक्तव्यः। पितरं च दृशेयं मातरं च ॥

कर्मवत्कर्मणा तुल्यक्रियः ॥ ८७ ॥

कर्मणि क्रिया कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद्भवति। यस्मिन् कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते यथा कर्मणि, स कर्ता कर्मवद् भवति—कर्माश्रयाणि कार्याणि प्रतिपद्यते। "कर्तरि शप्" इति कर्तृग्रहणमिहानुवृत्तं प्रथमया विपरिणम्यते। यगात्मनेपदचिण्चिण्वदिटः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। कारिष्यते कटः स्वयमेव। कर्मवदित्याश्रयमपि यथा स्यात्—भिद्यते कुसूलेनेति, अकर्मकाणां भावे ल सिद्धो भवति। "लिङ्याशिष्यङ्" इति द्विलकारको निर्देशः, तत्र लानुवृत्तेरनन्तरस्य कर्ता कर्मवद्भवतीति कुसूलाद् द्वितीया न भवति। कर्मणेति किम्? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत्—साध्वसिश्छिनत्ति, साधु स्थाली पचति। धात्वधिकारात्समाने धातौ कर्मवद्भावः, इह न भवति—पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति। कर्मस्थभावकानां, कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थभावकानां, न वा कर्तृस्थक्रियाणाम् ॥

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया।
मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥

तपस्तपःकर्मकस्यैव ॥ ८८ ॥

'तप सन्तापे' अस्य कर्ता कर्मवद्भवति, स च तपःकर्मकस्यैव, नान्यकर्मकस्य। क्रियाभेदाद्विध्यर्थमेतत्। उपवासादीनि तपांसि तापसं तपन्ति। दुःखयन्तीत्यर्थः। स तापसस्स्वर्गस्थभूतः स्वर्गाय तपस्तप्यते। अर्जयतीत्यर्थः। पूर्वेणाप्राप्तः कर्मवद्भावो विधीयते—तप्यते तपस्तापसः। अतप्त तपस्तापसः। तपःकर्मकस्यैवेति किम्? उत्तपति सुवर्णं सुवर्णकारः ॥

न दुहस्नुनमां यक्चिणौ ॥ ८९ ॥

दुह, स्नु, नम इत्येतेषां कर्मकर्तरि यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः। दुहेरनेन यक् प्रतिषिध्यते। चिण् तु "दुहश्च" इति पूर्वमेव विभाषितः। दुग्धे गौः स्वय-

मेव। अदुग्ध गौः स्वयमेव, अदोहि गौः स्वयमेव। प्रस्नुते गौः स्वयमेव। प्रास्नोष्ट गौः स्वयमेव। नमते दण्डः स्वयमेव। अनंस्त दण्डः स्वयमेव। ॐयक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्ॐ (१) कारयति कटं देवदत्तः। कारयते कटः स्वयमेव। अचीकरत्कटं देवदत्तः। अचीकरत कटः स्वयमेव। उत्पुच्छयते गौः स्वयमेव। उदपुपुच्छत गौः स्वयमेव। श्रथ्नाति ग्रन्थं देवदत्तः। श्रथ्नीते ग्रन्थः स्वयमेव। अश्रन्थिष्ट ग्रन्थः स्वयमेव। ग्रथ्नाति श्लोकं देवदत्तः। ग्रथ्नीते श्लोकः स्वयमेव। अग्रन्थिष्ट श्लोकः स्वयमेव। ब्रवीति श्लोकं देवदत्तः। ब्रूते श्लोकः स्वयमेव। अवोचच्छ्लोकं देवदत्तः। अवोचत श्लोकः स्वयमेव। आत्मनेपदविधानेऽकर्मकाणाम्—आ हन्ति माणवकं देवदत्तः। आहते माणवकः स्वयमेव। आवधिष्ट माणवकः स्वयमेव, आहतेति वा। विकुर्वते सैन्धवाः स्वयमेव। व्यकृषत सैन्धवाः स्वयमेव॥

## कुषिरजो प्राचां श्यन् परस्मैपदं च॥ ९०॥

'कुष निष्कर्षे' 'रञ्ज रागे' अनयोर्धात्वोः कर्मकर्तरि प्राचामाचार्याणां मतेन श्यन् प्रत्ययो भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ। कुष्यति पादः स्वयमेव। रज्यति वस्त्रं स्वयमेव। प्राचां ग्रहणं विकल्पार्थम्—कुष्यते। रज्यते। व्यवस्थितविभाषा चेयम्, तेन लिड्लिङो स्यादिविषये च न भवतः—चुकुषे पादः स्वयमेव। ररञ्जे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रङ्क्षीष्ट वस्त्रं स्वयमेव। कोषिष्यते पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अकोषि पादः स्वयमेव। अरञ्जि वस्त्रं स्वयमेव।

## धातोः॥ ९१॥

धातोरित्ययमधिकारो वेदितव्यः, आ तृतीयाध्यायपरिसमाप्तेः, यदित ऊर्ध्वमनुक्रमिष्यामो धातोरित्येवं तद्वेदितव्यम्। वक्ष्यति-"तव्यत्तव्यानीयरः" इति। कर्तव्यम्। करणीयम्। धातुग्रहणमनर्थकम्, यङ्विधौ धात्वधिकारात्। कृदुपपदसंज्ञार्थं तर्हि-अस्मिन् धात्वधिकारे ते यथा स्याताम्, पूर्वत्र मा भूतामिति। आर्धधातुकसंज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्, धातोरित्येवं विहितस्य यथा स्यात्, इह मा भूत्—लूभ्या लूभिरिति॥

## तत्रोपपदं सप्तमीस्थम्॥ ९२॥

तत्रैतस्मिन् धात्वधिकारे तृतीये यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति। वक्ष्यति-"कर्मण्यण्", कुम्भकारः। स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्, इतरथा हि सप्तमी श्रूयते यत्र, तत्रैव स्यात्—स्तम्बेरमः, कर्णेजपः इति। यत्र वा सप्तमीश्रुतिरस्ति, "सप्तम्यां जनेर्डः" इति। उपसरजः, मन्दुरजः इति। स्थग्रहणात्तु सर्वत्र भवति। गुरु-

(१) अस्य वार्तिकस्योदाहरणानां न्यासे दर्शनात् वृत्तावमानि नासन्। पदमञ्जर्यामपि "एषामुदाहरणानि क्वचिद्वृत्तौ पठ्यन्ते क्वचिन्न" इत्युक्तम्॥

सञ्ज्ञाकरणमन्वर्थसञ्ज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारार्थम्—पश्य कुम्भं करोति घटमिति प्रत्ययो न भवति। उपपदप्रदेशा—'उपपदमतिङ्' इत्येवमादय ॥

कृदतिङ् ॥ ९३ ॥

अस्मिन् धात्वधिकारे तिङ्वर्जित प्रत्यय कृत्सञ्ज्ञको भवति। कर्तव्यम्। करणीयम्। अतिङिति किम्? चीयात्। स्तूयात्। कृत्प्रदेशा —"कृत्तद्धितसमासाश्च" इत्येवमादय ॥

वाऽसरूपोऽस्त्रियाम् ॥ ९४ ॥

अस्मिन् धात्वधिकारेऽसमानरूप प्रत्ययोऽपवादो वा बाधको भवति स्त्र्यधिकारविहितप्रत्यय वर्जयित्वा। "ण्वुल्तृचौ" उत्सर्गौ, "इगुपधज्ञाप्रीकिर कः" इत्यपवाद, तद्विषये ण्वुल्तृचावपि भवत —विक्षेपक। विक्षेप्ता। विक्षिप। असरूप इति किम्? "कर्मण्यण्" इत्युत्सर्ग, "आतोऽनुपसर्गे क" इत्यपवाद, स नित्य बाधको भवति—गोद। कम्बलद। नानुबन्धकृतमसारूप्यम्। अस्त्रियामिति किम्? "स्त्रियां क्तिन्" इत्युत्सर्ग, "अ प्रत्ययात्" इत्यपवाद, स बाधक एव भवति—चिकीर्षा। जिहीर्षा॥

कृत्या प्राङ् ण्वुलः ॥ ९५ ॥

"ण्वुल्तृचौ" इति वक्ष्यति, प्रागेतस्माण्ण्वुलसञ्शब्दनाद्, यानित ऊर्ध्वमनुक्रमिष्याम कृत्यसञ्ज्ञास्ते वेदितव्या। तत्रैवोदाहरिष्याम। कृत्यप्रदेशा—"कृत्यैरधिकार्थवचने" "कृत्यानां कर्तरि वा" इत्येवमादय ॥

तव्यत्तव्यानीयरः ॥ ९६ ॥

धातोरिति वर्तते। धातोस्तव्यत् तव्य अनीयर् इत्येते प्रत्यया भवन्ति। तकाररेफौ स्वरार्थौ। कर्तव्यम्। कर्तव्यम्। करणीयम्॥ वसेस्तव्यत् कर्तरि णिच्च॥ वास्तव्य। केलिमर उपसङ्ख्यानम्॥ पचेलिमा माषा। भिदेलिमानि काष्ठानि। कर्मकर्तरि चायमिष्यते॥

अचो यत् ॥ ९७ ॥

अजन्ताद्धातोर्यत्प्रत्ययो भवति। तकारो—"यतोऽनाव" इति स्वरार्थ। गेयम्। पेयम्। चेयम्। जेयम्। अज्ग्रहण किम्? यावता हलन्ताण्ण्यत वक्ष्यति, अजन्तभूतपूर्वादपि यथा स्यात्। दित्स्यम्। धित्स्यम्। तकि शसि चति यति जनीनामुपसङ्ख्यानम्। तकि-तक्यम्। शसि-शस्यम्। चति-चत्यम्। यति-यत्यम्। जनि-जन्यम्॥ हनो वा वध च॥ वध्यम्। घात्यम्॥

पोरदुपधात् ॥ ९८ ॥

पवर्गान्ताद्धातोरकारोपधाद्यत्प्रत्ययो भवति। ण्यतोऽपवाद। शप्-शप्यम्। लभ्-लभ्यम्। पोरिति किम्? पाक्यम्। वाक्यम्। अदुपधादिति किम्? कोप्यम्। गोप्यम्। तपरकरण तत्कालार्थम्। आप्यम्।

शकिसहोश्च ॥ ९९ ॥

'शक्लृ शक्तौ' 'षह मर्षणे' अनयोर्धात्वोर्यत्प्रत्ययो भवति । शक्यम् । सह्यम् ॥

गदमदचरयमश्चानुपसर्गे ॥ १०० ॥

'गद व्यक्तायां वाचि' 'मदी हर्षे' 'चर गतिभक्षणयोः' 'यम उपरमे' इत्येतेभ्यश्चानुपसर्गेभ्यो यत्प्रत्ययो भवति । गद्यम् । मद्यम् । चर्यम् । यम्यम् । अनुपसर्ग इति किम् ? प्रगाद्यम् । प्रमाद्यम् । ॐयमे पूर्वेणैव सिद्धेऽनुपसर्गनियमार्थं वचनम् ॥ ॐ चरेराङि चागुरौ ॐ । आचर्यो(१) देशः । अगुराविति किम् ? आचार्य उपनेता(२) ॥

अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥

अवद्य पण्य वर्या इत्येते शब्दा निपात्यन्ते गर्ह्यपणितव्यानिरोध इत्येतेष्वर्थेषु यथासंख्यम् । अवद्यमिति निपात्यते, गर्ह्यं चेत्तद्भवति । अवद्यं(३) पापम् । अनुद्यमन्यत्—"वद सुपि क्यप् च" । (४) पण्यमिति निपात्यते,पणितव्यं चेत्तद्भवति । पण्यः कम्बलः । पण्या गौः । (५)पाण्यमन्यत् । वर्येति स्त्रिया निपात्यते, अनिरोधश्चेत्तद्भवति । अनिरोधोऽप्रतिबन्धः (६) । शतेन वर्या । सहस्रेण वर्या । वृत्याऽन्या । स्त्रीलिङ्गनिर्देशः किमर्थः ? वार्या ऋत्विजः ॥

वह्यं करणम् ॥ १०२ ॥

वहधातोः करणे यत्प्रत्ययो निपात्यते । वहन्त्यनेनेति वह्यं शकटम् । करण इति किम् ? वाह्यमन्यत् ॥

अर्यः स्वामिवैश्ययोः ॥ १०३ ॥

'ऋ गतौ' अस्माण्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो निपात्यते । अर्यः स्वामी । अर्यो वैश्यः ॥ "यतोऽनावः" इत्याद्युदात्तत्वे प्राप्ते । ॐस्वामिन्यन्तोदात्तत्वं च वक्तव्यम्ॐ । स्वामिवैश्ययोरिति किम् ? आर्यो ब्राह्मणः ॥

उपसर्या काल्या प्रजने ॥ १०४ ॥

उपसर्येति निपात्यते काल्या चेत्प्रजने भवति । उपपूर्वात्सर्तेर्यत्प्रत्ययः । प्राप्तकाला काल्या । प्रजनः—प्रजननं प्रथमगर्भग्रहणम् । गर्भग्रहणे प्राप्तकाला-उपसर्या गौः, उपसर्या वडवा । काल्या प्रजन इति किम् ? उपसार्या शरदि मथुरा ॥

अजर्यं सङ्गतम् ॥ १०५ ॥

अजर्यमिति निपात्यते, सङ्गतं चेद्भवति । जीर्यतेर्नञ्पूर्वात्सङ्गते सगमने कर्तरि यत्प्रत्ययो निपात्यते । न जीर्यतीत्यजर्यम् , अजर्यमार्यसङ्गतम् । अजर्यं नोऽस्तु सङ्गतम् । सङ्गतमिति किम् ? अजरिता कम्बलः ॥

---

(१) "आचर्यं —गन्तव्य ॥ (२) गुरु 'रिति न्यासे ॥ (३) 'अवद्य' व सान हेम् । (४) 'पण्य' यत्रहर्तव्यम् । (५) 'पाण्य' स्तुत्यम् । (६) 'अप्रतिबन्ध प्रसरानभिघात ॥

वदः सुपि क्यप् च ॥ १०६ ॥

अनुपसर्ग इति वर्तते। वदेर्धातोः सुबन्त उपपदे अनुपसर्गे क्यप् प्रत्ययो भवति, चकाराद्यच्च। ब्रह्मोद्यम्। ब्रह्मवद्यम्। सत्योद्यम्। सत्यवद्यम्। सुपीति किम्? वद्यम्। अनुपसर्ग इत्येव, प्रवाद्यम्॥

भुवो भावे ॥ १०७ ॥

सुप्यनुपसर्ग इत्यनुवर्त्तते। भवतेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति। यत् नानुवर्त्तते। ब्रह्मभूयं गतः, ब्रह्मत्वं गतः। देवभूयम् गतः, देवत्व(१) गतः। भावग्रहणमुत्तरार्थम्। सुपीत्येव, भव्यम्। अनुपसर्ग इत्येव, प्रभव्यम्॥

हनस्त च ॥ १०८ ॥

सुप्यनुपसर्ग इति वर्तते, भाव इति च। हन्तेर्धातोः सुबन्त उपपदेऽनुपसर्गे भावे क्यप् प्रत्ययो भवति, तकारश्चान्तादेशः। ब्रह्महत्या। अश्वहत्या। सुपीत्येव, घातः। ण्यत्तु भावे न भवत्यनभिधानात्। अनुपसर्ग इत्येव, प्रघातो वर्तते॥

एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥

सुप्यनुपसर्गे भाव इति निवृत्तम्। सामान्येन विधानमेतत्। एति स्तु शास् वृ दृ जुष् इत्येतेभ्यः क्यप् प्रत्ययो भवति। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। आदृत्यः। जुष्यः। क्यपिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्, "ओरावश्यके" इति ण्यतं बाधित्वा क्यबेव भवति—अवश्यस्तुत्यः। वृग्रहणे वृञो ग्रहणमिष्यते, न वृङः-वार्या ऋत्विजः। *शंसिदुहिगुहिभ्यो वेति वक्तव्यम्*। शस्यम्। शंस्यम्। दुह्यम्। दोह्यम्। गुह्यम्। गोह्यम्। *आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्*। आज्यं घृतम्। कथमुपेयम्? (२) एरेतद्रूपं, नेणः॥

ऋदुपधाच्चाक्लृपिचृतेः ॥ ११० ॥

ऋकारोपधाच्च धातोः क्यप् प्रत्ययो भवति, क्लृपिचृती वर्जयित्वा। वृतु-वृत्यम्। वृधु-वृध्यम्। अक्लृपिचृतेरिति किम्? कल्प्यम्। चर्त्यम्। तपरकरणं किम्? 'कृत संशब्दने'—ण्यदेव भवति, कीर्त्यम्। *पाणौ सृजेर्ण्यद्वक्तव्यः*। पाणिसर्ग्या रज्जुः। *समवपूर्वाच्च*। समवसर्ग्या॥

ई च खनः ॥ १११ ॥

खनेर्धातोः क्यप् प्रत्ययो भवतीकारश्चान्तादेशः। खेयम्। दीर्घनिर्देशः प्रश्लेषार्थः। तत्र द्वितीय इकारो ये विभाषेत्यात्वबाधनार्थः॥

भृञोऽसंज्ञायाम् ॥ ११२ ॥

भृञो धातोरसंज्ञायां विषये क्यप् प्रत्ययो भवति। भृत्याः कर्मकराः, भर्तव्या

(१) अस्यांशस्य न्यासे दर्शनादत्र मूलपाठो नास्तीत्यवगम्यते॥ (२) "इङ एतदि"ति न्यासे पाठः॥

इत्यर्थः। असंज्ञायामिति किम्? भार्या नाम क्षत्रियाः। संपूर्वाद्विभाषा। संभृत्याः, संभार्या वा॥

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति॥

## मृजेर्विभाषा॥ ११३॥

मृजेर्धातोर्विभाषा क्यप् प्रत्ययो भवति। ऋदुपधत्वात् प्राप्तविभाषेयम्। परिमृज्यः, परिमार्ग्यः॥

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः॥ ११४॥

राजसूय सूर्य मृषोद्य रुच्य कुप्य कृष्टपच्य अव्यथ्य इत्येते शब्दाः क्यपि निपात्यन्ते। राज्ञा (१) सोतव्यः, राजा वा इह सूयते—राजसूयः क्रतुः। सूसर्तिभ्यां क्यप्, सर्तेरुत्वं (२)सुवतेर्वा रुडागमः—सरति सुवति वा सूर्यः। मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यप् निपात्यते—मृषोद्यम्। रोचतेऽसौ रुच्यः, कर्तरि क्यप्। गुपेरादेः कत्वं च संज्ञायाम्—(३)कुप्यम्। गोप्यमन्यत्। कृष्टे पच्यन्ते कृष्टपच्याः, कर्मकर्तरि निपातनम्। न व्यथते अव्यथ्यः॥

## भिद्योद्ध्यौ नदे॥ ११५॥

भिदेरुज्झेश्च क्यप् निपात्यते नदेऽभिधेये, उज्झेर्धत्वं च। भिनत्ति कूलं भिद्यः। उज्झत्युदकम्, उद्ध्यः। नद इति किम्? भेत्ता। उज्झिता॥

## पुष्यसिद्ध्यौ नक्षत्रे॥ ११६॥

पुषेः सिधेश्चाधिकरणे क्यप् निपात्यते नक्षत्रेऽभिधेये। पुष्यन्त्यस्मिन्नर्था इति पुष्यः। सिध्यन्त्यस्मिन्निति—सिद्ध्यः। नक्षत्र इति किम्? पोषणम्, सेधनम्॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु॥ ११७॥

विपूय विनीय जित्य इत्येते शब्दा निपात्यन्ते यथासंख्यं मुञ्जकल्कहलि इत्येतेष्वर्थेषु वाच्येषु। विपूर्वात् पवतेर्नयतेश्च तथा जयतेर्यति प्राप्ते कर्मणि क्यप् निपात्यते। (४)विपूयो मुञ्जः। विपाव्यमन्यत्। विनीयः कल्कः। विनेयमन्यत्। जित्यो हलिः। जेयमन्यत्॥

---

(१) 'सोतव्यः'—अभिषवद्वारा निष्पादयितव्य इत्यर्थः। राजा—स्वनामकः सोमः। (२) सुवतेरिति—सुवतेरिति पञ्चमी सुवतेः परस्य क्यप इत्यर्थः। (३) कुप्यं—स्वर्णरजताभिन्नं धनम्॥ (४) विपूयो मुञ्जः—रज्जुनिष्करणाय शोधयितव्य इत्यर्थः। कल्कः—तैलेन घृतेन वा त्रिफलादिद्रव्यसमवेतेन साध्यः कश्चिदौषधविशेषः। जित्यः—बलेन कर्षणीय इत्यर्थः। बृहद्धलं—हलिः। [illegible] स्थूलकाष्ठा हलिः॥

प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ ११८ ॥

प्रति अपि इत्येवंपूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये। मत्तस्य न प्रतिगृह्यम्। तस्मान्नापिगृह्यम्। छन्दसीति किम्? प्रतिग्राह्यम्। अपिग्राह्यम्॥

पदास्वैरिबाह्यापक्ष्येषु च ॥ ११९ ॥

पदेऽस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धातोः क्यप् प्रत्ययो भवति। पदे तावत्-प्रगृह्यं पदं, यस्य प्रगृह्यसंज्ञा विहिता। अवगृह्यं पदं, यस्यावग्रहः क्रियते। अस्वैरी परतन्त्रः—गृह्यका इमे, गृहीतका इत्यर्थः। बाह्यायाम्—ग्रामगृह्या सेना। नगरगृह्या सेना। ग्रामनगराभ्यां बहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशादन्यत्र न भवति। पक्षे भवः पक्ष्यः—वासुदेवगृह्याः। अर्जुनगृह्याः। तत्पक्षाश्रिता इत्यर्थः॥

विभाषा कृवृषोः ॥ १२० ॥

कृञो वृषश्च विभाषा क्यप् प्रत्ययो भवति। करोतेर्ण्यति प्राप्ते वर्षतेर्ऋदुपधत्वात्क्यपि प्राप्ते विभाषाऽऽरभ्यते। कृत्यम्। कार्यम्। वृष्यम्। वर्ष्यम्॥

युग्यं च पत्त्रे ॥ १२१ ॥

युग्यमिति निपात्यते, पत्त्रं चेत्तद्भवति। पतत्यनेनेति पत्त्रं, वाहनमुच्यते। युग्यो गौः। युग्योऽश्वः। युग्यो हस्ती। युजेः क्यप् कुत्वं च निपात्यते। पत्त्रे इति किम्? योग्यमन्यत्॥

अमावस्यदन्यतरस्याम् ॥ १२२ ॥

अमाशब्दः सहार्थे वर्तते। तस्मिन्नुपपदे वसेर्धातोः कालेऽधिकरणे ण्यत्प्रत्ययो भवति, तत्रान्यतरस्यां वृद्ध्यभावो निपात्यते। सह वसतोऽस्मिन् काले सूर्याचन्द्रमसाविति—अमावस्या। अमावास्या। एकदेशविकृतस्यानन्यत्वात् "अमावास्याया वा" इत्यत्रामावस्याशब्दस्यापि ग्रहणं भवति।

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम्।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिद्ध्यति॥

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ १२३ ॥

निष्टर्क्यादयः शब्दाश्छन्दसि विषये निपात्यन्ते। यदिह लक्षणेन अनुपपन्नं तत्सर्वं निपातनात्सिद्धम्। निष्टर्क्य इति—"कृती छेदने" इत्यस्मान्निस्पूर्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते—निष्टर्क्यं चिन्वीत पशुकामः। देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप्, दीर्घस्तुगभावश्च—देवहूयः। प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप्-प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्-उच्छिष्यम्। 'मृङ् प्राणत्यागे' 'स्तृञ् आच्छादने' 'ध्वृ हूर्छने' एतेभ्यो यत् प्रत्ययः—मर्यः। स्तर्या, [illegible] ध्वर्यः। खनेर्यत्—खन्यः। एतस्मादेव ण्यत्—खान्यः। देवशब्द उपपदे यजेर्यत्—देव-

यज्या, स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात्पृच्छेः क्यप्-आपृच्छ्य। प्रतिपूर्वात्सीव्यतेः क्यप् षत्व च-प्रतिषीव्य। ब्रह्मण्युपपदे वदेर्ण्यत्-ब्रह्मवाद्य। भवते स्तौतेश्च ण्यत्, आवादेशश्च भवति-भाव्य। स्ताव्य। उपपूर्वस्य चिनोतेर्ण्यदायादेशौ-उपचाय्यपृडम्, पृडे चोत्तरपदे निपातनमेतत्। ॐहिरण्य इति वक्तव्यम्ॐ। हिरण्यादन्यत्र उपचेयपृडमेव।

निष्टर्क्ये व्यत्यय विद्याच्छिस षत्व निपातनात्।
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ॥
ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतु॥

ऋहलोर्ण्यत्॥ १२४॥

पञ्चम्यर्थे षष्ठी, ऋवर्णान्ताद्धातोर्हलन्ताच्च ण्यत्प्रत्ययो भवति। कार्यम्। हार्यम्। धार्यम्। वाक्यम्। पाक्यम्॥

ओरावश्यके॥ १२५॥

अवश्यभाव आवश्यकम्। उवर्णान्ताद्धातोर्ण्यत् प्रत्ययो भवत्यावश्यके द्योत्ये। यतोऽपवादः। लाव्यम्। पाव्यम्। आवश्यके इति किम्? लव्यम्। आवश्यके द्योत्य इति चेत् स्वरसमासानुपपत्ति-अवश्यलाव्यम्, अवश्यपाव्यमिति। नैष दोषः। मयूरव्यंसकादित्वात् समासः, उत्तरपदप्रकृतिस्वरे च यत्न करिष्यते॥

आसुयुवपिरपिलपित्रपिचमश्च॥ १२६॥

आङ्पूर्वात्सुनोतेः यु वपि रपि लपि त्रपि चम इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति। यतोऽपवादः। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। अनुक्तसमुच्चयार्थश्चकारः, दभि-दाम्भ्यम्॥

आनाय्योऽनित्ये॥ १२७॥

आनाय्य इति निपात्यते अनित्येऽभिधेये। नयतेराङ्पूर्वाण्ण्यदायादेशौ निपात्येते। आनाय्यो दक्षिणाग्निः। रूढिरेषा, तस्मादनित्यविशेषे दक्षिणाग्नावेवावतिष्ठते, तस्य चानित्यत्व नित्यमजागरणात्। यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सहैकयोनिस्तत्रैतन्निपातन, न दक्षिणाग्निमात्रे, तस्य हि योनिर्विकल्प्यते—वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति॥

आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृत भवेत्।
एकयोनौ तु त विद्यादानेयो ह्यन्यथा भवेत्॥

प्रणाय्योऽसमतौ॥ १२८॥

अविद्यमाना समतिरस्मिन्नित्यसमतिः। समनन सम तिः, समतता पूजा। प्रणाय्य इति निपात्यतेऽसमतावभिधेये। प्रणाय्यश्चोरः। असमताविति किम्? प्रणेयोन्यः।

यद्येवं, कथमेतद्—"ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्यायान्तेवासिने, नान्यस्मै कस्मैचनेति"? संभक्तेरभिलाषोऽप्युच्यते, तदभावेन निष्कामतया असम्मतोऽन्तेवासी भवति, तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म प्रब्रूयादिति युज्यते ॥

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ १२९ ॥

पाय्यादयः शब्दा निपात्यन्ते यथासंख्यं, माने हविषि निवासे सामिधेन्यां चाभिधेयायाम्। पाय्य इति-माङो ण्यत् प्रत्यय आदेः पत्वं च निपात्यते माने—पाय्यं मानम्। मेयमन्यत्। सम्पूर्वाच्चयतेर्ण्यदायादेशावुपसर्गदीर्घत्वं च निपात्यते—सान्नाय्यं हविः। सन्नेयमन्यत्। रूढित्वाच्च हविर्विशेष एवाऽवतिष्ठते। निपूर्वाच्चिनोतेर्ण्यदायादेशावादेरुत्वं च निपात्यते—निकाय्यो निवासः। निचेयमन्यत्। धाय्येति-धातोर्ण्यत् प्रत्ययो निपात्यते सामिधेनी चेत्सा भवति—धाय्या सामिधेनी। धेयमन्यत्। सामिधेनीशब्द ऋग्विशेषस्य वाचकः, तत्र च धाय्येति न सर्वा सामिधेन्युच्यते, किं तर्हि? का चिदेव, रूढिशब्दो ह्ययम्। तथाचासामिधेन्यामपि दृश्यते—"धाय्या: शंस-त्यग्निर्नेता त्व सोमक्रतुभिरिति" ॥

क्रतौ कुण्डपाय्यसञ्चाय्यौ ॥ १३० ॥

कुण्डपाय्य सञ्चाय्य इत्येतौ शब्दौ निपात्येते क्रतावभिधेये। कुण्डशब्दे तृतीयान्त उपपदे पिबतेर्धातोरधिकरणे यत्प्रत्ययो निपात्यते युक्च। कुण्डेन पीयतेऽस्मिन् सोम इति—कुण्डपाय्यः क्रतुः। "यतोऽनाव" इति स्वरः। सम्पूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते, सञ्चीयतेऽस्मिन् सोम इति—सञ्चाय्यः क्रतुः। क्रताविति किम्? कुण्डपानम्। सञ्चेयः ॥

अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥

परिचाय्य उपचाय्य समूह्य इत्येते शब्दा निपात्यन्ते अग्नावभिधेये। पर्युपपूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते। परिचाय्यः। उपचाय्यः। सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वं च निपात्यते—समूह्यं चिन्वीत पशुकामः। अग्नाविति किम्? परिचेयम्। उपचेयम्। संवाह्यम् ॥

चित्याग्निचित्ये च ॥ १३२ ॥

चित्यशब्दोऽग्निचित्याशब्दश्च निपात्येते। चीयतेऽसौ चित्योऽग्निः। अग्निचयनमेवाग्निचित्या। भावे यकारप्रत्ययस्तुक् च, तेनान्तोदात्तत्वं भवति। अग्नावित्येव, चेयमन्यत् ॥

ण्वुल्तृचौ ॥ १३३ ॥

धातोरिति वर्त्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः। कर्त्ता।

हारकः। हर्त्ता। चकारः (१)सामान्यग्रहणाविघातार्थः-"तुश्छन्दसि" "तुरिष्ठेमेयस्सु" इति॥

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥ १३४॥

प्रत्येकमादिशब्दः सम्बध्यते। त्रिभ्यो गणेभ्यस्त्रयः प्रत्यया यथासंख्यं भवन्ति। (२) नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच्। नन्दिग्रहिपचादयश्च न धातुपाठतः सन्निविष्टा गृह्यन्ते, किं तर्हि? नन्दनरमणेत्येवमादिषु प्रातिपदिकगणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते। ॐनन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्ॐ नन्दनः। वाशनः। मदनः। दूषणः। साधनः। वर्द्धनः। शोभनः। रोचनः। ॐसहितपिदमेः संज्ञायाम्ॐ सहनः। तपनः। दमनः। जल्पनः। रमणः। दर्पणः। संक्रन्दनः। सङ्कर्षणः। संहर्षणः। जनार्दनः। यवनः। मधुसूदनः। विभीषणः। लवणः। निपातनाण्णत्वम्। (३) चित्तविनाशनः। कुलदमनः। शत्रुदमनः। इति नन्द्यादिः। ग्रह। उत्सह। उद्दस। उद्भास। स्था। मन्त्र। सम्मर्द—ग्राही। उत्साही। उद्दासी। उद्भासी। स्थायी। मन्त्री। सम्मर्दी। ॐरक्षश्रुवसवपशां नौॐ निरक्षी। निश्रावी। निवासी। निवापी। निशायी। ॐयाचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्ॐ अयाची। अव्याहारी। असंव्याहारी। अव्राजी। अवादी। अवासी। ॐअचामचित्तकर्तृकाणाम्ॐ प्रतिषिद्धानामित्येव। अकारी। अहारी। अविनायी। अविशायी। विशायी। ॐविषयी देशेॐ विषयी देशः। ॐअभिभावी भूतेॐ अभिभावी। अपराधी। (४) उपरोधी। परिभावी। परिभवी। इति ग्रहादिः॥ पच। वच। वप। वद। चल। शल। पत। नदट्। भषट्। वस। गरट्। प्लवट्। चरट्। तरट्। चोरट्। गाहट्। जर। मर। क्षर। क्षम। सूदट्। देवट्। मोदट्। सेव। मेष। कोप। मेधा नर्त। व्रण। दर्श। दश। दम्भ। जारभरा। श्वपच। (५)पचादिराकृतिगणः॥

अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः।
अण्बाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः(६)॥

इगुपधज्ञाप्रीकिरः कः॥ १३५॥

इगुपधेभ्यो जानातेः प्रीणातेः किरतेश्च कप्रत्ययो भवति। विक्षिपः। विलिखः। बुधः। कृशः। जानातीति ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। देवसेवमेषादयः पचादौ पठितव्याः॥

---

(१) "सामान्यग्रहणार्थं" इति न्यासपाठः॥ (२) अत्रगणे दूषणशब्दस्य स्थाने "भूषण" इति क्वचित्तदा "भदि भूषि साधि" इति पाठः। (३) "चित्तनाशनः" इति न्यासे। (४) "अवरोधी" इति पदमञ्जर्याम्॥ (५) कश्चिद् दम्भ शब्द उपलभ्यते। (६) क्वचिदयमुपलभ्यते श्लोकः। न्यासपदमञ्जर्योरपि न व्याख्यातोऽयं श्लोकः॥

आतश्चोपसर्गे ॥ १३६ ॥

आकारान्तेभ्यो धातुभ्य उपसर्गे उपपदे कप्रत्ययो भवति । णस्यापवादः । प्रस्थः । सुग्लः । सुम्लः ॥

पाघ्राध्माधेट्दृशः शः ॥ १३७ ॥

पादिभ्यो धातुभ्य उपसर्गे उपपदे शप्रत्ययो भवति । उत्पिबः । विपिबः । उज्जिघ्रः । विजिघ्रः । उद्धमः । विधमः । उद्धयः । विधयः । उत्पश्यः । विपश्यः । उपसर्ग इति केचिन्नाऽनुवर्तयन्ति, पश्यतीति पश्यः । ॐजिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः ॐ । व्याघ्रः ॥

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ १३८ ॥

अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययो भवति । लिम्पतीति लिम्पः । विन्दतीति विन्दः । धारयतीति धारयः । पारयतीति पारयः । वेदयतीति वेदयः । उदेजयतीत्युदेजयः । चेतयतीति चेतयः । सातिः सौत्रो धातुः—सातयः । साहयः । अनुपसर्गादिति किम् ? प्रलिपः । ॐनौ लिम्पेरिति वक्तव्यम् ॐ । निलिम्पा नाम देवाः । ॐगवादिषु विन्देः संज्ञायाम् ॐ । गोविन्दः । अरविन्दः ।

ददातिदधात्योर्विभाषा ॥ १३९ ॥

दाञो धाञश्च विभाषा शप्रत्ययो भवति । णस्यापवादः । ददः । दायः । दधः । धायः । अनुपसर्गादित्येव । प्रदः । प्रधः ।

ज्वलितिकसन्तेभ्यो णः ॥ १४० ॥

इतिशब्द आद्यर्थः । ज्वल दीप्तावित्येवमादिभ्यो धातुभ्यः कस गतावित्येवमन्तेभ्यो विभाषा णप्रत्ययो भवति । अचोऽपवादः । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादित्येव, प्रज्वलः । ॐतनोतेर्ण उपसंख्यानम् ॐ । अवतनोतीत्यवतानः ॥

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥ १४१ ॥

अनुपसर्गादिति, विभाषा चेति निवृत्तम् । श्यैङ आकारान्तेभ्यश्च धातुभ्यः व्यध आस्रु संस्रु अतीण् अवसा अवहृ लिह श्लिष श्वस इत्येतेभ्यश्च णप्रत्ययो भवति । आकारान्तादेव श्यायतेः प्रत्यये सिद्धे पुनर्वचनं बाधकबाधनार्थम्, उपसर्गे कं बाधित्वाऽयमेव भवति—अवश्यायः । प्रतिश्यायः । दायः । धायः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥

दुन्योरनुपसर्गे ॥ १४२ ॥

दुनोतेर्नयतेश्चानुपसर्गे णप्रत्ययो भवति । दुनोतीति दावः । नयतीति नायः । अनुपसर्ग इति किम् ? प्रदवः । प्रणयः ॥

विभाषा ग्रहः ॥ १४३ ॥

विभाषा ग्रहेर्धातोर्णप्रत्ययो भवति । अचोऽपवादः । ग्रहः । ग्राहः । व्यवस्थितवि

भाषा चेयम्, (१) जलचरे नित्यम्-ग्राहः । ज्योतिषि नेष्यते—तत्र ग्रह एव । ॐभवतेश्चेति वक्तव्यम्ॐ । भवतीति भावः । भवः ॥

गेहे कः ॥ १४४ ॥

ग्रहेर्धातोः कप्रत्ययो भवति गेहे कर्त्तरि । गृहं वेश्म, तात्स्थ्याद् दाराश्च । गृह्णन्तीति-गृहा दाराः, गृहाणि वेश्मानि ॥

शिल्पिनि ष्वुन् ॥ १४५ ॥

धातोः ष्वुन् प्रत्ययो भवति शिल्पिनि कर्त्तरि । ॐनृतिखनिरञ्जिभ्यः परिगणनं कर्त्तव्यम्ॐ । नर्त्तकः । खनकः । रजकः । नर्त्तकी । खनकी । रजकी । रञ्जेरनुनासिकलोपश्च ॥

गस्थकन् ॥ १४६ ॥

गायतेस्थकन्प्रत्ययो भवति शिल्पिनि कर्त्तरि । गाथकः । गाथिका ॥

ण्युट् च ॥ १४७ ॥

चकारेण ग इत्यनुकृष्यते । गायतेर्ण्युट्प्रत्ययो भवति शिल्पिनि कर्त्तरि । गायनः । गायनी । योगविभाग उत्तरार्थः ॥

हश्च व्रीहिकालयोः ॥ १४८ ॥

चकारेण ण्युडनुकृष्यते । जहातेर्जिहीतेश्च धातोर्ण्युट्प्रत्ययो भवति, व्रीहौ काले च कर्त्तरि । हायना नाम व्रीहयः, जहत्युदकमिति कृत्वा । काले-हायनः संवत्सरः, जिहीते भावानिति कृत्वा ॥

प्रुसृल्वः समभिहारे वुन् ॥ १४९ ॥

प्रु सृ लू इत्येतेभ्यो धातुभ्यः समभिहारे वुन् प्रत्ययो भवति । प्रवकः । सरकः । लवकः । समभिहारग्रहणेनात्र साधुकारित्वं लक्ष्यते । साधुकारिणि वुन्विधानात्सकृदपि यः सुष्ठु करोति तत्र भवति, बहुशो यो दुष्टं करोति तत्र न भवति ॥

आशिषि च ॥ १५० ॥

आशिषि गम्यमानायां धातुमात्राद् वुन् प्रत्ययो भवति । जीवतात्, जीवकः । नन्दतात्, नन्दकः । आशीः प्रार्थनाविशेषः, स च क्रियाविषयः-अमुष्याः क्रियायाः कर्त्ता भवेदित्येवमाशास्यते ॥

इति काशिकायां वृत्तौ तृतीयाध्यायस्य प्रथमः पादः ।

---

(१) "जलचरे ग्राह एव । ज्योतिषि ग्रह एव" इति कुत्रचित् ।

# अथ तृतीयाध्यायस्य द्वितीयः पादः ।

## कर्मण्यण् ॥ १ ॥

त्रिविधं कर्म, निर्वर्त्यं विकार्यं प्राप्यं चेति । सर्वत्र कर्मण्युपपदे धातोरण्प्रत्ययो भवति । निर्वर्त्यं तावत्—कुम्भकारः । नगरकारः । विकार्यम्—काण्डलावः । शरलावः । प्राप्यम्—वेदाध्यायः । चर्चापाठः(१) । ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्यत्र न भवत्यनभिधानात् । ॐशीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्ॐ । मांसशीलः । मांसशीला । मांसकामः । मांसकामा । मांसभक्षः । मांसभक्षा । कल्याणाचारः । कल्याणाचारा । ॐईक्षिक्षमिभ्यां चेति वक्तव्यम्ॐ । सुखप्रतीक्षः । सुखप्रतीक्षा । बहुक्षमः । बहुक्षमा ।

## ह्वावामश्च ॥ २ ॥

'ह्वेञ् स्पर्द्धायां शब्दे च' । 'वेञ् तन्तुसन्ताने' । माङ् माने' । इत्येतेभ्यश्च कर्मण्युपपदेऽण्प्रत्ययो भवति । कप्रत्ययापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥

## आतोऽनुपसर्गे कः ॥ ३ ॥

आकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवति । अणोऽपवादः । गोदः । कम्बलदः । पार्ष्णित्रम् । अङ्गुलित्रम् । अनुपसर्ग इति किम् ? गोसन्दायः । वडवासन्दायः ।

## सुपि स्थः ॥ ४ ॥

सुबन्त उपपदे तिष्ठतेः कप्रत्ययो भवति । समस्थः । विषमस्थः(२) । अत्र योगविभागः कर्तव्यः—'सुपीति' । सुप्याकारान्तेभ्यः कप्रत्ययो भवति—द्वाभ्यां पिबतीति द्विपः । पादपः । कच्छपः । ततः—'स्थः' इति—स्थश्च सुपि कप्रत्ययो भवति, किमर्थमिदम्? कर्तरि पूर्वयोगः, अनेन भावे यथा स्यात्—आखूनामुत्थानम्, आखूत्थः । शलभोत्थः । इत उत्तरं 'कर्मणी'ति, 'सुपी'ति च द्वयमप्यनुवर्तते । तत्र सकर्मकेषु धातुषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति ॥

## तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोर्धात्वोः कप्रत्ययो भवति । तुन्दपरिमृज आस्ते । शोकापनुदः पुत्रो जातः । ॐआलस्यसुखाहरणयोरिति वक्तव्यम्ॐ । अलसस्तुन्दपरिमृज उच्यते । तुन्दपरिमार्ज एवान्यः । सुखस्याहर्ता शोकापनुदः । शोकापनोद एवान्यः । ॐकप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्ॐ । मूलानि विभुजतीति मूलविभुजो रथः । नखमुचानि धनूंषि । काकगुहास्तिलाः । कौ मोदते कुमुदम् ।

---

(१) "चार" इति न्यासपदमञ्जरीसम्मतः पाठः । (२) "कूटस्थ" एतदप्युदाहरणं क्वचित् ।

प्रे दाज्ञः ॥ ६ ॥

सोपसर्गार्थ आरम्भः। ददातेर्जानातेश्च धातोः प्रेणोपसृष्टात् कर्मण्युपपदे कप्रत्ययो भवति । अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः । प्र इति किम् ? गोसंदायः ।

समि ख्यः ॥ ७ ॥

सोपसर्गार्थ आरम्भः। सम्पूर्वात् 'ख्या' इत्येतस्माद्धातोः कर्मण्युपपदे कप्रत्ययो भवति । अणोऽपवादः । गां सञ्चष्टे–गोसख्यः ॥

गापोष्टक् ॥ ८ ॥

कर्मण्यनुपसर्गे इति वर्त्तते। गायतेः पिबतेश्च धातोः कर्मण्युपपदेऽनुपसर्गे टक् प्रत्ययो भवति । कस्यापवादः । शक्रं गायति, शक्रगः । सामगः । शक्रगी । सामगी । *सुराशीध्वोः पिबतेरिति वक्तव्यम्* । सुरापः । सुरापी । शीधुपः । शीधुपी । सुराशीध्वोरिति किम् ? क्षीरपा ब्राह्मणी । पिबतेरिति किम् ? सुरां पातीति सुरापा । अनुपसर्ग इत्येव, शक्रसंगायः । सामसंगायः । *बहुलं छन्दसीति वक्तव्यम्* । या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति । या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति ॥

हरतेरनुद्यमनेऽच् ॥ ९ ॥

हरतेर्धातोरनुद्यमने वर्त्तमानात् कर्मण्युपपदेऽच् प्रत्ययो भवति । अणोऽपवादः उद्यमनमुत्क्षेपणम् । अंशं हरतीत्यंशहरः । रिक्थहरः । अनुद्यमन इति किम् ? भारहारः । *अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्* शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । घटीग्रहः धनुर्ग्रहः । *सूत्रे च धार्यर्थे* । सूत्रग्रहः, सूत्रं धारयतीत्यर्थः । सूत्रग्राह एवान्यः ॥

वयसि च ॥ १० ॥

वयसि गम्यमाने हरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति । ... रम्भः । कालकृता शरीरावस्था यौवनादिर्वयः । यदुद्यमनं क्रियमाणं सम्भाव्यमानं वयो गमयति तत्रायं विधिः । अस्थिहरः श्वा । कवचहरः क्षत्रियकुमारः ॥

आङि ताच्छील्ये ॥ ११ ॥

आङ्पूर्वाद्धरतेः कर्मण्युपपदेऽच्प्रत्ययो भवति ताच्छील्ये गम्यमाने । ... तत्स्वभावता । पुष्पाहरः । फलाहरः । पुष्पाद्याहरणे स्वाभाविकी फलानपेक्षा ... रस्येत्यर्थः । ताच्छील्य इति किम् ? भारमाहरतीति भाराहारः ॥

अर्हः ॥ १२ ॥

'अर्ह पूजायाम्' अस्माद्धातोः कर्मण्युपपदेऽच् प्रत्ययो भवति । ... स्त्रीलिङ्गे विशेषः । पूजार्हा । गन्धार्हा । मालार्हा ॥

### स्तम्बकर्णयो रमिजपोः ॥ १३ ॥

स्तम्ब कर्ण इत्येतयोः सुबन्तयोरुपपदयोर्यथासङ्ख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति। रमेरकर्मकत्वाज्जपेः शब्दकर्मकत्वात् कर्म न सम्भवतीति सुपीत्येतदिहाभिसंबध्यते। *हस्तिसूचकयोरिति वक्तव्यम्*। स्तम्बे रमते इति, स्तम्बेरमो हस्ती। कर्णे जपतीति, कर्णेजपः सूचकः। हस्तिसूचकयोरिति किम्? स्तम्बे रन्ता। कर्णे जपिता मशकः॥

### शमि धातोः संज्ञायाम् ॥ १४ ॥

शम्युपपदे धातुमात्रात्संज्ञायां विषयेऽच् प्रत्ययो भवति। शंकरः। शम्भवः। शंवदः। धातुग्रहणं किम्? यावता धातोरिति वर्तत एव। शमि संज्ञायामिति सिद्धे धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्—शंकरा नाम परिव्राजिका। शंकरा नाम शकुनिका तच्छीला च॥

### अधिकरणे शेतेः ॥ १५ ॥

सुपीति संबध्यते। शेतेर्धातोरधिकरणे सुबन्त उपपदेऽच्प्रत्ययो भवति। खे शेते, खशयः। गर्तशयः। *पार्श्वादिषूपसंख्यानम्*। पार्श्वाभ्यां शेते, पार्श्वशयः। उदरशयः। पृष्ठशयः। *दिग्धसहपूर्वाच्च*। दिग्धेन सह शेते, दिग्धसहशयः। *उत्तानादिषु कर्तृषु*। उत्तानः शेते, उत्तानशयः। अवमूर्धा शेते, अवमूर्धशयः। *गिरौ डश्छन्दसि*। गिरौ शेते, गिरिशः॥

### चरेष्टः ॥ १६ ॥

अधिकरण इति वर्तते। चरेर्धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति। कुरुषु चरतीति, कुरुचरः। मद्रचरः। कुरुचरी। मद्रचरी। प्रत्ययान्तरकरणं ङीबर्थम्॥

### भिक्षासेनादायेषु च ॥ १७ ॥

अनधिकरणार्थ आरम्भः। भिक्षा सेना आदाय इत्येतेषूपपदेषु चरेर्धातोष्टप्रत्ययो भवति। भिक्षाचरः। सेनाचरः। आदायचरः॥

### पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥ १८ ॥

पुरस् अग्रतस् अग्रे इत्येतेषूपपदेषु सर्तेर्धातोष्टप्रत्ययो भवति। पुरः सरतीति पुरःसरः। अग्रतःसरः, अग्रेसरः॥

### पूर्वे कर्त्तरि ॥ १९ ॥

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेर्धातोष्टप्रत्ययो भवति। पूर्वः सरतीति पूर्वसरः। कर्तरीति किम्? पूर्वं देशं सरतीति पूर्वसारः॥

### कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥

कर्मण्युपपदे करोतेर्धातोष्टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने। हेतुरैकान्तिकं कारणम्। ताच्छील्यं तत्स्वभावता। आनुलोम्यमनुकूलता। हेतौ तावत्—शोककरी कन्या। यशस्करी विद्या। कुलकरं धनम्। ताच्छील्ये—

श्राद्धकर । अर्थकर । आनुलोम्ये-प्रैषकर । वचनकर । एतेष्विति किम्? कुम्भकार । नगरकार ॥

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ २१ ॥

कर्मणि सुपीति च द्वयमप्यनुवर्तते, तत्र यथायोगं सम्बन्धः । दिवादिषूपपदेषु करोतेर्धातोष्टप्रत्ययो भवति । अहेत्वाद्यर्थ आरम्भः । दिवाशब्दोऽधिकरणवचनः सुपीत्यस्य विशेषणम् । दिवा करोति प्राणिनश्चेष्टायुक्तानिति-दिवाकरः । विभां करोतीति विभाकरः । निशाकरः । प्रभाकरः । भास्करः सकारस्य निपातनाद्विसर्जनीयजिह्वामूलीयौ न भवतः । कारकरः । अन्तकरः । अनन्तकरः । आदिकरः । बहुकरः । नान्दीकरः । किंकरः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । संख्या-एककरः । द्विकरः । त्रिकरः । जङ्घाकरः । बाहुकरः । अहस्करः । यत्करः । तत्करः । धनुष्करः । अरुष्करः । ॐकियत्तद्बहुषु कृञोऽज्विधानम्ॐ । किंकरा । यत्करा । तत्करा । बहुकरा । अथ वाऽपादिषु पाठः करिष्यते ॥

कर्मणि भृतौ ॥ २२ ॥

कर्मणीति स्वरूपग्रहणम् । कर्मवाचिनि कर्मशब्द उपपदे करोतेष्टप्रत्ययो भवति भृतौ गम्यमानायाम् । भृतिर्वेतनम् । कर्म निर्देशः । कर्म करोतीति, कर्मकरः । भृतक इत्यर्थः । भृताविति किम्? कर्मकारः ॥

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥

शब्दादिषूपपदेषु करोतेष्टप्रत्ययो न भवति । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकारः । श्लोककारः । कलहकारः । गाथाकारः । वैरकारः । चाटुकारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥

स्तम्बशकृतोरिन् ॥ २४ ॥

स्तम्ब शकृत् इत्येतयोः कर्मणोरुपपदयोरिन् प्रत्ययो भवति । ॐव्रीहिवत्सयोरिति वक्तव्यम्ॐ । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोरिति किम्? स्तम्बकारः । शकृत्कारः ॥

हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥

दृति नाथ इत्येतयोः कर्मणोरुपपदयोः हरतेर्धातोः पशौ कर्तरि इन् प्रत्ययो भवति । दृतिं हरति, दृतिहरिः पशुः । नाथहरिः पशुः । पशाविति किम्? दृतिहारः । नाथहारः ॥

फलेग्रहिरात्मम्भरिश्च ॥ २६ ॥

फलेग्रहिः, आत्मम्भरिः, इत्येतौ शब्दौ निपात्येते । फलशब्दस्य उपपदस्यैकारान्तत्वमिन् प्रत्ययश्च ग्रहेर्निपात्यते-फलानि गृह्णातीति फलेग्रहिर्वृक्षः । आत्मन्शब्दस्य

उपपदस्य मुमागम इन् प्रत्ययश्च भृञो निपात्यते—आत्मानं बिभर्ति, आत्मम्भरिः। अनुक्तसमुच्चयार्थश्चकारः—कुक्षिम्भरिः। उदरम्भरिः॥

छन्दसि वनसनरक्षिमथाम् ॥ २७ ॥

'वन षण संभक्तौ' 'रक्ष पालने' 'मथे विलोडने' इत्येतेभ्यः कर्मण्युपपदे छन्दसि विषये इन् प्रत्ययो भवति। ब्रह्मवनिं त्वा क्षत्रवनिम्। गोसनिं धीं पथिरक्षी श्वानौ। हविर्मथीनाम्॥

एजेः खश् ॥ २८ ॥

'एजृ कम्पने' इत्यस्माद् ण्यन्तात्कर्मण्युपपदे खश् प्रत्ययो भवति। खकारो मुमर्थः। शकारः सार्वधातुकसंज्ञार्थः। अङ्गमेजयति—अङ्गमेजयः। जनमेजयः। *खश्प्रत्यये(१) वातशुनीतिलशर्धेष्वजधेट्तुदजहातीनामुपसंख्यानम्*। वातमजा मृगाः। शुनिन्धयः। तिलन्तुदः। शर्धंजहा माषाः।

नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥

नासिकास्तनयोः कर्मणोरुपपदयोर्ध्माधेटोर्धात्वोः खश्प्रत्ययो भवति। यथासंख्यमत्र नेष्यते। *स्तने धेटः*। स्तनन्धयः। *नासिकायां तु ध्मश्च धेटश्च*। नासिकन्धमः। नासिकंधयः। सत्येतन्नासिकास्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्यापूर्वनिपातनाल्लभ्यते। धेट ष्टित्वात् स्त्रियां ङीप् प्रत्ययो भवति। स्तनन्धयी॥

नाडीमुष्ट्योश्च ॥ ३० ॥

नाडी मुष्टि इत्येतयोः कर्मणोरुपपदयोर्ध्माधेटोः खश् प्रत्ययो भवति। अत्रापि घ्यन्तस्यापूर्वनिपातो लक्षणव्यभिचारचिह्न, तेन संख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः—घटिन्धमः। घटिन्धयः। खारिन्धम (२)। खारिन्धयः। वातन्धमः पर्वतः। वातन्धयः॥

उदि कूले रुजिवहोः ॥ ३१ ॥

'रुजो भङ्गे' 'वह प्रापणे' इत्येताभ्यामुत्पूर्वाभ्यां कूले कर्मण्युपपदे खश् प्रत्ययो भवति। कूलमुद्रुजतीति कूलमुद्रुजो रथः। कूलमुद्वहः॥

वहाभ्रे लिहः ॥ ३२ ॥

वह अभ्र इत्येतयोः कर्मणोरुपपदयोः लिहेर्धातोः खश् प्रत्ययो भवति। वहं लेढीति वहंलिहो गौः। अभ्रंलिहो वायुः॥

परिमाणे पचः ॥ ३३ ॥

परिमाणं प्रस्थादि, तस्मिन् कर्मण्युपपदे पचेः खश् प्रत्ययो भवति। प्रस्थं पचति, प्रस्थंपचा स्थाली। द्रोणम्पचः, खारिम्पच कटाहः॥

---

(१) "खश्प्रकरणे" इति क्वचित्। (२) खरिन्धम इति क्वचित्।

मितनखे च ॥ ३४ ॥

मित नख इत्येतयोः कर्मणोरुपपदयोः पचेः खश्प्रत्ययो भवति । अपरिमाणार्थ आरम्भः । मितं पचति, मितम्पचा ब्राह्मणी । नखम्पचा यवागूः ॥

विध्वरुषोस्तुदः ॥ ३५ ॥

विधु अरुस इत्येतयोः कर्मणोरुपपदयोः तुदेर्धातोः खश्प्रत्ययो भवति । विधुन्तुदः राहुः । अरुन्तुदः ॥

असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥

असूर्य ललाट इत्येतयोः कर्मणोरुपपदयोः दृशितपोर्धात्वोः खश्प्रत्ययो भवति । असूर्यम्पश्या राजदाराः । ललाटन्तप आदित्यः । असूर्य इति चासमर्थसमासोऽयम्, दृशिना नञः सम्बन्धात् । सूर्यं न पश्यन्तीति । गुप्तिपर चैतत्—एवं नाम गुप्ता यदप-रिहार्यदर्शनं सूर्यमपि न पश्यन्तीति ॥

उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥ ३७ ॥

उग्रम्पश्य इरम्मद पाणिन्धम इत्येते शब्दा निपात्यन्ते । उग्रं पश्यतीत्युग्रम्पश्यः । इरया माद्यतीतीरम्मदः । पाणयो ध्मायन्ते एष्विति पाणिन्धमाः पन्थानः ॥

प्रियवशे वदः खच् ॥ ३८ ॥

प्रिय वश इत्येतयोः कर्मणोरुपपदयोर्वदेर्धातोः खच् प्रत्ययो भवति । प्रियं वद-तीति प्रियंवदः । वशंवदः । चकारः "खचि ह्रस्वः" इति विशेषणार्थः । खकारो मु-मर्थः । प्रत्ययान्तरकरणमुत्तरार्थम् ॥ ॐखच्प्रकरणे गमेः सुप्युपसंख्यानम्ॐ । मित-ङ्गमो हस्ती । मितङ्गमा हस्तिनी । ॐविहायसो विह च(१)ॐ । विहायसा गच्छति, विहङ्गमः । ॐखच्च डिद्वा वक्तव्यःॐ । विहंगः । विहङ्गमः । ॐडे च विहायसो विहादेशो वक्तव्यःॐ । विहगः ॥

द्विषत्परयोस्तापे ॥ ३९ ॥

द्विषत्परयोः कर्मणोरुपपदयोस्तापेर्धातोः खच् प्रत्ययो भवति । तप दाहे चुरा-दिः, तप संतापे भ्वादिः, द्वयोरपि ग्रहणम् । द्विषन्तं तापयति, द्विषन्तपः । परन्तपः । द्विषत्परयोरिति द्वितकारको निर्देशः, तेन स्त्रियां न भवति—द्विषतीं तापयति द्विषती-तापः ॥

वाचि यमो व्रते ॥ ४० ॥

वाक्शब्दे कर्मण्युपपदे यमेर्धातोः खच् प्रत्ययो भवति व्रते गम्यमाने । व्रत शास्त्रतो नियम उच्यते । वाचंयम आस्ते । व्रत इति किम् ? वाग्यामः ॥

पूःसर्वयोर्दारिसहोः ॥ ४१ ॥

पुर् सर्व इत्येतयोः कर्मणोरुपपदयोर्यथासंख्यं दारिसहोर्धात्वोः खच्

(१) "विहश्च" इति क्वचित् ।

भवति। पुरं दारयति, पुरंदरः। सर्वसहो राजा। ॐभगे च दारेरिति वक्तव्यम्ॐ। भगन्दरः॥

सर्वकूलाभ्रकरीषेषु कषः॥ ४२॥

सर्व कूल अभ्र करीष इत्येतेषु कर्मसूपपदेषु कषेर्धातोः खच् प्रत्ययो भवति। सर्वं कषति, सर्वंकषः खलः। कूलंकषा नदी। अभ्रंकषो गिरिः। करीषंकषा वात्या॥

मेघर्त्तिभयेषु कृञः॥ ४३॥

मेघ ऋति भय इत्येतेषु कर्मसूपपदेषु कृञः खच् प्रत्ययो भवति। मेघंकरः। ऋतिंकरः। भयंकरः। ॐउपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयतिॐ। अभयंकरः॥

क्षेमप्रियमद्रेऽण् च॥ ४४॥

क्षेम प्रिय मद्र इत्येतेषु कर्मसूपपदेषु करोतेरण् प्रत्ययो भवति, चकारात्खच्। क्षेमकारः। क्षेमंकरः। प्रियकारः। प्रियंकरः। मद्रकारः। मद्रंकरः। वेति वक्तव्ये पुनरण्ग्रहणं हेत्वादिषु टप्रतिषेधार्थम्॥

आशिते भुवः करणभावयोः॥ ४५॥

अत्र सुपीत्युपतिष्ठते। आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच् प्रत्ययो भवति। आशितो भवत्यनेन, आशितंभव ओदनः। भावे—आशितस्य भवनम्, आशितंभवं वर्त्तते॥

संज्ञायां भृतॄवृजिधारिसहितपिदमः॥ ४६॥

कर्मणीति, सुपीति च प्रकृतं संज्ञावशाद्यथासम्भवं सम्बध्यते। भृ तॄ वृजि धारि सहि तपि दम इत्येतेभ्यो धातुभ्यः संज्ञायां विषये खच्प्रत्ययो भवति। विश्वंभरा वसुंधरा। रथंतरं साम। पतिंवरा कन्या। शत्रुंजयो हस्ती। युगंधरः पर्वतः। शत्रुंसहः। शत्रुंतपः। अरिंदमः। संज्ञायामिति किम्? कुटुम्बं बिभर्त्ति कुटुम्बभारः(१)॥

गमश्च॥ ४७॥

गमेर्धातोः सुप्युपपदे संज्ञायां विषये खच्प्रत्ययो भवति। सुतंगमो नाम, यस्य (२)पुत्रः सौतंगमिः। योगविभाग उत्तरार्थः॥

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः॥ ४८॥

संज्ञायामिति नानुवर्त्तते। अन्त अत्यन्त अध्वन् दूर पार सर्व अनन्त इत्येतेषु कर्मसूपपदेषु गमेर्डप्रत्ययो भवति। अन्तगः। अत्यन्तगः। अध्वगः। दूरगः। पारगः।

(१) "कुद्दालं बिभर्ति, कुद्दालभारः" इत्यपि क्वचित्। (२) न्यासे पुत्रशब्दस्य सौतंगमिशब्दानन्तरं पाठः। यथाश्रुतेऽपि पुत्रशब्दस्य तेनैव सम्बन्धः। यस्य पुत्रः सौतंगमिः स सुतंगमो नामेति।

सर्वग । अनन्तग । डकारष्टिलोपार्थ, डित्यमस्याप्यनुबन्धकरणसामर्थ्यादिति । ॐडप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम्ॐ। सर्वत्रग । पन्नग । ॐउरसो लोपश्चॐ। उरसा गच्छतीत्युरग । ॐसुदुरोरधिकरणेॐ। सुखेन गच्छत्यस्मिन्निति-सुग । दुर्ग । ॐनिरो देशेॐ। निर्गो देश । अपर आह—ॐडप्रकरणेऽन्यत्रापि(१)दृश्यत इतिॐ। स्त्र्यगारग । ग्रामग । गुरुतल्पग ॥

आशिषि हन ॥ ४९ ॥

हन इति वर्तते । आशिषि गम्यमानायां हन्तेर्धातो कर्मण्युपपदे डप्रत्ययो भवति। तिमिं वध्यात्तिमिह । शत्रुह । आशिषीति किम् ? शत्रुघात । ॐदारावाहनोऽणन्तस्य च ट संज्ञायाम्ॐ। दारावुपपदे आङ्पूर्वाद्धन्तेरण् प्रत्ययो भवति, अन्तस्य च टकारादेशो भवति, संज्ञाया विषये । दारु आहन्ति, दारावाघाट । ॐचारौ वाॐ। आङ्पूर्वाद्धन्तेश्चारावुपपदेऽण् अन्तस्य वा टकारादेश । चार्वाघाट । चार्वाघात । ॐकर्मणि समि चॐ। कर्मण्युपपदे सम्पूर्वाद्धन्तेरण्प्रत्ययोऽन्तस्य च वा टकारादेश । वर्णान् संहन्ति, वर्णसंघाट । वर्णसंघात । पदानि संहन्ति, पदसंघाट । पदसंघात ॥

अपे क्लेशतमसो ॥ ५० ॥

अपपूर्वाद्धन्ते क्लेशतमसो कर्मणोरुपपदयोर्डप्रत्ययो भवति । क्लेशापह पुत्र । तमोपह सूर्य । अनाशीरर्थ आरम्भ ॥

कुमारशीर्षयोर्णिनि ॥ ५१ ॥

हन इति वर्तते। कुमार शीर्ष इत्येतयोरुपपदयो हन्तेर्णिनि प्रत्ययो भवति। कुमारघाती । शीर्षघाती । निपातनाच्छिरस शीर्षभाव ॥

लक्षणे जायापत्योष्टक ॥ ५२ ॥

हन्तेर्जायापत्यो कर्मणोरुपपदयोर्लक्षणवति कर्तरि टक् प्रत्ययो भवति । जायाघ्नो ब्राह्मण । पतिघ्नी वृषली । अथ वा लक्षणे द्योत्ये टक्प्रत्यय ॥

अमनुष्यकर्तृके च ॥ ५३ ॥

अमनुष्यकर्तृके वर्तमानाद्धन्तेर्धातो कर्मण्युपपदे टक् प्रत्ययो भवति । जायाघ्न स्तिलकालक । पतिघ्नी पाणिरेखा । श्लेष्मघ्न मधु । पित्तघ्न घृतम् । अमनुष्यकर्तृके इति किम् ? आखुघात शूद्र । इह कस्मान्न भवति चौरघातो हस्ती ? "कृत्यल्युटो बहुलम्" इति बहुलवचनादण् भवति ॥

शक्तौ हस्तिकपाटयो ॥ ५४ ॥

शक्तौ गम्यमानायां हस्तिकपाटयो कर्मणोरुपपदयोर्हन्तेष्टक प्रत्ययो भवति । मनुष्यकर्तृकार्थ आरम्भ । हस्तिनं हन्तु शक्त, हस्तिघ्नो मनुष्य । कपाटघ्नश्चोर । शक्ताविति किम् ? विषेण हस्तिनं हन्ति, हस्तिघात ॥

---

(१) "अन्यत्रापि" इत्यपि पाठ ।

वचनम्। प्रमाण इति किम्? द्वाभ्यां पुराभ्यां क्रीता द्विपुरा, त्रिपुरा। तद्धित लुकीत्येव-समाहारे द्विपुरी, त्रिपुरी॥

बहुव्रीहेरूधसो ङीष्॥ २५॥

ऊधस्शब्दान्ताद्बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति। "ऊधसोऽनङ्" इति समासान्ते कृते, "अनो बहुव्रीहेः" इति डाप्प्रतिषेधयोः प्राप्तयोरिदमुच्यते। घटोध्नी। कुण्डोध्नी। बहुव्रीहेरिति किम्? प्राप्ता ऊधः प्राप्तोधाः। अन उपधालोपिन इत्यस्यापि ङीपोऽयमुत्तरयोग्यस्त्वे बाधक इष्यते। समासान्तश्च स्त्रियामेव, इह न भवति-महोधाः पर्जन्य इति॥

संख्याव्ययादेर्ङीप्॥ २६॥

पूर्वेण ङीपि प्राप्ते ङीब्विधीयते। संख्यादेरव्ययादेश्च बहुव्रीहेरूधःशब्दान्ताद् ङीप् प्रत्ययो भवति। संख्यादेस्तावत्-द्व्यूध्नी। त्र्यूध्नी। अव्ययादेः-अत्यूध्नी(१), निरूध्नी। आदिग्रहणं किम्? द्विविधोध्नी, त्रिविधोध्नीत्यत्रापि यथा स्यात्॥

दामहायनान्ताच्च॥ २७॥

ऊधस इति निवृत्तम्। संख्याग्रहणमनुवर्तते नाव्ययग्रहणम्। संख्यादेर्बहुव्रीहेर्दामशब्दान्ताद्धायनशब्दान्ताच्च स्त्रियां ङीप् प्रत्ययो भवति। दामान्तात् डाप्प्रतिषेधविकल्पेषु प्राप्तेषु नित्यार्थं वचनम्। द्विदाम्नी, त्रिदाम्नी। हायनान्तादपि प्राप्ते-द्विहायनी, त्रिहायणी, चतुर्हायणी। ॐहायनो वयसि स्मृतःॐ। तेनेह न भवति-द्विहायना शाला। त्रिहायना। चतुर्हायना। णत्वमपि ॐत्रिचतुर्भ्यां हायनस्यॐ इति वयस्येव स्मर्यते॥

अन उपधालोपिनोऽन्यतरस्याम्॥ २८॥

बहुव्रीहेरित्येव। अन्नन्तो यो बहुव्रीहिरुपधालोपी तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति। ङीपा मुक्ते डाप्प्रतिषेधौ भवतः। (किमर्थं(२) तर्हीदमुच्यते) ननु सिद्धा एव डाप्प्रतिषेधङीपः? अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनम्। बहुराजा, बहुराज्ञी, बहुराजे। बहुतक्षा, बहुतक्ष्णी, बहुतक्षे। अन इति किम्? बहुमत्स्या। उपधालोपिन इति किम्? सुपर्वा, सुपर्वे। सुपर्व्वा, सुपर्व्वाणौ, सुपर्व्वाणः। डाप्प्रतिषेधावेवात्र भवतः॥

नित्यं संज्ञाछन्दसोः॥ २९॥

अन्नन्तात् बहुव्रीहेरुपधालोपिनः संज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति। विकल्पस्यापवादः। सुराज्ञी, अतिराज्ञी नाम ग्रामः। छन्दसि-गौः पञ्चदाम्नी एकदाम्नी। द्विदाम्नी। एकमूर्ध्नी। समानमूर्ध्नी।

(१) "अत्यूध्नी" इति न्यासपाठः। (२) कोष्ठान्तर्गत पाठः न्यासपदमञ्जर्यसम्मतोऽत्र।

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥

सञ्ज्ञाछन्दसोरित्येव । केवलादिभ्य प्रातिपदिकेभ्य सञ्ज्ञाया छन्दसि विषये स्त्रिया ङीप् प्रत्ययो भवति । केवली । केवलेति भाषायाम् । मामकी । मामिकेति भाषायाम् । मित्रावरुणयोर्भागधेयी । भागधेयेति भाषायाम् । पापी स्वियम् । पापेति भाषायाम् । उतापरीभ्यो मघवा विजिग्ये । अपरेति भाषायाम् । समानो प्रवाणो । समानेति भाषायाम्(१) ॥

रात्रेश्चाजसौ ॥ ३१ ॥

जस्विषयादन्यत्र सञ्ज्ञाया छन्दसि च रात्रिशब्दाद् ङीप् प्रत्ययो भवति । या रात्री सृष्टा । रात्रीभि । अजसाविति किम् ? यास्ता रात्रय । ॐअजसादिष्विति वक्तव्यम्ॐ। रात्रिं सहोषित्वा । कथ "तिमिरपटलैरवगुण्ठिताश्च रात्र्य "? ङीषय बह्वादिलक्षणस्तत्र हि पठ्यते 'कृदिकारादक्तिन , 'सर्वतोऽक्तिन्नर्थादित्येके' इति ॥

अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥

प्रकृतिर्निपात्यते,नुगागमस्तु विधीयते। अन्तर्वत्पतिवतोर्नुग्भवति ङीप् च प्रत्यय , स तु नकारान्तत्वादेव सिद्ध । निपातनसामर्थ्याच्च विशेषे वृत्तिर्भवति । अन्तर्वत्पतिवदिति गर्भभर्तृसयोगे,इह न भवति-अन्तरस्या शालाया विद्यते । पतिमती पृथिवी। अन्तर्वदिति मतुब्निपात्यते, वत्व सिद्धम् । पतिवदिति वत्व निपात्यते, मतुप् सिद्ध । अन्तर्वत्नी गर्भिणी । पतिवत्नी जीवपति ॥

अन्तर्वत्पतिवतोस्तु मतुव्वत्वे निपातनात् ।
गर्भिण्या जीवपत्या च वा छन्दसि तु नुग्विधि ॥

सान्तर्वत्नी देवानुपैत् । सान्तर्वती देवानुपैत् । पतिवत्नी तरुणवत्सा । पतिवता तरुणवत्सा ॥

पत्युर्नो यज्ञसयोगे ॥ ३३ ॥

पतिशब्दस्य नकारादेश स्त्रिया विधीयते, ङीप् प्रत्ययस्तु नकारान्तत्वादेव सिद्ध , यज्ञसयोगे । यज्ञेन सयोगो यज्ञसयोग त्तसाधन वा फ(२)लग्रहीतृत्वाद्वा। यजमानस्य पत्नी । पत्नि वाच यच्छ । यज्ञसयोग इति किम् ? ग्रामस्य पतिरिय ब्राह्मणी । कथ वृषलस्य पत्नी ? उपमानाद्भविष्यति ॥

विभाषा सपूर्वस्य ॥ ३४ ॥

पत्युर्न इति वर्त्तते । पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्यानुपर्जनस्य स्त्रिया विभाषा नकारादेशो भवति, ङीप् तु लभ्यत एव । वृद्धपति । वृद्धपत्नी । स्थूलपति ।

(१) 'आयक्रता आयक्रीत भाषायाम् सुमङ्गली सुमङ्गलेति भाषायाम् । भेषजी । भेषजेति भाषायाम् इति उदाहरणप्रत्युदाहरणविदिश्यन्य कश्चित्कचिदुपलभ्यते पदमञ्जर्या त्वेतेषा व्याख्यान दृश्यते ॥ (२) 'तत्फले' ति न्यासपाठ ।

स्थूलपली। धर्मार्थविभागेयमयज्ञसंयोगत्वात्। सपूर्वस्येति किम्? पतिरियं ब्राह्मणी ग्रामस्य॥

नित्यं सपत्न्यादिषु ॥ ३५ ॥

सपत्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप् तु लभ्यत एव। पूर्वेण विकल्पे प्राप्ते वचनम्। नित्यग्रहणं विस्पष्टार्थम्। समानः पतिरस्याः सपत्नी। एकपत्नी। समानादिष्विति वक्तव्ये समानस्य सभावार्थं वचनम्। समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र। दासाच्छन्दसि॥

पूतक्रतोरै च ॥ ३६ ॥

पूतक्रतुशब्दस्य स्त्रियामैकारश्चान्तादेशो भवति ङीप् च प्रत्ययः। पूतक्रतो स्त्री पूतक्रतायी। अथ एते योगाः पुयोगप्रकरणे द्रष्टव्याः। यया हि पूताः क्रतवः पूतक्रतुः सा भवति॥

वृषाकप्यग्निकुसितकुसीदानामुदात्तः ॥ ३७ ॥

वृषाकप्यादीनामुदात्त ऐकारादेशो भवति स्त्रियां ङीप् च प्रत्ययः। वृषाकपिशब्दो मध्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम्। वृषाकपेः स्त्री वृषाकपायी। अग्नायी। कुसितायी। कुसीदायी। पुयोग इत्येव, वृषाकपिः स्त्री॥

मनोरौ वा ॥ ३८ ॥

ऐ, उदात्त इति च वर्तते। मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति औकारश्चान्तादेश ऐकारश्चोदात्तः। वाग्रहणेन द्वावपि विकल्प्येते, तेन त्रैरूप्यं भवति—मनो स्त्री मनायी, मनावी, मनुः। मनुशब्द आद्युदात्तः॥

वर्णादनुदात्तात्तोपधात्तो नः ॥ ३९ ॥

वेति वर्तते। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात्तकारोपधाद्वा ङीप् प्रत्ययो भवति, तकारस्य नकारादेशो भवति। एता। एनी। श्येता। श्येनी। हरिता। हरिणी। सर्व एते आद्युदात्ताः, "वर्णानां तणतिनितान्तानाम्" इति वचनात्। वर्णादिति किम्? प्रकृ(१)ता। प्रकृता। गतिस्वरेणाद्युदात्तः। अनुदात्तादिति किम्? श्वेता। घृतादित्वादन्तोदात्तः। तोपधादिति किम्? अन्यतो ङीपं वक्ष्यति। अत इत्येव, शितिर्ब्राह्मणी। ॐपिशङ्गादुपसंख्यानम्ॐ। पिशङ्गी। ॐअसितपलितयोः प्रतिषेधः ॐ। असिता। पलिता। ॐछन्दसि क्नमित्येकेॐ। असिक्नी। पलिक्नी। भाषायामपीष्यते—गतो गणस्तूर्णमसिक्निकानाम्॥

अन्यतो ङीष् ॥ ४० ॥

वेति निवृत्तं, वर्णादनुदात्तादिति वर्तते, तोपधादेतदन्यत्वम्। वर्णवाचिनः प्राति-

(१) "प्रकृते"ति न्यासपाठः।

पदिकादनुदात्तान्तात् स्त्रियां ङीप् प्रत्ययो भवति। स्वरे विशेषः। सारङ्गी। कल्माषी। शबली। वर्णादित्येव, खट्वा। अनुदात्तादित्येव, कृष्णा। कपिला॥

पिद्गौरादिभ्यश्च॥ ४१॥

ङीपनुवर्त्तते। पिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियां ङीप् प्रत्ययो भवति। शिल्पिनि ष्वुन्-नर्त्तकी। खनकी। रजकी। गौरादिभ्यः-गौरी। मत्सी। गौर। मत्स्य। मनुष्य। शृङ्ग। हय। गवय। मुकय। ऋष्य। पुट। द्रुण। द्रोण। हरिण। कण। पटर। उकण। आमलक। कुवल। बदर। बिम्ब। तर्कार। शर्कार। पुष्कर। शिखण्ड। सुषम। सलन्द। गडुज। आनन्द। सृपाट। सृगेठ। आढक। शष्कुल। सूर्म। सुर। सूर्य्य। पूष। मूष। घातक। सकलूक। सल्लक। मालक। मालत। साल्वक। वेतस। अतस। पृस। मह। मठ। छेद। श्वन्। तक्षन्। अनडुही। अनड्वाही। एषणः करणे। देह। काकादन। गवादन। तेजन। रजन। लवण। पान। मेध। गौतम। आयस्थूण। भौरि। भौलिकि। भौलिङ्गि। औद्गाहमानि। आलिङ्गि। आपिच्छिक। आरट। टोट। नट। नाट। मूलाट। शातन। पातन। पावन। आस्तरण। अधिकरण। एत। अधिकार। आग्रहायणी। प्रत्यवरोहिणी। सेचन। ॐसुमङ्गलात्संज्ञायाम्ॐ। सुन्दर। मण्डल। पट। पिण्ड। विटक। कुर्द। गूर्द। पाण्ट। लोफाण्ट। कन्दर। कन्दल। तरुण। तलुन। बृहत्। महत्। सौधर्म्म। रोहिणी, नक्षत्रे। रेवती, नक्षत्रे। विकल। निष्कल। पुष्कल। ॐकटाच्छ्रोणिवचने(१)ॐ। पिप्पल्यादयश्च। पिप्पली। हरीतकी। कोशातकी। शमी। करीरी। पृथिवी। क्रोष्ट्री। मातामह। पितामह। मातामहपितामहयोः "मातरि पिच्च" इति पित्वादेव सिद्धे ज्ञापनार्थं वचनम्-अनित्यः पिल्लक्षणो ङीषिति, तेन दंष्ट्रेत्युपपन्नं भवति॥

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु॥ ४२॥

जानपदादिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु वृत्त्यादिष्वर्थेषु यथासंख्यं ङीष् प्रत्ययो भवति। जानपदी भवति वृत्तिश्चेत्, जानपदी अन्या। स्वरे विशेषः। उत्सादिपाठादञि कृते ङीपाद्युदात्तत्वं भवति। कुण्डी भवति अमत्रं चेत्, कुण्डाऽन्या। गोणी भवत्यावपनं चेत्, गोणाऽन्या। स्थली भवति अकृत्रिमा चेत्, स्थलाऽन्या। भाजी भवति श्राणा चेत् पक्वेत्यर्थः, भाजाऽन्या। नागी भवति स्थौल्यं चेत्, नागाऽन्या। नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापम्। जातिवचनात्तु जातिलक्षणो ङीषेव भवति—नागी। काली भवति वर्णश्चेत्, कालाऽन्या।

(१) कुत्रचित् अधिकाः पञ्चशब्दा ग्रन्थे दरीदृश्यन्ते। ते च यथा—पिङ्गल। भट्ट। दहन। नन्द। काकण इति।

नीली भवति अनाच्छादनं चेत्, नीलाऽन्या। न च सर्वस्मिन्ननाच्छादन इष्यते, किं तर्हि ? नीलादोषधौ, प्राणिनि च। नीली ओषधिः, नीली गौः, नीली वडवा। सञ्ज्ञायां वा। नीली। नीला। कुशी भवत्ययोविकारश्चेत्, कुशाऽन्या। कामुकी भवति मैथुनेच्छा चेत्, कामुकाऽन्या। मैथुनेच्छावती भण्यते, नेच्छामात्रम्। कवरी भवति केशवेशश्चेत्, कवराऽन्या॥

## शोणात् प्राचाम् ॥ ४३ ॥

शोणशब्दात्प्राचामाचार्याणां मतेन स्त्रियां ङीष् प्रत्ययो भवति। शोणी, शोणा वडवा॥

## वोतो गुणवचनात् ॥ ४४ ॥

गुणमुक्तवान् गुणवचनः। गुणवचनात्प्रातिपदिकाद् उकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति। पट्वी, पटुः। मृद्वी, मृदुः। उत इति किम् ? शुचिरियं ब्राह्मणी। गुणवचनादिति किम् ? आखुः। ॐखरुसंयोगोपधात्प्रतिषेधो वक्तव्यःॐ। खरु(१)रियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी॥

सत्त्वे निविशतेऽपैति पृथक् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

## बह्वादिभ्यश्च ॥ ४५ ॥

बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति। बहुः, बह्वी। बहु। पद्धति। अङ्कति। अञ्चति। अंहति। वहति। शकटि। शक्तिः शस्त्रे। शारि। वारि। गति। अहि। कपि। मुनि। यष्टि। ॐइतः प्राण्यङ्गात्ॐ। ॐकृदिकारादक्तिनःॐ। ॐसर्वतोऽक्तिन्नर्थादित्येकेॐ। चण्ड। अराल। कमल। कृपाण। विकट। विशाल। विशङ्कट। भरुज। ध्वज। ॐचन्द्रभागान्नद्याम्ॐ। कल्याण। उदार। पुराण। अहन्। बहुशब्दो गुणवचन एव, तस्येह पाठ उत्तरार्थः॥

## नित्यं छन्दसि ॥ ४६ ॥

बह्वादिभ्यश्छन्दसि विषये नित्यं स्त्रियां ङीष् प्रत्ययो भवति। बह्वीषु हित्वा प्रपिबन्। बह्वी नाम ओषधी भवति। नित्यग्रहणमुत्तरार्थम्॥

## भुवश्च ॥ ४७ ॥

छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति। विभ्वी च। प्रभ्वी च। सम्भ्वी च(२)। इह कस्मान्न भवति स्वयम्भूः ? उत इति तपरकरणमनुवर्त्तते। ह्रस्वादेवेय पञ्चमी। "भुव" इति सौत्रो निर्देशः॥

(१) खरु—कन्या पतिंवरेति निघण्टुः। (२) क्वचिदुपलभ्यमानः "शम्भ्वी" इति शब्दः पाठरूपेण ज्ञातव्यः।

पुंयोगादाख्यायाम् ॥ ४८ ॥

पुंसा योगः पुंयोगः। पुंयोगाद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्त्तते पुंस आख्याभूतं तस्माद् ङीष् प्रत्ययो भवति। गणकस्य स्त्री गणकी। महामात्री। प्रष्ठी। प्रचरी। पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एते, तद्योगात्स्त्रियां वर्त्तन्ते। पुंयोगादिति किम्? देवदत्ता। यज्ञदत्ता। आख्याग्रहणं किम्? परिसृष्टा (१) प्रजाता। पुंयोगादेते शब्दाः स्त्रियां वर्त्तन्ते न तु पुमांसमाचक्षते। ॐगोपालिकादीनां प्रतिषेधः ॐ। गोपालकस्य स्त्री गोपालिका। ॐसूर्याद्देवतायां चाब्वक्तव्यः ॐ। सूर्यस्य स्त्री देवता सूर्या। देवतायामिति किम्? सूरी ॥

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥४९॥

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुक्चागमः। येषामत्र पुंयोग एवेष्यते तेषामानुगागममात्रं विधीयते, प्रत्ययस्तु पूर्वेणैव सिद्धः। अन्येषां तूभयं विधीयते। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। ॐहिमारण्ययोर्महत्त्वेॐ। महद्धिमं हिमानी। महदरण्यमरण्यानी। ॐयवाद्दोषेॐ। दुष्टो यवो यवानी। ॐयवनाल्लिप्याम्ॐ। यवनानां लिपिर्यवनानी। ॐउपाध्यायमातुलाभ्यां वाॐ। उपाध्यायी। उपाध्यायानी। मातुली। मातुलानी। ॐआचार्यादणत्वं चॐ। आचार्यानी। आचार्या। ॐअर्यक्षत्रियाभ्यां वाॐ। अर्याणी। अर्या। क्षत्रियाणी। क्षत्रिया। विना पुंयोगेन स्वार्थ एवायं विधिः। पुंयोगे तु ङीषैव भवितव्यम्। अर्यी। क्षत्रियी। ॐमुद्गलाच्छन्दसि लिच्चॐ। रथीरभून्मुद्गलानी गविष्टौ ॥

क्रीतात् करणपूर्वात् ॥ ५० ॥

करणं पूर्वमस्मिन्निति करणपूर्वं प्रातिपदिकम्। क्रीतशब्दान्तात्प्रातिपदिकात्करणपूर्वात्स्त्रियां ङीष् प्रत्ययो भवति। वस्त्रेण क्रीयते सा वस्त्रक्रीती। वसनक्रीती। *करणपूर्वादिति किम्? सुक्रीता। दुष्क्रीता। इह कस्मान्न भवति—*

"सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी।" इति?

टाबन्तेन समासः, अत इति चानुवर्त्तते। गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति बहुलं तदुच्यते, "कर्तृकरणे कृता बहुलम्" इति ॥

क्तादल्पाख्यायाम् ॥ ५१ ॥

करणपूर्वादित्येव। करणपूर्वात्प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भवति। अल्पाख्यायामिति समुदायोपाधिः। अभ्रविलिप्ती द्यौः। सूपविलिप्ती पात्री। अल्पसूपेत्यर्थः। अल्पाख्यायामिति किम्? चन्दनानुलिप्ता(२) ब्राह्मणी ॥

(१) परिसृष्टा प्रजाता—प्रसूतेत्यर्थः। एते शब्दा इति बहुवचनम् ये ये एवञ्जातीयाः शब्दास्तानपेक्ष्य वेदितव्यम्। (२) चन्दनानुलिप्ता—बहुलेन चन्दनेनानुलिप्तेत्यर्थः।

बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥

क्तादित्येव । बहुव्रीहिर्योऽन्तोदात्तस्तस्मात्स्त्रिया ङीप् प्रत्ययो भवति । स्वाङ्गपूर्वपदो बहुव्रीहिरिहोदाहरणम् । अस्वाङ्गपूर्वपदाद्विकल्पं वक्ष्यति । शङ्खभिन्नी । ऊरुभिन्नी । (१)गलकोत्कृत्ती । केशलूनी । बहुव्रीहेरिति किम् ? पादपतिता । ❀अन्तोदात्ताज्जातप्रतिषेधः❀ । दन्तजाता । स्तनजाता । ❀पाणिगृहीत्यादीनामर्थविशेषे❀ । पाणिगृहीती भार्या । यस्यास्तु कथंचित्पाणिर्गृह्यते पाणिगृहीता सा भवति । ❀अबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम् ❀ बहुकृता(२) । नञ्-अकृता । सु-सुकृता । काल-मासजाता । संवत्सरजाता । सुखादि-सुखजाता । दुःखजाता । "जातिकालसुखादिभ्योऽनाच्छादनात्" इत्येवमादिना बहुव्रीहिरन्तोदात्तस्तत्र ॥

अस्वाङ्गपूर्वपदाद्वा ॥ ५३ ॥

अन्तोदात्तात्, क्तान्तादित्यनुवर्त्तते । अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद् बहुव्रीहेः स्त्रियां वा ङीप् प्रत्ययो भवति । पूर्वेण नित्ये प्राप्ते विकल्प उच्यते । शार्ङ्गजग्धी, शार्ङ्गजग्धा । पलाण्डुभक्षिती, पलाण्डुभक्षिता । सुरापीती, सुरापीता । अस्वाङ्गपूर्वपदादिति किम् ? शङ्खभिन्नी । ऊरुभिन्नी । अन्तोदात्तादित्येव-वस्त्रच्छन्ना । वसनच्छन्ना । ❀बहुलं संज्ञाछन्दसोरिति वक्तव्यम्❀ । प्रवृद्धविलूनी । प्रवृद्धविलूना । प्रवृद्धा चासौ विलूना चेति, नायं बहुव्रीहिः ॥

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥

बहुव्रीहेः, क्तान्तादन्तोदात्तादिति सर्वं निवृत्तम् । वाग्रहणमनुवर्तते । स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात् प्रातिपदिकात्स्त्रियां वा ङीप् प्रत्ययो भवति । चन्द्रमुखी, चन्द्रमुखा । अतिक्रान्ता केशान् अतिकेशी, अतिकेशा माला । स्वाङ्गादिति किम् ? बहुयवा । उपसर्जनादिति किम् ? अशिखा । असंयोगोपधादिति किम् ? सुगुल्फा । सुपार्श्वा । ❀अङ्गगात्रकण्ठेभ्य इति वक्तव्यम्❀ । मृद्वङ्गी । मृद्वङ्गा । सुगात्री । सुगात्रा । स्निग्धकण्ठी, स्निग्धकण्ठा ॥

अद्रवं मूर्त्ति(३)मत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं चेत्तेन(४) चेत्तत्तथायुतम् ॥

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ५५ ॥

स्वाङ्गाच्चोपसर्जनादित्येव । बह्वच्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम् । तदनन्तर्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव । नासिकाद्यन्तात्प्रातिपदिकात्स्त्रियां वा ङीप् प्रत्ययो भवति । तुङ्गनासिकी, तुङ्गनासिका । तिलोदरी, तिलोदरा ।

(१) गलोत्कृत्तीति प० पा० ॥ (२) बहुकृता—बहूनि कृतानि यनयेति विग्रहः ।
(३) मूर्त्तिमदिति—असर्वगतद्रव्यपरिमाणं मूर्त्तिः । स्पर्शवद्द्रव्यपरिमाणं मूर्त्तिरित्यन्ये ।
(४) "तद्वदे"ति न्या० पा० ॥

बिम्बोष्ठी, बिम्बोष्ठा । दीर्घजङ्घी, दीर्घजङ्घा । समदन्ती, समदन्ता । चारुकर्णी, चारुकर्णा । तीक्ष्णश्रृङ्गी, तीक्ष्णश्रृङ्गा । ॐपुच्छाच्चेति वक्तव्यम्ॐ । कल्याणपुच्छी, कल्याणपुच्छा । ॐकबरमणिविषशरेभ्यो नित्यम्ॐ । कबरपुच्छी(१) । मणिपुच्छी । विषपुच्छी । शरपुच्छी । ॐउपमानात्पक्षाच्च पुच्छाच्चॐ । उलूकपक्षी सेना । उलूकपुच्छी शाला ॥

न क्रोडादिबह्वचः ॥ ५६ ॥

स्वाङ्गादिति ङीष् प्राप्तः प्रतिषिध्यते । क्रोडाद्यन्ताद् बह्वजन्ताच्च प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो न भवति । कल्याणक्रोडा(२) । कल्याणखुरा । कल्याणोखा । कल्याणबाला । कल्याणशफा । कल्याणगुदा । कल्याणघोणा । कल्याणमुखा । क्रोडादिराकृतिगणः । सुभगा । सुगला । बह्वचः खल्वपि-पृथुजघना । महाललाटा ॥

सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥

स्वाङ्गाच्चोपसर्जनादिति नासिकोदरौष्ठजङ्घेति च प्राप्तो ङीष्प्रतिषिध्यते । सह नञ् विद्यमान इत्येवंपूर्वात्प्रातिपदिकात्स्त्रियां ङीष् प्रत्ययो न भवति । सकेशा । अकेशा । विद्यमानकेशा । सनासिका । अनासिका । विद्यमाननासिका ॥

नखमुखात् संज्ञायाम् ॥ ५८ ॥

नखमुखान्तात् प्रातिपदिकात् संज्ञायां स्त्रियां विषये ङीष् प्रत्ययो न भवति । शूर्पणखा । वज्रणखा । गौरमुखा । कालमुखा । संज्ञायामिति किम् ? ताम्रनखी कन्या । चन्द्रमुखी ॥

दीर्घजिह्वी च च्छन्दसि ॥ ५९ ॥

दीर्घजिह्वी इति छन्दसि विषये निपात्यते । संयोगोपधत्वादप्राप्तो ङीष् विधीयते । दीर्घजिह्वी वै देवानां हव्यमलेट् । चकारः संज्ञानुकर्षणार्थः । दीर्घजिह्वीति निपातनं नित्यार्थम् ॥

दिक्पूर्वपदान्ङीप् ॥ ६० ॥

स्वाङ्गाच्चोपसर्जनादित्येवमादिविधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यते । यत्र ङीष् विहितस्तत्र तदपवादः । दिक्पूर्वपदात्प्रातिपदिकाद् ङीप् प्रत्ययो भवति । स्वरे विशेषः । प्राङ्मुखी(३), प्राङ्मुखा । प्राङ्नासिकी, प्राङ्नासिका । इह न भवति-प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघना ॥

( १ ) कबरपुच्छा—कबरं पुच्छमस्याः सा मयूरी । मणिपुच्छी, विषपुच्छी–मणिः पुच्छमस्याः, विषं पुच्छमस्याः सा वृश्चिकी । ( २ ) "कल्याणक्रोडे"ति । अश्वानामुरः-क्रोडा, स्त्रीलिङ्गोऽयम् । ( ३ ) प्राङ्मुखीति—प्राच्या प्रत्यमिनि न्युत्पत्यावस्ताति, तस्यान्वेरिति लुक्, 'लुकद्विते'ति ङीब्लुक्, इति प्राक्, प्राङ् मुखं यस्याः सा प्राङ्मुखी ।

वाहः ॥ ६१ ॥

ङीपेव स्वर्यते न ङीप्। वहेरयं ण्विप्रत्ययान्तस्य निर्देशः। सामर्थ्यात्तदन्तविज्ञानम्। वाहन्तात्प्रातिपदिकात्स्त्रियां ङीप् प्रत्ययो भवति। दित्यौही। प्रष्ठौही॥

सख्यशिश्वीति भाषायाम् ॥ ६२ ॥

सखी, अशिश्वी इत्येतौ शब्दौ ङीबन्तौ भाषायां निपात्येते। सखीय मे ब्राह्मणी। नास्याः शिशुरस्तीति अशिश्वी। भाषायामिति किम्? सखा सप्तपदी भव। अशिश्वीमिव मामयं शिशुरभिमन्यते॥

जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥

जातिवाचि यत्प्रातिपदिकं न च स्त्रियामेव नियतमस्त्रीविषयमयकारोपधं च तस्मात् स्त्रियां ङीप् प्रत्ययो भवति॥

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह॥

कुक्कुटी। सूकरी(१)। ब्राह्मणी। वृषली। नाडायनी। चारायणी। कठी। बह्वृची। जातेरिति किम्? मुण्डा। अस्त्रीविषयादिति किम्? मक्षिका। अयकारोपधादिति किम्? क्षत्रिया। *योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः*। हयी। गवयी। मुकयी। मत्सी। मनुषी॥

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ६४ ॥

पाकाद्युत्तरपदाज्जातिवाचिनः प्रातिपदिकात्स्त्रियां ङीप् प्रत्ययो भवति। स्त्रीविषयत्वादेतेषां पूर्वेणाप्राप्तः प्रत्ययो विधीयते। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। पुष्पफलमूलोत्तरपदात्तु यतो नेष्यते तदजादिषु पठ्यते। 'सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्'। 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात्'। 'मूलान्नञः' इति॥

इतो मनुष्यजातेः ॥ ६५ ॥

इकारान्तात्प्रातिपदिकान्मनुष्यजातिवाचिनः स्त्रियां ङीप् प्रत्ययो भवति। अवन्ती। कुन्ती। दाक्षी। प्लाक्षी। इत इति किम्? विट्। दरत्। मनुष्यग्रहणं किम्? तित्तिरिः। जातेरिति वर्त्तमाने पुनर्जातिग्रहणं योपधादपि यथा स्यात्—औदमेयी(२)। *इञ उपसंख्यानमजात्यर्थम्*। सौतङ्गमी। मौनचित्ती। सुतङ्गमादिभ्यश्चातुरर्थिक इञ् न जातिः॥

ऊङुतः ॥ ६६ ॥

मनुष्यजातेरिति वर्त्तते। उकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात्स्त्रियामूङ्

(१) अत्र 'मयूरी'ति व्यासेऽधिकमुदाहरणम्। (२) औदमेयीति—उदक मेयमस्य उदमेयस्तस्यापत्यम् स्त्री औदमेयी। उदकस्योदभाव।

प्रत्ययो भवति । कुरूः । ब्रह्मबन्धूः । वीरबन्धूः (१) । ङकारो "नोङ्धात्वोः" इति विशेषणार्थः । दीर्घोच्चारण कपो बाधनार्थम् । अयोपधादित्येतदत्रापेक्ष्यते । अध्वर्युर्ब्राह्मणी । ॐअप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्ॐ । अलाबूः । कर्कन्धूः । अप्राणिग्रहण किम् ? कृकवाकुः । अरज्ज्वादीनामिति किम् ? रज्जुः । हनुः ।

बाह्वन्तात् संज्ञायाम् ॥ ६७ ॥

बाहुशब्दान्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति । भद्रबाहूः । जालबाहूः । संज्ञायामिति किम् ? वृत्तौ बाहू यस्याः सा वृत्तबाहुः ॥

पङ्गोश्च ॥ ६८ ॥

पङ्गुशब्दात् स्त्रियामूङ् प्रत्ययो भवति । पङ्गूः । ॐश्वशुरस्योकाराकारलोपश्च वक्तव्यः ॐ । श्वश्रूः ॥

ऊरूत्तरपदादौपम्ये ॥ ६९ ॥

ऊरूत्तरपदात् प्रातिपदिकादौपम्ये गम्यमाने स्त्रियामूङ् प्रत्ययो भवति । कदलीस्तम्भोरूः । नागनासोरूः । करभोरूः । औपम्य इति किम् ? वृत्तोरुः स्त्री ॥

संहितशफलक्षणवामादेश्च ॥ ७० ॥

संहित शफ लक्षण वाम इत्येवमादेः प्रातिपदिकादूरूत्तरपदात् स्त्रियामूङ् प्रत्ययो भवति । अनौपम्यार्थ आरम्भः । संहितोरूः (२) । शफोरूः । लक्षणोरूः । वामोरूः । ॐसहितसहाभ्यां चेति वक्तव्यम्ॐ । सहितोरूः । सहोरूः ॥

कद्रुकमण्डल्वोश्छन्दसि ॥ ७१ ॥

कद्रुशब्दात्कमण्डलुशब्दाच्च छन्दसि विषये स्त्रियामूङ् प्रत्ययो भवति । कद्रूश्च वै सुपर्णी च । मा स्म कमण्डलूं शूद्राय दद्यात् । छन्दसीति किम् ? कद्रुः । कमण्डलुः । ॐगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्ॐ । गुग्गुलूः । मधूः । जतूः । पतयालूः ॥

संज्ञायाम् ॥ ७२ ॥

कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियामूङ् प्रत्ययो भवति । अच्छन्दोर्थं वचनम् । कद्रूः । कमण्डलूः । संज्ञायामिति किम् ? कद्रुः । कमण्डलुः ॥

शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति । शार्ङ्गरवी । कापटवी । अञन्तेभ्यः—बैदी । और्वी । जातिग्रहणं चेहानुवर्त्तते तेन जातिलक्षणो ङीषनेन बाध्यते, न पुंयोगलक्षणः । बैदस्य स्त्री बैदी । शार्ङ्गरव । कापटव । गौगुलव । ब्राह्मण । गौतम । एतेऽणन्ताः । कामण्डलेय । ब्राह्मकृतेय । आनिचेय । आनिधेय । आशोकेय । एते ढगन्ताः । वात्स्यायन । मौञ्जायन । एतौ फगन्तौ जाति ।

(१) 'वीरबन्धूः' इति प० पा० । (२) सहितोरूः—सांहितोरूरित्यर्थः । सहोरूः—सहते इति सहौ, तादृशावूरू यस्याः सा ।

कैकसेयो ढगन्तः । काव्यशैव्यौ यञन्तौ । एहि, पर्येहि । कृदिकारान्तौ । आश्मरथ्यो यञन्त । औदपानः । उदपानशब्दः शुण्डिकादिगणान्तः प्रयोजयति । अराल । चण्डाल । वतण्ड । जातिः । ※भोगवद्गौरिमतोः सञ्ज्ञायाम् घादिषु नित्यं ह्रस्वार्थम्※ । ※नृनरयोर्वृद्धिश्च※ । अत्र यथायोग ङीबादिषु प्राप्तेषु ङीन् विधीयते ॥

यङश्चाप् ॥ ७४ ॥

यङन्तात्प्रातिपदिकात्स्त्रियां चाप् प्रत्ययो भवति । ष्यङः ष्यङश्च सामान्यग्रहणमेतत् । आम्बष्ठ्या । सौवीर्या । कौसल्या । ष्यङ्–कारीषगन्ध्या, वाराह्या, वालाक्या । ※पाच्च यत्र※ । पात्परो यो यञ् तदन्ताच्चाप् वक्तव्यः । शार्कराक्ष्या । पौतिमाष्या । गौकक्ष्या । उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन वा भविष्यति ॥

आवट्याच्च ॥ ७५ ॥

अवटशब्दो गर्गादिः । तस्माद्यञि कृते ङीपि प्राप्ते वचनमेतत् । आवट्याच्च स्त्रियां चाप् प्रत्ययो भवति । आवट्या । प्राचां ष्फ एव, सर्वत्रग्रहणात् । आवट्यायनी ॥

तद्धिताः ॥ ७६ ॥

अधिकारोऽयम् । आपञ्चमाध्यायपरिसमाप्तेर्यानित ऊर्ध्वमनुक्रमिष्यामस्तद्धितसंज्ञास्ते वेदितव्याः । वक्ष्यति–"यूनस्तिः" युवतिः । बहुवचनमनुक्ततद्धितपरिग्रहार्थम्–"पृथिव्या ञाञौ" "चतुर्वर्णादिभ्यः स्वार्थे ष्यञ्" इत्येवमादि लब्धं भवति । तद्धितप्रदेशाः "कृत्तद्धितसमासाश्च" इत्येवमादयः ॥

यूनस्तिः ॥ ७७ ॥

युवन्शब्दात्प्रातिपदिकात्स्त्रियां तिः प्रत्ययो भवति, स च तद्धितसञ्ज्ञो भवति । ङीपोऽपवाद । युवतिः ॥

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥

गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति । 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यणिञोरेव विज्ञायते, न समुदायस्य । ङकारः सामान्यग्रहणार्थः । षकारस्तदविघातार्थः–"यङश्चाप्" इति । उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमक्षरमाह । उत्तमस्य समीपमुपोत्तमं, गुरु उपोत्तमं यस्य तद्गुरूपोत्तमं प्रातिपदिकम् । करीषस्येव गन्धोऽस्य करीषगन्धिः, कुमुदगन्धि, "तस्यापत्यम्" इत्यण्, तस्य ष्यङादेशः–कारीषगन्ध्या, कौमुदगन्ध्या । वराहस्यापत्यम्, "अत इञ्", वाराहिः, तस्य ष्यङादेशः–वाराह्या । वालाक्या । अणिञोरिति किम् ? ऋतभागस्यापत्य, विदादित्वादञ्, आर्तभागी । गुरूपोत्तमादिकं सर्वमस्तीति न त्वणिञौ । "टिड्ढाणञ्"(१) इति ङीबेव भवति । अनार्षयोरिति

(१) "टिड्ढाणञित्यादि"–प्राप्तिमात्राभिप्रायेणैतदुक्तम्, अत्र हि जातित्वाच्छार्ङ्गरवादित्वाद्वा ङीना भाव्यम् ।

किम् ? वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोरिति किम् ? औपगवी । कापटवी । गोत्र इति किम् ? "तत्र जाता" आहिच्छत्री, कान्यकुब्जी ॥

गोत्रावयवात् ॥ ७९ ॥

अणिञोरित्येव । गोत्रावयवा गोत्राभिमता कुलाख्या पुणिकभुणिकमुखरप्रभृत यस्ततो गोत्रे विहितयोरणिञो स्त्रियां ष्यङादेशो भवति । अगुरूपोत्तमार्थ आरम्भः । पौणिक्या । भौणिक्या । मौखर्या । येषा त्वनन्तरापत्येऽपीष्यते दैवदत्या याज्ञदत्येति, ते क्रौड्यादिषु द्रष्टव्या ॥

क्रौड्यादिभ्यश्च ॥ ८० ॥

क्रोडि इत्येवमादिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवति । अगुरूपोत्तमार्थ आरम्भ, अनणिञर्थश्च । क्रौड्या । लाड्या । क्रौडि । लाडि । व्याडि । आपिशलि । आपक्षिति । चौपयत । चैटयत । शैकयत । वैल्वयत । वैकल्पयत । सौधातकि । सूत, युवत्याम् । भोज, क्षत्रिये । भौरिकि । भौलिकि । शाल्मलि । शालास्थलि । कापिष्ठलि । गौल क्य । गौकक्ष्य ॥

(१)दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ॥ ८१ ॥

दैवयज्ञि शौचिवृक्षि सात्यमुग्रि काण्ठेविद्धि इत्येतेषामन्यतरस्यां ष्यङ् भवति । इञन्ता एते, गोत्रग्रहण च नानुवर्तते । तेन उभयत्र विभाषेयम् । गो पूर्वेण ष्यङादेश प्राप्तो विकल्प्यते । अगोत्रे त्वनन्तरेऽपत्ये पक्षे विधीयते । तेन "इतो मनुष्यजाते" इति ङीषेव भवति । दैवयज्ञ्या, दैवयज्ञी । शौचिवृक्ष्या, शौचि वृक्षी । सात्यमुग्र्या, सात्यमुग्री । काण्ठेविद्ध्या, काण्ठेविद्धी ॥

समर्थानां प्रथमाद्वा ॥ ८२ ॥

त्रयमप्यधिक्रियते—समर्थानामिति प्रथमादिति वा चेति च, स्वार्थिकप्रत्यय- विधिमयमधिकार, "प्राग्दिशो विभक्तिः" इति यावत् । स्वार्थिकेषु नास्ति, विकल्पोऽपि तत्रानवस्थित । केचिन्नित्यमेव भवन्ति । लक्षणवाक्यानि—"त स्यापत्यं," "तेन रक्तं रागात्," "तत्र भवः" इत्येवमादीनि भविष्यन्ति । तेषु र्थे सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवतीति वेदितव्यम् । समर्थानां निर्धारणे षष्ठी । समर्थानां मध्ये प्रथम प्रत्ययप्रकृतित्वेन निर्धार्यते । तस्य न्य विशेषणार्थं, तदीय प्राथम्य विशेषणं विज्ञायते । उपगोरपत्यम्, औपगव । समर्थानामिति किम् ? कम्बलमुपगो, अपत्य देवदत्तस्य । प्रथमादिति किम् ? न्ताद्यथा स्यात् प्रथमान्तान्मा भूत् । वेति किम् ? वाक्यमपि यथा स्यात्—उपगो

(१) देवा यज्ञ यष्टया अस्य देवयज्ञ । शुचिवृक्षोऽस्य शुचिवृक्ष । सत्यमुग्र । कण्ठे,विध्नत्स्य कण्ठे वा विद्ध कण्ठेविद्ध ।

पत्यमिति। यद्येवं समासवृत्तिस्तद्धितवृत्त्या बाध्येत उपगवपत्यमिति? नैष दोषः। पूर्वसूत्रादन्यतरस्यांग्रहणमनुवर्त्तते, तेनैतदपि भविष्यति॥

प्राग्दीव्यतोऽण्॥ ८३॥

"तेन दीव्यति" इति वक्ष्यति। तदेकदेशो दीव्यच्छब्दोऽवधित्वेन गृह्यते, प्राग्दीव्यत्सशब्दनाद् यानित ऊर्ध्वमनुक्रमिष्यामोऽणूप्रत्ययस्तत्र भवतीति वेदितव्यम्। अधिकारः परिभाषा विधिर्वेति त्रिष्वपि दर्शनेष्वपवादविषयं परिहृत्याण् प्रवर्त्तते। वक्ष्यति- "तस्यापत्यम्"। औपगवः। कापटवः॥

अश्वपत्यादिभ्यश्च॥ ८४॥

अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेष्वण् प्रत्ययो भवति। पत्युत्तरपदाद् ण्य वक्ष्यति, तस्यापवादः। आश्वपतम्। शातपतम्। अश्वपति। शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। धान्यपति। पशुपति। धर्मपति। सभापति। प्राणपति। क्षेत्रपति (१)॥

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः॥ ८५॥

प्राग्दीव्यत इत्येव। दिति अदिति आदित्य इत्येतेभ्यः पत्युत्तरपदाच्च प्रातिपदिकात्प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति। दैत्यः। आदित्यः। आदित्यम्। पत्युत्तरपदात्-प्राजापत्यम्। सैनापत्यम्। ॐयमाच्चेति वक्तव्यम्ॐ। याम्यम्। ॐवाङ्मतिपितृमतां छन्दस्युपसंख्यानम्ॐ। वाच्यम्। मात्यम्। पैतृमत्यम्। ॐपृथिव्या ञाञौॐ। पार्थिवा। पार्थिवी। ॐदेवाद्यञञौॐ। दैव्यम्। दैवम्। ॐवहिषष्टिलोपश्चॐ। वाह्यः। ॐईकक्चॐ। वाहीकः। ॐईकम् छन्दसिॐ। वाहीकः। स्वरे विशेषः। टिलोपवचनमव्ययानां भमात्रे टिलोपस्यानित्यत्वज्ञापनार्थम्। आरातीयः। ॐस्थाम्नोऽकारॐ। अश्वत्थाम। ॐलोम्नोऽपत्येषु बहुषुॐ। उडुलोमाः। शरलोमाः। बहुष्विति किम्? औडुलोमिः। शारलोमिः। ॐसर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्ॐ। गव्यम्। अजादिप्रत्ययप्रसङ्ग इति किम्? गोभ्यो हेतुभ्य आगतं गोरूप्यम्। गोमयम्। ॐण्यादयोऽर्थविशेषलक्षणादपवादात्पूर्वविप्रतिषेधेनॐ। दितेरपत्यं, दैत्यः। वनस्पतीनां समूहो वानस्पत्यम्। कथं दैतेयः? दितिशब्दात् "कृदिकारादक्तिनः," 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीपं कृत्वा "स्त्रीभ्यो ढक्" क्रियते (२)लिङ्गविशिष्टपरिभाषा चाश्रिता॥

उत्सादिभ्योऽञ्॥ ८६॥

प्राग्दीव्यत इत्येव। उत्सादिभ्यः प्राग्दीव्यतीयेष्वर्थेष्वञ् प्रत्ययो भवति। अणस्तदपवादाना च बाधकः। औत्सः। औदपानः। उत्स। उदपान। विकर। विनोद।

(१) 'स्थानपति। यज्ञपति। धन्वपति। अधिपति। बन्धुपति"। एते शब्दा: कचिदेवाधिका'। (२) विषयतसामर्थ्यादेव टिलोपाभाव इत्यधिकं पुस्तकान्तरे।

महानद। महानस। महाप्राण। तरुण। तलुन। वष्कयाऽसे। धेनु। पृथिवी। पङ्क्ति। जगती। त्रिष्टुप्। अनुष्टुप्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। उदस्थान, देशे। पृष, दंशे। भल्लकीय। रथन्तर। मध्यंदिन। बृहत्। महत्। सत्वन्तु। सच्छब्दो मतुबन्त आगतनुम्को गृह्यते सत्वन्निति। कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुप्। सुवर्ण। देव। *ग्रीष्मादच्छन्दसीति वक्तव्यम्* इह मा भूत्-ग्रैष्मी त्रिष्टुप्। छन्दश्चेह वृत्तं गृह्यते, न वेद. ॥

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥

धान्यानां भवने इति वक्ष्यति। तस्य प्रागितयनेनैव संबन्ध । नाद्येऽर्थास्तेषु स्त्रीशब्दात् पुंस्शब्दाच्च यथाक्रमं नञ्स्नञौ प्रत्ययौ भवत.। स्त्रीषु भव, स्त्रैणम्। पौंस्नम्। स्त्रीणां समूह., स्त्रैणम्। पौंस्नम्। स्त्रीभ्य आगत, स्त्रैणम्। पौंस्नम्। स्त्रीभ्यो हित, स्त्रैणम्। पौंस्नम्। स्त्रियाः पुंवदिति ज्ञापकाद्भस्यार्थे न भवति योगापेक्ष च ज्ञापकमिति स्त्रीवदित्यपि सिद्धम् ॥

द्विगोर्लुगनपत्ये ॥ ८८ ॥

प्राग्दीव्यत इति वर्त्तते न भवनादिति। द्विगोरिति षष्ठी। द्विगोर्यः सबन्धी नि... त्त्वेन तद्धितः प्राग्दीव्यतीयोऽपत्यप्रत्ययं वर्जयित्वा तस्य लुग्भवति। पञ्चसु ... संस्कृतः पञ्चकपालः। दशकपालः। द्वौ वेदावधीते, द्विवेदः। त्रिवेदः। अनपत्य इ... किम्? द्वैदेवदत्तिः। त्रैदेवदत्तिः। प्राग्दीव्यत इत्येव, द्वैपारायणिकः। द्विगुनिमित्त... ज्ञानादिह न भवति, पञ्चकपालस्येदं पाञ्चकपालम्। अथवा ... द्विगोरिति स्थानषष्ठी। ननु च प्रत्ययादर्शनस्यैषा संज्ञा? सत्यमेतत्। उपचारेण ... लक्षणया द्विगुनिमित्तभूतः प्रत्यय एव द्विगुस्तस्य लुग्भवति। ...गुनिमित्तकोऽपि ... गुणकल्पनया कस्मान्न द्विगुरुच्यते पाञ्चकपालमिति? न तस्य द्विगुत्वं निमित्तम् इतरस्तु द्विगुत्वस्यैव निमित्तमित्यस्ति विशेषः। यद्येवमिह कथं पञ्चकपाल्यां संस्कृ... पञ्चकपाल इति? नैवात्र तद्धित उत्पद्यते, वाक्यमेव भवति. त्रैशब्द्यं हि पञ्चसु कपालेषु संस्कृत., पञ्चकपाल्यां संस्कृतः, पञ्चकपाल इति, तत्र द्वयोः ... समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति। अथेह कस्मान्न पञ्चभ्यो गर्गेभ्य आगतं, पञ्चगर्गरूप्यम्, पञ्चगर्गमयमिति? वेत्यनुवर्त्तते। सा व्यवस्थितविभाषा विज्ञायते ॥

गोत्रेऽलुगचि ॥ ८९ ॥

प्राग्दीव्यत इत्येव। "यस्कादिभ्यो गोत्रे" इत्यादिना येषां गोत्रप्रत्ययानां लुग् स्तेषामजादौ प्राग्दीव्यतीये विषयभूते प्रतिषिध्यते। गार्ग्याणां छात्रा गार्गीयाः वात्सीयाः। आत्रेयीयाः। खारपायणीयाः। गोत्र इति किम्? कौबलम्। बादरम् अचीति किम्? गर्गेभ्य आगतम्, गर्गरूप्यम्। गर्गमयम्। प्राग्दीव्यत इत्येव,

भ्यो हितम्, गार्गीयम्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोर लुक्। विदानामपत्यं युवा युवानौ वद, वैदौ। वेदशब्दात् अत इञि कृते तस्य च इञ "ण्यक्षत्रियार्षञितः" इति लुकि रूपम्। एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि। वैदस्य वैदयोर्वाऽपत्यं बहवो माणवका, विदा। नक्षत्राद् बहुषु पत्न।

## यूनि लुक् ॥ ९० ॥

प्राग्दीव्यत इति वर्त्तते, अचीति च। प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते बुद्धिस्थेऽनुत्पन्न एव युवप्रत्ययस्य लुग्भवति। तस्मिन्निवृत्ते सति यो यतः प्राप्नोति स ततो भवति। फाण्टाहृतस्यापत्यं फाण्टाहृतिः, तस्यापत्यं युवा, "फाण्टाहृतिमिमताभ्यां णफिञौ" फाण्टाहृतः, तस्य छात्रा इति विवक्षितेऽर्थे बुद्धिस्थे युवप्रत्ययस्य लुग्भवति, तस्मिन्निवृत्ते इञन्तं प्रकृतिरूपं सम्पन्नं तस्मात् "इञश्च" इत्यण् भवति— फाण्टाहृताः। भागवित्तस्यापत्यं, भागवित्तिः, तस्यापत्यं युवा, "वृद्धाट्ठक्सौवीरेषु बहुलम्" इति ठक्, भागवित्तिकः, तस्य छात्राः, पूर्ववद् युवप्रत्यये निवृत्ते 'इञश्च' इत्यण्, भागवित्ताः। तिकस्यापत्यं, 'तिकादिभ्यः फिञ्' तैकायनिः, तस्यापत्यं युवा, 'फेश्छ च' इति छः, तैकायनीयः, तस्य छात्राः, युवप्रत्यये निवृत्ते, "वृद्धाच्छः" तैकायनीयाः। कपिञ्जलादस्यापत्यं कापिञ्जलादिः, तस्यापत्यं युवा, "कुर्वादिभ्यो ण्य" कापिञ्जलाद्यः, तस्य छात्राः, ण्ये निवृत्ते, इञश्चेत्यण्, कापिञ्जलादाः। ग्लुचुकस्यापत्यं, "प्राचामवृद्धात् फिन् बहुलम्" इति ग्लुचुकायनिस्तस्यापत्यं युवा, प्राग्दीव्यतोऽण्, ग्लौचुकायनः, तस्य छात्राः, युवप्रत्यये निवृत्ते स एवाण्, ग्लौचुकायनाः। अचीत्येव, फाण्टाहृतरूप्यम्। फाण्टाहृतमयम्। प्राग्दीव्यत इत्येव, भागवित्तिकाय हितं, भागवित्तिकीयम् ॥

## फक्फिञोरन्यतरस्याम् ॥ ९१ ॥

यूनीत्येव। पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते। फक्फिञोर्युवप्रत्यययोः प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽन्यतरस्यां लुग्भवति। गर्गादिभ्यो यञि कृते "यञिञोश्च" इति फक्, गार्ग्यायणः तस्य छात्राः, गार्गीयाः, गार्ग्यायणीयाः। वात्सीयाः, वात्स्यायनीयाः। फिञः खल्वपि—यस्कस्यापत्यं, शिवादिभ्योऽण्, यास्कः, तस्यापत्यं युवा "अणो द्व्यचः" इति फिञ् यास्कायनिः, तस्य छात्राः यास्कीयाः। यास्कायनीयाः ॥

## तस्यापत्यम् ॥ ९२ ॥

अर्थनिर्देशोऽयं, पूर्वोत्तरैश्च प्रत्ययैरभिसम्बध्यते। तस्येति षष्ठीसमर्थादपत्यमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकृत्यर्थविशिष्टस्तद्धितार्थोऽपत्यमात्रञ्चेह गृह्यते। लिङ्गवचनादिकमन्यत् सर्वमविवक्षितम्। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ॥

भानोरपत्यं मानवः । श्यामगवः ॥

एको गोत्रे ॥ ९३ ॥

अपत्यं पौत्रप्रभृति गोत्रं, तस्मिन् विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्तिप्रसङ्गे नियमः क्रियते—गोत्रे एक एव प्रत्ययो भवति, सर्वेऽपत्येन युज्यन्ते । अपतनादपत्यं, योऽपि व्यवहितेन जनितः सोऽपि प्रथमप्रकृतेरपत्यं भवत्येव । गर्गस्यापत्यं, गार्गिः । गार्गेरपत्यं, गार्ग्यः । तत्पुत्रोऽपि गार्ग्यः । सर्वस्मिन् व्यवहितजनितेऽपि गोत्रापत्ये गर्गशब्दाद् यञेव भवतीति प्रत्ययो नियम्यते । अथवा गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययमुत्पादयतीति प्रकृतिर्नियम्यते । गार्ग्यः । नाडायनः ॥

गोत्राद्यून्यस्त्रियाम् ॥ ९४ ॥

अयमपि नियमः । यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति, न परमप्रकृत्यनन्तरयुवभ्यः । गार्ग्यस्यापत्यं युवा, गार्ग्यायणः । वात्स्यायनः । दाक्षायणः । प्लाक्षायणः । औपगविः । नाडायनिः । अस्त्रियामिति किम् ? दाक्षी । प्लाक्षी । किं पुनरत्र प्रतिषिध्यते ? यदि नियमः, स्त्रियाम् अनियमः प्राप्नोति । अथ युवप्रत्ययः, स्त्रिया गोत्रप्रत्ययेनाभिधानं न प्राप्नोति, गोत्रसञ्ज्ञाया युवसञ्ज्ञया बाधितत्वात् । तस्माद् योगविभागः कर्तव्यः—"गोत्राद्यूनि प्रत्ययो भवति", ततो "अस्त्रियाम्" । यूनि यदुक्तं तत् स्त्रिया न भवति, युवसञ्ज्ञैव प्रतिषिध्यते, तेन स्त्री गोत्रप्रत्ययेनाभिधास्यते ।

अत इञ् ॥ ९५ ॥

तस्यापत्यमित्येव । अकारान्तात् प्रातिपदिकादिञ् प्रत्ययो भवति । अणोऽपवादः । दक्षस्यापत्यं, दाक्षिः । तपरकरणं किम् ? शुभंयाः, कीलालपाः, इत्यतो मा भूत् । कथं "मदीयता दाशरथाय मैथिली" ? शेषविवक्षया भविष्यति ॥

बाह्वादिभ्यश्च ॥ ९६ ॥

बाहु इत्येवमादिभ्यः शब्देभ्योऽपत्ये इञ् प्रत्ययो भवति । बाहविः । औपबाहविः । अनकारार्थ आरम्भः । क्वचिद्बाधकबाधनार्थः । बाहु । उपबाहु । विवाकु । शिवाकु । वटाकु । उपबिन्दु । वृक । चूडाला । मूषिका । बलाका । भगला । छगला । ध्रुवका । धुवका । सुमित्रा । दुर्मित्रा । पुष्करसद् । अनुहरत् । देवशर्मन् । अग्निशर्मन् । कुनामन् । सुनामन् । पञ्चन् । सप्तन् । अष्टन् । *अमितौजसः सलोपश्च । उदञ्चु । शिरस् । शराविन् । क्षेमवृद्धिन् । शृङ्खलातोदिन् । खरनादिन् । नगरमर्दिन् । प्राकारमर्दिन् । लोमन् । अजीगर्त । कृष्ण । सलक । युधिष्ठिर । अर्जुन । साम्ब । गद ।

प्रद्युम्न। राम(१)। *उदङ्कः संज्ञायाम्। *संभूयोऽम्भसोः सलोपश्च। *वाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः। बाहुर्नाम कश्चित्तस्यापत्यं, बाहवः। *सबन्धिशब्दानां च तत्सदृशात् प्रतिषेधः। श्वशुरस्यापत्यं श्वाशुरिः(२)। चकारोऽनुक्तसमुच्चयार्थः, आकृतिगणतामस्य बोधयति। जाम्बिः। ऐन्द्रशर्मिः। आजधेनविः। आजवन्धविः। औडुलोमिः॥

## सुधातुरकङ् च ॥ ९७ ॥

सुधातृशब्दादपत्ये इञ् प्रत्ययो भवति, तत्संनियोगेन च तस्याऽकङादेशो भवति। सुधातुरपत्यं, सौधातकिः। *व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम्। वैयासकिः। वारुडकिः। नैषादकिः। चाण्डालकिः। बैम्बकिः॥

## गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥

तस्यापत्यमित्येव। गोत्रसंज्ञकेऽपत्ये वाच्ये कुञ्जादिभ्यश्च्फञ् प्रत्ययो भवति। इञोऽपवादः। चकारो विशेषणार्थः "व्रातच्फञोरस्त्रियाम्" इति। ञकारो वृद्ध्यर्थः। कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः। गोत्र इति किम्? कुञ्जस्यापत्यमनन्तरं कौञ्जिः। एकवचनद्विवचनयोः सति शिष्टस्वरत्वात् ञित्स्वरेणैव भवितव्यम्। बहुवचने तु कौञ्जायना इति, परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यते। गोत्राधिकारश्च "शिवादिभ्योऽण्" इति यावत्। कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। लोमन्। शठ। शाक। शाकट। शुण्डा। शुभ। विपाश। स्कन्द। स्कम्भ(३)॥

## नडादिभ्यः फक् ॥ ९९ ॥

नड इत्येवमादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति। नाडायनः। चारायणः। गोत्र इत्येव, नाडिः। शलङ्कु शलङ्क चेत्यत्र पठ्यते, शालङ्कायनः, पैलादिषु च शालङ्किशब्दः पठ्यते, शालङ्किः पिता, शालङ्किः पुत्रः, तत्कथं? गोत्रविशेषे कौशिके फकं स्मरन्ति। इञेवान्यत्र शालङ्किरिति। अथवा पैलादिपाठ एव ज्ञापक इञो भावस्य। नड। चर। बक। मुञ्ज। इतिक। इतिश। उपक। लमक। *शलङ्कु शलङ्कं च। सप्तल। वाजप्य। तिक। अग्निशर्मन् वृषगणे। प्राण। नर। सायक। दास। मित्र। द्वीप। पिङ्गर। पिङ्गल। किङ्कर। किङ्कल। कातर। कातल। काश्य। काश्यप। काव्य। अज। अमुष्य। *कृष्णरणौ ब्राह्मणवासिष्ठयोः। अमित्र। लिगु। चित्र। कुमार। क्रोष्टु क्रोष्टं च। लोह। दुर्ग। स्तम्भ। शिंशपा। अग्र। तृण। शकट।

(१) "निवातु। अवाकु। बिन्दु। चूडा। बकला। भद्रशर्मन्। सुशर्मन्। सुधावन्। माष। क्वचिदुपलभ्या एते शब्दा अत्र। (२) "श्वाशुरिः" इत्यस्यानन्तर "राजश्वशुराद्यत् ॥ भवति" इत्यधिक पाठ क्वचित्। (३) "शुम्भा। शिव। शुभंया। इति क्वचित् पाठोऽधिकः।

सुमनस् । सुमत । मिमत । ऋक् । जत् । युगन्धर । हसक । दण्डिन् । हरितन् । पञ्चाल । चमसिन् । सुकृत्य । स्थिरक । ब्राह्मण । चटक । बदर । अश्वक । खरप । कामुक । ब्रह्मदत्त । उदुम्बर । शोण । अलोह । दण्ड(१) ॥

हरितादिभ्योऽञः ॥ १०० ॥

हरितादिर्बिदाद्यन्तर्गणः । हरितादिभ्योऽञन्तेभ्योऽपत्ये फञ् प्रत्ययो भवति । इञोऽपवादः । हरितस्यापत्यं हारितायनः । कैदासायनः । ननु च गोत्र इति वर्तते, न च गोत्रादपरो गोत्रप्रत्ययो भवति, "एको गोत्र" इति वचनात् ? सत्यमेतत् । इह तु गोत्राधिकारेऽपि सामर्थ्याद्यूनि प्रत्ययो विज्ञायते । गोत्राधिकारस्तूत्तरार्थः ॥

यञिञोश्च ॥ १०१ ॥

यञन्तादिञन्ताच्च प्रातिपदिकादपत्ये फक् प्रत्ययो भवति । गार्ग्यायणः । वात्स्यायनः । इञन्तात्—दाक्षायणः । प्लाक्षायणः । 'द्वीपादनुसमुद्रं यञ्' "सुतङ्गमादिभ्य इञ्" इत्यतो न भवति, गोत्रग्रहणेन यञिञौ विशेष्येते । तदन्ताच्च यून्यपत्ये प्रत्ययः, गोत्राद्यून्प्रत्ययो भवति वचनात् ॥

शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु ॥ १०२ ॥

गोत्र इत्येव । शरद्वत्शुनक दर्भ इत्येतेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति, यथासंख्यं भृगुवत्साग्रायणेष्वर्थेष्वपत्यविशेषेषु । शारद्वतायनो भवति भार्गवश्चेत्, शारद्वतोऽन्यः । शौनकायनो भवति वात्स्यश्चेत्, शौनकोऽन्यः । दार्भायणो भवति आग्रायणश्चेत्, दार्भिरन्यः । शरद्वच्छुनकदर्भा बिदादी ताभ्यामञोऽपवादः फक् ॥

द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ १०३ ॥

गोत्र इत्येव, द्रोणादिभ्य प्रातिपदिकेभ्यो गोत्रापत्येऽन्यतरस्यां फक् प्रत्ययो भवति । इञोऽपवादः । द्रौणायनः, द्रौणिः । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः । कथमश्वत्थामा द्रौणायन इत्युच्यते ? नैवात्र महाभारतद्रोणो गृह्यते किं तर्हि । तत इष्ट गोत्रे प्रत्ययविधानम् । इदानीं श्रुतिसामान्यादध्यारोपेण तथाभिधानं भवति ॥

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ १०४ ॥

गोत्र इत्येव । बिदादिभ्यो गोत्रापत्येऽञ्प्रत्ययो भवति । बैदः । और्वः । ये पुनरत्रानृषयः पुत्रादयस्तेभ्योऽनन्तरापत्ये एव भवति । पौत्रः । दौहित्रः । अनृष्यानन्तर्ये इत्यस्यायमर्थः—अनृषिभ्योऽनन्तरे भवतीति । यद्ययमर्थः ऋष्यपत्ये नैरन्तर्यप्रतिषेधो न कृतः स्यात्, तदेव न सिद्ध्यति, "(२)इन्द्रम् सखम काश्यपानाम्" ।

(१) "एक । वात्स्य । शवक । नाव्य अन्वजत् । अतजन । स्वरा । अशक । अश्वला । अध्वरा । दम्य । मने कश्चिदधिका उपलभ्यन्ते । (२) "इन्द्रहू " इति प० पा० । "मित्रहू " इति च न्यास पाठ ।

अनन्तरापत्यरूपेणैव ऋष्यणाभिधानं भविष्यति। अवश्यं चैतदेवं विज्ञेयम्। ऋष्यपत्ये नैरन्तर्यविषये प्रतिषेधे विज्ञायमाने कौशिको विश्वामित्र इति दुष्यति। गोत्र इत्येव, बैदः। ननु च ऋष्यणा भवितव्यम्? बाह्वादिराकृतिगणस्तेनेञेव भवति। बिद। उर्व। कश्यप। कुशिक। भरद्वाज। उपमन्यु। किलालप। किदर्भ। विश्वानर। ऋष्टिषेण। ऋतभाग। हर्यश्व। प्रियक। आपस्तम्ब। कूचवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यमाक। श्यापर्ण। हरित। किन्दास। वह्यस्क। अर्कलूष। वध्योष। विष्णुवृद्ध। प्रतिबोध। रथन्तर। रथातर। गविष्ठिर। निषाद। मठर। मृद। पुनर्भू। पुत्र। दुहितृ। ननान्दृ। परस्त्री परशुञ्च(१)॥

## गर्गादिभ्यो यञ् ॥ १०५ ॥

गोत्र इत्येव। गर्गादिभ्यो गोत्रापत्ये यञ् प्रत्ययो भवति। गार्ग्यः। वात्स्यः। मनुशब्दोऽत्र पठ्यते, तत्र कथं मानवी प्रजा? गोत्र इत्युच्यते, अपत्यसामान्ये भविष्यति। कथमनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्य इति? गोत्रस्याध्यारोपेण भविष्यति। अनन्तरापत्यविवक्षायां तु ऋष्यणैव भवितव्यम्, जामदग्नः, पाराशर इति। गर्ग। वत्स। वाजाऽसे(२)। संकृति। अज। व्याघ्रपात्। विदभृत्। प्राचीनयोग। अगस्ति। पुलस्ति। रेभ। अग्निवेश। शङ्ख। शठ। धूम। अवट। चमस। धनञ्जय। मनस। वृक्ष। विश्वावसु। जनमान। लोहित। संशित। बभ्रु। मण्डु। मङ्क्षु। अलिगु। शङ्कु। लिगु। गुलु। मन्तु। जिगीषु। मनु। तन्तु। मनायी। भूत। कथक। कष। तण्ड। वतण्ड। कपि। कत। कुरुकत। अनडुह्। कण्व। शकल। गोकक्ष। अगस्त्य। कुण्डिन। यज्ञवल्क। उभय। जात। विरोहित। वृषगण। रहूगण। शण्डिल। वण। कचुलुक। मुद्गल। मुसल। पराशर। जतूकर्ण। मन्त्रित। संहित। अश्मरथ। शर्कराक्ष। पूतिमाष। स्थूण। अररक। पिङ्गल। कृष्ण। गोलुन्द। उलूक। तितिक्ष। भिषज्। भडित। भण्डित। दल्भ। चिकित। देवहू। इन्द्रहू। एकलू। पिप्पलू। वृदग्नि। जमदग्नि। सुलोभिन्। उकथ। कुटीगु(३)॥

## मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ॥ १०६ ॥

मधुशब्दाद् बभ्रुशब्दाच्च गोत्रापत्ये यञ् प्रत्ययो भवति, यथासंख्यं ब्राह्मणे कौशिके च वाच्ये। माधव्यो भवति ब्राह्मणश्चेत्, माधव एवान्यः। बाभ्रव्यो भवति कौशिकश्चेत्, बाभ्रव एवान्यः। बभ्रुशब्दो गर्गादिषु पठ्यते, ततः सिद्धे यञि कौशिके

---

(१) 'किलात। शम्बक। चारक। श्यावक। कलप' इत्यधिकः पाठः। (२) "असे" इत्यस्याग्रे– 'असमाने। असे इति 'कम्। सौत्राजि'। इति पाठोऽधिकः। (३) पथ, कथु, ध्रुव, सुनु, वकटक, रक्ष, तरक्ष, तलुक्ष, प्रचुल, विलम्ब, विष्णुज, एते अत्राधिका पुस्तकान्तरे॥

नियमार्थं वचनम् । गर्गादिषु पाठेऽप्यन्तर्गणकार्यार्थं –"सर्वत्र लोहितादिकतन्तेभ्य" इति । वाभ्र्यायणी ॥

कपिबोधादाङ्गिरसे ॥ १०७ ॥

कपिबोधशब्दाभ्यामाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । काप्य । बौध्य । आङ्गिरस इति किम् ? कापेय । बौधि । कपिशब्दो गर्गादिषु पठ्यते तस्य नियमार्थं वचनम्, आङ्गिरसे यथा स्यात् । बोधिशब्दो लोहितादिकार्यार्थं गर्गे पाठः । काप्यायनी ॥

वतण्डाच्च ॥ १०८ ॥

आङ्गिरस इत्येव । वतण्डशब्दादाङ्गिरसेऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति । वातण्ड्य । आङ्गिरस इति किम् ? वातण्ड । किमर्थमिदं यावता गर्गादिष्वयं पठ्यते? शिवादिष्वप्ययं पठ्यते, तत्राङ्गिरसे शिवाद्यणोऽपवादार्थं पुनर्वचनम् । अनाङ्गिरसे तूभयत्र पाठसामर्थ्यात् प्रत्ययद्वयमपि भवति । वातण्ड्य । वातण्ड ॥

लुक् स्त्रियाम् ॥ १०९ ॥

आङ्गिरस इत्येव । वतण्डशब्दादाङ्गिरस्यां स्त्रियां यञ्प्रत्ययस्य लुग्भवति । लुकि कृते शार्ङ्गरवादिपाठान्ङीन् भवति । वतण्डी । आङ्गिरस इति किम् ? वातण्ड्यायनी । शिवाद्यणि तु वातण्डी ॥

अश्वादिभ्यः फञ् ॥ ११० ॥

आङ्गिरस इति निवृत्तम् । अश्वादिभ्यो गोत्रापत्ये फञ् प्रत्ययो भवति । आश्वायन । आश्मायन । ये ऽत्र प्रत्ययान्ताः पठ्यन्ते तेभ्यः सामर्थ्याद्यूनि प्रत्ययो विज्ञायते । अश्व । अश्मन् । शङ्ख । विदापुट । रोहिण । खर्जूर । खर्जूल । पिञ्जूर । भडिल । भण्डिल । भडित । भण्डित । भण्डिक । प्रहृत । रामोद । क्षत्र । ग्रीवा । काश । गोलाङ्क्य । अर्क । स्वन । ध्वन । पाद । चक्र । कुल । पवित्र । गोमिन् । श्याम । धूम । धूम्र । वाग्मिन् । विश्वानर । कुट । वेश । (१)आत्रेय । नक्त । तड । नड । ग्रीष्म । अर्ह । विशम्प । विशाला । गिरि । चपल । चुनम् । दासक । वल्य । धर्म । आनडुह्य । पुंसिजात । अर्जुन । शूद्रक । सुमनस् । दुर्मनस् । क्षान्त । प्राच्य । कित । काण । चुम्प । श्रविष्ठा । वीक्ष्य । पविन्दा । आत्रेयभारद्वाजे । कुत्स । आतव । कितव । शिव । खदिर । भारद्वाजात्रेये(२) ॥

भर्गात्त्रैगर्त्ते ॥ १११ ॥

भर्गशब्दादपत्यविशेषे त्रैगर्ते गोत्रे फञ् प्रत्ययो भवति । भार्गायणो भवति त्रैगर्त्तश्चेत्, भार्गिरन्य ॥

---

(१) "अस्य स्थाने पदमनया 'शय आत्रेये' इति पदमपि च 'य आत्रेये' इति गणपाठ दृश्यते । (२) जन, वह, खड, खेड, वड, ओजस् इत्याकारे बाधका एते शब्दाः ।

### शिवादिभ्योऽण् ॥ ११२ ॥

गोत्र इति निवृत्तम्। अत प्रभृति सामान्येन प्रत्यया विधीयन्ते। शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति। यथायथमिञादीनामपवादः। शैवः। प्रौष्टः। तक्षन् शब्दोऽत्र पठ्यते काशिलक्षणमुदीचामिञं बाधितुम्। ण्यप्रत्ययस्य तु बाधो नेष्यते—तादन। ताक्षण्यः। गङ्गाशब्दः पठ्यते, तिकादिफिञा शुभ्रादिढका च समावेशार्थम्। तेन त्रैरूप्यं भवति—गाङ्गः। गाङ्गायनिः। गाङ्गेयः। विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेशार्थम्—वैपाशः। वैपाशायन्यः। शिव। प्रौष्ट। प्रौष्टिक। चण्ड। जम्भ (१)। मुनि। सन्धि। भूरि। कुठार। अन(२)भिम्लान। ककुत्स्थ। कहोड। लेख। रोध। खञ्जन। कोहड। पिष्ट। हेहय। खञ्जार। खञ्जाल। सुरोहिका। पर्ण। कहूय। परिल। वतण्ड। तृण। कर्ण। क्षीरहृद। जलहृद। परिषिक। जटिलिक। गोफिलिक। बधिरिका। मञ्जीरक। वृष्णिक। रेख। आलेखन। विश्रवण। रवण। वर्त्तनाक्ष। पिटक। पिटाक। तृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। उत्क्षिपा। रोहितिक। आर्यश्वेत। सुपिष्ट। खर्जूरकर्ण। मसूरकर्ण। तूणकर्ण। मयूरकर्ण। खडरक। तक्षन्। ऋष्टिषेण। गङ्गा। विपाश। यस्क। लह्य। द्रुघ। अयःस्थूण। भलन्दन। विरूपाक्ष। भूमि। इला। सपत्नी—द्व्यचो नद्याः। त्रिवेणी त्रिवण च(३) ॥

### ऋष्यवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥ ११३ ॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम्। अवृद्धाभ्य इति स्त्रीधर्मं, नदीमानुषीभ्य इत्यर्थधर्मस्तेनाभ्याऽप्रकृतयो निर्दिश्यन्ते। तन्नामिकाभ्य इति सर्वनाम्ना प्रत्ययप्रकृतेः प्रत्यवमर्शः। अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि तेभ्योऽपत्येऽण्प्रत्ययो भवति। ढकोऽपवादः। यमुनाया अपत्यं यामुनः। इरावत्या अपत्यम्, ऐरावतः। वैतस्तः। नार्मदः। मानुषीभ्यः खल्वपि—शिक्षिताया अपत्यं, शैक्षितः। चिन्तिताया अपत्यं, चैन्तितः। अवृद्धाभ्य इति किम्? चान्द्रभागाया अपत्यं, चान्द्रभागेयः। वासवदत्तेयः। नदीमानुषीभ्य इति किम्? सौपर्णेयः। वैनतेयः। तन्नामिकाभ्य इति किम्? शोभनायाः शौभनेयः ॥

### ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११४ ॥

ऋषयः प्रसिद्धा वसिष्ठादयः। अन्धकाः, वृष्णयः, कुरव इति वंशाख्याः। ऋष्यादिवर्जितेभ्यः प्रातिपदिकेभ्योऽपत्येऽण्प्रत्ययो भवति। इञोऽपवादः। अत्यादिभ्यस्तु परत्वाड्ढगादिभिरेव भवितव्यम्। ऋषिभ्यस्तावत्—वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः—

(१) "जम्भ" इत्यस्य स्थाने "भण्ड" इति पाठान्तरम्। (२) अनभिम्लान इति पाठान्तरम्। (३) त्रिवेणी त्रेवणप्रभृतेस्तन्नामिकाणोपवादस्य "द्व्यचः" इति ढकोऽपवाद इति क्वचिदधिकमुपलभ्यते। तथा अत्रान्येऽधिका शब्दा उपलभ्यन्ते, ते च यथा "कहय। कहोध। परक। औवाङ्ग। गोमिलिक। राजल। वदाक। वदाक" इति

श्वाफल्क । राधस । वृष्णिभ्य-वासुदेव । आनिरुद्ध । कुरुभ्य-नाकुल । [illegible] ...न्वाख्यान युज्यते ? [illegible] नकुलसहदेवादय [illegible] द्वेति । अथवाऽन्धकवृष्णिकुरुवशा अपि नित्या एव, तेषु ये शब्दा प्रयुज्यन्ते नकुलसहदेवादयस्तत्रेद प्रत्ययविधानमित्यदोष ॥

मातुरुत्सख्यासभद्रपूर्वाया ॥ ११५ ॥

मातृशब्दात्सख्यापूर्वात्सपूर्वाद्भद्रपूर्वाच्चापत्येऽण्प्रत्ययो भवति, उकारश्चान्तादेश । द्वयोर्मात्रोरपत्य, द्वैमातुर । षाण्मातुर । सामातुर । भाद्रमातुर । उकारादेशार्थं वचन, प्रत्यय पुनरुत्सर्गेणैव सिद्ध । स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष , तेन धान्यमातुर्ग्रहण न भवति । सख्यासभद्रपूर्वाया इति किम् ? सौमात्र । शुभ्रादिषु पाठात्तु वैमात्रेय ॥

कन्यायाः कनीन च ॥ ११६ ॥

कन्याशब्दादपत्येऽण्प्रत्ययो भवति तत्सन्नियोगेन कनीनशब्द आदेशो भवति । ढकोऽपवाद । कन्याया अपत्य, कानीन कर्ण । कानीनो व्यास ॥

विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥ ११७ ॥

विकर्णशुङ्गच्छगलशब्देभ्यो यथासख्य वत्सभरद्वाजात्रिष्वपत्यविशेषेऽण्प्रत्ययो भवति । वैकर्णो भवति वात्स्यश्चेत्, वैकर्णिरन्य । शौङ्गो भवति भारद्वाजश्चेत्, शौङ्गिरन्य । छागलो भवत्यात्रेयश्चेत्, छागलिरन्य । शुङ्गाशब्द स्त्रीलिङ्गमन्ये पठन्ति, ते ढक प्रत्युदाहरन्ति-शौङ्गेय इति । द्वयमपि चैतत्प्रमाणमुभयथा सूत्रप्रणयनात् ॥

पीलाया वा ॥ ११८ ॥

तद्धामित्राणो बाधके 'द्व्यच ' इति ढकि प्राप्तेऽण्प्रत्यय पक्षे विधीयते । पीलाया अपत्य वाऽण्प्रत्ययो भवति । पीलाया अपत्य, पैल । पैलेय ॥

ढक च मण्डूकात् ॥ ११९ ॥

मण्डूकशब्दादपत्ये ढक प्रत्ययो भवति, चकारादण् च वा । तेन त्रैरूप्य भवति-माण्डूकेय । माण्डूक । माण्डूकि ॥

स्त्रीभ्यो ढक् ॥ १२० ॥

स्त्रीग्रहणेन टाबादिप्रत्ययान्ता शब्दा गृह्यन्ते । स्त्रीभ्योऽपत्ये ढक् प्रत्ययो भवति । सौपर्णेय । वैनतेय । स्त्रीप्रत्ययविज्ञापनादस्त्यर्थग्रहणे इह न भवति-इडविडोऽपत्य दरदोऽपत्यम्, ऐडविड, दारद, इति । *वडवाया वृषे वाच्ये* । वाडवेयो वृष स्मृत । अपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, तेनापत्ये वाडव इति भवति । *कुञ्जाकोकिलात्स्मृत * । क्रुञ्चाया अपत्य, क्रौञ्च । कौकिल ॥

द्व्यचः ॥ १२१ ॥

स्त्रीभ्य इत्येव । द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् प्रत्ययो भवति। तस्यापि अणोऽपवादः । दत्ताया अपत्यं, दात्तेयः । गौपेयः । द्व्यचः इति किम् ? यामुनः ॥

इतश्चानिञः ॥ १२२ ॥

स्त्रीग्रहणं निवृत्तम् । चकारो "द्व्यच" इत्यस्यानुकर्षणार्थः । इकारान्तात्प्रातिपदिकाद्‌ द्व्यचोऽनिञन्तादपत्ये ढक् प्रत्ययो भवति । आत्रेयः । नैधेयः । इतः इति किम् ? दाक्षिः । प्लाक्षिः । अनिञः इति किम् ? दाक्षायणः । प्लाक्षायणः । द्व्यच इत्येव, मरीचेरपत्यं मारीचः ॥

शुभ्रादिभ्यश्च ॥ १२३ ॥

शुभ्र इत्येवमादिभ्यः प्रातिपदिकेभ्यो ढक् प्रत्ययो भवति । यथायोगमिञादीनामपवादः । शौभ्रेयः । वैष्टपुरेयः । चकारोऽनुक्तसमुच्चयार्थः आकृतिगणतामस्य बोधयति—गाङ्गेयः, पाण्डवेय इत्येवमादि सिद्धं भवति । शुभ्र । विष्टपुर । ब्रह्मकृत । शतद्वार । शतावर । शलाका । शालाचल । शलाकाभ्रू । लेखाभ्रू । विमातृ । विधवा । कृकसा । रोहिणी । रुक्मिणी । दिशा । शालूक । अजबस्ति । शकन्धि । लक्ष्मणश्यामयोर्वासिष्ठे । गोधा । कृकलास । अणीव । प्रवाहण । भरत । भारम(१) । मृकण्डु । मघष्ट । मकष्टु । कर्पूर । इतर । अन्यतर । आलीढ । सुदत्त । सुचक्षस् । सुनामन् । कद्रु । तुद । अकशाप । कुमारिका । किशोरिका । कुवेणिका । जिह्माशिन । परिधि । वायुदत्त । ककल । खट्वा । अम्बिका । अशोका । शुद्धपिङ्गला । खडोन्मत्ता । अनुदृष्टि । जरतिन् । बलिवर्दिन् । विग्रज । बीज । श्वन् । अश्मन् । अश्व । अजिर(२) ॥

विकर्णकुषीतकात् काश्यपे ॥ १२४ ॥

विकर्णशब्दात्कुषीतकशब्दाच्च काश्यपेऽपत्यविशेषे ढक् प्रत्ययो भवति । वैकर्णेयः । कौषीतकेयः । काश्यप इति किम् ? वैकर्णिः । कौषीतकिः ॥

भ्रुवो वुक् च ॥ १२५ ॥

भ्रूशब्दादपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः । भ्रौवेयः ॥

कल्याण्यादीनामिनङ् ॥ १२६ ॥

"कल्याणी" इत्येवमादीनां शब्दानामपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च इनङादेशः । स्त्रीप्रत्ययान्तानामादेशार्थं ग्रहणं प्रत्ययस्य सिद्धत्वाद्, अन्येषामुभयार्थम् । काल्याणिनेयः । सौभागिनेयः । दौर्भागिनेयः । हृदभगसिन्ध्वन्ते इत्युभयपदवृद्धिः । कल्याणी । सुभगा । दुर्भगा । बन्धकी । अनुदृष्टि । अनुसृष्टि । जरती । बलीवर्दी । ज्येष्ठा । कनिष्ठा । मध्यमा । परस्त्री ॥

(१) भारत इ पाठ । (२) स्थूल । सुकाण्ड । मकष्टु । यमुन्दु । कद्रु । सकण्ड । मृकण्ड । रद्र । रद । दुःरिका । इकक । शबल । उग्र । अजिन । इत्यधिकं क्वचित् ।

कुलटाया वा ॥ १२७ ॥

कुलान्यटतीति कुलटा, पररूप निपातनात्। कुलटाया अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो भवति। आदेशार्थं वचनं प्रत्यय पूर्वेणैव सिद्ध । कौलटिनेय । कौलटेय । या तु कुलान्यटन्ती शील भिनत्ति, तत "क्षुद्राभ्यो वा" इति परत्वाड्ढ्रका भवितव्यम्-कौलटेर ॥

चटकाया ऐरक् ॥ १२८ ॥

चटकाया अपत्ये ऐरक् प्रत्ययो भवति। चाटकैर । *चटकाच्चेति वक्तव्यम्* । चटकस्यापत्य, चाटकैर । *स्त्रियामपत्ये लुग्वक्तव्य *। चटकाया अपत्य स्त्री, चटका(१)॥

गोधाया ढ्रक् ॥ १२९ ॥

गोधाया अपत्ये ढ्रक् प्रत्ययो भवति। गौधेर । शुभ्रादिष्वयं पठ्यते, तेन गौधेयोऽपि भवति ॥

आरगुदीचाम् ॥ १३० ॥

गोधाया अपत्ये उदीचामाचार्याणां मतेन आरक् प्रत्ययो भवति। गौधार । आचार्यग्रहणं पूजार्थं, वचनसामर्थ्यादेव पूर्वेण समावेशो भविष्यति। आरग्वचनमनर्थकं, ढ्रका सिद्धत्वात्। ज्ञा(२)पकं त्वयमन्येभ्योऽपि भवतीति-जाडार । पाण्डार ॥

क्षुद्राभ्यो वा ॥ १३१ ॥

ढ्रगनुवर्तते, न आरक्। क्षुद्रा -अङ्गहीना धर्महीनाश्च(३)। अर्थधर्मेण तदभिधायिन्य स्त्रीलिङ्गा प्रकृतयो निर्दिश्यन्ते। क्षुद्राभ्यो वाऽपत्ये ढ्रक् प्रत्ययो भवति। ढकोऽपवाद । काणेर । काणेय । दासेर । दासेय ॥

पितृष्वसुश्छण् ॥ १३२ ॥

पितृष्वसृशब्दादपत्ये छण्प्रत्ययो भवति। अणोऽपवाद । पैतृष्वस्रीय ॥

ढकि लोप ॥ १३३ ॥

पितृष्वसु प्रत्ययस्य ढकि परतो लोपो भवति। पैतृष्वसेय । कथं पुनरिह ढक् प्रत्यय ? एतदेव ज्ञापकं ढको भावस्य ॥

मातृष्वसुश्च ॥ १३४ ॥

पितृष्वसुरित्येतदपेक्षते, पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि भवति-छण्प्रत्ययो ढकि लोपश्च। मातृष्वस्रीय । मातृष्वसेय ॥

चतुष्पाद्भ्यो ढञ् ॥ १३५ ॥

चतुष्पाद्भ्यो याभिधायिनीभ्य प्रकृतिभ्योऽपत्ये ढञ्प्रत्ययो भवति। अणादीनामपवाद । कामण्डलेय । शैतिबाहेय । जाम्बेय ॥

---

(१) चटकस्याप्यत्र अन्यादित्वाण्टाभिर्यधिक पुस्तकान्तरे। (२) ज्ञापकार्थं, ज्ञापनार्थं मिति वा पदमञ्जरी पाठ । (३) शीलहीनाश्च त पाठ ॥

गृष्ट्यादिभ्यश्च ॥ १३६ ॥

गृष्ट्यादिभ्यः शब्देभ्योऽपत्ये ढञ्प्रत्ययो भवति। अणादीनामपवादः। गार्ष्टेयः। हार्ष्टेयः। गृष्टिशब्दो यद्यचतुष्पाद्वचनस्ततः पूर्वेणैव सिद्धः, अचतुष्पादर्थं वचनम्। गृष्टि। हृष्टि। हलि। बलि। विश्रि। कुद्रि। अजवस्ति। मित्रयु(१)॥

राजश्वशुराद्यत् ॥ १३७ ॥

राजन्श्वशुरशब्दाभ्यामपत्ये यत्प्रत्ययो भवति। यथाक्रममणिञोरपवादः। राजन्यः। श्वशुर्यः। राज्ञोऽपत्ये जातिग्रहणम्॥ राजन्यो भवति, क्षत्रियजातिश्चेत्। राजनोऽन्यः॥

क्षत्राद् घः ॥ १३८ ॥

क्षत्रशब्दादपत्ये घः प्रत्ययो भवति। क्षत्रियः। अयमपि जातिशब्द एव। क्षात्रिरन्यः॥

कुलात्खः ॥ १३९ ॥

उत्तरसूत्रे पूर्वप्रतिषेधादिह तदन्तः केवलश्च गृह्यते। कुलशब्दान्तात्प्रातिपदिकात्केवलाच्चापत्ये खः प्रत्ययो भवति। आढ्यकुलीनः। श्रोत्रियकुलीनः। कुलीनः॥

अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥ १४० ॥

कुलादित्येव। अविद्यमानं पूर्वपदं यस्य तदपूर्वपदं, समाससम्बन्धिनः पूर्वपदस्याभावेन कुलशब्दो विशेष्यते। अपूर्वपदात् कुलशब्दादन्यतरस्यां यत् ढकञ् इत्येतौ प्रत्ययौ भवतः। ताभ्यां मुक्ते खोऽपि भवति। कुल्यः। कौलेयकः। कुलीनः। पदग्रहणं किम्? बहुच्पूर्वादपि यथा स्यात्—बहुकुल्यः। बाहुकुलेयकः। बहुकुलीनः॥

महाकुलादञ्खञौ ॥ १४१ ॥

अन्यतरस्यामित्यनुवर्त्तते, पक्षे खः (२)। माहाकुलः। माहाकुलीनः। महाकुलीनः

दुष्कुलाड्ढक् ॥ १४२ ॥

दुष्कुलशब्दादपत्ये ढक् प्रत्ययो भवति, अन्यतरस्यामित्यनुवृत्ते खश्च। दौष्कुलेयः। दुष्कुलीनः॥

स्वसुश्छः ॥ १४३ ॥

स्वसृशब्दादपत्ये छः प्रत्ययो भवति। अणोऽपवादः। स्वसुरपत्यं, स्वस्रीयः॥

भ्रातुर्व्यच्च ॥ १४४ ॥

भ्रातृशब्दादपत्ये व्यत् प्रत्ययो भवति, चकाराच्छश्च। अणोऽपवादः। भ्रातृव्यः। भ्रात्रीयः। तकारः स्वरार्थः॥

---

(१) 'फलि। अलि। दृति।' इत्यधिकं क्वचित्॥ (२) क्वचिदयं पाठ उपलभ्यते—"महाकुलशब्दादञ्खञौ प्रत्ययौ भवतः। अन्यतरस्यां ग्रहणानुवृत्तेः खश्च" इति।

## व्यन्सपत्ने ॥ १४५ ॥

सपत्नशब्दः शत्रुपर्यायः, शब्दान्तरमव्युत्पन्नमेव । सपत्नीशब्दादपरेऽकारम् इवार्थं निपातयन्ति सपत्नीव सपत्नः । भ्रातृशब्दाद् व्यन्प्रत्ययो भवति समुदायेन चेदमित्र सपत्न उच्यते । अपत्यार्थोऽत्र नास्त्येव—पाप्मना भ्रातृव्येण । भ्रातृव्यः कण्टकः ॥

## रेवत्यादिभ्यष्ठक् ॥ १४६ ॥

रेवतीत्येवमादिभ्योऽपत्ये ठक् प्रत्ययो भवति । यथायोगं ढगादीनामपवादः । रैवतिकः । आश्वपालिकः । रेवती । अश्वपाली । मणिपाली । द्वारपाली । वृकवञ्चिन् । वृकग्राह । कर्णग्राह । दण्डग्राह । कुक्कुटाक्ष ॥(१)

## गोत्रस्त्रियाः कुत्सने ण च ॥ १४७ ॥

अपत्यं पौत्रप्रभृति गोत्रं गृह्यते । गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति चकाराट्ठक्च, कुत्सने गम्यमाने । पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सा । गार्ग्या अपत्यं, गार्गो जाल्मः । गार्गिकः । ग्लुचुकायन्या अपत्यं ग्लौचुकायनः । ग्लौचुकायनिकः । "गोत्राद्यून्यस्त्रियाम्" इति यूनि प्रत्ययो भवति । गोत्रमिति किम् ? कारिकेयो जाल्मः । स्त्रिया इति किम् ? औपगविर्जाल्मः । कुत्सन इति किम् ? गार्गेयो माणवकः ॥

## वृद्धाट्ठक् सौवीरेषु बहुलम् ॥ १४८ ॥

कुत्सन इत्येव । सौवीरेष्विति प्रकृतिविशेषणम् । वृद्धात्सौवीरगोत्रादपत्ये बहुलं ठक् प्रत्ययो भवति कुत्सने गम्यमाने । भागवित्तेर्भागवित्तिकः । तार्णबिन्दवस्य तार्णबिन्दविकः । पक्षे—यथाप्राप्तं फक्, भागवित्तायनः । पक्षे—तार्णबिन्दविः । अकशापः शुभ्रादिः । आकशापेयः । तस्यापत्यमाकशापेयिकः । पक्षे—आकशापेयिः ॥

> भागवित्तिः पूर्वशब्दो द्वितीयस्तार्णबिन्दवः ।
> तृतीयस्त्वाकशापेयो गोत्राट्ठग्बहुलं ततः ॥

वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम् । सौवीरेष्विति किम् ? औपगविर्जाल्मः । कुत्सन इत्येव । भागवित्तायनो माणवकः । बहुलग्रहणमुपाधिवैचित्र्यार्थम् । गोत्रस्त्रिया इत्यारभ्य चत्वारो योगास्तेषु प्रथमः कुत्सन एव । अन्त्यः सौवीरगोत्र एव । मध्यमौ द्वयोरपि । तदेतद् बहुलग्रहणाल्लभ्यते ॥

## फेरछ च ॥ १४९ ॥

कुत्सन इत्येव, सौवीरेष्विति च । फेरिति फिञो ग्रहणं, न फिनः, वृद्धाधिकारात् । फिञन्तात्प्रातिपदिकात्सौवीरगोत्रादपत्ये छः प्रत्ययो भवति चकाराट्ठक् कुत्सने गम्यमाने । यमुन्दस्यापत्यं, तिकादिभ्यः फिञ्, तस्यापत्यं, यामुन्दायनीयः । यामु

(१) शब्दाः पञ्चेऽधिकाः क्वचित्—"वृकवन्धु । चाभरग्राह । ककुदाक्ष । इति ।

न्दायनिः। कुत्सन इत्येव। यामुन्दायनिः। फिञन्तादौत्सर्गिकस्याण आगतस्य "ण्यक्षत्रियार्षञितो" इति लुक्। सौवीरेष्वित्येव। तैकायनिः॥

यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत्॥

फाण्टाहृतिमिमताभ्यां णफिञौ॥ १५०॥

सौवीरेष्वित्येव। कुत्सन इति निवृत्तम्। फाण्टाहृतिमिमतशब्दाभ्यां सौवीरविषयाभ्यामपत्ये णफिञौ प्रत्ययौ भवतः। फकोऽपवादः। अल्पाच्तरस्यापूर्वनिपातो, लक्षणस्य व्यभिचारचिह्नं, तेन यथासंख्यमिह न भवतीति—फाण्टाहृतः। फाण्टाहृतायनिः। मैमतः। मैमतायनिः। सौवीरेष्वित्येव। फाण्टाहृतायनः। मैमतायनः। फाण्टाहृतेः "यञिञोश्च" इति फक्। मिमतशब्दोऽपि नडादिषु पठ्यते॥

कुर्वादिभ्यो ण्यः॥ १५१॥

सौवीरेषु, बहुलमिति च निवृत्तम्। कुरु इत्येवमादिभ्यः शब्देभ्योऽपत्ये ण्यः प्रत्ययो भवति। कौरव्यः। गार्ग्यः। "कुरुनादिभ्यो ण्यः" इति कुरुशब्दादपरो ण्यप्रत्ययो भविष्यति, स तु क्षत्रियात्तद्राजसंज्ञस्तस्य बहुषु लुका भवितव्यमयं तु श्रूयत एव, कौरव्याः। कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिषु पाठात् फिञपि भवति। कौरव्यायणिः। रथकारशब्दोऽत्र पठ्यते, स जातिवचनः। त्रैवर्णिकेभ्यः किंचिन्न्यूना रथकारजातिः। कारिणस्तु रथकारशब्दादुत्तरसूत्रेणैव ण्यः सिद्धः। केशिनीशब्दः पठ्यते, तस्य कैशिन्यः। पुंवद्भावो न भवति, स्त्रीप्रत्ययनिर्देशसामर्थ्यात्। वेनाच्छन्दसीति पठ्यते, कथं भाषायां वैन्यो राजेति? छान्दस एवायं प्रमादात्कविभिः प्रयुक्तः। वामरथशब्दः पठ्यते, तस्य कण्वादिवत्कार्यमिष्यते स्वरं वर्जयित्वा, लुगादिकमतिदिश्यते। बहुषु वामरथाः। स्त्री वामरथी। वामरथ्यायनी। युवा वामरथ्यायनः। वामरथ्यस्य छात्रा वामरथाः, वामरथानि संघाङ्कलक्षणानि। स्वरस्तु ण्यप्रत्ययस्यैव भवति नातिदेशिकमाद्युदात्तत्वम्। कुरु। गर्ग। मङ्गुष। अजमारक। रथकार। वावदूक। सम्राजः क्षत्रिये। कवि। मति। वाक्। पितृमत्। इन्द्रजालि। दामोष्णीषि। गणकारि। कैशोरि। कापिञ्जलादि। कुट। शलाका। मुर। एरक। अभ्र। दर्भ। केशिनी। वेनाच्छन्दसि। शूर्पणाय। श्यावनाय। श्यावरथ। श्यावपुत्र। सत्यंकार। वडभीकार। शङ्कु। शाक। पथिकारिन्। मूढ। शकन्धु। कर्तृ। हर्तृ। शाकिन्। इनपिण्डी(१)। वामरथस्य कण्वादिवत् स्वरवर्जम्॥

सेनान्तलक्षणकारिभ्यश्च॥ १५२॥

सेनान्तात्प्रातिपदिकाल्लक्षणशब्दात्कारिवचनेभ्यश्चापत्ये ण्यः प्रत्ययो भवति।

---

(१) "विस्फोटक। काङ्क। स्थाण्डक। शाकिन्। धानीक। धेनुजि। वुद्धिकार।" इत्यधिकं क्वचित्।

कारिशब्दः कारूणां तन्तुवायादीनां वाचकः। कारिषेण्यः। हारिषेण्यः। लाक्षण्यः। कारिभ्यः-तान्तुवाय्यः। कौम्भकार्यः। नापित्यः॥

उदीचामिञ् ॥ १२३ ॥

ण्ये प्राप्ते इञपरो विधीयते। सेनान्तलक्षणकारिभ्योऽपत्ये इञ् प्रत्ययो भवति उदीचां मतेन। कारिषेणिः। हारिषेणिः। लाक्षणिः। तान्तुवायिः(१)। कौम्भकारिः। वचनसामर्थ्यादेव प्रत्ययसमावेशे लब्धे आचार्यग्रहणं पूजार्थम्। तक्षन्शब्दः शिवादिषु पाठात् इञ् बाध्यते, न तु ण्यः। तक्ष्णोऽपत्यं, ताक्ष्णः। ताक्षण्यः॥

तिकादिभ्यः फिञ् ॥ १२४ ॥

तिक इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति। तैकायनिः। कैतवायनिः। वृषशब्दोऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन यकारान्तत्वमिष्यते। वार्ष्यायणिः। कौरव्यशब्दः पठ्यते, स च क्षत्रियवचनः, औरसशब्देन क्षत्रियप्रत्ययान्तेन साहचर्यात्। यस्तु कुर्वादिभ्यो ण्यस्तदन्तादिञैव भवितव्यम्। तथाच "ण्यक्षत्रियार्षञितः" इत्यत्रोदाहृतः-कौरव्यः पिता, कौरव्यः पुत्र इति। तिक। कितव। संज्ञा। बाल। शिखा। उरस्। शाठ्य। सैन्धव। यमुन्द। रूप्य। ग्राम्य। नील। अमित्र। गौकक्ष्य। कुरु। देवरथ। तैतिल। औरस। कौरव्य। भौरिकि। भौलिकि। चौपयत। चैटयत। शैकयत। क्षैतयत। ध्वाजवत्। चन्द्रमस्। शुभ। गङ्गा। वरेण्य। सुयामन्। आरद्ध। वह्यका। खल्य। वृष। लोमक। उदन्य। यज्ञ(२)॥

कौसल्यकार्मार्याभ्यां च ॥ १२५ ॥

कौसल्यकार्मार्यशब्दाभ्यामपत्ये फिञ् प्रत्ययो भवति। इञोऽपवादः। कौसल्यायनिः। कार्मार्यायणिः। परमप्रकृतेरेवायं प्रत्यय इष्यते-कोसलस्यापत्यं, कर्मारस्यापत्यमिति। प्रत्ययसन्नियोगेन तु प्रकृतिरूपं निपात्यते। तथा च स्मृत्यन्तरम्-दगुकोसलकर्मारच्छागवृषाणां युडादिश्च्स्येति। दागव्यायनिः। कौसल्यायनिः। कार्मार्यायणिः। छाग्यायनिः। वार्ष्यायणिः॥

अणो द्व्यचः ॥ १२६ ॥

अणन्ताद् द्व्यचः प्रातिपदिकादपत्ये फिञ् प्रत्ययो भवति। इञोऽपवादः। कार्त्रायणिः। हार्त्रायणिः(३)। अण इति किम्? दाक्षायणः। द्व्यच इति किम्? औपगविः। त्यदादीनां वा फिञ् वक्तव्यः*। त्यादायनिः। त्यादः। यादायनिः। यादः। तादायनिः। तादः। अणत्र प्राप्त॥

---

(१) तौल्वलायिरित्यधिकं पुस्तकान्तरे। (२) 'ऋष्य। मात। आजक। रस। श्वक। भज्वद। वहु। वभ्रु। शलङ्कु। सुपामन्'। इत्यधिकं क्वचित्। (३) "यास्क इति शिवादिभ्योऽण्। यास्कस्यापत्यं यास्कायनिः"। इत्यधिकं क्वचित्।

उदीचां वृद्धादगोत्रात् ॥ १५७ ॥

वृद्धं यच्छब्दरूपमगोत्रं तस्मादपत्ये फिञ् प्रत्ययो भवति उदीचामाचार्याणां मतेन। आम्रगुप्तायनिः। ग्रामरक्षायणिः। कारिशब्दादपि वृद्धादगोत्रात् परत्वादनेनैव भवितव्यम्—नापितायनिः। उदीचामिति किम्? आम्रगुप्तिः। वृद्धादिति किम्? याज्ञदत्तिः। अगोत्रादिति किम्? औपगविः॥

वाकिनादीनां कुक् च ॥ १५८ ॥

वाकिन इत्येवमादिभ्यः शब्देभ्योऽपत्ये फिञ् प्रत्ययो भवति तत्सन्नियोगेन चैषां कुगागमः। यदिह वृद्धमगोत्रं शब्दरूपं तस्याऽऽगमार्थमेव ग्रहणमन्यत्रोभयार्थम्। वाकिनकायनिः। गारेधकायनिः। इञाद्यपवादो योगः। उदीचामित्यधिकारात्पक्षे तेऽपि भवन्ति। वाकिनिः। गारेधिः। वाकिन। गारेध। कार्कट्य। काक। लङ्का। चर्मिवर्मिणोर्नलोपश्च॥

पुत्रान्तादन्यतरस्याम् ॥ १५९ ॥

उदीचां वृद्धादिति वर्त्तते। पुत्रान्तमगोत्रमिति पूर्वेणैव प्रत्ययः सिद्धस्तस्मिन्ननेन कुगागमोऽन्यतरस्यां विधीयते। पुत्रान्तात्प्रातिपदिकाद्यः फिञ्प्रत्ययस्तस्मिन् परभूतेऽन्यतरस्यां कुगागमो भवति पुत्रान्तस्य। तेन त्रैरूप्यं सम्पद्यते—गार्गीपुत्रकायणिः। गार्गीपुत्रायणिः। गार्गीपुत्रिः। वात्सीपुत्रकायणिः। वात्सीपुत्रायणिः। वात्सीपुत्रिः॥

प्राचामवृद्धात् फिन् बहुलम् ॥ १६० ॥

अवृद्धाच्छब्दरूपादपत्ये फिन् प्रत्ययो भवति बहुलं प्राचां मतेन। ग्लुचुकायनिः। अहिचुम्बकायनिः। प्राचामिति किम्? ग्लौचुकिः। अवृद्धादिति किम्? राजदन्तिः। उदीचां प्राचामन्यतरस्यां बहुलमिति सर्व एते विकल्पार्थास्तेषामनेनैव सिद्ध्यति, तत्राचार्यग्रहणं पूजार्थम्। बहुलग्रहणं वैचित्र्यार्थम्। क्वचिन्न भवत्येव—दाक्षिः। प्लाक्षिः॥

मनोर्जातावञ्यतौ षुक् च ॥ १६१ ॥

मनुशब्दादञ् यत् इत्येतौ प्रत्ययौ भवतस्तत्सन्नियोगेन षुगागमः, समुदायेन चेज्जातिर्गम्यते। मानुषः। मनुष्यः। जातिशब्दावेतौ। अपत्यार्थोऽत्र नास्त्येव। तथा च मानुषा इति बहुषु न लुग्भवति। अपत्यविवक्षायां त्वणेव भवितव्यम्—मानवी प्रजा॥

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्धन्यस्तेन सिद्ध्यति माणवः॥

अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६२ ॥

पौत्रप्रभृति यदपत्यं तद्गोत्रसंज्ञं भवति। सम्बन्धिशब्दत्वादपत्यशब्दस्य यदपत्यं तदपेक्षया पौत्रप्रभृतेर्गोत्रसंज्ञा विधीयते। गर्गस्यापत्यं पौत्रप्रभृति गार्ग्यः। वात्स्यः।

अपत्यमिति व्यपदेशाय सञ्ज्ञिन पौत्रप्रभृते। पौत्रप्रभृतीति किम्? अनन्तरस्य मा भूत्-कौञ्जि। गार्गि। गोत्रप्रदेशा "एको गोत्र" इत्येवमादय॥

जीवति तु वंश्ये युवा॥ १६३॥

अभिजनप्रबन्धो वंश, तत्र भवो वंश्य पित्रादिस्तस्मिञ्जीवति सति पौत्रप्रभृत्यपत्य युवसञ्ज्ञं भवति। पौत्रप्रभृतीति च न सामानाधिकरण्येनापत्य विशेषयति, किं तर्हि षष्ठ्या विपरिणम्यते-पौत्रप्रभृतेर्यदपत्यमिति, तेन चतुर्थादारभ्य युवसञ्ज्ञा विधीयते। गार्ग्यायण। वात्स्यायन। तुशब्दोऽवधारणार्थो युवैव, न गोत्रमिति॥

भ्रातरि च ज्यायसि॥ १६४॥

भ्रातरि ज्यायसि जीवति कनीयान् भ्राता युवसञ्ज्ञो भवति पौत्रप्रभृतेरपत्यम्। गार्ग्यस्य द्वौ पुत्रौ तयो कनीयान् मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति युवसञ्ज्ञो भवति। अवंश्यार्थोऽयमारम्भ। पूर्वजा पित्रादयो वंश्या इत्युच्यन्ते, भ्राता तु न वंश्योऽकारणत्वात्। गार्ग्ये जीवति गार्ग्यायणोऽस्य कनीयान् भ्राता। वात्स्यायन। दाक्षायण। प्लाक्षायण॥

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति॥ १६५॥

सप्तमपुरुषावधय सपिण्डा स्मर्यन्ते। येषाम्—

(१)उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।

इत्येवमादिकाया क्रियायामनधिकार। भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्य जीवदेव युवसञ्ज्ञ वा भवति। प्रकृत जीवतिग्रहण सपिण्डस्य विशेषणमिद तु सञ्ज्ञिन। तरब्निर्देश उभयोरुत्कर्षार्थ, स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात्, पितृव्ये पितामहे भ्रातरि वयसाधिके जीवति-गार्ग्यस्यापत्य गार्ग्यायण। गार्ग्यो वा। वात्स्यायन। वात्स्यो वा। दाक्षायण। दाक्षिर्वा। स्थविरतरेति किम्? स्थानवयोन्यूने गार्ग्य एव भवति। जीवतीति किम्? मृते मृतो वा गार्ग्य एव भवति॥

वृद्धस्य च पूजायाम्॥ १६६॥

अपत्यमन्तर्हित वृद्धमिति शास्त्रान्तरे परिभाषणात्तेन वृद्धमित्युच्यते। वृद्धस्य युवसञ्ज्ञा वा भवति पूजाया गम्यमानायाम्। सञ्ज्ञासामर्थ्यात्तत्र युवप्रत्ययेन पुनरुच्यते। वृद्धस्येति षष्ठीनिर्देशो विचित्रा सूत्रस्य कृतिरिति। तत्र भवान् गार्ग्यायण, गार्ग्यो वा। तत्र भवान् वात्स्यायन, वात्स्यो वा। तत्र भवान् दाक्षायण, दाक्षिर्वा। पूजायामिति किम्? गार्ग्य। वात्स्य॥

यूनश्च कुत्सायाम्॥ १६७॥

कुत्सायां गम्यमानायां यूनो वा युवसञ्ज्ञा भवति। निवृत्तिप्रधानो विकल्पो, युवसञ्ज्ञाया प्रतिषेधाया पक्षे गोत्रसञ्ज्ञैव भवति, प्रतिपत्त्यभावात्। गार्ग्यो जाल्म,

(१) जयन्त—'कमे भरणे' चैव'।

गार्ग्यायणो वा। वात्स्यो जाल्मः। वात्स्यायनो वा। दाक्षिर्जाल्मः। दाक्षायणो वा। कुत्सायामिति किम्? गार्ग्यायणः॥

जनपदशब्दात् क्षत्रियादञ्॥ १६८॥

जनपदशब्दो यः क्षत्रियवाची तस्मादपत्येऽञ् प्रत्ययो भवति। पाञ्चालः। ऐक्ष्वाकः। वैदेहः। जनपदशब्दादिति किम्? द्रुह्योरपत्यं, द्रौह्यवः। पौरवः। क्षत्रियादिति किम्? ब्राह्मणस्य पञ्चालस्यापत्यं, पाञ्चालिः। वैदेहिः। *क्षत्रिय(१)समानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्*। पञ्चालानां राजा पाञ्चालः। वैदेहः। मागधः। अवृद्धादपीति प्राप्तस्य वुञोऽपवादः॥

साल्वेयगान्धारिभ्यां च॥ १६९॥

साल्वेयगान्धारिशब्दाभ्यामपत्येऽञ् प्रत्ययो भवति। जनपदशब्दावेतौ क्षत्रियाभिधायिनौ ताभ्यामनपवादे "वृद्धाद्" इति ञ्यङि प्राप्ते पुनरञ् विधीयते। साल्वेयः। गान्धारः। तस्य राजन्यप्येव। साल्वेयो राजा। गान्धारो राजा॥

द्व्यञ्मगधकलिङ्गसूरमसादण्॥ १७०॥

जनपदशब्दात् क्षत्रियाभिधायिनो द्व्यचः मगध, कलिङ्ग, सूरमस, इत्येतेभ्यश्चापत्येऽण् प्रत्ययो भवति। अञोऽपवादः। आङ्गः। वाङ्गः। पौण्ड्रः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजन्यप्येव। आङ्गो राजा॥

वृद्धेत्कोसलाजादाञ्ञ्यङ्॥ १७१॥

जनपदशब्दात् क्षत्रियादित्येव। वृद्धाच्च प्रातिपदिकादिकारान्ताच्च कोसलाजादशब्दाभ्यां चापत्ये ञ्यङ् प्रत्ययो भवति। अञोऽपवादः। वृद्धात्तावत्-आम्बष्ठ्यः। सौवीर्यः। इकारान्तात्-आवन्त्यः। कौन्त्यः। कोसलाजादयोरवृद्धार्थं वचनम्-कौसल्यः। आजाद्यः। तपरकरणं किम्? कुमारी नाम जनपदसमानशब्दः क्षत्रियस्तस्यापत्यं कौमारः। *पाण्डोर्जनपदशब्दात् क्षत्रियाड्ड्यण् वक्तव्यः*। पाण्ड्यः। अन्यस्मात् पाण्डव एव। तस्य राजन्यप्येव। आम्बष्ठ्यो राजा। आवन्त्यः। कौन्त्यः। कौसल्यः। आजाद्यः॥

कुरुनादिभ्यो ण्यः॥ १७२॥

जनपदशब्दात् क्षत्रियादित्येव। कुरुशब्दान्नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो भवति। अणञोरपवादः। कौरव्यः। नकारादिभ्यः-नैषध्यः। नैपथ्यः। तस्य राजन्यप्येव। कौरव्यो राजा॥

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्॥ १७३॥

जनपदशब्दात् क्षत्रियादित्येव। साल्वा नाम क्षत्रिया तदात्मिका तस्या अपत्यं,

---

(१) क्षत्रियेण समानः शब्दो यस्य स समानशब्दः। क्षत्रियेण समानशब्दस्तस्माज्जनपदशब्दात्, तस्येति षष्ठीसमर्थाद्राजन्यभिधेये अपत्यवत् प्रत्ययो भवति।

"द्व्यच' इति ढक्-साल्वेय । अणपीष्यते-साल्व । तस्य निवास साल्वो जनपद, तदवयवा उदुम्बरादयस्तेभ्य च जनपदेभ्य इद प्रत्ययविधानम् । साल्वावयवेभ्य प्रत्यग्रथकलकूटाश्मकशब्देभ्यश्चापत्य इञ् प्रत्ययो भवति । अणोऽपवाद । औदुम्बरि । तैलखलि । माद्रकारि । यौगन्धरि । भौलिङ्गि । शारदण्डि । प्रात्यग्रथि । कालकूटि । आश्मकि । तस्य राजनीयव । औदुम्बरी राजा ॥

उदुम्बरास्तिलखला मद्रकारा युगन्धरा ॥
भुलिङ्गा शारदण्डाश्च साल्वावयवसज्ञिता ॥

ते तद्राजा ॥ १७४ ॥

जनपदशब्दात् क्षत्रियादञित्येवमादय प्रत्यया सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्व, गोत्रयुवसज्ञाकाण्डेन व्यवहितत्वात् । तेऽञादयस्तद्राजसज्ञा भवन्ति । तथा चैवोदाहृतम् । तद्राजप्रदेशा तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्येवमादय ॥

कम्बोजाल्लुक् ॥ १७५ ॥

जनपदशब्दात् क्षत्रियादित्यनेन विहितस्याञो लुगुच्यते । कम्बोजात्प्रत्ययस्य लुग् भवति । कम्बोज । कम्बोजादिभ्यो लुग्वचन चोलाद्यर्थम्[१] । कम्बोज । चोल । केरल । शक । यवन । तस्य राजनीयव । कम्बोजो राजा ॥

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७६ ॥

अवन्तिकुन्तिकुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयाया लुग्भवति, अवन्तिकुन्तिभ्या ञ्य , कुरोर्ण्यस्य । अवन्ती(१) । कुन्ती । कुरू । स्त्रियामिति किम् ? आवन्त्य । कौन्त्य । कौरव्य ॥

अतश्च ॥ १७७ ॥

स्त्रियामित्येव । अकारप्रत्ययस्य तद्राजस्य स्त्रियामभिधेयाया लुग्भवति । तकारो विस्पष्टार्थ । शूरसेनी । मद्री । दरत् । अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति-आम्बष्ठ्या । सौवीर्या ॥

न प्राच्यभर्गादियौधेयादिभ्य ॥ १७८ ॥

प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य लुग्न भवति । अतश्चेत्यनेन स्त्रियां लुक् प्राप्त प्रतिषिध्यते । प्राचेभ्य स्तावत्-पाञ्चाली । वैदेही । आङ्गी । वाङ्गी । मागधी । भर्गादिभ्य -भार्गी । कारूषी । कैकेयी । यौधेयादिभ्य -यौधेयी । शौभ्रेयी । शाक्रेयी । कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्त प्रतिषिध्यते ? पाञ्चमिकस्याञ 'पर्श्वादियौधेयादिभ्यामणञौ' इत्येतस्य । कथ पुनस्तस्य भिन्नप्रकरणस्थस्यानेन लुक् प्राप्नोति ? एतदेव ज्ञापयति-पाञ्चमिकस्यापि तद्रा

(१) अवन्तिकुन्तिकुरुशब्देभ्यो लुक भवति इत्यनुवृत्तेन राजिर्वाप् कुरूराजि-ऊङुत ।

जनपदात्तदन्ताच्चेत्यनेन लुग्भवतीति। किमेतस्य ज्ञापनेन प्रयोजनम्? पर्श्वादिभ्यः स्त्रियां लुक् सिद्धो भवति। पर्शूः। रक्षाः। असुरी। तथा चोक्तम्—"यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादीनां लुगिति"। भर्ग। करूष। केकय। कश्मीर। साल्व। सुस्थाल। उरस्(१) कौरव्य। भर्गादि। यौधेय। शौभ्रेय। शौक्रेय। ग्रावाणेय। वार्त्तेय। धार्त्तेय। त्रिगर्त्त। भरत। उशीनर। यौधेयादि॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
चतुर्थाध्यायस्य प्रथमः पादः॥ ४। १॥

---

## अथ चतुर्थाध्यायस्य द्वितीयः पादः॥

### तेन रक्तं रागात्॥ १॥

शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः। रज्यतेऽनेनेति रागः। तेनेति तृतीयासमर्थाद्रागविशेषवाचिनः शब्दा(२)द्रक्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। कौसुम्भम्। रागादिति किम्? देवदत्तेन रक्तं वस्त्रम्। कथं, काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति? उपमानाद्भविष्यति—काषायाविव काषायौ, हारिद्राविव हारिद्रौ। "द्वैपवैयाघ्रादञ्" इति यावत्तृतीयासमर्थविभक्तिरनुवर्त्तते॥

### लाक्षारोचनाशकलकर्दमाट्ठक्॥ २॥

लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थेभ्यो रक्तमित्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। लाक्षया रक्तं वस्त्रं लाक्षिकम्। रौचनिकम्। शाकलिकम्। कार्दमिकम्। *शकलकर्दमाभ्यामणपीष्यते*। शाकलम्। कार्दमम्। *नील्या अन् वक्तव्यः*। नील्या रक्तं नीलं वस्त्रम्। *पीतात् कन् वक्तव्यः*। पीतेन रक्तं पीतकम्। *हरिद्रामहारजनाभ्यामञ् वक्तव्यः*। हारिद्रम्। माहारजनम्॥

### नक्षत्रेण युक्तः कालः॥ ३॥

तृतीया समर्थविभक्तिरनुवर्त्तते। तेनेति तृतीयासमर्थाद् नक्षत्रविशेषवाचिनः शब्दाद् युक्त इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। योऽसौ युक्तः कालश्चेत्स भवति। कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते? पुष्यादिसमीपस्थे चन्द्रमसि वर्त्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति। पुष्येण युक्तः कालः, पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः। पौषी रात्रिः। पौषमहः। माघी रात्रिः। माघमहः। नक्षत्रेणेति किम्? चन्द्रमसा युक्ता रात्रिः। काल इति किम्? पुष्येण युक्तश्चन्द्रमाः॥

---

(१) उरस इति पाठः। (२) प्रातिपदिकादिति, न्या० पाठः।

लुबविशेषे ॥ ४ ॥

पूर्वेण विहितस्य प्रत्ययस्य लुप् भवति अविशेषे, न चेन्नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषोऽभिधीयते । यावान् कालो नक्षत्रेण युज्यतेऽहोरात्रस्तस्याविशेषे लुप् भवति। अद्य पुष्य । अद्य कृत्तिका । अविशेष इति किम् ? पौषी रात्रि । पौषमह ॥

सञ्ज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥

अविशेषे लुबिति हित पूर्वेण, विशेषार्थोऽयमारम्भ । श्रवणशब्दादश्वत्थशब्दाच्चो नक्षत्रस्य प्रत्ययस्य लुप् भवति सञ्ज्ञाया विषये। श्रवणा रात्रि । अश्वत्थो मुहूर्त्त । लुपि युक्तवद्भाव कस्मान्न भवति ? निपातनात्-' विभाषा फाल्गुनीश्रवणाकार्त्तिकी' इति । सञ्ज्ञायामिति किम् ? श्रावणी आश्वत्थी रात्रि ॥

द्वन्द्वाच्छ ॥ ६ ॥

नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छ प्रत्ययो भवति विशेषे चाविशेषे च । राधानुराधीया रात्रि । तिष्यपुनर्वसवीयमह । अविशेषे—अद्य राधानुराधीयम् । अद्य तिष्यपुनर्वसवीयम् । लुप परत्वाद् बाधते ॥

दृष्टं साम ॥ ७ ॥

तेनेति तृतीयासमर्थाद् दृष्टमित्येतस्मिन्नर्थे यथाविहित प्रत्ययो भवति। यद् दृष्ट साम चेत्तद्भवति । क्रुञ्चेन दृष्ट क्रौञ्च साम । वासिष्ठम्। वैश्वामित्रम् ॥

कलेर्ढक् ॥ ८ ॥

कलिशब्दात्तृतीयासमर्थाद् दृष्टमित्येतस्मिन्नर्थे ढक् प्रत्ययो भवति । अणोऽपवाद । कलिना दृष्ट साम कालेयम् । ॐसर्वत्राग्निकलिभ्यां ढग्वक्तव्य ॐ । अग्निना दृष्टमाग्नेयम् । एवमग्नौ भवमग्नेरागतमग्ने स्वमिति सर्वत्र ढगेव भवति-आग्नेयम् । तथा कालेयमपि प्रतिपत्तव्यम् । ॐदृष्टे सामनि अण् वा डिद्भवतीति वक्तव्यम्ॐ । उशनसा दृष्ट साम औशनसम् । औशनम । ॐजाते चार्थे योऽन्यत्र वाधित पुनरण्विधीयते स वा डिद्भवतीति वक्तव्यम्ॐ । प्राग्दीव्यतोऽण् प्राप्त कालठञा बाधित 'सन्धिवेला द्यृतुनक्षत्रेभ्य' इति पुनर्विधायते स वा डिद्भवतीति वक्तव्यम्। शतभिषि जात शतभिष । शातभिषज । ॐतीयादीकक् स्वार्थे वा वक्तव्य ॐ । द्वैतीयीकम् । तार्तीयीकम् । द्वितीयकम् । तृतीयकम् । ॐन विद्याया ॐ(१) । द्वितीया तृतीया विद्या। ॐगोत्रादङ्कवदिष्यतेॐ दृष्ट सामस्वर्थे। औपगवेन दृष्ट साम, औपगवकम्। कापटवकम् । गोत्रचरणाद् वुञ् भवति ॥

दृष्टे सामनि जाते च द्विरण् डिद्वा विधायते ।
तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते ॥

---

( १ ) विद्याया अभिधाने तीयादीकक् न भवतीत्यर्थ

वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥

वामदेवशब्दात्तृतीयासमर्थाद् दृष्टं सामेत्येतस्मिन्नर्थे ड्यत् ड्य इत्येतौ प्रत्ययौ भवतः । अणोऽपवादः । वामदेवेन दृष्टं साम वामदेव्यं साम । डित्करणं स्वरार्थम्। डित्करणं किमर्थं ? "ययतोश्चातदर्थे" इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयो-र्ग्रहणं मा भूत् । अननुबन्धकग्रहणपरिभाषया एकानुबन्धकग्रहणपरिभाषया चानयो-र्निवृत्तिः क्रियते । अवामदेव्यम् ।

सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितौ ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे (1) ॥

परिवृतो रथः ॥ १० ॥

तेनेति तृतीयासमर्थात् परिवृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतो रथश्चेत् स भवति । वस्त्रेण परिवृतो रथः, वास्त्रो रथः। काम्बल:। चार्मणः। रथ इति किम् ? वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते। यस्य न कश्चिदवयवो धन्वादिभिर्वेष्टितः स तु न भवति, तेनेह न—छात्रैः परिवृतो रथ ॥

पाण्डुकम्बलादिनिः ॥ ११ ॥

पाण्डुकम्बलशब्दात्तृतीयासमर्थात्परिवृतो रथ इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति । अणोऽपवादः । पाण्डुकम्बली । पाण्डुकम्बलिनौ । पाण्डुकम्बलिनः । पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः । मत्वर्थयिनैव सिद्धे वचनमणो निवृत्त्यर्थम् ॥

द्वैपवैयाघ्रादञ् ॥ १२ ॥

द्वीपिव्याघ्रयोर्विकारभूते चर्मणी द्वैपवैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्यां परिवृतो रथ इत्येतस्मिन्नर्थेऽञ् प्रत्ययो भवति । अणोऽपवादः । स्वरे विशेषः । द्वैपेन परिवृतो रथो द्वैपः । वैयाघ्रः ॥

कौमारापूर्ववचने ॥ १३ ॥

कौमार इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्ववचने । पाणिग्रहणस्यापूर्ववचनम् । उभयतः स्त्रिया अपूर्वत्वे निपातनमेतत् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । कुमारीशब्दाद् द्वितीयासमर्थादुपयन्तरि प्रत्ययः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या । प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये ॥

कौमारापूर्ववचने कुमार्या अण्विधीयते ।
अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥

कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्येति सिद्धम् ॥

---

(१) नञ्स्वरे इति—नञाश्रये स्वरो नञ्स्वरः उत्तरपदान्तोदात्तत्व तस्मिन्विधीयमाने इत्यर्थः ।

तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥

तत्रेति सप्तमीसमर्थादमत्रवाचिनः शब्दादुद्धृतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। भुक्तोच्छिष्टमुद्धृतमुच्यते, यस्योद्धरणमिति(१) प्रसिद्धे। अमत्रं भाजनं पात्रमुच्यते। शरावेषूद्धृतः शारावः ओदनः। माल्लिकः। कार्परः। अमत्रेभ्य इति किम्? पाणावुद्धृत ओदनः। तत्रेति सप्तमी समर्थविभक्तिः, 'क्षीराड्ढञ्' इति यावदनुवर्त्तते॥

स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥

स्थण्डिलशब्दात्सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेद् व्रतं गम्यते। व्रतमिति शास्त्रतो नियम उच्यते। स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः। स्थाण्डिलो ब्रह्मचारी। व्रत इति किम्? स्थण्डिले शेते ब्रह्मदत्तः॥

संस्कृतं भक्षाः ॥ १६ ॥

तत्रेति सप्तमीसमर्थात् संस्कृतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्संस्कृतं भक्षाश्चेत्ते भवन्ति। खरविशदमभ्यवहार्यं भक्षमित्युच्यते(२)। सत उत्कर्षाधानं संस्कारः। भ्राष्ट्रे संस्कृता भक्षा भ्राष्ट्रा अपूपाः। कालशाः। कौम्भाः। भक्षा इति किम्? पुष्पपुटे संस्कृतो मालागुणः॥

शूलोखाद्यत् ॥ १७ ॥

शूलशब्दादुखा(३)शब्दाच्च सप्तमीसमर्थात्संस्कृतं भक्षा इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। अणोऽपवादः। शूले संस्कृतं शूल्यं मांसम्। उख्यम्॥

दध्नष्ठक् ॥ १८ ॥

दधिशब्दात् सप्तमीसमर्थात्संस्कृतं भक्षा इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दधनि संस्कृतं दाधिकम्। ननु च संस्कृतार्थे प्राग्वहतेष्ठक् वक्ष्यति, तेनैव सिद्धम्? न सिध्यति, दध्ना हि संस्कृतं यस्य दधिकृतमेवोत्कर्षाधानम्, इह तु दधि केवलमाधारभूतं द्रव्यान्तरेण लवणादिना संस्कारः क्रियते॥

उदश्वितोऽन्यतरस्याम् ॥ १९ ॥

उदश्विच्छब्दात् सप्तमीसमर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थेऽन्यतरस्यां ठक् प्रत्ययो भवति। पक्षे यथाप्राप्तमण् भवति। औदश्वितम्। औदश्वित्कम्॥

क्षीराड्ढञ् ॥ २० ॥

क्षीरशब्दात् सप्तमीसमर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति। अणोऽपवादः। क्षीरे संस्कृता, क्षैरेयी यवागूः॥

(१) अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्तते। (२) भक्ष्य इत्येतावदेव पाठः। (३) उखा पात्रविशेषः

### साऽस्मिन् पौर्णमासीति संज्ञायाम् ॥ २१ ॥

सेति प्रथमासमर्थाद् अस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासी चेद्भवति। इतिकरणस्ततश्चेद्विवक्षा। संज्ञायामिति समुदायोपाधिः, प्रत्ययान्तेन चेत्संज्ञा गम्यत इति। मासार्द्धमाससंवत्सराणामेषा संज्ञा। पौषी पौर्णमासी अस्मिन् पौषो मासः। पौषोऽर्द्धमासः। पौषः संवत्सरः। इह न भवति–पौषी पौर्णमासी अस्मिन् दशरात्र इति। भृतकमासे च(१) न भवति। इतिकरणस्य संज्ञाशब्दस्य च तुल्यमेव फलं प्रयोगानुसरणं, तत्र किमर्थं द्वयमुपादीयते? संज्ञाशब्देन तुल्यतामितिकरणस्य ज्ञापयितुं न ह्ययं लोके तथा प्रसिद्धः। संज्ञार्थत्वे(२) तु सत्यति ज्ञापिते यत्तत्र तत्रोच्यते इतिकरणस्ततश्चेद्विवक्षेति तदुपपन्नं भवति। अथ पौर्णमासीति कोऽयं शब्दः? पूर्णमासादण्, पौर्णमासी। अथवा, पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी। मा इति चन्द्र उच्यते॥

### आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥

साऽस्मिन्पौर्णमासीति सर्वमनुवर्तते। आग्रहायणीशब्दादश्वत्थशब्दाच्च प्रथमासमर्थात्पौर्णमास्युपाधिकाद् अस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। आग्रहायणिको मासः, अर्द्धमासः, संवत्सरः। एवमाश्वत्थिकः॥

### विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ॥ २३ ॥

फाल्गुन्यादयः पौर्णमासीशब्दास्तेभ्यो विभाषा ठक् प्रत्ययो भवति, साऽस्मिन् पौर्णमासीति संज्ञायामित्येतस्मिन् विषये। नित्यमणि प्राप्ते पक्षे ठग्विधीयते। फाल्गुनो मासः। फाल्गुनिकः। श्रावणः। श्रावणिकः। कार्त्तिकः। कार्त्तिकिकः। चैत्रः। चैत्रिकः॥

### साऽस्य देवता ॥ २४ ॥

सेति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं देवता चेत् सा भवति। यागसम्प्रदानं देवता देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये प्रत्ययः। इन्द्रो देवताऽस्य ऐन्द्रं हविः। आदित्यम्। बार्हस्पत्यम्। प्राजापत्यम्। देवतेति किम्? कन्या देवताऽस्य। कथमैन्द्रो मन्त्रः? मन्त्रस्तुत्यमपि देवतेत्युपचरन्ति। कथमाग्नेयो वै ब्राह्मणो देवतेति? उपमानाद्भविष्यति। "महाराजप्रोष्ठपदाट्ठञ्" इति यावत् साऽस्य देवतेत्यधिकारः। सेति प्रकृते पुनः समर्थविभक्तिनिर्देशः संज्ञानिवृत्त्यर्थः॥

---

(१) "भृतक मासे चेति" भृता एव भृतकाः, कर्मकरास्तेषां यो मास कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः। यदा पौषी पौर्णमास्या तदा न भवति वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः। (२) संज्ञार्थत्व इति–अर्थया तुल्योऽर्थो यस्य स संज्ञार्थः। तस्य भावः संज्ञार्थत्वम्।

कस्येत् ॥ २५ ॥

कशब्दो देवतायां प्रजापतेर्वाचकस्ततः पूर्वेणैवाण्प्रत्ययः सिद्ध इकारादेशार्थं वचनम् । कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन । कायं हविः । कायमेककपालं निर्वपेत् ॥

शुक्राद् घन् ॥ २६ ॥

शुक्रशब्दात् सास्य देवतेत्यस्मिन्नर्थे घन् प्रत्ययो भवति । अणोऽपवादः । शुक्रियं हविः । शुक्रियोऽध्यायः ॥

अपोनप्त्रपान्नप्तृभ्यां घः ॥ २७ ॥

अपोनप्तृ अपान्नप्तृ इत्येताभ्यां घ प्रत्ययो भवति, सास्य देवतेत्यस्मिन् विषये अणोऽपवादः । अपोनप्त्रियं हविः । अपांनप्त्रियम् । अपोनपाद् अपांनपादिति देवताया नामधेये एते । तयोस्तु प्रत्ययसन्नियोगेन रूपमिद निपात्यते ॥

छ च ॥ २८ ॥

अपोनप्तृ अपान्नप्तृ इत्येताभ्यां छकारः प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये । अणोऽपवादः । अपोनप्त्रीय हविः । अपान्नप्त्रीयम् । योगविभागः ... देशपरिहारार्थः । *छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम्* । पैङ्गाक्षीपुत्रीयम् मार्णविन्दवीयम् । *शतरुद्राद्घश्च घश्च* । शतरुद्रीयम् शतरुद्रियम् ॥

महेन्द्राद् घाणौ च ॥ २९ ॥

महेन्द्रशब्दाद् घाणौ प्रत्ययौ भवतः, चकाराच्छश्च, सास्य देवतेत्यस्मिन् विषये महेन्द्रो देवतास्य महेन्द्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् ॥

सोमाट् ट्यण् ॥ ३० ॥

सोमशब्दात् ट्यण्प्रत्ययो भवति सास्य देवतेत्यस्मिन् विषये । अणोऽपवादः णकारो वृद्ध्यर्थः । टकारो ङीबर्थः । सोमो देवतास्य सौम्यं हविः । सौम्यं सूक्तम् सौमी ऋक् ॥

वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥

वाय्वादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति सास्य देवतेत्येतस्मिन् विषये अणोऽपवादः । वायुर्देवतास्य वायव्यम् । ऋतव्यम् । पित्र्यम्(१) । उषस्यम् ॥

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३२ ॥

द्यावापृथिव्यादिभ्यश्छः प्रत्ययो भवति चकाराद्यत् सास्य देवतेत्यस्मिन् वि अणो ण्यस्य चापवादः । द्यौश्च पृथिवी च द्यावापृथिव्यौ, देवते अस्य, द्यावापृथि यम् । द्यावापृथिव्यम् । शुनश्च सीरश्च तौ देवते अस्येति, शुनासीरीयम् । शुनो वायुः । सीर आदित्यः । मरुत्वान् देवतास्य, मरुत्वतीयम् ।

( १ "पित्र्यमिति" 'रीङ् ऋतः' इति रीङ्, यस्येति लोपः ।

अग्नीषोमीयम् । अग्नीषोम्यम् । वास्तोष्पतीयम् । वास्तोष्पत्यम् । गृहमेधीयम् । गृहमेध्यम् ॥

### अग्नेर्ढक् ॥ ३३ ॥

अग्निशब्दाद् ढक् प्रत्ययो भवति साऽस्य देवतेत्यस्मिन् विषये । अणोऽपवादः । अग्निर्देवताऽस्य, आग्नेयोऽष्टाकपालः । *प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः* ॥

### कालेभ्यो भववत् ॥ ३४ ॥

कालविशेषवाचिभ्यः शब्देभ्यो भववत्प्रत्यया भवन्ति साऽस्य देवतेत्यस्मिन् विषये । कालाट्ठञिति प्रकरणे भवे प्रत्यया विधास्यन्ते ते साऽस्य देवतेत्यस्मिन्नर्थे तथैवेष्यन्ते, तदर्थमिदमुच्यते । वत्करणं सर्वसादृश्यपरिग्रहार्थम् । मासे भवं मासिकम् । आर्द्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् । तथा, मासो देवताऽस्य, मासिकम् । आर्द्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् ।

### महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥

महाराजशब्दात्प्रोष्ठपदशब्दाच्च ठञ् प्रत्ययो भवति साऽस्य देवतेत्यस्मिन् विषये । महाराजो देवताऽस्य माहाराजिकम् । प्रौष्ठपदिकम् । *ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्* । नवयज्ञोऽस्मिन् वर्तते, नावयज्ञिकः कालः । पाकयज्ञिकः । *पूर्णमासादण्* । पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः ॥

### पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥

पितृव्यादयो निपात्यन्ते । समर्थविभक्तिः प्रत्ययः प्रत्ययार्थोऽनुबन्ध इति सर्वं निपातनाद्विज्ञेयम् । पितृमातृभ्यां भ्रातर्यभिधेये व्यत् डुलच् इत्येतौ प्रत्ययौ निपात्येते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । *ताभ्यां पितरि डामहच्, मातरि षिच्च* । ताभ्यामेव पितरि डामहच् प्रत्ययो भवति । पितुः पिता, पितामहः । मातुः पिता, मातामहः । मातरि षिच्च । पितामही । मातामही । *अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः* । अवेर्दुग्धमविसोढम् । अविदूसम् । अविमरीसम् । *तिलान्निष्फलात्पिञ्जपेजौ प्रत्ययौ वक्तव्यौ* । निष्फलस्तिलस्तिलपिञ्जः । तिलपेजः । *पिञ्जश्छन्दसि डिच्च* । तिल्पिञ्जः ॥

### तस्य समूहः ॥ ३७ ॥

तस्येति षष्ठीसमर्थात् समूह इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । किमिहोदाहरणम् ? चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत्प्रातिपदिकग्रहणम् । अचित्ताट्ठक ष्यति, अनुदात्तादेरञ्, गोत्राद्वुञ्, प्रतिपदं च "केदाराद्यञ्च" इत्येवमादि, तत्परिहारेणात्रोदाहरणं द्रष्टव्यम्—काकानां समूहः, काकम् । शौकम् । बाकम् । "इनि-

त्रकस्यचश्च" इति यावत्समूहाधिकारः । *गुणादिभ्यो ग्रामजवक्तव्यः* । गुणग्रामः । करणग्रामः । गुण । करण । तत्त्व । शब्द । इन्द्रिय । आकृतिगणः (१) ॥

भिक्षादिभ्योऽण् ॥ ३८ ॥

भिक्षेत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । अण्ग्रहणं बाधकबाधनार्थम् । भिक्षाणां समूहः, भैक्षम् । गार्भिणम् । युवतिशब्दोऽत्र पठ्यते, तस्य ग्रहणसामर्थ्यात् पुंवद्भावो न भवति-"भस्याढे तद्धिते" इति । युवतीनां समूहो, यौवतम् । भिक्षा । गर्भिणी । क्षेत्र । करीष । अङ्गार । चर्मिन् । धर्मिन्(२) । सहस्र । युवति । पदाति । पद्धति । अथर्वन्(३) । दक्षिणा । भूत( ४ ) ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ ३९ ॥

गोत्रादिभ्यो वुञ्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं न तु पौत्रप्रभृत्येव । औपगवानां समूहः, औपगवकम् । कापटवकम् । उक्षन्-औक्षकम् । उष्ट्र-औष्ट्रकम् । उरभ्र-औरभ्रकम् । राजन्-राजकम् । राजन्य-राजन्यकम् । राजपुत्र-राजपुत्रकम् । वत्स-वात्सकम् । मनुष्य-मानुष्यकम् । अज-आजकम् । "प्रकृत्याऽके राजन्यमनुष्ययुवानः" इति यलोपो न भवति-"आपत्यस्य च तद्धितेऽनाति" इति । *वृद्धाच्चेति वक्तव्यम्* । वृद्धानां समूहो, वार्द्धकम् ॥

केदाराद्यञ्च ॥ ४० ॥

केदारशब्दाद् यञ् प्रत्ययो भवति, चकाराद् वुञ् च, तस्य समूह इत्येतस्मिन् विषये । अचित्तलक्षणस्य ठकोऽपवादः । केदाराणां समूहः, कैदार्यम् । कैदारकम् । *गणिकायाश्च यञ्वक्तव्यः* । गणिकानां समूहो, गाणिक्यम् ॥

ठञ् कवचिनश्च ॥ ४१ ॥

कवचिन्शब्दाट्ठञ् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । कवचिनां समूहः, कावचिकम् । चकारः केदारादित्यस्यानुकर्षणार्थः । केदाराणां समूहः, कैदारिकम् ॥

ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥

ब्राह्मणादिभ्यः शब्देभ्यो यन्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । नकारः स्वरार्थः । ब्राह्मणानां समूहो, ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । *यन्प्रकरणे पृष्ठादुपसंख्यानम्* । पृष्ठानां समूहः, पृष्ठ्यम् । *अह्नः खः क्रतौ* । अह्नां समूहोऽहीनः क्रतुः । क्रताविति किम् ? आह्नः । खण्डिकादिषु दर्शनाद्भवति । *पर्श्वा

( १ ) वर्तिनोऽल्यस्य पाठः । ( २ ) चर्मन्, धर्मन् इति पा० । ( ३ ) अथर्वन् इति पा० ।
( ४ ) विषय । श्रोत्र । वृक्षादिभ्यः खण्डः । वृक्षखण्डः । तरुखण्डः । वृक्ष । तरु । पादप ।
इत्यधिकः क्वचित् । क्वचित्-वृक्षादिभ्यः षण्डप्रत्ययो भवति । वृक्षषण्डः । तरुषण्डः ।

णस्वक्तव्यः* । पर्शूनां समूहः, पार्श्वम् । पदसंज्ञकत्वाद् गुणो न भवति । *वाताद्‌ूलः* । वातानां समूहो, वातूल (१) ॥

ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ४३ ॥

ग्रामादिभ्यस्तल्प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । ग्रामाणां समूहो, ग्रामता । जनता । बन्धुता । सहायता । *गजाच्चेति वक्तव्यम्* । गजानां समूहो, गजता ॥

अनुदात्तादेरञ् ॥ ४४ ॥

अनुदात्तादेः शब्दादञ्प्रत्ययो भवति, तस्य समूह इत्येतस्मिन् विषये । कपोतानां समूहः, कापोतम् । मायूरम् । तैत्तिरम् ॥

खण्डिकादिभ्यश्च ॥ ४५ ॥

खण्डिका इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । आद्युदात्तार्थमचित्तार्थं च वचनम् । खण्डिकानां समूहः, खाण्डिकम् । वाडवम् । क्षुद्रकमालवशब्दोऽत्र पठ्यते । क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्वः । ततः पूर्वेणैवाञि सिद्धे वचनं गोत्रवुञ् बाधनार्थम् । ननु च परत्वादञा वुञ् बाधिष्यते । न च गोत्रसमुदायो गोत्रं, न च तदन्तविधिरस्ति ? एवं तर्हि एतद् ज्ञापयति—वुञि पूर्वविप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्तीति । प्रयोजनमौपगवकं कापटवकमिति वुञ् भवति, ग्रामहास्तिकं गौधेनुकमिति च तदन्तविधिः । क्षुद्रकमालवादित्येतावता योगविभागेन पूर्वविप्रतिषेधस्तदन्तविधिश्च ज्ञापितः, पुनरप्यैव नियमार्थमुच्यते सेनासंज्ञायामिति । क्षुद्रकमालवात् सेनासंज्ञायामेवाञ्भवति । क्षौद्रकमालवी सेना । क्षौद्रकमालवकमन्यत्(२) ।

अप्रसिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद्वुञ् न च तद्गोत्रं तदन्तान्न च सर्वतः ॥
ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः ।
सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा ॥

खण्डिका । वडवा । क्षुद्रकमालवात्सेनासंज्ञायाम् । भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध ॥

चरणेभ्यो धर्मवत् ॥ ४६ ॥

चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति । गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्यन्ते, तत्र चेदमुच्यते चरणाद्धर्माम्नाययोरिति, तेन धर्मवदित्यतिदेशः क्रियते । वतिः सर्वसादृश्यार्थः । कठानां धर्मः, काठ-

---

( १ ) क्वचिन्नास्त्ययं पाठः । ( २ ) अत्राधिकं क्वचित् "गोत्रलक्षणो वुञेव भवति" इति ।

कम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणम् । तथा समूहेऽपि–काठकम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणम् ॥

अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥

अचित्तवाचिभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । अणञोरपवादः । अपूपानां समूहः, आपूपिकम् । शाष्कुलिकम् । हास्तिकम् । धैनुकम् । ॐ धेनोरनञ इति वक्तव्यम् ॐ । आधेनवम् ॥

केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥

केश अश्व इत्येताभ्यां यथासंख्यं यञ् छ इत्येतौ प्रत्ययौ भवतोऽन्यतरस्यां तस्य समूह इत्येतस्मिन् विषये । केशानां समूहः, कैश्यम् । कैशिकम् । अश्वानां समूहः, अश्वीयम् । आश्वम् ॥

पाशादिभ्यो यः ॥ ४९ ॥

पाशादिभ्यो यः प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । पाशानां समूहः, पाश्या । तृण्या(१) । पाश । तृण । धूम । वात । अङ्गार । पोत । बालक । पिटक । पिटाक । शकट । हल । नड । वन(२) ॥

खलगोरथात् ॥ ५० ॥

खलगोरथशब्देभ्यो यः प्रत्ययो भवति तस्य समूह इत्येतस्मिन् विषये । खलानां समूहः खल्या । गव्या । रथ्या । पाशादिषु पाठ उत्तरार्थः(३) ।

इनित्रकट्यचश्च ॥ ५१ ॥

खलगोरथशब्देभ्यो यथासंख्यम् इनि त्र कट्यच इत्येते प्रत्यया भवन्ति समूह इत्येतस्मिन् विषये । खलिनी । गोत्रा । रथकट्या । ॐ खलादिभ्य इनिर्वक्तव्य ॐ डाकिनी । कुण्डलिनी । कुटुम्बिनी । ॐ कमलादिभ्य खण्डच प्रत्ययो भवतिॐ । कमलखण्डम् । अम्भोजखण्डम् । कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी । कमलादिराकृतिगणः । ॐ नरकरितुरङ्गाणां स्कन्धच प्रत्यय ॐ । नरस्कन्धः । करिस्कन्धः । तुरङ्गस्कन्धः । ॐ पूर्वादिभ्यः काण्डः प्रत्ययो भवतिॐ । काण्डम् । तृणकाण्डम् । कर्मकाण्डम्(४) ।

विषयो देशे ॥ ५२ ॥

समूह इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्तते । तस्येति षष्ठीसमर्थाद् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत्स भवति । [illegible]

(१) अत्र स्त्रीलिङ्गत्वं लोकाश्रयत्वाल्लिङ्गस्येत्यधिकं पुस्तकान्तरे । (२) क्वचिदपि "पाटल । गल" इति । (३) योगविभाग उत्तरार्थः पा० । (४) कमलादिभ्यः [illegible]भ्य कर्मकाण्डमित्यन्तः क्वचिन्नास्त्यय पाठः ।

शब्दो बह्वर्थः—क्वचिद् ग्रामसमुदाये वर्त्तते, विषया लब्ध इति। क्वचिदिन्द्रियग्राह्ये, चक्षुर्विषयो रूपमिति। क्वचिदन्यत्राशीलिते ज्ञेये, देवदत्तस्य विषयोऽनुवाक इति। क्वचिदन्यत्राभावे, मत्स्यानां विषयो जलमिति। तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम्। शिबीनां विषयो देशः, शैबः। औष्ट्रः। देश इति किम्? देवदत्तस्य विषयोऽनुवाकः॥

राजन्यादिभ्यो वुञ् ॥ ५३ ॥

राजन्यादिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति विषयो देश इत्येतस्मिन्नर्थे। अणोऽपवादः। राजन्यानां विषयो देशः, राजन्यकः। दैवयानकः। आकृतिगणश्चायम्। मालवानां विषयो देशः, मालवकः। वैराटकः। त्रैगर्त्तकः। राजन्य। दैवयान। शालङ्कायन। जालन्धरायण। आत्मकामेय। अम्बरीषपुत्र। वसाति। बैल्ववन। शैलूष। उदुम्बर। बैल्वल। आर्जुनायन। संप्रिय। दाक्षि। ऊर्णनाभ(१)॥

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल् भक्तल् इत्येतौ प्रत्ययौ भवतो विषयो देश इत्येतस्मिन् विषये। अणोऽपवादः। भौरिकिविधः। वैपेयविधः। ऐषुकार्यादिभ्यः—ऐषुकारिभक्तः। सारस्यायनभक्तः। भौरिकि। वैपेय। भौलिकि। चैटयत। काणेय। वाणिजक। वालिज्य। वालिज्यक। शैकयत। वैकयत। इति भौरिक्यादिः। ऐषुकारि। सारस्यायन। चान्द्रायण। द्व्याक्षायण। त्र्याक्षायण। औडायन। जौलायन। खाडायन। सौवीर। दासमित्रि। दासमित्रायण। शौद्रायण(२)। दाक्षायण। शयण्ड। तार्क्ष्यायण। शौभ्रायण। सायण्डि। शौण्डि। वैश्वमाणव। वैश्वधेनव। नद। तुण्डदेव। विशदेव(३)॥

सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ॥ ५५ ॥

स इति समर्थविभक्तिः। अस्येति प्रत्ययार्थः। आदिरिति प्रकृतिविशेषणम्। इतिकरणो नियमार्थः। छन्दस इति प्रकृतिनिर्देशः। प्रगाथेष्विति प्रत्ययार्थविशेषणम्। स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति, इतिकरणस्ततश्चेद्विवक्षा। पङ्क्तिरादिरस्य, पाङ्क्तः प्रगाथः। आनुष्टुभः। जागतः(४)। आदिरिति किम्? अनुष्टुम्मध्यमस्य प्रगाथस्य। छन्दस इति किम्? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेष्विति किम्? पङ्क्तिरादिरस्यानुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचि-

---

(१) अत्राधिकमिदम्—आपीत। अजीड। वैतल। वायक इति। (२) शौद्राय इति पण्डितपत्रे। (३) अधिकमत्रेदम् क्वचित्—“भरायत। मौलायत्व। चौण्ड। शयाण्ड। वैश्वदेव” इति। (४) जगत इति पं० पत्रे०।

देव मन्त्रविशेषे वर्त्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्र क्रियन्ते स प्रग्र(१)थनात्प्रकर्ष-गानाद्वा प्रगाथ इत्युच्यते। ॐछन्दस प्रत्ययविधाने नपुसके स्वार्थ उपसख्यानम्ॐ। त्रिष्टुवेव त्रैष्टुभम्। जागतम्।

सङ्ग्रामे प्रयोजनयोद्धृभ्य ॥ ५६ ॥

सोऽस्येति समर्थविभक्ति, प्रत्ययार्थश्चानुवर्त्तते। प्रथमासमर्थविशेषण प्रयोजन योद्धारश्च। प्रत्ययार्थविशेषण सग्राम। प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च शब्देभ्य प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे सग्रामेऽभिधेये यथाविहित प्रत्ययो भवति। भद्रा प्रयोजनमस्य सग्रामस्य, भाद्र सग्राम। सौभद्र। गौरिमित्र। योद्धृभ्य—अहिमाला योद्धारोऽस्य सग्रामस्य, आहिमाल। स्यान्दनाश्व। भारत। सग्राम इति किम्? सुभद्रा प्रयोजनमस्य दानस्य। प्रयोजनयोद्धृभ्य इति किम्? सुभद्रा प्रेक्षिकाऽस्य सग्रामस्य॥

तदस्या प्रहरणमिति क्रीडाया ण ॥ ५७ ॥

तदिति प्रथमासमर्थादस्यामिति सप्तम्यर्थे ण प्रत्ययो भवति, यत्तदिति निर्दिष्ट प्रहरण चेत्तद्भवति, यदस्यामिति निर्दिष्ट क्रीडा चेत्सा भवति। इति—करणस्ततश्चेद्वि-वक्षा। दण्ड प्रहरणमस्या क्रीडाया, दाण्डा। मौष्टा। प्रहरणमिति किम्? माला भूषणमस्या क्रीडायाम्। क्रीडायामिति किम्? खड्ग प्रहरणमस्या सेनायाम्॥

घञ सास्या क्रियेति ञ ॥ ५८ ॥

सेति समर्थविभक्ति। अस्यामिति प्रत्ययार्थ स्त्रीलिङ्ग। क्रियेति प्रकृत्यर्थविशेषण। घञ इति प्रकृतिनिर्देश। इति—करणो विवक्षार्थ। घञन्तात्क्रियावाचिन प्रथमासमर्थादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञ प्रत्ययो भवति। घञ इति कृद्ग्रहण, तत्र गतिकारकपूर्वमपि गृह्यते। श्येनपातोऽस्या वर्त्तते श्यैनम्पाता। तैलम्पाता। घञ इति किम्? श्येनपतनमस्या वर्त्तते। क्रियेति किम्? प्राकारोऽस्या वर्त्तते। अथ समर्थ विभक्ति प्रत्ययार्थश्च कस्मात्पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव? क्रीडायामि-त्यनेन तत्सम्बद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत। सामान्येन चेद विधानम्। दण्डपातोऽस्या तिथौ वर्त्तते दाण्डपाता तिथि। मौसलपाता तिथि॥

तदधीते तद्वेद ॥ ५६ ॥

तदिति द्वितीयासमर्थादधीते वेद इत्येतयोरर्थयोर्यथाविहित प्रत्ययो भवति। छन्दोऽधीते, छान्दस। वैयाकरण। नरुक्त। निमित्तानि वेद, नैमित्त। मौहूर्त्त। औत्पात। द्विस्तद्ग्रहणमधीयानविदुषो पृथग्विधानार्थम्॥

क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥

क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति तदधीते तद्वेदेत्य-

(१) प्रागाथाद्वा इति, प० पा०। प्रग्रथनेनेति, प्रकर्षगानादिति। न्या० पा०।

स्मिन्विषये । अणोऽपवाद । अग्निष्टोममधीते वेद वा, आग्निष्टोमिक । वाजपेयिक । उक्थादिभ्य —औक्थिक । लौकायतिक । सूत्रान्तात्—वार्तिकसूत्रिक । साग्रहसूत्रिक । सूत्रान्तादकल्पादेरिष्यते—कल्पसूत्रमधीते कारपसूत्र, अणेव भवति। उक्थ शब्द केषु चिदेव सामसु रूढ, यज्ञायज्ञीयात्परेण यानि गीयन्ते, न च तान्यधीयाने प्रयय इष्यते, किं तर्हि सामलक्षणे औक्थिक्ये वर्तमान उक्थशब्द प्रत्ययमुत्पादयति-उक्थमधीते, औक्थिक । औक्थक्यमधीत इत्यर्थ । औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव, अनभिधानात् । ॐविद्यालक्षणकल्पान्तादिति वक्तव्यम्ॐ । वायसविद्यक सार्पविद्यक । गौलक्षणिक । आश्वलक्षणिक । मातृकल्पिक । पाराशरकल्पिक । ॐविद्या च नाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वाॐ । अङ्गविद्यामधीते, आङ्गविद्य । क्षात्रविद्य । धार्मविद्य । सांसर्गविद्य । त्रैविद्य । ॐआख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्य ॐ । आख्यानाख्यायिकयोरर्थग्रहणमितिहासपुराणयो स्वरूपग्रहणम् । यावक्रीतिक । प्रैयङ्गविक । यासवदत्तिक । सौमनोत्तरिक । ऐतिहासिक । पौराणिक । ॐसर्वसादेर्द्विगोश्च ल ॐ । सर्ववेद । सर्वतन्त्र । सादे —सवार्त्तिक । ससग्रह । द्विगो —द्विवेद । पञ्चव्याकरण । ॐअनुसूर्लक्ष्यलक्षणे चॐ । अनुसूर्नाम ग्रन्थस्तमधीते, आनुसुक । लाक्षिक । लाक्षणिक । ॐइकन्पदोत्तरपदात्ॐ । पूर्वपदिक (१) । ॐशतषष्टे ष्किन् पथो बहुलम्ॐ । शतपथिक । शतपथिकी । षष्टिपथिक । षष्टिपथिकी । बहुलग्रहणादणपि भवति । शातपथ । षाष्टिपथ । उक्थ । लोकायत । न्याय । न्यास । निमित्त । पुनरक्त । निरुक्त । यज्ञ । चर्चा । धर्म । क्रमेतर । श्लक्ष्ण । संहिता । पद । क्रम । सघात । वृत्ति । सग्रह । गुणागुण । आयुर्वेद । सूत्रान्तादकल्पादे । विद्यालक्षणकल्पान्तात् । विद्या चानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा । आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् । सर्वसादेर्द्विगोश्च ल । अनुसूर्लक्ष्यलक्षणे च । द्विपदी, ज्योतिषि । अनुपद । अनुकल्प । अनुगुण । इकन्पदोत्तरपदात् । शतषष्टे पथ ष्किन् बहुलम् ॥

क्रमादिभ्यो वुन् ॥ ६१ ॥

क्रम इत्येवमादिभ्य शब्देभ्यो वुन्प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये । अणोऽपवाद । क्रमक । पदक । क्रम । पद । शिक्षा । मीमांसा । सामन् ॥

अनुब्राह्मणादिनि ॥ ६२ ॥

अनुब्राह्मणशब्दादिनि प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन्विषये । अणोऽपवाद । ब्राह्मणसदृशोऽय ग्रन्थोऽनुब्राह्मणम् । तदधीतेऽनुब्राह्मणी । अनुब्राह्मणिनौ अनुब्राह्मणिन । मत्वर्थेन "अत इनिठनौ" इति इनिना सिद्धम् । तत्रेतरस्माट्ठन् प्राप्नोति, अनभिधानान्न भविष्यति । अणो निवृत्त्यर्थं तर्हि वचनम् ॥

---

( १ ) इकन् बहुल पदोत्तरपदात्, पदोत्तरपदिक । अ केचु पदोत्तरपदादिति पदश द उत्तरपद यस्य तस्मान्स्त्यिर्थ व्याचक्षते, तन्मते पूर्वपदिक उत्तरपदिक । इति कश्चित् ।

वसन्तादिभ्यष्ठक् ॥ ६३ ॥

वसन्त इत्येवमादिभ्यष्ठक्प्रत्ययो भवति तदधीते तद्वेदेत्यस्मिन् विषये । अणो-ऽपवादः । वसन्तसहचरितोऽयं ग्रन्थो वसन्तस्तमधीते, वासन्तिकः । वार्षिकः । वसन्त । वर्षा । शरद् । हेमन्त । शिशिर । प्रथम । गुण । चरम । अनुगुण । अपर्वन् । अथर्वन् ॥

प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्तसहचरितं प्रत्ययः प्रोक्तः । प्रोक्तप्रत्ययान्तादध्येतृवेदितृप्रत्ययस्य लुग्भवति । पाणिनिना प्रोक्तं पाणिनीयम्, तदधीते पाणिनीयः । आपिशलः । स्त्रिया स्वरे च विशेषः । पाणिनीया ब्राह्मणी ॥

सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुग्भवति । अप्रोक्तार्थं आरम्भः । पाणिनीयमष्टकं सूत्रं तदधीते, अष्टकाः पाणिनीयाः । दशकाः वैयाघ्रपदीयाः । त्रिकाः काशकृत्स्नाः । ॐसंख्याप्रकृतेरिति वक्तव्यम्ॐ । इह मा भूत्—महावार्तिकं सूत्रमधीते, माहावार्तिकः । कालापकमधीते, कालापकः । कोपधादिति किम् ? चतुष्टयमधीते, चातुष्टयः ॥

छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

प्रोक्तग्रहणमनुवर्तते । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति । अध्येतृवेदितृप्रत्ययविषयाणि । अनन्यभावो विषयार्थः । तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते । कठेन प्रोक्तमधीयते कठाः । मौदाः । पैप्पलादाः । आर्चाभिनः । वाजसनेयिनः । ब्राह्मणानि खल्वपि—ताण्डिनः । भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः । ब्राह्मणग्रहणं किम् ? यावता छन्द एव तत् । ब्राह्मणविशेषप्रतिपत्त्यर्थमिह तद्विषयता मा भूत् । याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । सौलभानि । चकारोऽनुक्तसमुच्चयार्थः कल्पे—काश्यपिनः । कौशिकिनः । सूत्र—पाराशरिणो भिक्षवः । शैलालिनो नटाः । कर्मन्दिनः । कृशाश्विनः । छन्दोब्राह्मणानीति किम् ? पाणिनीयं व्याकरणम् । पैङ्गी कल्पः ॥

तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥

तदिति प्रथमा समर्थविभक्तिः । अस्मिन्निति प्रत्ययार्थः । अस्तीति प्रकृत्यर्थविशेषणम् । इति-करणो विवक्षार्थः । देशे तन्नाम्नीति प्रत्ययार्थविशेषणम् । तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थमस्ति चेत्तद्भवति, यदस्मिन्निति निर्दिष्टं देशश्चेत् स तन्नामा भवति—प्रत्ययान्तनामा इतिकरणस्ततश्चेद्विवक्षा । उदुम्बरा अस्मिन् देशे सन्ति, औदुम्बरः । बाल्वजः । पार्वतः । मत्वर्थीयापवादो योगः ॥

तेन निर्वृत्तम् ॥ ६८ ॥

तेनेति तृतीयासमर्थान्निर्वृत्तमित्यस्मिन् विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। देशे तन्नाम्नीति चतुर्ष्वपि योगेषु सम्बध्यते। सहस्रेण निर्वृत्ता, साहस्री परिखा। कुशाम्बेन निर्वृत्ता, कौशाम्बी नगरी। हेतौ कर्त्तरि च यथायोग तृतीया समर्थविभक्तिः ॥

तस्य निवास ॥ ६९ ॥

तस्येति षष्ठीसमर्थान्निवास इत्येतस्मिन्नर्थे यथाविहित प्रत्ययो भवति देशनामधेये गम्यमाने। निवसन्त्यस्मिन्निति निवास । ऋजुनावां निवासो देश , आर्जुनावो देश। शैव । औद्रिष्ट ॥

अदूरभवश्च ॥ ७० ॥

पूर्वा समर्थविभक्तिरनुवर्त्तते। तस्येति षष्ठीसमर्थाददूरभव इत्येतस्मिन्नर्थे यथाविहित प्रत्ययो भवति। विदिशाया अदूरभव नगर, वैदिशम्। हैमवतम्। चकार पूर्वेषा त्रयाणामर्थानामिह सन्निधानार्थ । तेनोत्तरेषु चत्वारोऽप्यर्था सम्बध्यन्ते ॥

ओरञ् ॥ ७१ ॥

चत्वारोऽर्था अनुवर्त्तन्ते। उवर्णान्तात्प्रातिपदिकाद्यथाविहित समर्थविभक्तियुक्ता दञ् प्रत्ययो भवति तदस्मिन्नस्तीत्येवमादिष्वर्थेषु। अणोऽपवाद । अरडु—आरडवम्। कक्षतु—काक्षतवम्। कर्कटेलु—कार्कटेलवम्। नद्या तु परत्वान्मतुब्भवति—इक्षुमती। अत्राधिकार—प्राक्, सुवास्त्वादिभ्योऽण् ॥

मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वच् अङ्ग यस्यासौ बह्वजङ्गो मतुप्, तदन्तात्प्रातिपदिकादञ्प्रत्ययो भवति चातुरर्थिक । अणोऽपवाद । ऐषुकावतम्(1)। सैध्रकावतम्। बह्वजङ्गादिति किम्? आहिमतम्। यावमतम्। अङ्गग्रहण बह्वजिति तद्विशेषण यथा विज्ञायेत, मत्वन्त विशेषण मा विज्ञायीति। मालावता निवासो, मालावतम् ॥

बह्वच कूपेषु ॥ ७३ ॥

बह्वच प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिक कूपेष्वभिधेयेषु। अणोऽपवाद । यथासम्भवमर्था सम्बध्यन्ते। दीर्घवरत्रेण निर्वृत्त कूप, दैर्घवरत्र । कापिलवरत्र ॥

उदक् च विपाश ॥ ७४ ॥

विपाश उत्तरे कूले ये कूपास्तेष्वभिधेयेष्वञ् प्रत्ययो भवति चातुरर्थिक । अणोऽपवाद । अबह्वजर्थ आरम्भ । दत्तेन निर्वृत्त कूपो दात्त । गौप्त । उदगिति किम्? दक्षिणतो विपाश कूपेष्वणेव। दात्त । गौप्त । स्वरे विशेष । महती सूक्ष्मेक्षिका वर्त्तते सूत्रकारस्य ॥

---

( १ ) ऐकटाक्षतम् पा०

सङ्कलादिभ्यश्च ॥ ७५ ॥

कूपेष्विति निवृत्तम्। सकल इत्येवमादिभ्योऽञ् प्रत्ययो भवति चातुरर्थिकः। अणो ऽपवादः। यथासम्भवमर्थसम्बन्धः। सङ्कल एव, साङ्कलम्। सकलेन निर्वृत्तं, साकलं। पौष्कलं। सङ्कल। पुष्कल। उद्दुप। उडुप। उत्पुट। कुम्भ। विधान। सुदत्त। सुदत्त। सुभूत। सुनेत्र। सुपिङ्गल। सिकता। पूतीकी। पूलास। कूलास। पलाश। निवश। गवेष। गम्भीर। इतर। शर्मन्। अहन्। लोमन्। वमन्। वरुण। बहुल। सद्योज। अभिषिक्त। गोभृत्। राजभृत्। गृह। भृत। भल्ल। माल। वृत्॥

स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥

देशे तन्नाम्नीत्यस्य विशेषणं सौवीरादय, स्त्री च। इयाप्प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि। सौवीरे तावत्-दत्तामित्रेण निर्वृत्ता नगरी, दात्तामित्री। साल्वे-वैधूमाग्निना निर्वृत्ता, वैधूमाग्नी। प्राचि खल्वपि-ककन्दन निर्वृत्ता, काकन्दी। माकन्दी। माणचरी। जारपी॥

सुवास्त्वादिभ्योऽण् ॥ ७७ ॥

सुवास्तु इत्येवमादिभ्योऽण् प्रत्ययो भवति चातुरर्थिकः(१)। अण् उवणान्तलक्षणस्य कूपलक्षणस्य चापवादः। सुवास्तोरदूरभवं नगरं, सौवास्तवम्। वाणवम्। अण्ग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी नदी। सुवास्तु। वणु। भण्डु। (२)खण्डु। सेवालिन्। कर्पूरिन्। शिखण्डिन्। गर्त। कर्कश। शटीकर्ण। कृष्ण। कर्क। कर्कन्धूमती। गोह्य(३)। अहिसक्थ। वृत्॥

रोणी ॥ ७८ ॥

रोणीशब्दादण्प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। कूपलक्षणस्याञोऽपवादः। रोणीति कोऽयं निर्देशो यावता प्रत्ययविधौ पञ्चमी युक्ता? तत्रावस्थाप्रतिपत्त्यर्थमनुच्यते—रोणीशब्दः सर्वावस्थोऽणप्रत्ययमुत्पादयति, केवलस्तदन्तश्च। रौणं। आजकरोणं, सैंहिकरोणं॥

कोपधाच्च ॥ ७९ ॥

ककारोपधाच्च प्रातिपदिकादण्प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। कूपलक्षणस्योवर्णलक्षणस्य चाञोऽपवादः। कार्णच्छिद्रिकः कूपः। कार्णवेष्टकः। कृकवाकुना निर्वृत्तं कार्कवाकवम्। त्रैशङ्कवम्॥

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ ८० ॥

---

(१) यथासम्भवमर्थसम्बन्ध इत्यधिकं पुस्तकेषु। (२) कण्डु इति पा०। (३) गोह्य पा०

वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव प्रातिपदिकगणाः । आदिशब्दः प्रत्येकमभिसम्बध्यते । तत्र यथासंख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्यया भवन्ति चातुरर्थिकाः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । अरीहणादिभ्यो वुञ् प्रत्ययो भवति । आरीहणकम् । द्रौघणकम् । अरीहण । द्रुघण । खदिर । मार । भगल । उलन्द । साम्परायण । क्रौष्ट्रायण । भास्त्रायण । मैत्रायण । त्रैगर्त्तायन । रायस्पोष । विपथ । उद्दण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । (१)वैमतायन । सौसायन । शाण्डिल्यायन । शिरीष । बधिर(२) । अरीहणादिः ॥ कृशाश्वादिभ्यश्छण्प्रत्ययो भवति । कार्शाश्वीयः । आरिष्टीयः । कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता(३) । अवनत । विकुधास । अरस । अवयास(४) । मौद्गल्य । कृशाश्वादिः ॥ ऋश्यादिभ्यः कः प्रत्ययो भवति । ऋश्यकः । न्यग्रोधकः । ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निबात् । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण(५) । ऋश्यादि ॥ कुमुदादिभ्यष्ठच्प्रत्ययो भवति । कुमुदिकम् । शर्करिकम् । कुमुद । शर्करा । न्यग्रोध । इत्कट(६) । गर्त्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत(७) । कुमुदादिः । काशादिभ्य इलः प्रत्ययो भवति । काशिलम् । वाशिलम् । काश । वाश । अश्वत्थ । पलाश । पीयूष । विश(८) ॥ तृण । नर । चरण । कर्दम । कर्पूर । कण्टक । गृह । काशादि (९) ॥ तृणादिभ्यः शः प्रत्ययो भवति । तृणशः । नडशः । तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन । तृणादिः ॥ प्रेक्षादिभ्य इनिप्रत्ययो भवति । प्रेक्षी । हलकी । प्रेक्षा । हलका(१०) । बन्धुरा । ध्रुवका । क्षिपका । न्यग्रोध । इर्कुट(११) । प्रेक्षादिः॥ अश्मादिभ्यो रप्रत्ययो भवति । अश्मरः । अश्मन् । यूथ । रूप । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा(१२) । अश्मादिः ॥ सख्यादिभ्यो ढञ् प्रत्ययो भवति । साखेयम् । साखिदत्ते-

---

(१) भैमतायन पा० (२) वैतरायण । गोमनायण । सोमनायण । खाण्डायन । विपाश । सुयश । जम्बु । सुशर्म । एते शब्दाः क्वचिदधिका दृश्यन्ते । (३) वनिता पा० । (४) क्षयावम् पा० । (५) अधिका एते खाण्ड । परिवृत्त । कर्दम । अंशु । (६) उत्कटेति पा० (७) कण्टक । कङ्कट । सङ्कट । पलाश । त्रिक । कत । दशग्राम । अधिका एते । (८) बिस इति पा० (९) आवास । नद । वन । बबूल । बर्बर । एतेऽधिका । (१०) फलका इति पा० (११) बुक्का । सङ्कट । कूपका । कर्कटा । सुकटा । शुक । महा । अधिका कचित् । (१२) यूथ । रथ । नद । नख । काष्ठ । पाम । अधिकाः क्वचित् ।

यम्। सखि। सखिदत्त। वायुदत्त। गोहित(१)। भल्ल। पाल। चक्रपाल। चक्रवाल। छगल। अशोक। करवीर। सीकर। सक्र। सरस। समल(२)। सख्यादि। सकाशादिभ्यो ण्यप्रत्ययो भवति। साकाश्यम्। काम्पिल्यम्। सकाश। काम्पिल्य। समीर। कश्मर। शूरसेन। सुपथिन्। सक्थच। यूप। अंश। एग। अश्मन्। कूट। मलिन। तीर्थ। अगस्ति। विरत। चिकार। विरह। नासिका। सकाशादि॥ बलादिभ्यो य प्रत्ययो भवति। बल्य। कुल्यम्। बल। कुल। तुल। उल। डुल। कवल। वन। कुल। बलादि। पक्षादिभ्य फक् प्रत्ययो भवति। पाक्षायण। तौपायन। पक्ष। तुप। अण्ड। कम्बलिक। चित्र। अश्मन्। अतिस्वन्। पथिन्पन्थ च(३)। पक्षादि। कर्णादिभ्य फिञ्प्रत्ययो भवति। कार्णायनि। वासिष्ठायनि। कर्ण। वसिष्ठ। अलुश। शल। द्रुपद। अनड्डुह्य। पाञ्चजन्य। स्थिरा। कुलिश। कुम्भी। जीवन्ती। जित्व। आण्डीवत्(४)। कर्णादि। सुतङ्गमादिभ्य इञ्प्रत्ययो भवति। सौतङ्गमि। मौनिचित्ति। सुतङ्गम। मुनिचित्त। विप्रचित्त। महापुत्र। श्वेत। गडिक। शुक्र। विप्र। बीजवापिन्। श्वन्। अर्जुन। अजिर। जीव। सुतङ्गमादि। प्रगदिन्नादिभ्यो ञ्य प्रत्ययो भवति। प्रागद्यम्। प्रगदिन्। मगदिन्। शरदिन्। कलिन्। खडिव। गडिव। चूडार। मार्जार। कोविदार। प्रगद्यादि। वराहादिभ्य कक् प्रत्ययो भवति। वाराहकम्। पालाशकम्। वराह। पलाश। शिरीष। पिनद्ध। स्थूण। विदग्ध। विजग्ध। विभग्न। बाहु। खदिर। शर्करा(५)। वराहादि। कुमुदादिभ्यष्ठक् प्रत्ययो भवति। कौमुदिकम्। कुमुद। गोमथ। रथकार। दशग्राम। अश्वत्थ। शाल्मली। कुण्डल। मुनिस्थूल। कूट। मुचुकर्ण(६)। कुमुदादि। शिरीषशब्दोऽरीहणादिषु कुमुदादिषु वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते। तस्य च वरणादिषु दर्शनाल्लुब्भवति। तथा चोक्तम्–शिरीषाणामदूरभवो ग्राम शिरीषास्तस्य वन शिरीषवनमिति॥

जनपदे लुप्॥ ८१॥

देशे तन्नाम्नीति यश्चातुरर्थिक प्रत्ययो भवति, तस्य देशविशेषे जनपदेऽभिधेये लुब्भवति। ग्रामसमुदायो जनपद। पञ्चालाना निवासो जनपद, पञ्चाला। कुरव। मत्स्या। अङ्गा। वङ्गा। मगधा। सुह्मा। पुण्ड्रा। इह कस्मान्न भवति–उदुम्बरा अस्मिन् सन्ति, औदुम्बरो जनपद, वैदिशो(७) जनपद, इति? तन्नाम्नीति वर्तते, न चात्र लुबन्त तन्नामधेय भवति।

(१) गोहिल पा० ( ) चक्र वक्रपाल। उशीर। सुरस। रोह। तमाल। कदल। सप्तन। एतेऽधिका क्वचित्। (२) कुम्भ। सीरज। सारक। सरक। सलक। सरस। समल। रोमन्। लोमन्। हस्तिका। लोमक। सकण्टक। अरि बल यमल हस्त। सिहक। इति पाठान्तरमधिकम्। (४) अर्क, लूष। स्फिक स्थावर। एतच्छब्दा गणेऽत्राधिका। (५) विनद्ध, निबद्ध, विरुद्ध, मूल एते पुस्तकान्तरेऽधिका॥ (६) कुन्द, मधुकर्ण, शुचिकर्ण, शिरीष एतेऽधिका पुस्तकान्तरे॥ (७) वैतस इति पा०॥

छन्दसोर्निर्मिते ॥ ६३ ॥

प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः । छन्दः शब्दात्तृतीयासमर्थान्निर्मित इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । निर्मित उत्पादितः । छन्दसा निर्मितश्छन्दस्यः । छन्दसा कृत इत्यर्थः । इच्छापर्यायश्छन्दः शब्द इह गृह्यते ॥

उरसोऽण् च ॥ ६४ ॥

उरः शब्दात्तृतीयासमर्थान्निर्मित इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति चकाराद्यच । उरसा निर्मित, औरसः पुत्रः । उरस्यः पुत्रः । संज्ञाधिकारादभिधेयनियमः ॥

हृदयस्य प्रियः ॥ ९५ ॥

निर्देशादेव समर्थविभक्तिः । हृदयशब्दात् षष्ठीसमर्थात् प्रिय इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हृदयस्य प्रियो हृद्यो देशः । हृद्यं वनम् । संज्ञाधिकारादभिधेयनियमः । इह न भवति, हृदयस्य प्रियः पुत्र इति ॥

बन्धने चर्षौ ॥ ६६ ॥

हृदयस्येत्येव । बन्धन इति प्रत्ययार्थः, तद्विशेषणमृषिग्रहणम्, बद्ध्यते येन तद् बन्धनम् । हृदयशब्दात् षष्ठीसमर्थाद् बन्धने ऋषावभिधेये यत् प्रत्ययो भवति । ऋषिर्वेदो गृह्यते । हृदयस्य बन्धनमृषिः, हृद्यः । परहृदयं येन बद्ध्यते वशीक्रियते स वशीकरणमन्त्रो हृद्य इत्युच्यते ॥

मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥

मतादिभ्यस्त्रिभ्यः शब्देभ्यस्त्रिष्वेव करणादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवति । प्रत्ययार्थसामर्थ्यलभ्या षष्ठी समर्थविभक्तिः । मत ज्ञानं, तस्य करणं—मत्यम्, भाव साधनं वा । जनस्य जल्पो, जन्यः । हलस्य कर्षो, हल्यः । द्विहल्यः । त्रिहल्यः । कर्षणं कर्ष, भाव साधनं वा ॥

तत्र साधुः ॥ ६८ ॥

तत्रेति सप्तमीसमर्थात् साधुरित्येतस्मिन्नर्थे यत्प्रत्ययो भवति । सामसु साधुः सामन्यः । वेमन्यः । कर्मण्यः । शरण्यः । साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः । तत्र हि परत्वात्तस्मै हितमित्यनेन विधिना भवितव्यम् ॥

प्रतिजनादिभ्यः खञ् ॥ ६६ ॥

प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन्नर्थे । यतोऽपवादः । प्रतिजने साधुः, प्रातिजनीनः । जने जने साधुरित्यर्थः । ऐदंयुगीनः । सांयुगीनः । प्रतिजन । इदयुग । सयुग । समयुग । परयुग । परकुल । परस्यकुल । अमुष्यकुल । सर्वजन । विश्वजन । पञ्चजन । महाजन । प्रतिजनादिः । यत्र हितार्थ एव साध्वर्थस्तत्र वचनात्प्राक्क्रीतीया बाध्यन्ते ॥

भक्ताण्णः ॥ १०० ॥

भक्तशब्दाद् णः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । भक्ते साधुः, भाक्तः शालिः । भाक्तास्तण्डुलाः ॥

परिषदो ण्यः ॥ १०१ ॥

परिषच्छब्दाद् ण्यः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । परिषदि साधुः, पारिषद्यः । णप्रत्ययोऽप्यत्रेष्यते । तदर्थं योगविभागः क्रियते— 'परिषदः' परिषदो णो भवति । परिषदि साधुः, पारिषदः । ततो 'ण्यः' परिषद इत्येव ।

कथादिभ्यष्ठक् ॥ १०२ ॥

कथादिभ्यः शब्देभ्यष्ठक् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । कथायां साधुः, काथिकः । वैकथिकः । कथा । विकथा । वितण्डा । कुष्टचित् । जनवाद । जनेवाद । वृत्ति । सद्गृह । गुण । गण । आयुर्वेद । कथादिः ॥

गुडादिभ्यष्ठञ् ॥ १०३ ॥

गुडादिभ्यः शब्देभ्यष्ठञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । गुडे साधुः, गौडिक इक्षुः । कौल्माषिको मुद्गः । साक्तुको यवः । गुड । कुल्माष । सक्तु । अपूप । मांसौदन । इक्षु । वेणु । संग्राम । संघात । प्रवास । निवास । उपवास ।

पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

पथ्यादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । पथि साधु, पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥

सभाया यः ॥ १०५ ॥

सभाशब्दाद्यः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये । यतोऽपवादः । स्वरे विशेषः । सभायां साधुः, सभ्यः ॥

ढश्छन्दसि ॥ १०६ ॥

सभाशब्दाड्ढः प्रत्ययो भवति तत्र साधुरित्येतस्मिन् विषये छन्दसि । यस्यापवादः । सभेयोऽस्य युवा यजमानस्य वीरो जायताम् ॥

समानतीर्थे वासी ॥ १०७ ॥

साधुरिति निवृत्तम् । वासीति प्रत्ययार्थः । समानतीर्थशब्दात्तत्रेति सप्तमीसमर्थाद् वासीत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । समाने तीर्थे वासीति सतीर्थ्यः । समानोपाध्याय(१) इत्यर्थः ॥

---

( १ ) तीर्थशब्देनेह गुरुरुच्यते । समानस्य सभावस्तीर्थे य इति इत्यधिकं पुस्तकान्तरे ॥

समानोदरे शयित ओ चोदात्तः ॥ १०८ ॥

समानोदरशब्दात्सप्तमीसमर्थाच्छयित इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति ओकार श्चोदात्तः । शयितः स्थित इत्यर्थः । समानोदरे शयितः, समानोदर्यो भ्राता ॥

सोदराद्यः ॥ १०९ ॥

सोदरशब्दात् सप्तमीसमर्थात् शयित इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । ... पोदर" इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः । ... सोदरे शयितः, सोदर्यो भ्राता । ओ चोदात्त इति नानुवर्त्तते । यकारे स्वरः ॥

भवे छन्दसि ॥ ११० ॥

तत्रेत्येव । सप्तमीसमर्थाद्भव इत्येतस्मिन्नर्थे छन्दसि विषये यत्प्रत्ययो भवति अणादीनां घादीनां चापवादः । सति दर्शने तेऽपि भवन्ति, सर्वविधीनां छन्द व्यभिचारात् । मेघ्याय च विद्युत्याय च नमः । आपादपरिसमाप्तेश्छन्दोऽधिकारो भवाधिकारश्च, "समुद्राभ्राद् घः" इति यावत् ॥

पाथोनदीभ्यां ड्यण् ॥ १११ ॥

पाथःशब्दान्नदीशब्दाच्च ड्यण् प्रत्ययो भवति तत्र भव इत्येतस्मिन्नर्थे । ... ऽपवादः । पाथसि भवः, पाथ्यो वृषा । नाद्या गिरो मे प्रयच्छति । पाथोऽन्तरिक्षम् ॥

वेशन्तहिमवद्भ्यामण् ॥ ११२ ॥

वेशन्तशब्दाद्धिमवच्छब्दाच्चाण् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । यतोऽपवादः । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ॥

स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११३ ॥

स्रोतःशब्दाद्विभाषा ड्यत् ड्य इत्येतौ प्रत्ययौ भवतस्तत्र भव ... विषये । यतोऽपवादः । पक्षे सोऽपि भवति । स्रोतसि भवः, स्रोत्यः । स्रोतस्यः ड्यड्ड्ययोः स्वरे विशेषः ॥

सगर्भसयूथसनुताद्यन् ॥ ११४ ॥

सगर्भसयूथसनुतशब्देभ्यो यन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये यतोऽपवादः । स्वरे विशेषः । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः सर्वत्र समानस्य छन्दसीति सभावः ॥

तुग्राद् घन् ॥ ११५ ॥

तुग्रशब्दाद् घन् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । यतोऽपवादः त्वमग्ने वृषभस्तुग्रियाणाम् । अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः ॥

अग्राद्यत् ॥ ११६ ॥

अग्रशब्दाद्यत् प्रत्ययो भवति तत्र भव इत्येतस्मिन् विषये । अग्रे भवमग्र्यम् ।

किमर्थमिदं यावता सामान्येन यद्विहित एव? घच्छौ चेति वक्ष्यति, ताभ्यां बाधा मा भूदिति पुनर्विधीयते ॥

घच्छौ च ॥ ११७ ॥

अग्रशब्दाद् घच्छौ च प्रत्ययौ भवतस्तत्र भव इत्येतस्मिन् विषये। अग्र्यम्। अग्रियम्। अग्रीयम्। चकारस्त्वग्राद्यत इत्यस्यानुकर्षणार्थः। अग्रियम्। स्वरे विशेषः ॥

समुद्राभ्राद् घः ॥ ११८ ॥

समुद्रशब्दादभ्रशब्दाच्च घः प्रत्ययो भवति तत्र भव इत्येतस्मिन्नर्थे। यतोऽपवादः। समुद्रियाणां नदीनाम्। अभ्रियस्येव घोषः। अभ्रशब्दस्यापूर्वनिपातस्तस्य लक्षणस्य व्यभिचारित्वात् ॥

बर्हिषि दत्तम् ॥ ११९ ॥

भव इति निवृत्तम्। बर्हिःशब्दात् सप्तमीसमर्थाद्दत्तमित्येतस्मिन्नर्थे यत् प्रत्ययो भवति। बर्हिष्येषु निधिषु प्रियेषु ॥

दूतस्य भागकर्मणी ॥ १२० ॥

निर्देशादेव समर्थविभक्तिः। दूतशब्दात् षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत् प्रत्ययो भवति। भागोंऽशः। कर्म क्रिया। यत्ते अग्ने दूत्यम्। दूतभागः, दूतकर्म वा ॥

रक्षोयातूनां हननी ॥ १२१ ॥

निर्देशादेव समर्थविभक्तिः। रक्षःशब्दाद्यातुशब्दाच्च षष्ठीसमर्थाद्धननीत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। हन्यतेऽनयेति हननी। याते अग्ने रक्षस्या तनूः। रक्षसां हननी। यातव्या यातूनां हननी। बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम्। बहूनां रक्षसां हननेन तनूः स्तूयते ॥

रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२२ ॥

रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत्प्रत्ययो भवति। प्रशंसनं प्रशस्यम्। भावे क्यप् प्रत्ययः। यद्वो रेवती रेवत्यम्। यद्वो जगती जगत्यम्। यद्वो हविष्या हविष्यम्। हविषे हिता हविष्यास्तासां प्रशंसनं हविष्यम्। यस्येति लोपे कृते ''हलो यमां यमि''इति लोपः ॥

असुरस्य स्वम् ॥ १२३ ॥

असुरशब्दात् षष्ठीसमर्थात्स्वमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। अणोऽपवादः। असुर्यं वा एतत्पात्रं, यच्चक्रवृत्तं कुलालकृतम् ॥

मायायामण् ॥ १२४ ॥

असुरशब्दात् षष्ठीसमर्थान्मायायामित्येतस्मिन्नर्थेऽण् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। आसुरी माया स्वधया कृतासि ॥

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ १२५ ॥

तद्वानिति निर्देशादेव समर्थविभक्तिः । मतुवन्ताद्या दे॰
मिति षष्ठ्यर्थे यत्प्रत्ययो भवति, यत्तत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति,
सामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति । लुक् च मतोरिति प्रकृतिनिर्ह्रासः ।
स्ततश्चेद्विवक्षा । तद्वानित्यवयवेन समुदायः व्यपदिश्यते । वर्चःशब्दो
दित स वर्चस्वान् । उपधीयते येन स उपधानः । चयनवचन इत्यर्थः । वर्चस्वानुप
ममन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुकि कृते वर्चस्या
तेजस्या उपदधाति । पयस्याः । रेतस्याः । तद्वानिति किम् ? मन्त्रसमुदायादेव
भूत् । उपधान इति किम् ? वर्चस्वानुपस्थानमन्त्र आसामित्यत्र मा भूत् । मन्त्र इ
किम् ? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत् । इष्टकास्विति किम् ? व
नुपधानो मन्त्र एषां कपालानामित्यत्र मा भूत् । इतिकरणो नियमार्थः ।
स्मवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते न सर्वेण ॥

अश्विमानण् ॥ १२६ ॥

अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान् । अश्विमच्छब्दादण्प्रत्ययो भवति
पूर्वस्य यतोऽपवादः । अश्विमानुपधानो मन्त्र आसामिष्टकानामिति विगृह्य
तत्र मतुपो लुकि कृते "इनण्यनपत्ये" इति प्रकृतिभावः—आश्विनीरुपदधाति ॥

वयस्यासु मूर्ध्नो मतुप् ॥ १२७ ॥

वयस्वानुपधानो मन्त्रो यासां ता वयस्यास्तास्वभिधेयासु मूर्ध्नो
भवति । पूर्वस्य यतोऽपवादः । यस्मिन्मन्त्रे वयःशब्दो मूर्धन् शब्दश्च विद्यते स
स्वानपि भवति मूर्धन्वानपि । यथा मूर्धा वयः प्रजापतिश्छन्द इति । तत्र
ब्दादिव मूर्धन्वच्छब्दादपि यति प्राप्ते मतुप् विधीयते । मूर्धन्वतीरुपदधाति
एव मूर्धन्वत्यः । वयस्यास्विति किम् ? यत्र मूर्धन्शब्द एव केवलो न वयः
मा भूत् । मूर्धवत इति वक्तव्ये मूर्ध्न इत्युक्तं मतुपो लुकं भावयन् चित्ते कृत्वा ॥

मत्वर्थे मासतन्वोः ॥ १२८ ॥

यस्मिन्नर्थे मतुब्विहितस्तस्मिँश्छन्दसि विषये यत्प्रत्ययो भवति मासतन्वोः
यार्थविशेषणयोः । प्रथमासमर्थादस्त्युपाधिकात्षष्ठ्यर्थे सप्तम्यर्थे च यत्प्रत्ययो
मत्वर्थीयानामपवादः । नभांसि विद्यन्ते यस्मिन्मासे, नभस्यो मासः ।
तपस्यः । मधव्यः । नभःशब्दोऽभ्रेषु वर्तते । तन्वा खल्वपि—ओजोऽस्यां वि
ओजस्या तनूः । रसस्या । मासतन्वोरिति किम् ? मधुमता पात्रेण चरति । म
रनन्तरार्थे वा—मध्वस्मिन्नस्ति मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः ।
कोरकारेफाश्च वक्तव्याः॰ । लुक् तावत्—तपश्च तपस्यश्च । नमश्च नभस्यश्च ।

द्ध्रस्यश्च। नपुंसकलिङ्गं छान्दसत्वात्। अकार—इषो मासः। ऊर्जो मासः। इकार—हिमो मासः। रेफ—शुक्रो मासः॥

## मधोर्ञ्च॥ १२९॥

मधुशब्दान्मत्वर्थे ञः प्रत्ययो भवति चकाराद्यच्च, उपसंख्यानाल्लुक् च। माधवः। धव्यः। मधुः। तन्वां त्वपि—माधवा। मधव्या। मधु, तनूः॥

## ओजसोऽहनि यत्खौ॥ १३०॥

मत्वर्थ इत्येव। ओजः शब्दान्मत्वर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये। ओजस्यमहः। ओजसीनमहः॥

## वेशोयशआदेर्भगाद्यल्॥ १३१॥

मत्वर्थ इत्येव। वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद्वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे यल् प्रत्ययो भवति। लकारः स्वरार्थः। वेशोभगो विद्यते स्य स, वेशोभग्यः। यशोभग्यः। वेश इति बलमुच्यते। श्रीकामप्रयत्नमाहात्म्यवीर्यशस्सु भगशब्दः। वेशश्चासौ भगश्च वेशोबलं श्रीप्रभृति भगः, सोऽस्यास्तीति शोभग्यः॥

## ख च॥ १३२॥

वेशोयशआदेर्भगान्तात्प्रातिपदिकान्मत्वर्थे खः प्रत्ययो भवति। योगविभागो थासंख्यनिरासार्थ उत्तरार्थश्च। चकारात्यत्। वेशोभगीनः। वेशोभग्यः। यशोभगीनः। यशोभग्यः॥

## पूर्वैः कृतमिनयौ च॥ १३३॥

मत्वर्थ इति निवृत्तम्। निर्देशादेव समर्थविभक्तिः। पूर्वशब्दात्तृतीयासमर्थात्कृतमित्येतस्मिन्नर्थे इन य इत्येतौ प्रत्ययौ भवतः, चकारात्खश्च। पथिभिः पूर्विणः। र्व्यं। पूर्वीणः। पूर्वैरिति बहुवचनात्तेन पूर्वपुरुषा उच्यन्ते। तत्कृता पन्थानः स्तुता इति यथा प्रशंसा॥

## अद्भिः संस्कृतम्॥ १३४॥

निर्देशादेव समर्थविभक्तिः। अप्शब्दात्तृतीयासमर्थात्संस्कृतमित्येतस्मिन्नर्थे यत्प्रत्ययो भवति। यस्येदमप्यं हविः, अद्भिः संस्कृतमिति॥

## सहस्रेण संमितौ घः॥ १३५॥

निर्देशादेव समर्थविभक्तिः। सहस्रशब्दात्तृतीयासमर्थात् सम्मिताविन्येतस्मिन्नर्थे घः प्रत्ययो भवति। सम्मितः तुल्यः सदृशः। अयमृषिः सहस्रियः। सहस्रतुल्य इत्यर्थः। केचित्तु समितावित्ति पठन्ति। तत्रापि समित्या सम्मित एव लक्षयितव्यः। त्र छन्दसि प्रयोगदर्शनात्॥

मतौ च ॥ १३६ ॥

मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति । सहस्रमस्य विद्यते, सहस्रियः तपः सहस्राभ्यां विनीनी, अण् चेत्यनयोरपवादः ॥

सोममर्हति यः ॥ १३७ ॥

निर्देशादेव समर्थविभक्तिः । सोमशब्दाद् द्वितीयासमर्थादर्हतीत्येतस्मिन्नर्थे प्रत्ययो भवति । सोममर्हन्ति सोम्या ब्राह्मणाः । यज्ञार्हा इत्यर्थः । यति यग्रहणं, स्वरे विशेषः ॥

मये च ॥ १३८ ॥

सोमग्रहणं, यश्चानुवर्तते । मय इति मयडर्थो लक्ष्यते । सोमशब्दान्मयडर्थे प्रत्ययो भवति । आगतविकारावयवप्रकृता मयडर्थाः । ... रूप्यः । मयट् च । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । तत्प्रकृतवचने मय... तत्र यथायोग समर्थविभक्तिः । सोम्य मधु पिबन्ति । सोममयमित्यर्थः ॥

मधोः ॥ १३९ ॥

यशब्दो निवृत्तः । मधुशब्दान्मयडर्थे यत् प्रत्ययो भवति । मधव्यान् स्तोकान् मधुमयानित्यर्थः ॥

वसोः समूहे च ॥ १४० ॥

वसुशब्दात् समूहे वाच्ये यत् प्रत्ययो भवति चकारान्मयडर्थे च । ... समर्थविभक्ति । वसव्यः समूहः, मयडर्थो वा । ॐअक्षरसमूहे छन्दसः उपसंख्यानम्ॐ । ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजे द्व्यक्षरम् । ये यजामह इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः । सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः । ... शब्दादक्षरसमूहे वर्तमानात् स्वार्थे यत् प्रत्ययः । वसुशब्दादपि यद्वक्तव्यः । ... गृहीतस्य वद्धुभिर्वसव्यै । वसुभिरित्यर्थः । अग्निरीशे वसव्यस्य । वसोरित्यर्थः ॥

नक्षत्राद् घः ॥ १४१ ॥

नक्षत्रशब्दाद् घः प्रत्ययो भवति स्वार्थे । समूह इति नानुवर्तते । ... स्वाहा ॥

सर्वदेवात्तातिल् ॥ १४२ ॥

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति छन्दसि विषये स्वार्थिकः । सर्वतातिः देवतातिः ॥

शिवशमरिष्टस्य करे ॥ १४३ ॥

करोतीति करः, प्रत्ययार्थः । तत्र सामर्थ्यलभ्या षष्ठीसमर्थविभक्तिः । ...

शब्देभ्यः षष्ठीसमर्थेभ्यः कर इत्येतस्मिन्नर्थे तातिल् प्रत्ययो भवति। शिवं करोतीति, शिवतातिः। शंतातिः। अरिष्टतातिः॥

भावे च ॥ १४४ ॥

भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल् प्रत्ययो भवति। शिवस्य भावः, शिवतातिः। शंतातिः। अरिष्टतातिः। यतः पूर्णोऽवधिरतः परमन्यः प्रत्ययोऽधिक्रियते॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः॥

समाप्तश्च चतुर्थोऽध्यायः॥

॥ शुभम् ॥



-※ काशी-संस्कृत-ग्रन्थमाला ※-
३७

( व्याकरणविभागे षष्ठं प्रसूनम् )

पाणिनीयव्याकरणसूत्रवृत्तिः

# काशिका

विद्वद्वरवामनजयादित्यविरचिता

सम्पादक –
व्याकरणन्यायाचार्य.
पण्डित श्रीशोभितमिश्रः

उपोद्घातलेखक –
पण्डित श्रीब्रह्मदत्त जिज्ञासुः

[ द्वितीयो भागः ]



चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

० २००९ ]　　　　तृतीय संस्करणम्　　　　[ १९५२

पाणिनीयसूत्रवृत्तिः

# का शि का

## ( उत्तरार्द्धम् )

---

### अथ पञ्चमाध्यायस्य प्रथमः पादः ॥

प्राक् क्रीताच्छः ॥ १ ॥

तेन क्रीतमिति वक्ष्यति, प्रागेतस्मात् क्रीतसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः छप्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति—तस्मै हितमिति । वत्सेभ्यो हितो वत्सीयो गोधुक् । करभीय उष्ट्रः । अकरभीयः । अवत्सीयः । अर्थोऽवधित्वेन ... न प्रत्ययः । तेन प्राक् ठञश्छ इति नोक्तम् ॥

उगवादिभ्यो यत् ॥ २ ॥

प्राक् क्रीतादित्येव । उवर्णान्तात् प्रातिपदिकाद्गवादिभ्यश्च यत्प्रत्ययो भवति प्राक्क्रीतीयेष्वर्थेषु । छस्यापवादः । शङ्कव्यं दारु । पिचव्यः कार्पासः । कमण्डलव्या मृत्तिका(१) । गवादिभ्यः खल्वपि—गव्यम् । हविष्यम् । सनङ्गुर्नाम चर्मविकारः, ततः परत्वादुगवादिभ्यो विधिः प्राप्नोति । तथा चरुर्नाम हविः । सक्तुरन्नविकारः । अपूपादिष्वन्नविकारेभ्यश्चेति पठ्यते । ततो विभाषा हविरपूपादिभ्यश्चेत्येष विधिः प्राप्नोति । तत्र पूर्वविप्रतिषेधेन यत् प्रत्यय एवेष्यते—सनङ्गव्यं चर्म । चरव्यास्तण्डुलाः । सक्तव्या धाना इति । गवादिषु नाभि नभ चेति पठ्यते । तस्य ... नाभिशब्दो यत्प्रत्ययमुत्पादयति नभ आदेशमापद्यते इति । नाभये हितो, नभ्योऽक्षः नभ्यमञ्जनम् । यस्तु शरीरावयवो नाभिशब्दस्ततः शरीरावयवादिति यति नाभये हितं नाभ्यं तैलमिति भवितव्यम् । गवादिषु यतः सन्नियुक्तो न भवति । गो । हविस् । बर्हिष् । खट । अष्टका । युग । मेधा । स्रुक् । ॐनाभि नभ ॐ । ॐशुनः संप्रसारणं च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम्ॐ । शुन्यम् शून्यम् । चकारस्यानुक्तसमुच्चयार्थत्वात् "नस्तद्धिते" इति लोपो न स्यात् । सोऽनड् चॐ । ऊधन्यः कूपः । उदर । खर । खद । अक्षर । विष । गवादि (२) ॥

---

( १ ) कमण्डलव्या मृत्तिकेति पुस्तकान्तरे नास्ति ॥ ( २ ) स्कन्द, स्कन्धा, पतौ गणे पुस्तकान्तरेऽधिकौ ॥

कम्बलाच्च सञ्ज्ञायाम् ॥ ३ ॥

कम्बलात्प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो भवति सञ्ज्ञायां विषये । छस्यापवादः । कम्बल्यमूर्णापलशतम् । सञ्ज्ञायामिति किम् ? कम्बलीया ऊर्णा ॥

विभाषा हविरपूपादिभ्यः ॥ ४ ॥

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति । आमिक्ष्यं दधि । आमिक्षीयं दधि । पुरोडाश्यास्तण्डुला । पुरोडाशीया । हविरदाब्दास्तु गवादिपाठान्नित्यमेव भवति । अपूपादिभ्यः-अपूप्यम् । अपूपीयम् । तण्डुल्यम् । तण्डुलीयम् । अपूप । तण्डुल । अभ्यूष । अभ्योष । पृथुक । अभ्येष । अर्गल । मुसल । सूप । कटक । कर्णवेष्टक । किण्व । ॐअन्नविकारेभ्यश्चॐ । यूप । स्थूणा । पीप । अश्व । पत्र(१) । अपूपादि ॥

तस्मै हितम् ॥ ५ ॥

तस्मा इति चतुर्थीसमर्थाद्धितमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । वत्सेभ्यो हितो गोधुक् वत्सीयः । अवत्सीयः । पट्व्यम् । गव्यम् । हविष्यम् । अपूप्यम् । अपूपीयम् ॥

शरीरावयवाद्यत् ॥ ६ ॥

शरीरं प्राणिकायः । शरीरावयववाचिनः प्रातिपदिकाद्यत् प्रत्ययो भवति, तस्मै हितमित्येतस्मिन् विषये । छस्यापवादः । दन्त्यम् । कण्ठ्यम् । ओष्ठ्यम् । नाभ्यम् । नस्यम् ॥

खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥

खलादिभ्यो यत्प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये । छस्यापवादः । खलाय हितं, खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । ब्रह्मणे हितम्, ब्राह्मणेभ्यो हितमिति वाक्यमेव भवति । छप्रत्ययोऽपि न भवति, अनभिधानात् । चकारोऽनुक्तसमुच्चयार्थः-रथाय हिता, रथ्या ॥

अजाविभ्यां थ्यन् ॥ ८ ॥

अज अवि इत्येताभ्यां थ्यन् प्रत्ययो भवति तस्मै हितमित्येतस्मिन्विषये । छस्यापवादः । अजथ्या यूथिः । अविथ्या ।

आत्मन्विश्वजनभोगोत्तरपदात् ख ॥ ९ ॥

आत्मन् विश्वजन इत्येताभ्यां भोगोत्तरपदाच्च प्रातिपदिकात्ख प्रत्ययो भवति, तस्मै हितमित्येतस्मिन् विषये । छस्यापवादः । आत्मनीनमिति नलोपो न कृतः, प्रकृतिपरिमाणज्ञापनार्थम्, तेनोत्तरपदग्रहणं भोगशब्देनैव सम्बध्यते, न तु प्रत्येकम् ।

(१) कट । भयस्थूण । ओदन । प्रवोध । प्रदीप । एते शब्दा अत्र गणे अधिकाः ॥

आमने हितम्, आमनीनम् । आमाध्वानौ ख इति प्रकृतिमात्र । विश्वजनेभ्यो हित, विश्वजनीनम् । ॐकर्मधारयादिष्यतेॐ । षष्ठीसमासाद् बहुव्रीहेश्च छ एव भवति–विश्वजनाय हित विश्वजनीयम् । ॐपञ्चजनादुपसख्यानम्ॐ । पञ्चजनाच ख । अत्रापि कर्मधारयादिष्यते–पञ्चजनीनम् । अन्यत्र पञ्चजनीयम् । ॐसर्वजनाट्ठञ् खश्चॐ । (१)सार्वजनिकम् । सर्वजनीनम् । अत्रापि कर्मधारयादेव । सर्वजनीयम् न्यत् । ॐमहाजनाट्ठञ् वक्तव्यःॐ । महाजनाय हित माहाजनिकम् । तत्पुरुषादेव । बहुव्रीहेस्तु छ एव भवति–महाजनीयम् । भोगोत्तरपदात् खल्वपि–मातृभोगीण । पितृभोगीण । भोगशब्द शरीरवाची । केवलेभ्यो मात्रादिभ्यश्छ एव भवति । मात्रीय । पित्रीय । ॐराजाचार्याभ्या तु नित्यम्ॐ भोगोत्तरपदाभ्यामेव ख प्रत्यय इष्यते न केवलाभ्याम् । राजभोगीन । ॐआचार्यादणत्व चॐ । आचार्यभोगीन ॥ केवलाभ्या वाक्यमेव भवति–राज्ञे हितम् । आचार्याय हितमिति ॥

सर्वपुरुषाभ्या णढञौ ॥ १० ॥

सर्वपुरुषाभ्या यथासख्य णढञौ प्रत्ययौ भवत तस्मै हितमित्यतस्मिन् विषये । छस्यापवाद । सर्वस्मै हित सार्वम् । पौरुषेयम् । ॐसर्वाण्णस्य वा वचनम्ॐ । सर्वीयम् । ॐपुरुषाद्वध विकारसमूहतेनकृतेष्विति वक्तव्यम्ॐ । पौरुषेयो वधो, विकार, समूहो वा । तेन कृत पौरुषेयो ग्रन्थ ॥

माणवचरकाभ्या खञ् ॥ ११ ॥

माणवचरकशब्दाभ्या खञ प्रत्ययो भवति तस्मै हितमित्येतस्मिन् विषये । छस्यापवाद । माणवाय हित, माणवीनम् । चारकीणम् ॥

तदर्थं विकृते प्रकृतौ ॥ १२ ॥

प्रकृतिरुपादानकारण, तस्यैव उत्तरमवस्थान्तर विकृति । विकृतिवाचिन प्रातिपदिकात्प्रकृतावभिधेयाया यथाविहित प्रत्ययो भवति । तदर्थमिति प्रत्ययार्थविशेषणम् , तदिति सर्वनाम्ना विकृति परामृश्यते, विकृत्यर्थाया प्रकृतौ प्रत्यय । तदर्थग्रहणेन प्रकृतेरनन्यार्थतारायते न प्रकृतिविकारसम्बन्धमात्र प्रत्यय किन्तर्हि प्रकृतेरनन्यार्थत्व विवक्षिते । प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल्लभ्या चतुर्थी समर्थविभक्ति । केचित्तु तस्मै हितमित्यनुवर्त्तयन्ति । अङ्गारेभ्यो हितानि एतानि काष्ठानि, अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टका । शङ्कव्य दारु । पिचव्य कार्पास । तदर्थमिति किम् ? यवाना धाना । धानाना सक्तव । प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता, न तादर्थ्यम्–धानाना सक्तवो न लाजानामिति । विकृतेरिति किम् ? उदकार्थ कूप । विकृतिग्रहणे अक्रियमाणे या काचित्प्रकृतिर्गृह्येत, नोपादानकारणमेव, भवति च कूप उदकस्य प्रकृति तत्रोत्पादनात । न तु उदक तस्य विकृति, अत्यन्तभदात्।

(१ सर्वजनाट्ठञ्च चकारात् खश्चेति पा० ॥

प्रकृताविति किम् ? असेर्या कोशी । असिरयसो विकृतिर्भवति, न तु कोशी तस्य प्रकृतिर्भवति । द्वयोरपि प्रकृतिविकृत्योर्ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते ॥

छदिरुपधिबलेर्ढञ् ॥ १३ ॥

छदिरादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये । छस्यापवादः । छादिषेयाणि तृणानि । औपधेयं दारु । बालेयास्तण्डुलाः । उपधिशब्दात् स्वार्थे प्रत्ययः । उपधीयत इत्युपधिः, रथाङ्गम् । औपधेयमपि तदेव दारु ॥

ऋषभोपानहोर्ञ्यः ॥ १४ ॥

ऋषभ उपानह् इत्येताभ्यां ञ्यः प्रत्ययो भवति, तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये । छस्यापवादः । आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वप्रतिषेधादयमेवेष्यते—औपानह्यं चर्म ॥

चर्म्मणोऽञ् ॥ १५ ॥

चर्मण इति षष्ठी । चर्मणो या विकृतिस्तद्वाचिनः प्रातिपदिकादञ् प्रत्ययो भवति, तदर्थं विकृतेः प्रकृतावित्येतस्मिन् विषये । छस्यापवादः । वार्ध्रं चर्म । वारत्रं चर्म ॥

तदस्य तदस्मिन् स्यादिति ॥ १६ ॥

तदिति प्रथमा समर्थविभक्तिः, अस्येति प्रत्ययार्थः, स्यादिति प्रकृतिविशेषणम्, इतिकरणो विवक्षार्थः । एवं द्वितीयेऽपि वाक्ये । सप्तम्यर्थे तु प्रत्यय इत्येतावान् विशेषः । प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं स्याच्चेत्तद्भवति । इतिकरणस्ततश्चेद्विवक्षा । प्राकार आसामिष्टकानां स्यात्, प्राकारीया इष्टकाः । प्रासादीयं दारु । सप्तम्यर्थे खल्वपि—प्राकारोऽस्मिन् देशे स्यात्, प्राकारीयो देशः । प्रासादीया भूमिः । स्यादिति सम्भावनायां लिङ्, सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे इत्यादिना । इष्टकानां बहुत्वेन तत् सम्भाव्यते—प्राकार आसामिष्टकानां स्यादिति । देशस्य च गुणेन सम्भाव्यते—प्रासादोऽस्मिन् देशे स्यादिति । प्रकृतिविकारभावस्तादर्थ्यं चेह न विवक्षितं किं तर्हि योग्यतामात्रम्, तेन पूर्वस्यायमविषयः, द्विस्तद्ग्रहणं न्यायप्रदर्शनार्थम्—अनेकस्मिन् प्रत्ययार्थे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति । अथेह कस्मान्न भवति—प्रासादो देवदत्तस्य स्यादिति ? गुणवानयं सम्भाव्यते, प्रासादलाभोऽस्येति । इतिकरणो विवक्षार्थ इत्युक्तम् ॥

परिखाया ढञ् ॥ १७ ॥

परिखाशब्दाद् ढञ् प्रत्ययो भवति, तदस्य तदस्मिन् स्यादित्येतस्मिन्नर्थे । छस्यापवादः । पारिखेया भूमिः । छयतोः पूर्णोऽवधिः, इतः परमन्यः प्रत्ययो विधीयते ॥

प्राग्वतेष्ठञ् ॥ १८ ॥

तेन तुल्यं क्रिया चेद्वतिरिति वक्ष्यति । प्रागेतस्माद्वतिसंशब्दनाद्यानित ऊर्ध्वमनु-

क्रमिष्यामः ठञ् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति-पारायणतुरायणचान्द्रायणं वर्त्तयति, पारायणिकः। तौरायणिकः। चान्द्रायणिकः ॥

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ १९ ॥

तदर्हतीति वक्ष्यति। आ एतस्मादर्हसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यो गोपुच्छादीन् वर्जयित्वा। अभिविधावयमाकारः। तेनार्हत्यर्थेऽपि ठक् भवत्येव। ठञधिकारमध्ये तदपवादः ठग् विधीयते। वक्ष्यति-तेन क्रीतम्। नैष्किकम्। पाणिकम्। अगोपुच्छसंख्यापरिमाणादिति किम्? गोपुच्छेन क्रीतं गौपुच्छिकम्। संख्या-षाष्टिकम्। परिमाण-प्रास्थिकम्। कौडविकम्। ठञ् प्रत्युदाह्रियते। संख्यापरिमाणयोः को विशेषः? भेदगणनं संख्या एकत्वादिः। गुरुत्वमानमुन्मानं पलादि। आयाममानं प्रमाणं वितस्त्यादिः। आरोहपरिणाहमानं परिमाणं प्रस्थादिः ॥

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥

असमासे निष्कादिभ्यः ॥ २० ॥

आर्हादित्येव। निष्कादिभ्यः शब्देभ्योऽसमासे ठक् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। असमास इति किम्? परमनैष्किकम्। उत्तमनैष्किकम्। ठञेव भवति, परिमाणान्तस्येत्युत्तरपदवृद्धिः। अथ किमर्थमसमास इत्युच्यते, यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते? निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्तप्रतिषेधस्य, उगवादिभ्यो यत्-गव्यम्। सुगव्यम्। अतिसुगव्यम्। विभाषा हविरपूपादिभ्यः अपूप्यम्। अपूपीयम्। यवापूप्यम्। यवापूपीयम्। शरीरावयवाद्यत्-दन्त्यम्। राजदन्त्यमित्येवमादि सिद्धं भवति। इत उत्तरं च संख्यापूर्वपदानां तदन्तविधिरिष्यते, पारायणतुरायणचान्द्रायणं वर्तयति-द्वैपारायणिकः। त्रैपारायणिकः। लुगन्तायास्तु प्रकृतेर्नेष्यते-द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। त्रिशूर्पम्। द्विशूर्पेण क्रीतमिति [illegible] तदन्तविधेरस्याभियम् न भवति, सामान्यविहितष्ठञेव भवति-द्विशौर्पिकम्। (१)ठञो द्विगुप्रत्ययनिमित्तत्वाल्लुगभावः। तथा चोक्तम्-प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति। निष्क। पण। पाद। माष। वाह। द्रोण। षष्टि। निष्कादिः ॥

शताच्च ठन्यतावशते ॥ २१ ॥

आर्हादित्येव। शतशब्दात् ठन्यतौ प्रत्ययौ भवतः, अशतेऽभिधेये आर्हीयेष्वर्थेषु। कनोऽपवादः। शतेन क्रीतं, शतिकम्। शत्यम्। अशत इति किम्? शतं परिमाणमस्य, शतकं निदानम्। प्रत्ययार्थोऽत्र संघः शतमेव वस्तुतः प्रकृत्यर्थाच्च भिद्यते

(१) 'ठञो द्विगुप्रत्ययनिमित्तत्वा' इत्यादि ग्रन्थ पुस्तकान्तरे नास्ति ॥

इह ■ न भवति-शतेन क्रीतं, शत्यं शाटकशतमिति, शतिकं शाटकशतमिति। वाक्येन ह्यत्र प्रत्ययार्थस्य तत्त्वं गम्यते, न श्रुत्या। तथा चोक्तम्-शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेध इति। अकारोऽसमास इत्यनुकर्षणार्थः। द्वौ च शतं च द्विशतम्, द्विशतेन क्रीतं, द्विशतकम्। त्रिशतकम्। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीत्यनया इष्ट्या समासादपि प्राप्नोति॥

संख्याया अतिशदन्तायाः कन्॥ २२॥

आर्हादित्येव। संख्याया अत्यन्ताया अशदन्तायाश्च कन् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। पञ्चभिः क्रीतः, पञ्चकः। षट्कः। गणकः। अतिशदन्ताया इति किम्? साप्ततिकः। चात्वारिंशत्कः। अर्थवतस्तिशब्दस्य ग्रहणाद् इतेः पर्युदासो न भवति-कतिकः॥

वतोरिड् वा॥ २३॥

वत्वन्तस्य संख्यात्वात् कन् सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते। वतोः परस्य कनो वा इडागमो भवति आर्हीयेष्वर्थेषु। तावतिकः। तावत्कः। यावतिकः। यावत्कः॥

विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्॥ २४॥

विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवति असंज्ञायां विषये आर्हीयेष्वर्थेषु। विंशकः। त्रिंशकः। 'ति विंशतेर्डिति' इति तिलोपः। असंज्ञायामिति किम्? विंशतिकः। त्रिंशत्कः। कथं पुनरत्र कन्, यावता अतिशदन्ताया इति पर्युदासेन भवितव्यम्? योगविभागः करिष्यते-विंशतित्रिंशद्भ्यां, कन् प्रत्ययो भवति। ततो ड्वुन्नसंज्ञायामिति॥

कंसाट्टिठन्॥ २५॥

कंसाट्टिठन् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः। टकारो ङीबर्थः। इकार उच्चारणार्थः। नकारः स्वरार्थः। कंसिकः। कंसिकी। ॐअर्धाच्चेति वक्तव्यम्ॐ। अर्धिकः। अर्धिकी। ॐकार्षापणाट्टिठन् वक्तव्यःॐ। कार्षापणिकः। कार्षापणिकी। ॐप्रतिशब्दश्चास्यादेशो वा वक्तव्यःॐ। प्रतिकः। प्रतिकी॥

शूर्पादञन्यतरस्याम्॥ २६॥

शूर्पशब्दादन्यतरस्यामञ् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञोऽपवादः, पक्षे सोऽपि भवति। शूर्पेण क्रीतं, शौर्पम्। शौर्पिकम्॥

शतमानविंशतिकसहस्रवसनादण्॥ २७॥

शतमानादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठकूठञोरपवादः। शतमानेन क्रीतं, शातमानम्। वैंशतिकम्। साहस्रम्। वासनम्॥

अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्॥ २८॥

आर्हादित्येव। अध्यर्धशब्दः पूर्वो यस्मिंस्तस्मादध्यर्द्धपूर्वात् प्रातिपदिकाद् द्विगोश्च

परस्य आर्हीयस्य लुग् भवति, असञ्ज्ञायां विषये। अध्यर्द्धकंसम्। द्विकंसम्। त्रिकंसम्। अध्यर्द्धशूर्पम्। द्विशूर्पम्। त्रिशूर्पम्। असञ्ज्ञायामिति किम्? पाञ्चलोहितिकम्। पाञ्चकलापिकम्। लोहिनीशब्दस्य भस्याढे तद्धित इति पुंवद्भाव·(१)। प्रत्ययान्तस्य विशेषणमसञ्ज्ञाग्रहणं, न चेत् प्रत्ययान्तं सञ्ज्ञेति। अध्यर्द्धशब्दः सङ्ख्यैव। किमर्थं भेदेनोपादीयते? ज्ञापकार्थम्—क्वचिदस्य संख्याकार्यं न भवति, संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति॥

विभाषा कार्षापणसहस्राभ्याम्॥ २९॥

अध्यर्द्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तादुत्तरस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। पूर्वेण लुकि नित्ये प्राप्ते विकल्प्यते। अध्यर्द्धकार्षापणम्। अध्यर्द्धकार्षापणिकम्। द्विकार्षापणम्। द्विकार्षापणिकम्। औपसंख्यानिकस्य टिठनो लुक्। अलुक्पक्षे च प्रतिरादेशो विकल्पितः—अध्यर्द्धप्रतिकम्। द्विप्रतिकम्। त्रिप्रतिकम्। सहस्रात्—अध्यर्द्धसहस्रम्। अध्यर्द्धसाहस्रम्। द्विसहस्रम्। द्विसाहस्रम्। अलुक्पक्षे, संख्यायाः संवत्सरसङ्ख्यस्य चेत्युत्तरपदवृद्धिः। ॐसुवर्णशतमानयोरुपसंख्यानम्ॐ। अध्यर्धसुवर्णम्। अध्यर्द्धसौवर्णिकम्। द्विसुवर्णम्। द्विसौवर्णिकम्। अध्यर्धशतमानम्। अध्यर्धशातमानम्। द्विशतमानम्। द्विशातमानम्। परिमाणान्तस्येत्युत्तरपदवृद्धिः॥

द्वित्रिपूर्वान्निष्कात्॥ ३०॥

द्विगोरित्येव। द्वित्रिपूर्वाद् द्विगोर्निष्कान्तादार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विनिष्कम्। द्विनैष्किकम्। त्रिनिष्कम्। त्रिनैष्किकम्। ॐबहुपूर्वाच्चेति वक्तव्यम्ॐ। बहुनिष्कम्। बहुनैष्किकम्। परिमाणान्तस्येत्युत्तरपदवृद्धिः॥

बिस्ताच्च॥ ३१॥

द्वित्रिपूर्वादिति चकारेणानुकृष्यते। द्वित्रिपूर्वाद् बिस्तान्ताद् द्विगोः परस्यार्हीयप्रत्ययस्य विभाषा लुग्भवति। द्विबिस्तम्। द्विबैस्तिकम्। त्रिबिस्तम्। त्रिबैस्तिकम्। बहुबिस्तम्। बहुबैस्तिकम्(२)॥

विंशतिकात् खः॥ ३२॥

अध्यर्धपूर्वात्प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्तादार्हीयेष्वर्थेषु खः प्रत्ययो भवति। अध्यर्धविंशतिकीनम्। द्विविंशतिकीनम्। त्रिविंशतिकीनम्। विधानसामर्थ्याल्लुङ् न भवति॥

खार्या ईकन्॥ ३३॥

अध्यर्द्धपूर्वाद् द्विगोरित्येव। अध्यर्द्धपूर्वात् प्रातिपदिकाद् द्विगोश्च खारीशब्दान्तादार्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति। अध्यर्द्धखारीकम्। द्विखारीकम्। ॐकेवला-

(१) लोहिनीशब्दस्येत्यारभ्य पुंवद्भाव इत्यन्तो ग्रन्थः प्रक्षिप्तोऽत्रमूले, पदमञ्जर्यां दर्शनात्॥ (२) योगविभाग उत्तरार्थं इत्यधिकं पुस्तकान्तरे।

च्चेति वक्तव्यम्* । खारीकम् । *काकिण्याश्चोपसंख्यानम्* । अध्यर्द्धकाकिणीकम् । द्विकाकिणीकम् । त्रिकाकिणीकम् । *केवलायाश्च* । काकिणीकम् ॥

पणपादमाषशताद्यत् ॥ ३४ ॥

अध्यर्द्धपूर्वाद् द्विगोरित्येव । अध्यर्द्धपूर्वाद् द्विगोश्च पणपादमाषशतशब्दान्तादार्हीयेष्वर्थेषु यत् प्रत्ययो भवति । [अध्यर्द्धपण्यम् । द्विपण्यम् । त्रिपण्यम् । पाद-अध्यर्द्धपाद्यम् । द्विपाद्यम् । त्रिपाद्यम् । पद्भावो न भवति, पद्यत्यतदर्थे इति । प्राण्यङ्गस्य स इष्यते, इदं तु परिमाणम् । माष-अध्यर्द्धमाष्यम् । द्विमाष्यम् । त्रिमाष्यम् । शत-अध्यर्द्धशत्यम् । द्विशत्यम् । त्रिशत्यम्

शाणाद्वा ॥ ३५ ॥

अध्यर्द्धपूर्वाद् द्विगोरित्येव । शाणशब्दादध्यर्द्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति । ठञोऽपवादः, पक्षे सोऽपि भवति, तस्य च लुक् । अध्यर्द्धशाण्यम् । अध्यर्द्धशाणम् । द्विशाण्यम् । द्विशाणम् । त्रिशाण्यम् । त्रिशाणम् । *शताच्चेति वक्तव्यम्* । अध्यर्द्धशत्यम् । अध्यर्द्धशतम् । द्विशत्यम् । द्विशतम् । त्रिशत्यम् । त्रिशतम् ॥

द्वित्रिपूर्वादण्च ॥ ३६ ॥

शाणाद्वेत्येव, द्वित्रिपूर्वाच्छाणान्तात्प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद्यच्च वा । तेन त्रैरूप्यं भवति-द्वैशाणम् । द्विशाण्यम् । द्विशाणम् । त्रैशाणम् । त्रिशाण्यम् । त्रिशाणम् । परिमाणान्तस्यासंज्ञाशाणयोरिति पर्युदासादादिवृद्धिरेव भवति ॥

तेन क्रीतम् ॥ ३७ ॥

ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः, तेभ्य इतः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते । तेनेति तृतीयासमर्थात् क्रीतमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सप्तत्या क्रीतं, साप्ततिकम् । आशीतिकम् । नैष्किकम् । पाणिकम् । पादिकम् । माषिकम् । शत्यम् । शतिकम् । द्विकम् । त्रिकम् । तेनेति मूल्यात्करणे तृतीया समर्थविभक्तिः । अन्यत्रानभिधानान्न भवति-देवदत्तेन क्रीतं, पाणिना क्रीतमिति । द्विवचनबहुवचनान्तात्प्रत्ययो न भवति-प्रस्थाभ्यां क्रीतं, प्रस्थैः क्रीतमिति, अनभिधानादेव । यत्र तु प्रकृत्यर्थस्य संख्याभेदावगमे प्रमाणमस्ति, तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति-द्वाभ्यां क्रीतं, द्विकम् । त्रिकम् । पञ्चकम् । तथा-मुद्रैः क्रीतं मौद्रिकम् माषिकम् । न ह्येकेन मुद्रेन क्रयः संभवति ॥

तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥

तस्येति षष्ठीसमर्थान्निमित्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत् स भवति उत्पातो वा । संयोगः सम्बन्धः, प्राणिनां शुभाशुभसूचकः महा-

भूतपरिणाम उत्पात । शतस्य निमित्त धनपतिना सयोग, शत्य । शतिक । साहस्र । उत्पात खल्वपि-शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम्, शत्यम् । शतिकम् । साहस्रम् । ॐतस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्य शमनकोपनयोरुपसख्यानम्ॐ । वातस्य शमन कोपन वा, वातिकम् । पैत्तिकम् । श्लैष्मिकम् । ॐसन्निपाताच्चेति वक्तव्यम्ॐ । सान्निपातिकम् ॥

गोद्व्यचोऽसख्यापरिमाणाश्वादेर्यत् ॥ ३६ ॥

गोशब्दाद् द्व्यचश्च प्रातिपदिकात् सख्यापरिमाणाश्वादिविवर्जिताद् प्रत्ययो भवति, तस्य निमित्त सयोगोत्पातावित्येतस्मिन्नर्थ । ठञादीनामपवाद । गोर्निमित्त सयोग उत्पातो वा, गव्य । द्व्यच खल्वपि-धन्यम् । स्वर्ग्यम् । यशस्यम् । आयुष्यम् । असख्यापरिमाणाश्वादेरिति किम् ? पञ्चाना निमित्त पञ्चकम् । सप्तकम् । अष्टकम् । परिमाण-प्रास्थिकम् । खारीकम् । अश्वादि -आश्विक । ॐब्रह्मवर्चसादुपसख्यानम्ॐ । ब्रह्मवर्चसस्य निमित्त गुरुणा सयोग , ब्रह्मवर्चस्य । अश्व । अश्मन् । गण । ऊर्णा । उमा । वसु । वर्ष । भङ्ग । अश्वादि ॥

पुत्राच्छ च ॥ ४० ॥

पुत्रशब्दाच्छ प्रत्ययो भवति, चकाराद्यत्, तस्य निमित्त सयोगोत्पातावित्येतस्मिन् विषय । द्व्यच इति नित्य यति प्राप्ते वचनम् । पुत्रस्य निमित्त सयोग उत्पातो वा, पुत्रीय । पुत्र्य ॥

सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥

सर्वभूमिपृथिवीशब्दाभ्या यथासख्यमणञौ प्रत्ययौ भवत , तस्य निमित्त सयोगोत्पातावित्येतस्मिन् विषय । ठकोऽपवाद । सर्वभूमेर्निमित्त सयोग उत्पातो वा, सार्वभौम । पार्थिव । सर्वभूमरनुशतिकादिपाठादुभयपदवृद्धि ॥

तस्येश्वर ॥ ४२ ॥

तस्येति षष्ठीसमर्थाभ्या सर्वभूमिपृथिवीशब्दाभ्यामणञौ प्रत्ययौ　　　[illegible] तस्मिन् विषय । सर्वभूमरीश्वर सार्वभौम । पार्थिव । पञ्चप्रकरणे पुन निर्देश कृताद्वा प्रत्ययार्थस्य निवृत्त्यर्थ । अन्यथा सयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषण समाव्येत ॥

तत्र विदित इति च ॥ ४३ ॥

तत्रेति सप्तमीसमर्थाभ्या सर्वभूमिपृथिवीशब्दाभ्या यथासख्यमणञौ भवतो विदित इत्येतस्मिन्नर्थ । विदितो ज्ञात, प्रकाशित इत्यर्थ । सर्वभूमौ [illegible] सार्वभौम । पार्थिव ॥

लोकसर्वलोकाट्ठञ् ॥ ४४ ॥

लोकसर्वलोकशब्दाभ्या तत्रेति सप्तमीसमर्थाभ्या विदित इत्येतस्मिन् [illegible]

प्रत्ययो भवति । लोके विदितः, लौकिकः । सार्वलौकिकः । अनुशतिकादित्वादुभयपदवृद्धिः ॥

तस्य वापः ॥ ४५ ॥

तस्येति षष्ठीसमर्थाद्वाप इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । उप्यतेऽस्मिन्निति वापः, क्षेत्रमुच्यते । प्रस्थस्य वापः क्षेत्रं, प्रास्थिकम् । द्रौणिकम् । खारीकम् ॥

पात्रात् ष्ठन् ॥ ४६ ॥

पात्रशब्दात् ष्ठन्प्रत्ययो भवति, तस्य वाप इत्येतस्मिन् विषये । ठञोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पात्रशब्दः परिमाणवाची । पात्रस्य वापः, पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः ॥

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति यत्तत्प्रथमासमर्थं वृद्ध्यादि दीयते चेत्तद्भवति । दीयते इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसंबध्यते । तत्र यद्धमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद्वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भाग आयः । पटादीनामुपादानमूलादतिरिक्तं द्रव्यं लाभः । रक्षानिर्वेशो राजभागः शुल्कः । उत्कोच उपदा । पञ्चास्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते, पञ्चकः । सप्तकः । शत्यः । शतिकः । साहस्रः । *चतुर्थ्यर्थ उपसंख्यानम्* । पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते, पञ्चको देवदत्तः । सिद्धं त्वधिकरणत्वेन विवक्षितत्वात् । सममन्नाह्मणे दानमिति यथा ॥

पूरणार्द्धाट्ठन् ॥ ४८ ॥

पूरणवाचिनः शब्दादर्द्धशब्दाच्च ठन् प्रत्ययो भवति तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इत्येतस्मिन्नर्थे । यथायथं ठक्ठिठनोरपवादः । द्वितीयो वृद्ध्यादिरस्मिन् दीयते, द्वितीयिकः । तृतीयिकः । पञ्चमिकः । सप्तमिकः । अर्द्धिकः । अर्द्धशब्दो रूपकार्द्धस्य रूढिः ॥

भागाद्यच्च ॥ ४९ ॥

भागशब्दाद्यत् प्रत्ययो भवति, चकाराट्ठन्च, तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयत इत्येतस्मिन्नर्थे । ठञोऽपवादः । भागो वृद्ध्यादिरस्मिन् दीयते, भाग्यं, भागिकं शतम् । भाग्या, भागिका विंशतिः । भागशब्दोऽपि रूपकार्द्धस्य वाचकः ॥

तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥ ५० ॥

तदिति द्वितीयासमर्थाद्धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । प्रकृतिविशेषणं भाराद्वंशादिभ्य इति-वंशादिभ्यः परो यो भारशब्दस्तदन्तात्प्रातिपदिकादिति । वंशभारं हरति वहत्यावहति वा, वांशभारिकः । कौटजभारिकः । बाल्वजभारिकः । भारादिति किम् ? वंशं हरति । वंशादिभ्य इति किम् ? व्रीहिभारं हरति

अपरा वृत्तिः—भाराद्वंशादिभ्य इति, भारभूतेभ्यो वंशादिभ्य इत्यर्थः। भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणम्। भारभूतान् वंशान् हरति, वांशिकः। कौटजिकः। बाल्वजिकः। भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम्? भारभूतान् व्रीहीन् वहति। सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः, तदुभयमपि ग्राह्यम्। हरति देशान्तरं प्रापयति चोरयति वा। वहत्युत्क्षिप्य धारयतीत्यर्थः। आवहति उत्पादयतीत्यर्थः। वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। वंशादिः॥

### वस्नद्रव्याभ्यां ठन्कनौ ॥ ५१ ॥

वस्नद्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासंख्यं ठन् कन् इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु। वस्नं हरति वहति वा, वस्निकः। द्रव्यकः॥

### संभवत्यवहरति पचति ॥ ५२ ॥

तदिति द्वितीया समर्थविभक्तिरनुवर्तते। तदिति ... ष्वर्थेषु यथाविहितं प्रत्ययो भवति। तत्राधेयस्य प्रमाणानतिरेकः संभवः। उपसंहरणमवहारः। विक्लेदनं पाकः। प्रस्थं संभवति अवहरति पचति वा, प्रास्थिकः। कौडविकः। खारीकः। ननु च पाके च संभवोऽस्ति? नास्त्यत्र ... पचति ब्राह्मणी, प्रास्थिकी। ॐतत्पचतीति द्रोणादण्ॐ। द्रोणं पचति, द्रौणी। ...

### आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ५३ ॥

आढकाचितपात्रशब्देभ्यो ... भवति। ठञोऽपवादः, पक्षे सोऽपि भवति। आढकं सम्भवत्यवहरति पचति आढकीना। आढकिकी। आचितीना। आचितिकी। पात्रीणा। पात्रिकी॥

### द्विगोष्ठंश्च ॥ ५४ ॥

आढकाचितपात्रादित्येव। आढकाचितपात्रान्ताद् द्विगोः सम्भवत्यादिष्वर्थेषु प्रत्ययो भवति, चकारात्खः, अन्यतरस्याम्। विभाषासामर्थ्यादेवानयोर्लुङ्न ठञस्तु पक्षेऽनुज्ञातस्याध्यर्द्धपूर्वद्विगोरिति लुग् भवत्येव। नकारः स्वरार्थः। ... ङीपर्थः। द्व्याढकिकी। द्व्याढकीना। द्व्याढकी। द्व्याचितिकी। द्व्याचिता। अपरिमाणविस्ताचितेति ङीपः प्रतिषेधः। द्विपात्रिकी। द्वि... द्विपात्री॥

### कुलिजाल्लुक्खौ च ॥ ५५ ॥

द्विगोरित्येव। कुलिजशब्दान्ताद् द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ भव... चकाराट्ठंश्च। अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यते, ठञः पक्षे भवति। तेन चातूरूप्यं सम्पद्यते—द्वे कुलिजे सम्भवत्यवहरति पचति वा, ...

की । द्विकुलिजीना । द्विकुलिजा । द्वैकुलिजिकी । परिमाणान्तस्यासंज्ञाशाणयोरित्यत्र कुलिजग्रहणमपीष्यते, तेनोत्तरपदवृद्धिरपि न भवति ॥

सोऽस्यांशवस्नभृतयः ॥ ५६ ॥

स इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थमंशवस्नभृतयश्चेत्ता भवन्ति । अंशो भागः । वस्नं मूल्यम् । ... वेतनम् । पञ्च अंशो वस्नो वा भृतिर्वास्य, पञ्चकः । सप्तकः । साहस्रः ॥

तदस्य परिमाणम् ॥ ५७ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थं परिमाणं चेत्तद्भवति । प्रस्थः परिमाणमस्य, प्रास्थिको राशिः । खारीकः । शत्यः । शतिकः । साहस्रः । द्रौणिकः । कौडविकः । वर्षशतं परिमाणमस्य, वार्षशतिकः । वार्षसाहस्रिकः । षष्टिर्जीवितपरिमाणमस्येति, षाष्टिकः । साप्ततिकः । समर्थविभक्तिप्रत्ययार्थाश्च पूर्वसूत्रादेवानुवर्तिष्यन्ते, किमर्थं पुनरनयोरुपादानम् ? पुनर्विधानार्थम् । द्वे षष्टी जीवितपरिमाणमस्य, द्विषाष्टिकः । द्विसाप्ततिकः । पुनर्विधानसामर्थ्याद्द्वयर्द्धपूर्वद्विगोर्लुङ् न भवति ॥

संख्यायाः संज्ञासंघसूत्राध्ययनेषु ॥ ५८ ॥

तदस्य परिमाणमिति वर्त्तते । संख्यावाचिनः प्रातिपदिकात्परिमाणोपाधिकात् प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । संज्ञासंघसूत्राध्ययनेष्विति प्रत्ययार्थविशेषणम् । तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः–पञ्चैव पञ्चकाः शकुनयः । त्रिका शालङ्कायनाः । संघ–पञ्च परिमाणमस्य पञ्चकः संघः । अष्टकः । सूत्र–अष्टावध्याया परिमाणमस्य सूत्रस्य, अष्टकं पाणिनीयम् । दशकं वैयाघ्रपदीयम् । त्रिकं काशकृत्स्नम् । ननु चाध्यायसमूहः सूत्रसंघ एव भवति ? नैतदस्ति । प्राणिसमूहे संघशब्दो रूढः । अध्ययन–पञ्चकोऽधीतः । सप्तकोऽधीतः । अष्टकः । नवकः । अधीतिरध्ययनम् , तस्य संख्यापरिमाणं–पञ्चावृत्तयः पञ्चवाराः पञ्चरूपाण्यस्याध्ययनस्य, पञ्चकमध्ययनम् । *स्तोमे डविधिः पञ्चदशाद्यर्थः* । पञ्चदश मन्त्राः परिमाणमस्य, पञ्चदशः स्तोमः । सप्तदशः । एकविंशः । *शन्शतोर्डिनिरछन्दसि* । पञ्चदशिनोऽर्द्धमासाः । त्रिंशिनो मासाः । *विंशतेश्चेति वक्तव्यम्* । विंशिनोऽङ्गिरसः ॥

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५९ ॥

तदस्य परिमाणमिति वर्त्तते । पङ्क्त्यादयः शब्दा निपात्यन्ते, यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् । पञ्चानां टिलोपः तिः प्रत्ययश्च–पञ्च परिमाणमस्य, पङ्क्तिश्छन्दः । द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्ययः–द्वौ दशतौ परिमाणमस्य संघस्य, विंशतिः । त्रयाणां दशतां त्रिन् भावः शच्च प्रत्ययः–त्रयो दशतः परिमाणमस्य, त्रिंशत् । चतुर्णां दशतां चत्वारिन् भावः शच्च प्रत्ययः–चत्वारो दशतः परिमाणमस्य,

चत्वारिंशत्। पञ्चानां दशतां पञ्चाभावः शच प्रत्ययः-पञ्च दशतः परिमाणमस्य, पञ्चाशत्। षण्णां दशतां षड्भावस्तिः प्रत्ययोऽपदत्व च-षड दशतः परिमाणमस्य, षष्टिः। सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च-सप्त दशतः परिमाणमस्य, सप्ततिः। अष्टानां दशतामशीभावस्तिः प्रत्ययश्च-अष्टौ दशतः परिमाणमस्य, अशीतिः। नवानां दशतां नवभावस्तिः प्रत्ययश्च-नवदशतः परिमाणमस्य, नवतिः। दशानां दशतां शभावः तश्च प्रत्ययः-दश दशतः परिमाणस्य सघस्य, शतम्। विंशत्यादयो गुणशब्दास्ते यथाकथञ्चिद् व्युत्पाद्या.। नात्रावयवार्थेऽभिनिवेष्टव्यम्, तथाहि पङ्क्तिरिति क्रमसन्निवेशोऽपि वर्तते-ब्राह्मणपङ्क्तिः। पिपीलिकापङ्क्तिरिति। न चात्रावयवार्थः कश्चिदस्ति। या चैषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिस्तवच्छिन्नसङ्ख्यानुविधानं च, एतदपि सर्वं स्वाभाविकमेव। सहस्रादयोऽप्येव जातीयकास्तद्धदेव द्रष्टव्याः। उदाहरणमात्रमेतदिति॥

पञ्चद्दशतौ वर्गे वा ॥ ६० ॥

पञ्चद् दशद् इत्येतौ वा निपात्येते तदस्य परिमाणमित्येतस्मिन् विषये वर्गेऽभिधेये। सङ्ख्याया इति कनि प्राप्ते डतिर्निपात्यते, वावचनात्पक्षे सोऽपि [illegible] परिमाणमस्य, पञ्चद्वर्गो, दशद्वर्गः। पञ्चको वर्गो, दशको वर्गः॥

सप्तनोऽञ् छन्दसि ॥ ६१ ॥

वर्ग इति वर्तते, तदस्य परिमाणमिति च। सप्तन् शब्दाच्छन्दसि वि[illegible] प्रत्ययो भवति वर्गेऽभिधेये। सप्त साप्तान्यसृजत्॥

त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्॥ ६२ ॥

तदस्य परिमाणमित्येव। वर्ग इति निवृत्तम्। त्रिंशच्चत्वारिंशच्छब्दाभ्यां विषये डण् प्रत्ययो भवति तदस्य परिमाणमित्येतस्मिन् विषये ब्राह्मणेऽभिधेये अभिधेये सप्तम्येषा न विषयसप्तमी, तेन मन्त्रभागयोरपि भवति। त्रिं[illegible] परिमाणमेषां ब्राह्मणानां, त्रैंशानि ब्राह्मणानि। चात्वारिंशानि ब्राह्मणानि। क[illegible] चिदेव ब्राह्मणान्युच्यन्ते॥

तदर्हति ॥ ६३ ॥

तदिति द्वितीयासमर्थादर्हति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। श्वेतच्छत्रमर्हति, श्वैतच्छत्रिकः। वास्रयुग्मिकः। शत्यः। शतिकः। साहस्रः॥

छेदादिभ्यो नित्यम्॥ ६४ ॥

नित्यग्रहणं प्रत्ययार्थविशेषणम्। छेदादिभ्यो द्वितीयासमर्थेभ्यो [illegible] स्मिन्नर्थे यथाविहितं प्रत्ययो भवति। छेदं नित्यमर्हति, छैदिकः। भैदिकः। [illegible] भेद। द्रोह। दोह। वर्त्त। कर्ष। सम्प्रयोग। विप्रयोग। प्रेषण। सम्प्रश्न। [illegible] विराग। विरङ्ग। ( वैरङ्गिकः )। छेदादिः।

शीर्षच्छेदाद्यच्च ॥ ६५ ॥

शीर्षच्छेदशब्दाद् द्वितीयासमर्थान्नित्यमर्हतीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति चकाराच्चयथाविहितञ्च । शिरश्छेदं नित्यमर्हति, शीर्षच्छेद्यः । शैर्षच्छेदिकः । प्रत्यय-सन्नियोगेन शिरसः शीर्षभावो निपात्यते ॥

(१)दण्डादिभ्यः ॥ ६६ ॥

नित्यमिति निवृत्तम् । यदित्यनुवर्तते । दण्डादिभ्यो द्वितीयासमर्थेभ्योऽर्हतीत्य-स्मिन्नर्थे यत् प्रत्ययो भवति । ठकोऽपवादः । दण्डमर्हति, दण्ड्यः । मुसल्यः । दण्ड । मुसल । मधुपर्क । कशा । अर्घ । मेधा । मेघ । युग । उदक । वध । गुहा । भाग । इभ । दण्डादिः ॥

छन्दसि च ॥ ६७ ॥

प्रातिपदिकमात्राच्छन्दसि विषये तदर्हतीत्यस्मिन्नर्थे यत् प्रत्ययो भवति । ठञा-दीनामपवादः । उदक्या वृत्तयः । यूप्यः पलाशः । गर्त्यो देशः ॥

पात्राद् घंश्च ॥ ६८ ॥

पात्रशब्दाद् घन् प्रत्ययो भवति चकाराद्यश्च, तदर्हतीत्यस्मिन्नर्थे । ठञ्ठकोरप-वादः । पात्रं परिमाणमस्यास्ति । पात्रमर्हति, पात्रियः । पात्र्यः ॥

कडङ्करदक्षिणाच्छ च । ६९ ॥

कडङ्करदक्षिणाशब्दाभ्यां छः प्रत्ययो भवति, चकाराद्यश्च तदर्हतीत्यस्मिन् विषये । ठकोऽपवादः । कडङ्करमर्हति, कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हति, दक्षिणीयो भिक्षुः । दक्षिण्यो ब्राह्मणः । दक्षिणाशब्दस्याल्पाच्तरस्य अपूर्वनिपातेन लक्षणव्यभि-चारचिह्नेन यथासंख्याभावं सूचयति ॥

स्थालीबिलात् ॥ ७० ॥

छयतावनुवर्तेते । स्थालीबिलशब्दाच्छयतौ प्रत्ययौ भवतः, तदर्हतीत्यस्मिन्नर्थे । ठकोऽपवादः । स्थालीबिलमर्हन्ति, स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाक-योग्या इत्यर्थः ॥

यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥

यज्ञशब्दादृत्विक्शब्दाच्च यथासंख्यं घखञौ प्रत्ययौ भवतः, तदर्हतीत्यस्मिन् विषये । ठकोऽपवादः । यज्ञियो ब्राह्मणः । आर्त्विजीनो ब्राह्मणः । छयज्ञर्त्विग्भ्यां तत्क-

(१) अत्र दण्डादिभ्यो य, इति पाठस्त्वपपाठ । तथाहि वध्यशब्दस्योत्पादनाय अघो-दिति सूत्रे भाष्ये उक्तम्—वधयधिर्वो, हनो वा यद्वधश्चेति वेति । यदि चात्र तद्धितो यद्वि-धीयते तत एवैतदुपपद्यते तथाहि वध्यस्याद्युदात्तत्व, यत्यपि यतोनाव इत्याद्युदात्तत्वं, यदि त्र यो विधीयेत, तत. स्वरे विशेषादनुपपन्नमेतत्स्यादिति ।

र्महंतीत्युपसंख्यानम् ॥ यज्ञकर्मार्हति, यज्ञियो देश । ऋत्विक्कर्मार्हति, आर्त्विजीन ब्राह्मणकुलम् । आर्हीयठगादीना पूर्वोऽवधि, अत पर प्राग्वतीयठञेव भवति ॥

पारायणतुरायणचान्द्रायण वर्त्तयति ॥ ७२ ॥

समर्थविभक्तिरनुवर्त्तते । अर्हतीति निवृत्तम् । पारायणादिभ्यो द्वितीयासमर्थेभ्यो वर्त्तयतीत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति । पारायण वर्त्तयत्यधीते, पारायणिकश्छात्र । तौरायणिको यजमान । चान्द्रायणिकस्तपस्वी ॥

सशयमापन्न ॥ ७३ ॥

सशयशब्दाद् द्वितीयासमर्थादापन्न इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति । सशयमापन्न प्राप्त, साशयिक स्थाणु ॥

योजन गच्छति ॥ ७४ ॥

योजनशब्दाद् द्वितीयासमर्थाद्गच्छतीत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति । योजन गच्छति, यौजनिक । ॥क्रोशशतयोजनशतयोरुपसंख्यानम्॥ । क्रोशशत गच्छति क्रौशशतिक । यौजनशतिक । ॥ततोऽभिगमनमर्हतीति च ... पसंख्यानम्॥ । क्रोशशतादभिगमनमर्हति, क्रौशशतिको भिक्षु । ... आचार्य ॥

पथ ष्कन् ॥ ७५ ॥

पथिन्शब्दाद् द्वितीयासमर्थाद्गच्छतीत्यस्मिन्नर्थे ष्कन् प्रत्ययो भवति । ... स्वरार्थ । षकारो ङीषर्थ । पन्थान गच्छति पथिक । पथिकी ॥

पन्थो ण नित्यम् ॥ ७६ ॥

नित्यग्रहण प्रत्ययार्थविशेषणम् । पथ पन्थ इत्ययमादेशो भवति णश्च ... नित्य गच्छतीत्यस्मिन् विषये । पन्थान नित्य गच्छति, पान्थो भिक्षा याचते । ... मिति किम् ? पथिक ।

उत्तरपथेनाहृत च ॥ ७७ ॥

निर्देशादेव समर्थविभक्ति । उत्तरपथशब्दात्तृतीयासमर्थादाहृतमित्येतस्मिन् ठञ् प्रत्ययो भवति । चकार प्रत्ययार्थसमुच्चय, गच्छतीति च । अत्रापि तृतीयैव ... र्थविभक्ति । उत्तरपथेनाहृतमौत्तरपथिकम् । उत्तरपथेन गच्छति, औत्तरपथिक ... तत्प्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम्॥ । वारिपथेनाहृत, वा... वारिपथेन गच्छति, वारिपथिक । जङ्गलपथेनाहृत, जाङ्गलपथिकम् । ज... गच्छति, जाङ्गलपथिक । स्थलपथेनाहृत, स्थालपथिकम् । स्थलपथेन ... स्थालपथिक । कान्तारपथेनाहृत, कान्तारपथिकम् । कान्तारपथेन गच्छति, ...रपथिक । ॥अजपथशङ्कुपथाभ्या चोपसंख्यानम्॥ । अजपथेनाहृत गच्छति

समायाः खः ॥ ८५ ॥

अधीष्टादयश्चत्वारोऽर्था अनुवर्त्तन्ते । समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः । समामधीष्टो भृतो भूतो भावी वा, समीनः । केचित्तु तेन निर्वृत्तमिति सर्वत्रानुवर्त्तयन्ति–समया निर्वृत्तः, समीनः ॥

द्विगोर्वा ॥ ८६ ॥

समायाः ख इत्येव । समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो भवति । पूर्वेण नित्यः प्राप्तो विकल्प्यते । प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति प्राप्तिरस्त्येव । तेन मुक्ते पक्षे ठञपि भवति–द्विसमीनः । द्वैसमिकः । त्रिसमीनः । त्रैसमिकः ॥

रात्र्यहस्संवत्सराच्च ॥ ८७ ॥

(१)रात्रि अहः संवत्सर इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति । तेन मुक्ते पक्षे ठञपि भवति । द्विरात्रीणः । द्वैरात्रिकः । त्रिरात्रीणः । त्रैरात्रिकः । द्व्यहीनो । द्वैयह्निकः । त्र्यहीणः । त्रैयह्निकः । द्विसंवत्सरीणः । द्विसांवत्सरिकः । त्रिसंवत्सरीणः । त्रिसांवत्सरिकः । संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः ॥

वर्षाल्लुक् च ॥ ८८ ॥

द्विगोरित्येव । वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति, ठञ्, तयोश्च वा लुग् भवति । एवं त्रीणि रूपाणि भवन्ति–द्विवर्षीणो व्याधिः द्विवार्षिकः । द्विवर्षः । त्रिवर्षीणः । त्रिवार्षिकः । त्रिवर्षः । वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः । भाविनि तु त्रैवर्षिकः ॥

चित्तवति नित्यम् ॥ ८९ ॥

चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् [illegible]
(२)प्रत्ययस्य नित्यं लुग् भवति । पूर्वेण विकल्पे प्राप्ते वचनम् । द्विवर्षो दारकः चित्तवतीति किम् ? द्विवर्षीणो व्याधिः ॥

षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९० ॥

षष्टिकशब्दो निपात्यते । बहुवचनमतन्त्रम् । षष्टिरात्रशब्दात्तृतीयासमर्थात् प्रत्ययो निपात्यते, पच्यन्त इत्येतस्मिन्नर्थे, रात्रशब्दस्य च लोपः । षष्टिरात्रेण षष्टिका । सञ्ज्ञैषा धान्यविशेषस्य, तेन मुद्गादिष्वतिप्रसङ्गो न भवति ॥

वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥

वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति ठञोऽपवादः । इद्वत्सरीयः । इदावत्सरीयः ॥

---

( १ ) द्विगोरित्येवत्यधिकं बहुषु पुस्तकेषु ॥ ( २ ) निर्वृत्तादिष्वर्थेषु उत्पन्नस्य [illegible] बहुषु पुस्तकेषु नास्ति ॥

संपरिपूर्वात् ख च ॥ ९२ ॥

संपरिपूर्वाद्वत्सरान्तात् प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति, चकाराच्छश्च । संवत्सरीणः । परिवत्सरीणः । संवत्सरीयः । परिवत्सरीयः ॥

तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥

तेनेति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् परिजय्य लभ्य कार्य सुकर इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति । मासेन परिजय्यः—शक्यते जेतुं, मासिको व्याधिः । सांवत्सरिकः । मासेन लभ्यो, मासिकः पटः । मासेन कार्यं, मासिकं चान्द्रायणम् । मासेन सुकरो, मासिकः प्रासादः ॥

तदस्य ब्रह्मचर्यम् ॥ ९४ ॥

तदिति द्वितीया समर्थविभक्तिः, सा चात्यन्तसंयोगे । अस्येति प्रत्ययार्थः । ब्रह्मचर्यमिति द्वाभ्यामपि सम्बध्यते—कालस्य व्यापकं, प्रत्ययार्थस्य च स्वमिति । तदिति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति ब्रह्मचर्यं चेद्गम्यते । मासं ब्रह्मचर्यमस्य, मासिको ब्रह्मचारी । आर्द्धमासिकः । सांवत्सरिकः । अपरा वृत्तिः—तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति । मासोऽस्य ब्रह्मचर्यस्य, मासिकं ब्रह्मचर्यम् । आर्द्धमासिकम् । सांवत्सरिकम् । पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यमेव, उभयमपि प्रमाणमुभयथा सूत्रप्रणयनात् । *महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम्* । माहानाम्निकम् । गौदानिकम् । आदित्यव्रतिकम्* तच्चरतीति च(१)* महानाम्न्य ऋचः, तत्सहचरितं व्रत तच्छब्देनोच्यते । महानाम्नीश्चरति, माहानाम्निकः । आदित्यव्रतिकः । गौदानिकः । (२)भस्याढ इति पुंवद्भावेन ङीपि निवृत्ते, "नस्तद्धित" इति टिलोपः । *अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः* । अवान्तरदीक्षां चरति, अवान्तरदीक्षी । तिलव्रती । *अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः* । अष्टाचत्वारिंशद्वर्षाणि व्रत चरति, अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी । *चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः* । चातुर्मास्यानि चरति, चातुर्मासकः । चातुर्मासी । *चतुर्मासाण्ण्यो यज्ञे तत्र भवे* । चतुर्षु मासेषु भवानि, चातुर्मास्यानि । *संज्ञायामण्वक्तव्यः* । चतुर्षु मासेषु भवा, चातुर्मासी । पौर्णमासी । आषाढी । कार्तिकी । फाल्गुनी ॥

तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥

तस्येति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणेत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति । अग्निष्टोमस्य दक्षिणा, आग्निष्टोमिकी । वाजपेयिकी । राजसूयिकी । आख्याग्रहणम-

---

(१) तच्चरतीति महानाम्न्यादिभ्य उपसंख्यानमिति पा० ॥ (२) भस्याढ इति पुंवद्भावेन ङीपि निवृत्ते "नस्तद्धित" इति टिलोप इत्यधिकमत्र, पदमञ्जर्यां दर्शनात् ॥

### तपःसहस्राभ्यां विनीनी ॥ १०२ ॥

तपः सहस्रशब्दाभ्यां विनि इनि इत्येतौ प्रत्ययौ भवतो मत्वर्थे । प्रत्ययार्थयोस्तु यथासंख्यं सर्वत्रैवास्मिन् प्रकरणे नेष्यते । तपोऽस्यास्मिन् वा विद्यते, तपस्वी । सहस्री । असन्तत्वादनन्तरत्वाच्च सिद्धे प्रत्यये पुनर्वचनमणा वक्ष्यमाणेन बाधो मा भूदिति । सहस्रात्तु ठनपि साध्यते ॥

### अण् च ॥ १०३ ॥

तपःसहस्राभ्यामण्च प्रत्ययो भवति । तापसः । साहस्रः । योगविभाग उत्तरार्थो, यथासंख्यार्थश्च । ॐअण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम्ॐ । ज्योत्स्ना विद्यते अस्मिन् पक्षे, ज्यौत्स्नः पक्षः । तामिस्रः । कौण्डिनः । कौतपः । वैसर्पः । वैपादिकः ॥

### सिकताशर्कराभ्यां च ॥ १०४ ॥

सिकताशर्कराभ्यामण्प्रत्ययो भवति मत्वर्थे । सैकतो घटः । शार्करं मधु । अदेश इहोदाहरणम्, देशे तु लुबिलचौ भविष्यतः ॥

### देशे लुबिलचौ च ॥ १०५ ॥

सिकताशर्कराभ्यां देशेऽभिधेये लुबिलचौ भवतः, चकारादण् च, मतुप् च । कस्य पुनरयं लुप् ? मत्वादीनामन्यतमस्य, विशेषाभावात् । सिकता अस्मिन् विद्यन्ते, सिकता देशः । सिकतिलः । सैकतः । सिकतावान् । शर्करा देशः । शर्करिलः । शार्करः । शर्करावान् । देश इति किम् ? सैकतो घटः । शार्करं मधु ॥

### दन्त उन्नत उरच् ॥ १०६ ॥

उन्नत इति प्रकृतिविशेषणम् । दन्तशब्दादुन्नतोपाधिकादुरच् प्रत्ययो भवति मत्वर्थे । दन्ता उन्नता अस्य सन्ति, दन्तुरः । उन्नत इति किम् ? दन्तवान् ॥

### ऊषसुषिमुष्कमधो रः ॥ १०७ ॥

ऊष सुषि मुष्क मधु इत्येतेभ्यो र प्रत्ययो भवति मत्वर्थे । ऊषरं क्षेत्रम् । सुषिरं काष्ठम् । मुष्करः पशुः । मधुरो गुडः । इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति, इह न भवति-ऊषोऽस्मिन् घटे विद्यते, मध्वस्मिन् घटे विद्यते इति । ॐरप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्ॐ । खमस्यास्तीति कण्ठबिवरं महत्, खरः । मुखमस्यास्तीति सर्वस्मिन् वक्तव्ये, मुखरः । कुञ्जावस्य स्तः, कुञ्जरः । हस्तिहनू कुञ्जशब्देनोच्येते । ॐनगपांसुपाण्डुभ्यश्चेति वक्तव्यम्ॐ । नगरम् । पांसुरम् । पाण्डुरम् । ॐकच्छ्वा ह्रस्वत्वं चॐ । कच्छुरम् ।

### द्युद्रुभ्यां मः ॥ १०८ ॥

द्युद्रुशब्दाभ्यां म प्रत्ययो भवति मत्वर्थे । द्युमः । द्रुमः । रूढिशब्दावेतौ । रूढिषु च न मतुब्विकल्प्यते ।

केशाद्वोऽन्यतरस्याम् ॥ १०९ ॥

केशशब्दाद्वः प्रत्ययो भवति मत्वर्थे अन्यतरस्याम् । ननु च प्रकृतमन्यतरस्यां ग्रहणमनुवर्तत एव ? मतुप्समुच्चयार्थं तदित्युक्तम् । अनेन इनिठनौ प्राप्येते । ततश्चातूरूप्यं भवति–केशवः । केशी । केशिकः । केशवानिति । ॐवप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्ॐ । मणिवः । हिरण्यवः । कुररावः । कुमारवः राजीवम् । कुञ्जवः । इष्टकावः (१) । ॐअर्णसो लोपश्चॐ । अर्णवः । ॐछन्दसीवनिपौ च वक्तव्यौॐ । वश्च मतुप् च । रथीरभून्मुद्गलानी गविष्टौ । सुमङ्गलीरिय वधूः । वनिप्–मघवानमीमहे । वकारमतुपौ च–उद्धा च उद्धती च । ॐमेधारथाभ्यामिरन्निरचौ वक्तव्यौॐ । मेधिरः । रथिरः ।

गाण्डयजगात् संज्ञायाम् ॥ ११० ॥

गाण्डी अजग इत्येताभ्यां वः प्रत्ययो भवति संज्ञाया विषये मत्वर्थे । गाण्डीवं धनुः । अजगवं धनुः । ह्रस्वादपि भवति–गाण्डिवं धनुरिति । तुल्या हि स दीर्घह्रस्वयो । उभयथा च सूत्रं प्रणीतम् ॥

काण्डाण्डादीरन्नीरचौ ॥ १११ ॥

काण्ड अण्ड इत्येताभ्यां यथासङ्ख्यमीरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे । काण्डीरः । अण्डीरः ॥

रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥

रज प्रभृतिभ्यः प्रातिपदिकेभ्यो वलच् प्रत्ययो भवति मत्वर्थे । रजस्वला स्त्री । कृषीवलः कुटुम्बी । आसुतीवलः शौण्डिकः । परिषद्वलो राजा । वल इति इतिकरणो विषयनियमार्थः सर्वत्र सबध्यते, तेनेह न भवति–रजोऽस्मिन् विद्यत इति । ॐवलच् प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्ॐ । भ्रातृवलः पुत्रवलः । उत्साहवलः (२) ।

दन्तशिखात् संज्ञायाम् ॥ ११३ ॥

दन्तशिखाशब्दाभ्यां वलच् प्रत्ययो भवति मत्वर्थे संज्ञायां विषये । दन्तावलः सैन्यः । दन्तावलो गजः । शिखावलं नगरम् । शिखावला स्थूणा ॥

ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ॥ ११४ ॥

ज्योत्स्नादयः शब्दा निपात्यन्ते मत्वर्थे संज्ञायां विषये । ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते–ज्योत्स्ना चन्द्रप्रभा । तमस उपधाया इकारो तमिस्रा रात्रिः । स्त्रीत्वमतन्त्रम्, अन्यत्रापि दृश्यते–तमिस्रं नभः । [illegible] प्रत्ययो निपात्यते–शृङ्गिणः । ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ ऊर्जस्वी । ऊर्जस्वलः । गोमिनिप्रत्ययो निपात्यते–गोमी । मलशब्दा[illegible] प्रत्ययौ निपात्येते–मलिनः । मलीमसः ॥

(१) अस्मात् इत्युदाहरणमन्यत्राधिकम् ॥ (२) उत्साहवल इत्यधिकं पुस्तकान्तरे ॥

अत इनिठनौ ॥ ११५ ॥

अकारान्तात्प्रातिपदिकादिनिठनौ प्रत्ययौ भवतः । दण्डी । दण्डिकः । छत्री । छत्रिकः । अन्यतरस्यामित्यधिकारान्मतुबपि भवति–दण्डवान् । छत्रवान् । तपरकरणं किम् ? खट्वावान् ।

एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ॥

एकाक्षरात्तावत्–स्ववान् । खवान् । कृतः–कारकवान् । जातेः–व्याघ्रवान् । सिंहवान् । सप्तम्याम्–दण्डा अस्यां सन्ति, दण्डवती शालेति । इतिकरणो विषयनियमार्थः सर्वत्र संबध्यत इत्युक्त, तेन क्वचिद्भवत्यपि–कार्यी । हार्यी । तण्डुली । तण्डुलिक इति ॥

व्रीह्यादिभ्यश्च ॥ ११६ ॥

व्रीह्यादिभ्यः प्रातिपदिकेभ्य इनिठनौ प्रत्ययौ भवतो मत्वर्थे । मतुब्भवत्येव । व्रीही । व्रीहिकः । व्रीहिमान् । मायी । मायिकः । मायावान् । न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते, किं तर्हि शिखादिभ्य इनिर्वाच्यः, इकन्यवखदादिभ्यः, परिशिष्टेभ्य उभयम् । शिखा । मेखला । संज्ञा । बलाका । माला । वीणा । वडवा । अष्टका । पताका । कर्मन् । चर्मन् । हंसा इत्येतेभ्य इनिरेवेष्यते । यवखद । कुमारी । नौ इत्येतेभ्य इकन्नेवेष्यते । परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः । व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते ? एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते । शालयोऽस्य सन्ति, शालिलः । शाली । शालिकः । शालिमान् इति । व्रीहिशिखादयः पूर्वं पठिता । यवखद । कुमारी । नौ । शीर्षान्नञः । अशीर्षी । अशीर्षिकः । व्रीह्यादिः ।

तुन्दादिभ्य इलच्च ॥ ११७ ॥

तुन्दादिभ्यः प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे, चकारादिनिठनौ मतुप् च । तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् । उदरिलः । उदरी । उदरिकः । उदरवान् । तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि । स्वाङ्गाद्विवृद्धौ च । तुन्दादिः ।

एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥

एकपूर्वाद्गोपूर्वाच्च प्रातिपदिकान्नित्यं ठञ् प्रत्ययो भवति मत्वर्थे । एकशतमस्यास्तीति, ऐकशतिकः । ऐकसहस्रिकः । गोपूर्वात्–गौशतिकः । गौसहस्रिकः । अत इत्येव, एकविंशतिरस्यास्तीति न भवति । कथमैकगविकः ? समासान्ते कृते भविष्यति । कथं गौशकटिकः ? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति ततो भविष्यति । मवश्य चात इत्यनुवर्त्यम् । द्वन्द्वोपतापगर्ह्यादित्येवमाद्यर्थम् । नित्यग्रहणं मतुपो बाधनार्थम् । कथमेकद्रव्यवत्त्वादिति ? नैवायं साधुः, एकेन वा द्रव्यवत्त्वादिति समर्थनीयम् ॥

शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥

शतान्तात् सहस्रान्ताच्च प्रातिपदिकाट्ठञ् प्रत्ययो भवति मत्वर्थे, तौ चेच्छतसहस्रशब्दौ निष्कात् परौ भवतः । निष्कशतमस्यास्ति, नैष्कशतिकः । नैष्कसहस्रिकः । सुवर्णनिष्कशतमस्यास्तीत्यनभिधानान्न भवति ॥

रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥

आहतप्रशंसे प्रकृत्युपाधी, आहतप्रशंसाविशिष्टार्थे वर्तमानाद् रूपशब्दाद्यप्प्रत्ययो भवति मत्वर्थे । आहतं रूपमस्य, रूप्यो दीनारः । रूप्यः केदारः । रूप्यं कार्षापणम् । प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः । निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते । आहतप्रशंसयोरिति किम् ? रूपवान् । ॐयप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्ॐ । हिम्याः पर्वताः । गुण्या ब्राह्मणाः ।

अस्मायामेधास्रजो विनिः ॥ १२१ ॥

असन्तात्प्रातिपदिकान्माया मेधा स्रज् इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे । मतुप् सर्वत्र समुच्चीयत एव । असन्तात्तावत्—पयस्वी । यशस्वी । मायावी । मेधावी । स्रग्वी । मायाशब्दाद् व्रीह्यादिषु पाठादिनिठनावपि भवत —मायी । मायिकः ॥

बहुलं छन्दसि ॥ १२२ ॥

छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे । अग्ने तेजस्विन् । न भवति, सूर्यो वर्चस्वान् । ॐछन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं चेति वक्तव्यम्ॐ । अष्ट्रावी । मेखलावी । द्वयावी । उभयावी । रुजावी । हृदयावी । द्वयोभयहृदयानि दीर्घत्वं प्रयोजयन्ति । ॐमर्मणश्चेति वक्तव्यम्ॐ । मर्मावी । ॐसर्वत्रामयस्योपसंख्यानम्ॐ । छन्दसि भाषायां च । आमयावी । ॐशृङ्गवृन्दाभ्यामारकन् वक्तव्यःॐ । शृङ्गारकः । वृन्दारकः । ॐफलबर्हाभ्यामिनज्वक्तव्यःॐ । फलिनः । बर्हिणः । ॐहृदयाच्चालुरन्यतरस्याम्ॐ । हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । ॐशीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुज् वक्तव्यःॐ । शीतं न सहते शीतालुः । उष्णालुः । तृप्रालुः । ॐतन्न सहत इति हिमाच्चेलुःॐ । हिमं न सहते हिमेलुः । ॐबलाच्चोलच्ॐ । बलं न सहते बलूलः । ॐवातात् समूहे चॐ । ॐवातं न सहत इति चॐ । वातानां समूहः, वातं न सहत इति वा वातूलः । ॐतप् पर्वमरुद्भ्यां वक्तव्यःॐ । पर्वतः । मरुत्तः । ॐअर्थाच्चासन्निहिते तदन्ताच्चेति वक्तव्यम्ॐ

ऊर्णाया युस् ॥ १२३ ॥

ऊर्णाशब्दाद्युस् प्रत्ययो भवति मत्वर्थे । सकारः पदसंज्ञार्थः । ऊर्णाऽस्य विद्यते, ऊर्णायुः । केचिच्छन्दोग्रहणमनुवर्तयन्ति ॥

वाचो ग्मिनिः ॥ १२४ ॥

वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे । वाग्मी । वाग्मिनौ । वाग्मिनः ॥

आलजाटचौ बहुभाषिणि ॥ १२५ ॥

वाच्शब्दात् प्रथमासमर्थादालच् आटच् इत्येतौ प्रत्ययौ भवतो मत्वर्थे बहुभाषिण्यभिधेये । ग्मिनेरपवादः । वाचालः । वाचाटः । ॐकुत्सित इति वक्तव्यम्ॐ । यो हि सम्यग् बहु भाषते स वाग्मीत्येव भवति ॥

स्वामिन्नैश्वर्ये ॥ १२६ ॥

स्वामिन्निति निपात्यते ऐश्वर्ये गम्यमाने । स्वशब्दादैश्वर्यवाचिनो मत्वर्थे आमिनच् प्रत्ययो निपात्यते । स्वमस्यास्तीति-ऐश्वर्यमस्यास्तीति, स्वामी । स्वामिनौ । स्वामिनः । ऐश्वर्य इति किम् ? स्ववान् ॥

अर्शआदिभ्योऽच् ॥ १२७ ॥

अर्शस् इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे । अर्शांसि अस्य विद्यन्ते, अर्शसः । उरसः । आकृतिगणश्चायम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् । अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घटा । अभ्र । कर्दम । आम । लवण । स्वाङ्गाद्धीनात् । वर्णात् । अर्शआदिः ॥

द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ॥ १२८ ॥

द्वन्द्वः समासः, उपतापो रोगः, गर्ह्यं निन्द्यं, तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्य इनिः प्रत्ययो भवति मत्वर्थे । द्वन्द्वात्तावत् कटकवलयिनी । शङ्खनूपुरिणी । उपतापात्-कुष्ठी । किलासी । गर्ह्यात्-ककुदावर्ती । काकतालुकी । प्राणिस्थादिति किम् ? पुष्पफलवान् वृक्षः । ॐप्राण्यङ्गान्नेष्यतेॐ । पाणिपादवती । अत इत्यनुवर्तते, तेनेह न भवति-चित्रललाटिकावती । सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ॥

वातातिसाराभ्यां कुक् च ॥ १२९ ॥

वातातिसारशब्दाभ्यामिनिः प्रत्ययो भवति, तत्संनियोगेन च तयोः कुगागमो भवति । वातातिसारयोरुपतापत्वात् पूर्वेणैवेनिप्रत्यये सिद्धे कुगर्थमेवेदं वचनम् । वातकी । अतिसारकी । ॐपिशाचाच्चेति वक्तव्यम्ॐ । पिशाचकी वैश्रवणः । रोगे चायमिष्यते, इह न भवति-वातवती गुहेति ॥

वयसि पूरणात् ॥ १३० ॥

इनिरनुवर्तते । पूरणप्रत्ययान्तात् प्रातिपदिकादिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये । पञ्चमोऽस्यास्ति मासः संवत्सरो वा, पञ्चमी उष्ट्रः । नवमी । दशमी । सिद्धे सति नियमार्थं वचनम्—इनिरेव भवति, ठन् न भवतीति । वयसीति किम् ? पञ्चमवान् ग्रामरागः ॥

सुखादिभ्यश्च ॥ १३१ ॥

सुख इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो नियम्यते मत्वर्थे । सुखी । दुःखी । माला क्षेपे इति पठ्यते, व्रीह्यादिषु च मालाशब्दोऽस्ति, तदिह क्षेपे मतुब्बाधनार्थं वचनम् । सुख । दुःख । तृप्र । कृच्छ्र । आस्र । अलीक । करुणा । कृपण । सोढ । प्रमीप । शील । हल । माला क्षेपे । प्रणय । सुखादिः ।

धर्मशीलवर्णान्ताच्च ॥ १३२ ॥

अन्तशब्दः प्रत्येकमभिसम्बध्यते । धर्माद्यन्तात् प्रातिपदिकादिनिः प्रत्ययो नियम्यते । ब्राह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्यास्तीति ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ॥

हस्ताज्जातौ ॥ १३३ ॥

हस्तशब्दादिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज्जातिरभिधीयते । हस्तोऽस्यास्तीति, हस्ती । हस्तिनौ । हस्तिनः । जाताविति किम् ? हस्तवान् पुरुषः ॥

वर्णाद् ब्रह्मचारिणि ॥ १३४ ॥

वर्णशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेद् ब्रह्मचारी भण्यते । ब्रह्मचारी त्रैवर्णिकोऽभिप्रेतः । स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति, नियममासेवत इत्यर्थः । वर्णी । वर्णिनौ । वर्णिनः । ब्रह्मचारिणीति किम् ? वर्णवान् । ब्राह्मणादयस्त्रयो वर्णा वर्णिन उच्यन्ते ॥

पुष्करादिभ्यो देशे ॥ १३५ ॥

पुष्कर इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति समुदायेन चेद्देशोऽभिधीयते । पुष्करिणी । पद्मिनी । देश इति किम् ? पुष्करवान् हस्ती । *इनिप्रकरणे बलाद्बाहूरुपूर्वादुपसंख्यानम्* । बाहुबली । ऊरुबली । *सर्वादेश्चेति वक्तव्यम्* । सर्वधनी । सर्वबीजी । सर्वकेशी नटः । *अर्थाच्चासन्निहिते* । अर्थी । असन्निहित इति किम् ? अर्थवान् । *तदन्ताच्चेति वक्तव्यम्* । धान्यार्थी । हिरण्यार्थी । पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल । कर्दम । शालूक । विगर्ह । करीष । शिरीष । यवास । प्रवास । हिरण्य(१) । कैरव । तरङ्ग । कल्लोल । वयस । पुष्करादिः ।

बलादिभ्यो मतुबन्यतरस्याम् ॥ १३६ ॥

बलादिभ्यः प्रातिपदिकेभ्यो मतुप् प्रत्ययो भवति । अन्यतरस्यांग्रहणेन प्रकृत इनिः समुच्चीयते । बलवान् । बली । उत्साहवान् । उत्साही । बल । उत्साह । उद्भाव । उद्वास । उद्वाम । शिखा । पूग । मूल । दंश । कुल । आयाम । व्यायाम । उपयाम । आरोह । अवरोह । परिणाह । युद्ध । बलादिः ।

---

( १ ) कैरव । तरङ्ग । कल्लोल । वयस । एते शब्दाः पुस्तकान्तरे नोपलभ्यन्ते ॥

संज्ञायां मन्माभ्याम् ॥ १३७ ॥

मन्नन्तात् प्रातिपदिकान्मशब्दान्ताच्च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत् संज्ञा गम्यते । प्रथिमिनी । दामिनी । मशब्दान्तात्-होमिनी । सोमिनी । संज्ञायामिति किम् ? सोमवान् । होमवान् ॥

कंशंभ्यां बभयुस्तितुतयसः ॥ १३८ ॥

कंशमिति मकारान्तावुदकसुखयोर्वाचकौ, ताभ्यां ब भ युस् ति तु त यस् इत्येते सप्त प्रत्यया भवन्ति मत्वर्थे । कम्बः । शम्बः । कम्भः । शम्भः । कंयुः । शंयुः । कन्तिः । शन्तिः । कन्तुः । शन्तुः । कन्तः । शन्तः । कंयः । शंयः । सकारः पदसंज्ञार्थस्तेनानुस्वारपरसवर्णौ सिद्धौ भवतः । संज्ञायां ह्यसत्यां कम्यः शम्य इति स्यात् ॥

तुन्दिवलिवटेर्भः ॥ १३९ ॥

तुन्दि वलि वटि इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे । तुन्दिरिति वृद्धा नाभिरुच्यते, साऽस्यास्तीति-तुन्दिभः । वलिभः । वटिभः । वलिशब्दः पामादिषु पठ्यते, तेन वलिन इत्यपि भवति ॥

अहंशुभमोर्युस् ॥ १४० ॥

अहमिति शब्दान्तरमहंकारे वर्तते, शुभमित्यव्ययं शुभपर्यायस्ताभ्यां युस् प्रत्ययो भवति मत्वर्थे । सकारः पदसंज्ञार्थः । अहंयुः । अहंकारवानित्यर्थः । शुभंयुः । कल्याणवानित्यर्थः ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमस्याध्यायस्य द्वितीय पादः ॥ ५ ॥ २ ॥

## अथ पञ्चमाध्यायस्य तृतीयः पादः ॥

प्राग्दिशो विभक्तिः ॥ १ ॥

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्य इति वक्ष्यति । प्रागेतस्माद्दिक्संशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो विभक्तिसंज्ञास्ते वेदितव्याः । वक्ष्यति—पञ्चम्यास्तसिल् । ततः । यतः । कुतः । तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः, इदमो विभक्तिस्वरश्च । इह । ऊ इदमिति विभक्त्युदात्तत्वं सिद्धं भवति । इतः परं स्वार्थिकाः प्रत्ययास्तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्नोपयुज्यत इति निवृत्तम् । वावचनमनुवर्तत एव, तेन विकल्पेन तसिलादयो भवन्ति । कुतः । कस्मात् । कुत्र । कस्मिन्निति ॥

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ २ ॥

प्राग्दिश इत्येव । किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशः प्रत्यया वेदितव्याः ।

सर्वनामत्वात् प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते । कुतः । कुत्र । यतः । यत्र । ततः । तत्र । बहुतः । बहुत्र । अद्व्यादिभ्य इति किम् ? द्वाभ्याम् । द्वयोः । प्रकृतिपरिसंख्यानं किमर्थम् ? वृक्षात् । वृक्षे । प्राग्दिश इत्येव, वैयाकरणपाशः । सर्वनामत्वादेव सिद्धे किमो ग्रहणं द्व्यादिपर्युदासात् । बहुग्रहणे संख्याग्रहणसङ्ख्या । इह न भवति । बहोः सूपात् । बहौ सूप इति ॥

इदम इश् ॥ ३ ॥

प्राग्दिश इत्येव । इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु परतः । शकारः सर्वादेशार्थः । इह ॥

एतेतौ रथोः ॥ ४ ॥

रेफथकारादौ प्राग्दिशीये प्रत्यये परत इदम एतेतावादेशौ भवतः । इशोऽपवादः । रेफेऽकार उच्चारणार्थः । इदमो र्हिल्-एतर्हि । इदमस्थमुः-इत्थम् ॥

एतदोऽश् ॥ ५ ॥

प्राग्दिश इत्येव । एतदः प्राग्दिशीये परतोऽशित्ययमादेशो भवति । शकारः सर्वादेशार्थः । अतः । अत्र । पुनरु इति योगविभागः कर्त्तव्य-एतदो रथोः परत एत इद इत्येतावादेशौ भवतः । एतर्हि । इत्थम् । रेफादिरनद्यतने र्हिलन्यतरस्यामिति विहित एव । थमुप्रत्ययः पुनरेतद उपसंख्येयः ॥

सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥

सर्वस्य स इत्ययमादेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम् । सर्वदा । सदा । प्राग्दिशीय इत्येव । सर्वं ददातीति सर्वदा ब्राह्मणी ॥

पञ्चम्यास्तसिल् ॥ ७ ॥

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यस्तसिल्प्रत्ययो भवति । कुतः । यतः । ततः । बहुतः ॥

तसेश्च ॥ ८ ॥

प्रतियोगे पञ्चम्यास्तसिः, अपादाने चाहीयरुहोरिति वक्ष्यति । तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति । कुत आगतः । यतः । ततः । बहुत आगतः । तसेस्तसिल्वचनं स्वरार्थं विभक्त्यर्थं च ॥

पर्यभिभ्यां च ॥ ९ ॥

परि अभि इत्येताभ्यां तसिल् प्रत्ययो भवति । सर्वोभयार्थे वर्त्तमानाभ्यां प्रत्यय इष्यते । परितः, सर्वत इत्यर्थः । अभितः, उभयत इत्यर्थः ॥

सप्तम्यास्त्रल् ॥ १० ॥

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति । कुत्र । यत्र । तत्र । बहुत्र

इदमो ह् ॥ ११ ॥

इदम सप्तम्यन्ताद्ध प्रत्ययो भवति । अलोऽपवाद । इह ॥

किमोऽत् ॥ १२ ॥

किम सप्तम्यन्तादत् प्रत्ययो भवति । त्रलोऽपवाद । क भोक्ष्यसे । काध्येष्यसे । अत्वमपि केचिदिच्छन्ति—कुत्र । तत् कथम् ? उत्तरसूत्राद्वावचन पुरस्तादपकृष्यते ॥

वा ह च च्छन्दसि ॥ १३ ॥

किम सप्तम्यन्ताद्वा ह प्रत्ययो भवति छन्दसि विषये, यथा प्राप्त च । क । कुह । कुत्र चिदस्य सा दूरे, क ब्राह्मणस्य वाचका ॥

इतराभ्योपि दृश्यन्ते ॥ १४ ॥

सप्तमीपञ्चम्यपेक्षमितरत्वम् । इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते । दृशिग्रहण प्रायिकविध्यर्थं, तेन भवदादिभिर्योग एवैतद्विधानम् । के पुनर्भवदादय ? भवान् दीर्घायुरायुष्मान् देवानांप्रिय इति । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । तेन भवता । ततो भवता । तत्र भवता । तस्मै भवते । ततो भवते । तत्र भवते । तस्माद्भवत । ततो भवत । तत्र भवत । तस्य भवत । ततो भवत । तत्र भवत । तस्मिन् भवति । ततो भवति । तत्र भवति । एव दीर्घायुष्प्रभृतिष्वप्युदाहार्यम् ॥

सर्वैकान्यकियत्तद काले दा ॥ १५ ॥

सप्तम्या इति वर्तते, न त्वितराभ्य इति । सर्वादिभ्य प्रातिपदिकेभ्यो दा प्रत्ययो भवति । त्रलोऽपवाद । सर्वस्मिन् काले, सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काल इति किम् ? सर्वत्र देशे ॥

इदमो र्हिल् ॥ १६ ॥

सप्तम्या इति वर्तते, काल इति च । इदम सप्तम्यन्तात्काले वर्तमानाद् र्हिल् प्रत्ययो भवति । हस्यापवाद । लकार स्वरार्थ । अस्मिन् काले, एतर्हि । काल इत्येव, इह देशे ॥

अधुना ॥ १७ ॥

अधुनेति निपात्यते । इदमोऽश्भावोऽधुना च प्रत्यय । अस्मिन् काले, अधुना ॥

दानीं च ॥ १८ ॥

इदम सप्तम्यन्तात्काले वर्तमानाद्दानीं प्रत्ययो भवति । अस्मिन् काले, इदानीम् ॥

तदो दा च ॥ १९ ॥

तद सप्तम्यन्तात्काले वर्तमानाद् दा प्रत्ययो भवति, चकाराद्दानीं च । तस्मिन् काले, तदा, तदानीम् । तदो दावचनमनर्थकं, विहितत्वात् ॥

तयोर्दार्हिलौ च च्छन्दसि ॥ २० ॥

तयोरिति प्रातिपदिकनिर्देशः । तयोरिदम्, तदश्च यथासङ्ख्यं दार्हिलौ प्रत्ययौ भवतश्छन्दसि विषये, चकाराद्यथाप्राप्तं च । इदावत्सरीयः । इद तर्हि । इदानीम् । तदानीम् ॥

अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥

छन्दसीति न स्वर्यते । सामान्येन विधानम् । किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम् । कर्हि । कदा । यर्हि । यदा । तर्हि । तदा ।

सद्यः परुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥

सप्तम्या इति काल इति च वर्तते । सद्यःप्रभृतयः शब्दा निपात्यन्ते । प्रकृतिप्रत्ययआदेशः कालविशेष इति सर्वमेतन्निपातनाल्लभ्यते । समानस्य सभावो निपात्यते द्यश्च प्रत्ययः अहन्यभिधेये—समानेऽहनि, सद्यः । पूर्वपूर्वतरयोः परभावो निपात्यते उदारी च प्रत्ययौ संवत्सरेऽभिधेये—पूर्वस्मिन् संवत्सरे परुत्, पूर्वतरे संवत्सरे परारि । इदम इश्भावः समसण् प्रत्ययो निपात्यते संवत्सरेऽभिधेये—अस्मिन् संवत्सरे, ऐषमः । परस्मादेद्यवि प्रत्ययोऽहनि—परस्मिन्नहनि, परेद्यवि । इदमोऽश्भावो द्यश्च प्रत्ययोऽहनि—अस्मिन्नहनि, अद्य । पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् प्रत्ययो निपात्यतेऽहन्यभिधेये—पूर्वस्मिन्नहनि, पूर्वेद्युः । अन्यस्मिन्नहनि, अन्येद्युः । अन्यतरस्मिन्नहनि, अन्यतरेद्युः । इतरस्मिन्नहनि, इतरेद्युः । अपरस्मिन्नहनि, अपरेद्युः । अधरस्मिन्नहनि, अधरेद्युः । उभयोरह्नोः, उभयेद्युः । उत्तरस्मिन्नहनि, उत्तरेद्युः । ॐद्युश्चोभयाद्वक्तव्यः ॐ । उभयद्युः ॥

प्रकारवचने थाल् ॥ २३ ॥

किंसर्वनामबहुभ्योऽद्व्यादिभ्य इति वर्तते । सप्तम्या इति काल इति च निवृत्तम् । सामान्यस्य विशेषो भेदकः प्रकारः । प्रकृत्यर्थविशेषणं चैतत् । प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति । तेन प्रकारेण, तथा । यथा । सर्वथा । जातीयरोऽपीदृशमेव लक्षणम्, स तु स्वभावात् प्रकारवति वर्तते, थाल्पुनः प्रकारमात्रे ॥

इदमस्थमुः ॥ २४ ॥

इदंशब्दात्प्रकारवचने थमुः प्रत्ययो भवति । थालोऽपवादः । अनेन प्रकारेण, इत्थम् । उकारो मकारपरित्राणार्थः ॥

किमश्च ॥ २५ ॥

किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति(१) । केन प्रकारेण, कथम् ॥

---

(१) थालोऽपवादः । योगविभाग उत्तरार्थः । इत्यधिकं पुस्तकान्तरे ॥

धा हेतौ च च्छन्दसि ॥ २६ ॥

किंशब्दाद्धेतौ वर्त्तमानाद्था प्रत्ययो भवति, चकारात्प्रकारवचने छन्दसि विषये। हेतौ तावत्-कथा ग्रामं न पृच्छसि । केन हेतुना न पृच्छसीत्यर्थः । प्रकारवचने-कथा देवा आसन् पुराविदः । विभक्तिसंज्ञायाः पूर्णोऽवधिः ॥

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥

दिशां शब्दाः दिक्शब्दाः । दिक्शब्देभ्यो दिग्देशकालेषु वर्त्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्योऽस्तातिः प्रत्ययो भवति स्वार्थे । यथासंख्यमत्र नेष्यते । पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रमणीयम् । अधस्ताद्वसति । अधस्तादागतः । अधस्ताद्रमणीयम् । दिक्शब्देभ्य इति किम् ? ऐन्द्र्यां दिशि वसति । सप्तमीपञ्चमीप्रथमाभ्य इति किम् ? पूर्वं ग्रामं गतः । दिग्देशकालेष्विति किम् ? पूर्वस्मिन् गुरौ वसति । इकारस्तकारपरित्राणार्थः ।

दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥

दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्त्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां स्वार्थे अतसुच् प्रत्ययो भवति । अस्तातेरपवादः । दक्षिणाशब्दः काले न सम्भवतीति दिग्देशवृत्तिः परिगृह्यते । दक्षिणतो वसति । दक्षिणत आगतः । दक्षिणतो रमणीयम् । उत्तरतो वसति । उत्तरत आगतः । उत्तरतो रमणीयम् । अकारो विशेषणार्थः, पञ्चतसर्थमन्ययेनेति ॥

विभाषा परावराभ्याम् ॥ २९ ॥

परावरशब्दाभ्यां विभाषा अतसुच्प्रत्ययो भवति अस्तातेरर्थे । परतो वसति परत आगतः । परतो रमणीयम् । परस्ताद्वसति । परस्तादागतः । परस्ताद्रमणीयम् । अवरतो वसति । अवरत आगतः । अवरतो रमणीयम् । अवरस्ताद्वसति । अवरस्तादागतः । अवरस्ताद्रमणीयम् ॥

अञ्चेर्लुक् ॥ ३० ॥

अञ्च्वन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति । प्राच्यां दिशि वसति । लुक्तद्धितलुकीति स्त्रीप्रत्ययोऽपि निवर्त्तते । प्राग्वसति । प्रागागतः । प्राग्रमणीयम्(१) ॥

उपर्युपरिष्टात् ॥ ३१ ॥

उपरि उपरिष्टात् इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे । ऊर्ध्वस्योपभावः, रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते । ऊर्ध्वायां दिशि वसति, उपरि वसति । उपर्यागतः । उपरि रमणीयम् । उपरिष्टाद्वसति । उपरिष्टादागतः । उपरिष्टाद्रमणीयम् ॥

---

(१) प्रत्यग्वसति । प्रत्यगागतः । प्रत्यग्रमणीयम् । इति पुस्तकान्तरेऽधिकम् ॥

पश्चात् ॥ ३२ ॥

पश्चादित्यय शब्दो निपात्यते अस्तातेरर्थे । अपरस्य पश्चभाव आतिश्च प्रत्ययः । अपरस्यां दिशि वसति, पश्चाद्दिशि वसति । पश्चादागतः । पश्चाद्रमणीयम् । ॐदिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्य आतिश्च प्रत्ययःॐ । दक्षिणपश्चात् । उत्तरपश्चात् । ॐअर्द्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यःॐ । दक्षिणपश्चार्द्धः । उत्तरपश्चार्द्धः । ॐविनापि पूर्वपदेन पश्चभावो वक्तव्यःॐ । पश्चार्द्धः ॥

पश्च पश्चा च च्छन्दसि ॥ ३३ ॥

पश्चपश्चाशब्दौ निपात्येते छन्दसि विषये, अस्तातेरर्थे, चकारात् पश्चादित्यपि भवति । अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते । परो व्याघ्रो जायते, पश्च सिंहः । पश्चा सिंहः । पश्चात्सिंहः ॥

उत्तराधरदक्षिणादातिः ॥ ३४ ॥

उत्तराधरदक्षिणशब्देभ्य आतिः प्रत्ययो भवति अस्तातेरर्थे । उत्तरस्यां दिशि वसति, उत्तराद्वसति । उत्तरादागतः । उत्तराद्रमणीयम् । अधराद्वसति । अधरादागतः । अधराद्रमणीयम् । दक्षिणाद्वसति । दक्षिणादागतः । दक्षिणाद्रमणीयम् ॥

एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ३५ ॥

उत्तराधरदक्षिणशब्देभ्य एनप् प्रत्ययो भवत्यन्यतरस्यामस्तातेरर्थे, अदूरे चेदवधिमानवधेर्भवति । विभक्तित्रये प्रकृतेऽपञ्चम्या इति पञ्चमी पर्युदस्यते, तेनाय सप्तमीप्रथमान्ताद्विज्ञायते प्रत्ययः । उत्तरेण वसति । उत्तराद्वसति । उत्तरतो वसति । उत्तरेण रमणीयम् । उत्तराद्रमणीयम् । उत्तरतो रमणीयम् । अधरेण वसति । अधराद्वसति । अधस्ताद्वसति । अधरेण रमणीयम् । अधराद्रमणीयम् । अधस्ताद्रमणीयम् । दक्षिणेन वसति । दक्षिणाद्वसति । दक्षिणतो वसति । दक्षिणेन रमणीयम् । दक्षिणाद्रमणीयम् । दक्षिणतो रमणीयम् । अदूर इति किम् ? उत्तराद्वसति । अपञ्चम्या इति किम् ? उत्तरादागतः । अपञ्चम्या इति प्रागसे, अतिप्रत्ययस्तु पञ्चम्यन्तादपि भवति । केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति, दिक्शब्दमात्राद् प्रत्ययं मन्यन्ते । पूर्वेण ग्रामम् । अपरेण ग्रामम् ॥

दक्षिणादाच् ॥ ३६ ॥

अदूर इति न स्वर्यते, अपञ्चम्या इति वर्त्तते । दक्षिणशब्दादाच् प्रत्ययो भवति अस्तातेरर्थे । दक्षिणा वसति । दक्षिणा रमणीयम् । अपञ्चम्या इत्येव, दक्षिणत आगतः । चकारो विशेषणार्थः, अञ्चूत्तरपदाजाहियुक्त इति ॥

आहि च दूरे ॥ ३७ ॥

दक्षिणशब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर्भवति । दक्षिणाहि वसति । दक्षिणा वसति । दक्षिणाहि रमणीयम् । दक्षिणा

रमणीयम्। दूर इति किम्? दक्षिणतो वसति। अपञ्चम्या इत्येव, दक्षिणत आगतः॥

उत्तराच्च ॥ ३८ ॥

उत्तरशब्दादाजाहौ प्रत्ययौ भवतः, अस्तातेरर्थे, दूरे चेदवधिमानवधेर्भवति। उत्तरा वसति। उत्तराहि वसति। उत्तरा रमणीयम्। उत्तराहि रमणीयम्। दूर इत्येव, उत्तरेण प्रयाति। अपञ्चम्या इत्येव, उत्तरादागतः॥

पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ३९ ॥

अपञ्चम्या इति निवृत्तम्। तिसृणां विभक्तीनामिह ग्रहणम्। पूर्वाधरावराणाम् असिः प्रत्ययो भवति अस्तातेरर्थे, तत्संनियोगेन चैषां यथासंख्यं पुर् अध् अव इत्येते आदेशा भवन्ति। अमीषामविभक्तिको निर्देशः। पुरो वसति। पुर आगतः। पुरो रमणीयम्। अधो वसति। अध आगतः। अधो रमणीयम्। अवो वसति। अव आगतः। अवो रमणीयम्॥

अस्ताति च ॥ ४० ॥

सप्तम्यन्तमेतत्। अस्तातिप्रत्यये परतः पूर्वादीनां यथासंख्यं पुरादय आदेशा भवन्ति। इदमेवादेशविधानं ज्ञापकमस्तातिरेभ्यो भवति, असिप्रत्ययेन न बाध्यत इति। पुरस्ताद्वसति। पुरस्तादागतः। पुरस्ताद्रमणीयम्। अधस्ताद्वसति। अधस्तादागतः। अधस्ताद्रमणीयम्॥

विभाषाऽवरस्य ॥ ४१ ॥

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। अवरस्यास्तातौ परतो विभाषा अव् इत्ययमादेशो भवति। अवस्ताद्वसति। अवस्तादागतः। अवस्ताद्रमणीयम्। अवरस्ताद्वसति। अवरस्तादागतः। अवरस्ताद्रमणीयम्॥

संख्याया विधार्थे धा ॥ ४२ ॥

संख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्तमानेभ्यो धा प्रत्ययो भवति स्वार्थे। विधा प्रकारः सर्वक्रियाविषय एव गृह्यते। क्रियाप्रकारे वर्तमानायाः संख्याया धा प्रत्ययः। एकधा भुङ्क्ते। द्विधा गच्छति। त्रिधा। चतुर्धा। पञ्चधा॥

अधिकरणविचाले च ॥ ४३ ॥

संख्याया इत्येव। अधिकरणं द्रव्यम्, तस्य विचालः संख्यान्तरापादनम्—एकस्यानेकीकरणमनेकस्य वा एकीकरणम्। अधिकरणविचाले गम्यमाने संख्यायाः स्वार्थे धा प्रत्ययो भवति। एकं राशिं पञ्चधा कुरु। अष्टधा कुरु। अनेकमेकधा कुरु॥

एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥

एकशब्दात् परस्य धाप्रत्ययस्य ध्यमुञादेशो भवत्यन्यतरस्याम्। एकधा राशिं कुरु। ऐकध्यं कुरु। एकधा भुङ्क्ते। ऐकध्यं भुङ्क्ते। धाप्रकरणादेव लब्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात्। अनन्तरस्यैवैतत् प्राप्नोति॥

द्वित्र्योश्च धमुञ् ॥ ४५ ॥

धा इत्यनुवर्तते । द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य विधार्थेऽधिकरणविचाले च विहितस्य धमुञादेशो भवत्यन्यतरस्याम् । चकारो विकल्पानुकर्षणार्थः । द्विधा । द्वैधम् । त्रिधा । त्रैधम् । ॐधमुञन्तात्स्वार्थे डदर्शनम्ॐ । पथि द्वैधानि संश्रयन्ते । पथि त्रैधानि संश्रयन्ते ॥

एधाच्च ॥ ४६ ॥

द्वित्र्योः संबन्धिनो धाप्रत्ययस्य एधाजादेशो भवत्यन्यतरस्याम् । चकारो विकल्पानुकर्षणार्थः । द्वेधा । द्वैधम् । द्विधा । त्रेधा । त्रैधम् । त्रिधा(१) ॥

याप्ये पाशप् ॥ ४७ ॥

याप्यः कुत्सित उच्यते । याप्ये वर्तमानात्प्रातिपदिकात्स्वार्थे पाशप् प्रत्ययो भवति । कुत्सितो वैयाकरणो, वैयाकरणपाशः । याज्ञिकपाशः । यो व्याकरणशास्त्रे प्रवीणो दुःशीलस्तत्र कस्मान्न भवति ? यस्य गुणस्य सद्भावाद् द्रव्ये शब्दनिवेशस्तत्कुत्सायां प्रत्ययः ॥

पूरणाद्भागे तीयादन् ॥ ४८ ॥

पूरणप्रत्ययो यस्तीयस्तदन्तात्प्रातिपदिकाद्भागे वर्तमानात्स्वार्थेऽन् प्रत्ययो भवति । स्वरार्थं वचनम् । द्वितीयो भागः, द्वितीयः । तृतीयः । भाग इति किम् ? द्वितीयम् । तृतीयम् । पूरणग्रहणमुत्तरार्थम् , न ह्यपूरणस्तीयोऽस्ति । मुखतीयादिरनर्थकः ।

प्रागेकादशभ्योऽच्छन्दसि ॥ ४९ ॥

पूरणाद्भाग इत्येव । प्रागेकादशभ्यः सङ्ख्याशब्देभ्यः पूरणप्रत्ययान्तेभ्यो भागे वर्तमानेभ्यः स्वार्थेऽन् प्रत्ययो भवति अच्छन्दसि विषये । स्वरार्थं वचनम् । पञ्चमः । सप्तमः । नवमः । दशमः । प्रागेकादशभ्य इति किम् ? एकादशः । द्वादशः । अच्छन्दसीति किम् ? पञ्चममिन्द्रियमस्यापाक्रामत् ॥

षष्ठाष्टमाभ्यां ञ च ॥ ५० ॥

भाग इति वर्तते, अच्छन्दसीति च । षष्ठाष्टमाभ्यां भागेऽभिधेयेऽच्छन्दसि विषये ञः प्रत्ययो भवति । चकारादञ् । षष्ठो भागः । षाष्ठः । षष्ठः । आष्टमः । अष्टमः ॥

मानपश्वङ्गयोः कन्लुकौ च ॥ ५१ ॥

भाग इत्येव । षष्ठाष्टमाभ्यां यथासङ्ख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर्भागयोरभिधेययोः । षष्ठको भागो मानं चेत्तद्भवति । अष्टमो भागः पश्वङ्गं चेत्तद्भवति । कस्य लुक् ? अस्य लुक् , अनो वा । चकाराद्यथाप्राप्तं च । षाष्ठः । षष्ठः । आष्टमः । अष्टमः । मानपश्वङ्गयोरिति किम् ? षाष्ठः । षष्ठः । आष्टमः । अष्टमः ॥

( १ ) धोगविभागो यथासङ्ख्यनिरासार्थः । इत्यधिकं पुस्तकान्तरे ॥

एकादाकिनिच्चासहाये ॥ ५२ ॥

एकशब्दादसहायवाचिनः स्वार्थे आकिनिच् प्रत्ययो भवति, चकारात्कन्लुकौ च। आकिनिचः कनो वा लुग्विधीयते, स च विधानसामर्थ्यात्पक्षे भवति। एकाकी। एककः। एकः। असहायग्रहणं संख्याशब्दनिरासार्थम्, तदुपादाने हि द्विबह्वोर्न स्यात्—एकाकिनौ, एकाकिनः॥

भूतपूर्वे चरट् ॥ ५३ ॥

पूर्वं भूत इति विगृह्य सुप्सुपेति समासः। भूतपूर्वशब्दोऽतिक्रान्तकालवचनः। प्रकृतिविशेषणं चैतत्। भूतपूर्वत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे चरट् प्रत्ययो भवति। आढ्यो भूतपूर्वः, आढ्यचरः। सुकुमारचरः। टकारो ङीबर्थः। आढ्यचरी॥

षष्ठ्या रूप्य च ॥ ५४ ॥

षष्ठ्यन्तात्प्रातिपदिकाद्रूप्यः प्रत्ययो भवति चकाराच्चरट् च। षष्ठ्यन्तात्प्रत्ययविधानात् सम्प्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणं न तु प्रकृत्यर्थविशेषणम्। देवदत्तस्य भूतपूर्वो गौः, देवदत्तरूप्यः। देवदत्तचरः॥

अतिशायने तमबिष्ठनौ ॥ ५५ ॥

अतिशयनमतिशायनं, प्रकर्षः, निपातनाद्दीर्घः। प्रकृत्यर्थविशेषणं चैतत्। अतिशायनविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः। प्रकृत्यर्थविशेषणं च स्वार्थिकानां योग्य भवति। सर्व इमे आढ्याः, अयमेषामतिशयेनाढ्यः, आढ्यतमः। दर्शनीयतमः। सुकुमारतमः। सर्व इमे पटवः, अयमेषामतिशयेन पटुः, पटिष्ठः। लघिष्ठः। गरिष्ठः। यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। युधिष्ठिरः श्रेष्ठतमः कुरूणामिति॥

तिङश्च ॥ ५६ ॥

तिङन्ताच्चातिशायने द्योत्ये तमप् प्रत्ययो भवति। ङ्याप्प्रातिपदिकादित्यधिकारात्तिङो न प्राप्नोतीति इद वचनम्। सर्व इमे पचन्तीति अयमेषामतिशयेन पचति, पचतितमाम्। जल्पतितमाम्। इष्ठन्नोदाह्रियते, गुणवचने नियमितत्वात्॥

द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५७ ॥

द्वयोरर्थयोर्वचनं द्विवचनम्। विभक्तव्यो विभज्यः, निपातनाद्यत्। द्व्यर्थे विभज्ये चोपपदे प्रातिपदिकात्तिङन्ताच्चातिशायने तरबीयसुनौ प्रत्ययौ भवतः। तमबिष्ठनोरपवादः। यथासंख्यमत्र नेष्यते। द्वाविमावाढ्यौ, अयमनयोरतिशयेनाढ्य, आढ्यतरः। सुकुमारतरः। पचतितराम्। जल्पतितराम्। ईयसुन् खल्वपि–द्वाविमौ पटू, अयमनयोरतिशयेन पटुः, पटीयान्। लघीयान्। विभज्ये चोपपदे–माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। दर्शनीयतराः। पटीयांसः। लघीयांसः॥

अजादी गुणवचनादेव ॥ ५८ ॥

इष्ठनीयसुनावजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते-गुणवचनादेव भवतस्तौ नान्यस्मादिति । पटीयान् । लघीयान् । पटिष्ठ । लघिष्ठ । इह न भवत -पाचकतरः । पाचकतम इति । एवकार इष्टतोऽवधारणार्थ ... मोऽयं न प्रकृतिनियम इति । पटुतर । पटुतम ॥

तुरछन्दसि ॥ ५९ ॥

तुरिति तृन्तृचो सामान्येन ग्रहणम् । तन्तात्छन्दसि विषये अजादी भवत । पूर्वेण गुणवचनादेवेति नियमे कृते, छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते, तन्तादजादी भवत इति । आसुतिं करिष्ठ । दोहीयसी धेनु । अस्यादि तद्धित इति तुं भावे कृते, तुरिष्ठेमेयस्स्विति तृचो निवृत्ति ॥

प्रशस्यस्य श्र ॥ ६० ॥

प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति अजादो प्रत्ययो परत । ... प्रकृतस्य सप्तमी विभक्तिर्विपरिणम्यते । ननु च ... न सम्भवत ? एवं तर्हि आदेशविधानसामर्थ्यात्तद्विषयो नियमो न प्रवर्तते-अजादी गुणवचनादेवेति । एवमुत्तरेष्वपि योगेषु विज्ञेयम् । सर्वे इमे प्रशस्या अयमेषामतिशयेन प्रशस्य , श्रेष्ठ । उभाविमौ प्रशस्यौ, अयमनयोरतिशयेन प्रशस्य , श्रेयान् । ... काजिति प्रकृतिभावाच्छ्रशब्दस्य टिलोपयस्येतिलोपो न भवत ॥

ज्य च ॥ ६१ ॥

प्रशस्यशब्दस्य ज्य इत्ययमादेशो भवति अजादी प्रत्ययो परत । सर्वे प्रशस्या अयमेषामतिशयेन प्रशस्य , ज्येष्ठ । द्वाविमौ ... प्रशस्य , ज्यायान् । अयमस्माज्ज्यायान् । ज्यादादीयस इत्याकार ॥

वृद्धस्य च ॥ ६२ ॥

वृद्धशब्दस्य च ज्य इत्ययमादेशो भवत्यजादी प्रत्ययो परत । तयोश्च ... नियमाभावन पूर्ववज्ज्ञायते । सर्वे इमे वृद्धा अयमेषामतिशयेन वृद्ध , ज्येष्ठ, उभाविमौ वृद्धौ अयमनयोरतिशयेन वृद्ध , ज्यायान् । अयमस्माज्ज्यायान् । ... रेत्यादिना वृद्धशब्दस्य वर्षादेशो विधीयते । वचनसामर्थ्यात् पक्षे सोऽपि भवति वर्षिष्ठ । वर्षीयानिति ॥

अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥

अन्तिकबाढयोर्यथासङ्ख्यं नेद साध इत्येतावादेशौ भवतोऽजादौ परत । सर्वं पूर्ववद्विज्ञेयम् । निमित्तभूतयोर्यथासङ्ख्यमत्र नेष्यते । सर्वाणीमान्यन्तिकानि इदमेषामतिशयेनान्तिकम्, नेदिष्ठम् । उभे इमे अन्तिके, इदमनयोरतिशयेन ... नेदीय । इदमस्मान्नेदीय । सर्वं इमे बाढमधीयते, अयमेषामतिशयेन ब...

साधिष्ठम् । उभाविमौ बाढमधीयाते, अयमनयोरतिशयेन बाढमधीते, साधीयः। अयमस्मात् साधीयोऽधीते ॥

युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥

युवाल्पशब्दयोः कनि इत्ययमादेशो भवत्यन्यतरस्यामजाद्योः परतः । तयोश्च सर्व पूर्ववज्ज्ञेयम् । सर्व इमे युवानः, अयमेषामतिशयेन युवा, कनिष्ठः । द्वाविमौ युवानौ, अयमनयोरतिशयेन युवा, कनीयान् । यविष्ठः । यवीयान् । सर्व इमेऽल्पाः, अयमेषामतिशयेनाल्पः, कनिष्ठः । उभाविमावल्पावयमनयोरतिशयेनाल्पः, कनीयान् । अयमस्मात् कनीयान् । अल्पिष्ठः अल्पीयानिति वा ॥

विन्मतोर्लुक् ॥ ६५ ॥

विनो मतुपश्च लुग् भवति अजाद्योः प्रत्यययोः परतः । इदमेव वचनं ज्ञापकमजादिसञ्ज्ञायाः । सर्व इमे स्रग्विणः, अयमेषामतिशयेनस्रग्वी, स्रजिष्ठः । उभाविमौ स्रग्विणौ, अयमनयोरतिशयेनस्रग्वी, स्रजीयान् । अयमस्मात् स्रजीयान् । सर्व इमे त्वग्वन्तः, अयमेषामतिशयेनत्वग्वान्, त्वचिष्ठः । उभाविमौ त्वग्वन्तौ, अयमनयोरतिशयेन, त्वग्वान्, त्वचीयान् । अयमस्मात्त्वचीयान् ॥

प्रशंसायां रूपप् ॥ ६६ ॥

प्रशंसा स्तुतिः, प्रकृत्यर्थस्य विशेषणं चैतत् । प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति । स्वार्थिकाः प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति । प्रशस्तो वैयाकरणो वैयाकरणरूपः । याज्ञिकरूपः । प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति । वृषलरूपोऽयं, यः पलाण्डुना सुरां पिबति । चोररूपः दस्युरूपः, योऽक्ष्णोरप्यञ्जनमपहरेत् । तिङश्चेत्यनुवर्तते—पचतिरूपम्, पचतोरूपम् । क्रियाप्रधानमाख्यातम्, एका च क्रियेति रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः । नपुंसकलिङ्गन्तु भवति लोकाश्रयत्वाल्लिङ्गस्य ॥

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६७ ॥

संपूर्णता, पदार्थानां समाप्तिः । स्तोकेनासंपूर्णता, ईषदसमाप्तिः । प्रकृत्यर्थविशेषणं चैतत् । ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् कल्पप् देश्य देशीयर् इत्येते प्रत्यया भवन्ति । ईषदसमाप्तः पटुः, पटुकल्पः । पटुदेश्यः । पटुदेशीयः । मृदुकल्पः । मृदुदेश्यः । मृदुदेशीयः । तिङश्चेत्यपि—पचतिकल्पम् । जल्पतिकल्पम् ॥

विभाषा सुपो बहुच् पुरस्तात्तु ॥ ६८ ॥

ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्ताद्विभाषा बहुच् प्रत्ययो भवति, स तु पुरस्तादेव भवति, न परतः । चित्करणमन्तोदात्तार्थम् । ईषदसमाप्तः पटुः, बहुपटुः । बहुमृदुः । बहुगुडा द्राक्षा । विभाषावचनात् कल्पबादयोऽपि भवन्ति । सुब्ग्रहणं तिङन्तान्मा भूदिति ॥

प्रकारवचने जातीयर् ॥ ६९ ॥

सामान्यस्य भेदको विशेष प्रकार, तस्य वचने, प्रकृत्यर्थविशेषण चैतत् सुबन्तात्प्रकारविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे जातीयर् प्रत्ययो भवति प्रकारवति चायं प्रत्यय । थाल्पुन प्रकारमात्र एव भवति । पटुप्रकार पटुजातीय । मृदुजातीय । दर्शनीयजातीय ॥

प्रागिवात्क ॥ ७० ॥

इवे प्रतिकृताविति वक्ष्यति । प्रागेतस्मादिवसशब्दनाधानित ऊर्ध्वमनुक्रमिष्याम कप्रत्ययस्तेन प्रकृतो वेदितव्य । वक्ष्यति-अज्ञात इति । अश्वक । गर्दभक तिङन्तादय प्रत्ययो नेष्यते, अकजिष्यते । [illegible] सवन्धनीयम् ॥

अव्ययसर्वनाम्नामकच् प्राक् टे ॥ ७१ ॥

तिङश्चेत्येव । अव्ययाना सर्वनाम्नां च प्रागिवीयं विषयेऽकच्प्रत्ययो भवति स च प्राक् टे, न परत । कस्यापवाद । उच्चकै । नीचकै । शनकै । सर्वना[illegible] स्वल्वपि-सर्वके । विश्वके । उभयके । प्रातिपदिकात्सुप इति [illegible] तत्राभिधानतो व्यवस्था भवति क्वचित् प्रातिपदिकस्य प्राक् टे प्रत्ययो भवति क्वचित् सुबन्तस्य टे प्राक् प्रत्ययो भवति । युष्मकाभि । अस्मकाभि । युष्मकासु अस्मकासु । युवकयो । आवकयो इत्यादौ प्रातिपदिकस्य । त्वयका । त्वयकि । मयकि, इत्यादौ सुबन्तस्य । ॥अकच्प्रकरणे तूष्णीम काम् वक्तव्य ॥ । स च मित्वादन्त्यादच परो भवति-तूष्णीकामास्ते । तूष्णीका तिष्ठति ॥शीले को मलोपश्च वक्तव्य ॥ । तूष्णींशील, तूष्णीक । तिङश्चेति सबध्यते-पचतकि । जल्पतकि ॥

कस्य च द ॥ ७२ ॥

ककारान्तस्य प्रातिपदिकस्याकच्सन्नियोगेन दकारादेशो भवति । चकार स[illegible] गार्थं । सामर्थ्यादव्ययग्रहणमनुवर्तते, न सर्वनामग्रहणम्, ककारान्तस्य ऽसम्भवात् । धिक्-धकित् । हिरुक्-हिरकुत् । पृथक्-पृथकत् ॥

अज्ञाते ॥ ७३ ॥

अज्ञातविशेषोऽज्ञात । अज्ञातत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिका[illegible] स्वार्थे यथाविहित प्रत्ययो भवति । स्वेन रूपेण ज्ञाते पदार्थे [illegible] प्रत्ययविधानमेतत् । कस्यायमश्व इति स्वस्वामिसम्बन्धेनाज्ञातेऽश्वे प्रत्यय अश्वक । गर्दभक । उष्ट्रक । एवमन्यत्रापि यथायोगमज्ञातता विज्ञेया । उच्चकै नीचकै । सर्वके । विश्वके । पचतकि । जल्पतकि ॥

कुत्सिते ॥ ७४ ॥

कुत्सितो गर्हितो निन्दितः । प्रकृत्यर्थविशेषणं चैतत् । कुत्सितत्वोपाधिकेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे यथाविहितं प्रत्ययो भवति । कुत्सितोऽश्वः, अश्वकः । उष्ट्रकः । गर्दभकः । उच्चकैः । नीचकैः । सर्वके । विश्वके । पचतकि । जल्पतकि ॥

संज्ञायां कन् ॥ ७५ ॥

कुत्सित इत्येव । कुत्सितत्वोपाधिकेऽर्थे वर्त्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति प्रत्ययान्तेन चेत्संज्ञा गम्यते । कस्यापवादः । शूद्रकः । धारकः । पूर्णकः ॥

अनुकम्पायाम् ॥ ७६ ॥

कारुण्येनाभ्युपपत्तिः परस्यानुकम्पा । तस्यां गम्यमानायां सुबन्तात्तिङन्ताच्च यथाविहितं प्रत्ययो भवति । पुत्रकः । वत्सकः । दुर्बलकः । बुभुक्षितकः (१) । विश्वसितकि । स्वपितकि ॥

नीतौ च तद्युक्तात् ॥ ७७ ॥

सामदानादिरुपायो नीतिः । नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद्यथाविहितं प्रत्ययो भवति । हन्त ते धानकाः । हन्त ते तिलकाः । एहकि । अद्धकि । अनुकम्पमानो दानेनाराधयति । पूर्वेण प्रत्यासन्नानुकम्पासंबन्धादनुकम्प्यमानादेव प्रत्ययो विहितः, सम्प्रति व्यवहितादपि यथा स्यादिति वचनम् ॥

बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥

अनुकम्पायामिति नीतौ च तद्युक्तादिति च वर्त्तते । बह्वचः प्रातिपदिकान् मनुष्यनामधेयाद्वा ठच् प्रत्ययो भवति अनुकम्पायां गम्यमानायां नीतौ च । देविकः । देवदत्तकः । यज्ञिकः । यज्ञदत्तकः । बह्वच इति किम् ? दत्तकः । गुप्तकः । मनुष्यनाम्न इति किम् ? भद्रबाहुकः । भद्रबाहुकः ॥

घनिलचौ च ॥ ७९ ॥

अनुकम्पायामित्यादि सर्वमनुवर्त्तते । पूर्वेण ठचि विकल्पेन प्राप्ते वचनम् । बह्वचो मनुष्यनाम्नो घन् इलच् इत्येतौ प्रत्ययौ भवतः, चकाराद्यथाप्राप्तञ्च । देवियः । देविलः । देविकः । देवदत्तकः । यज्ञियः । यज्ञिलः । यज्ञिकः । यज्ञदत्तकः ॥

प्राचामुपादेरडज्वुचौ च ॥ ८० ॥

पूर्ववत् सर्वमनुवर्त्तते । उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुष्यनाम्नोऽडच् वुच् प्रत्ययौ भवतः, चकाराद् घनिलचौ प्रत्ययौ च भवतः, ठच् वा । उपडः । उपकः । उपियः । उपिलः । उपिकः । उपेन्द्रदत्तकः । प्राचांग्रहणं पूजार्थम् । वेत्येव हि वर्त्तते ॥

(१) ज्वरितकः । इत्यधिकं पुस्तकान्तरे ।

### जातिनाम्नः कन् ॥ ८१ ॥

बह्वच इति नानुवर्त्तते। सामान्येन विधानम्। जातिशब्दो यो मनुष्यनामधेयो व्याघ्र सिंह इत्येवमादि, तस्मादनुकम्पायां नीतौ च कन् प्रत्ययो भवति। व्याघ्रक। सिंहक। शरभक। वाग्वचनानुवृत्तेर्यथा(१)दर्शनमन्योऽपि भवति–व्याघ्रिल। सिंहिल। नामग्रहणं स्वरूपनिवृत्त्यर्थम् ॥

### अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥

कन्नित्यनुवर्त्तते, मनुष्यनाम्न इति च। अजिनशब्दान्तात् प्रातिपदिकान्मनुष्यनाम्नोऽनुकम्पायां कन् प्रत्ययो भवति तस्य चोत्तरपदलोपः। व्याघ्राजिनो नाम कश्चिन्मनुष्यः, सोऽनुकम्पितः व्याघ्रक। सिंहक ॥

### ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥

लोप इत्यनुवर्त्तते। अस्मिन् प्रकरणे यष्ठोऽजादिश्च प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः, देविक। देविय। देविल। यज्ञिक। यज्ञिय यज्ञिल। उपड। उपक। उपिय। उपिल। उपिक। ठग्रहणमुक्तो द्वितीयत्वे कविधानार्थम्। अनादिलक्षणे हि साधिकाव्रिवत् प्रसङ्ग। वायुदत्त। वायुक। पितृदत्त। पितृक। *चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः*। अनुकम्पितो बृहस्पतिदत्तः, बृहस्पतिक। बृहस्पतिय। बृहस्पतिल। *अनजादौ विभाषा लोपो वक्तव्यः। देवदत्तक। देवक। यज्ञदत्तक। यज्ञक। लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः*। दत्तिक। दत्तिल। दत्तिय। दत्तक। *विनाऽपि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः*। देवदत्तो, दत्त। देव इति वा। *उवर्णाल्ल इलस्य च*। भानुदत्तो, भानुल। वसुदत्तो वसुल ॥

> चतुर्थादनजादौ च लोपः पूर्वपदस्य च।
> अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ॥

*द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्*। कहोड। कहिक। कहोड। कहिक। *एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः*। वागाशी, वाचिक। स्रुचक। त्वचिक। कथं षडङ्गुलिदत्त, षडिक इति? षष्ठाजादिवचनात् सिद्धम् ॥

### शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ८४ ॥

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतस्तृतीयादच ऊर्ध्वस्य लोपो भवति। पूर्वस्यायमपवाद। अनुकम्पितः शेवलदत्तः, शेवलिक। शेवलिय। शेवलिल। सुपरिक। सुपरिय। सुपरिल। विशालक। विशालिय। विशालिल।

---

(२) यथानपर्वाम त पा०।

वरुणिकः। वरुणियः। वरुणिलः। अर्यमिकः। अर्यमियः। अर्यमिलः। ॐशेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम्ॐ। शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः, शेवलिकः, सुपरिक इति यथा स्यात्। शेवलयिकः, सुपर्यिक इति मा भूत्॥

अल्पे॥ ८५॥

परिमाणापचये अल्पशब्दः, प्रकृतिविशेषणं चैतत्। अल्पत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकाद्यथाविहितं प्रत्ययो भवति। अल्पं तैलं, तैलकम्। घृतकम्। सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि॥

ह्रस्वे॥ ८६॥

ह्रस्वत्वविशिष्टेऽर्थे वर्त्तमानात् प्रातिपदिकात् यथाविहितं प्रत्ययो भवति। दीर्घप्रतियोगी ह्रस्वः। ह्रस्वो वृक्षो, वृक्षकः। प्लक्षकः। स्तम्भकः॥

संज्ञायां कन्॥ ८७॥

ह्रस्व इत्येव। ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति। पूर्वस्यायमपवादः। वंशकः। वेणुकः। दण्डकः॥

कुटीशमीशुण्डाभ्यो रः॥ ८८॥

ह्रस्व इत्येव। संज्ञाग्रहणं नानुवर्त्तते। सामान्येन विधानम्। कुटीशमीशुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुटी, कुटीरः। शमीरः। शुण्डारः। स्वार्थिकत्वेऽपि पुँल्लिङ्गता लोकाश्रयत्वाल्लिङ्गस्य॥

कुत्वा डुपच्॥ ८९॥

ह्रस्व इत्येव। कुतूशब्दाद् ह्रस्वत्वे द्योत्ये डुपच्प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुतूः, कुतुपं, चर्म्ममयं स्नेहभाजनमुच्यते। कुतूरित्यावपनस्याख्या॥

कासूगोणीभ्यां ष्टरच्॥ ९०॥

ह्रस्व इत्येव। कासूगोणीशब्दाभ्यां ह्रस्वत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। कस्यापवादः। षकारो ङीपर्थः। ह्रस्वा कासूः, कासूतरी। गोणीतरी। कासूरिति शक्तिरायुधविशेष उच्यते॥

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे॥ ९१॥

ह्रस्व इति निवृत्तम्। वत्स उक्षन् अश्व ऋषभ इत्येतेभ्यस्तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः, तस्य तनुत्वे प्रत्ययः। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः। प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयःप्राप्तिः। तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः। अश्वेनाश्वायामुत्पन्नोऽश्वस्तस्य तनुत्वमन्यपितृकता। अनड्वानृषभः, तस्य तनुत्वं भारवहने मन्दशक्तिता॥

किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥

किं यत् तत् इत्येतेभ्य प्रातिपदिकेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति। निर्द्धार्यमाणवाचिभ्य स्वार्थे प्रत्यय। जात्या(१) क्रियया गुणेन संज्ञया वा समुदायादेकदेशस्य पृथक्करणम् निर्धारणम्। कतरो भवतो कठ। कतरो भवतोः कारक। कतरो भवतो पटु। कतरो भवतोर्देवदत्त। यतरो भवतो कारक। यतरो भवतो पटु। यतरो भवतोर्देवदत्त। ततर आगच्छतु। महाविभाषयाऽत्र प्रत्ययो विकल्प्यते। को भवतोर्देवदत्त, स आगच्छतु। निर्धारण इति विषयसप्तमी- निर्देश। द्वयोरिति समुदायान्निर्धारणविभक्ति। एकस्येति निर्दृश्यो निर्धार्यमाण निर्देश ॥

वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ।

किंयत्तद् इति वर्तते, निर्धारणे एकस्येति च। बहूनामिति निर्धारणे षष्ठी। बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्य किमादिभ्यो वा डतमच् प्रत्ययो भवति। कतमो भवतां कठ। यतमो भवतां कठः। ततम आगच्छतु। वाव- चनमकजर्थम्। यको भवतां कठ। सक आगच्छतु। महाविभाषा च प्रत्ययविकल्पा- र्थानुवर्तत एव। को भवतां कठ। यो भवतां कठ। स आगच्छतु। जातिपरिप्रश्न इति किम्? को भवतां देवदत्त। परिप्रश्नग्रहण च किम एव विशेषण, न यत्तदोर- सम्भवात्। जातिग्रहण तु सर्वैव सम्बध्यते। किमोऽस्मिन् विषये डतरमपीच्छन्ति केचित्। कतरो भवतां कठ। कतरो भवतां कालाप इति। तत्र कतरकतमौ जाति- परिप्रश्न इति वचनात् सिद्धम् ॥

एकाच्च प्राचाम् ॥ ९४ ॥

एकशब्दात्प्राचामाचार्याणां मतेन डतरच डतमच् इत्येतौ प्रत्ययौ भवत स्वस्मिन् विषये। चकारो डतरचोऽनुकर्षणार्थ। द्वयोर्निर्द्धारणे डतरच्। बहूनां निर्द्धारणे डत- मच्। जातिपरिप्रश्न इति नानुवर्तते। सामान्येन विधानम्। एकतरो भवतोर्देव- दत्त। एकतमो भवतां देवदत्त। प्राचाङ्ग्रहण पूजार्थ, विकल्पोऽनुवर्तते ॥

अवक्षेपणे कन् ॥ ९५ ॥

अवक्षिप्यते येन तदवक्षेपणम्। तस्मिन् वर्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति। व्याकरणकेन नाम त्व गर्वित। याज्ञिक्यकेन नाम त्व गर्वित। परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम्। यत्पुन स्वयमेव कुत्सित तत्र कुत्सित इत्यनेन कन् प्रत्ययो भवति। देवदत्तको, यज्ञदत्तक इति। प्रागिवीयस्य पूर्वोऽवधि ॥

---

(१) नायैत्येकस्मिन् पुस्तके नास्ति, कतरो भवतो कठ इति तदुदाहरण च। तथैव च, पदमञ्जर्या जात्या वेत्यपि दृश्यते, कतरो भवतो कठः इत्यादेरपि समवादिदि दर्शनात्।

इवे प्रतिकृतौ ॥ ९६ ॥

कनित्यनुवर्त्तते । इवार्थे यत् प्रातिपदिकं वर्त्तते तस्मात् कन् प्रत्ययो भवति। इवार्थः सादृश्यं तस्य विशेषणं प्रतिकृतिग्रहणम् । प्रतिकृतिः प्रतिरूपकं प्रतिच्छन्दकम् । अश्व इवायमश्वप्रतिकृतिः, अश्वकः। उष्ट्रकः। गर्दभकः प्रतिकृताविति किम्? गौरिव गवयः ॥

संज्ञायां च ॥ ९७ ॥

इवेत्यनुवर्त्तते, कनिति च। इवार्थे गम्यमाने कन् प्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते। अप्रतिकृत्यर्थ आरम्भः। अश्वसदृशस्य संज्ञा, अश्वकः उष्ट्रकः। गर्दभकः ॥

लुम्मनुष्ये ॥ ९८ ॥

संज्ञायामित्येव। संज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुप् भवति। चञ्चेव मनुष्यः चञ्चा। दासी। खरकुटी। मनुष्य इति किम्? अश्वकः। उष्ट्रकः। गर्दभकः। देवपथादेराकृतिगणत्वात्तस्यैवायं प्रपञ्चो वेदितव्यः ॥

जीविकार्थे चापण्ये ॥ ९९ ॥

जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुप् भवति। विक्रीयते यत्तत्पण्यम्। वासुदेवः। शिवः। स्कन्दः। विष्णुः। आदित्यः। देवलकादीनां जीविकार्था देवप्रतिकृतयः उच्यन्ते। अपण्य इति किम्? हस्तिकान् विक्रीणीते। अश्वकान्। रथकान्। देवपथादेरेवायं प्रपञ्चः ॥

देवपथादिभ्यश्च ॥ १०० ॥

इवे प्रतिकृतौ संज्ञायां च विहितस्य कनो देवपथादिभ्य उत्तरस्य लुप् भवति। आदिशब्दः प्रकारे। आकृतिगणश्चायम्। देवपथः। हंसपथः ॥

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

अर्चासु तावत्—शिवः। विष्णुः। चित्रकर्मणि—अर्जुनः। दुर्योधनः। ध्वजेषु—कपिः। गरुडः। सिंहः। देवपथ। हंसपथ। वारिपथ। जलपथ। राजपथ। शतपथ। सिंहगति। उष्ट्रग्रीवा। चामरज्जु। रज्जु। हस्त। इन्द्र। दण्ड। पुष्प। मत्स्य(१)॥ देवपथादिः।

वस्तेर्ढञ् ॥ १०१ ॥

इवेत्यनुवर्त्तते, इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति प्रतिकृतौ चाप्रतिकृतौ च। वस्तिशब्दादिवार्थे द्योत्ये ढञ् प्रत्ययो भवति। वस्तिरिव वास्तेयः। वास्तेयी ॥

शिलाया ढः ॥ १०२ ॥

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति। शिलेव, शिलेयं दधि। केचिदत्र ढञम-

(१) रथपथ। शकुपथ। सिंहपथ। इत्येते शब्दा अत्र गणेऽधिकाः पुस्तकान्तरे।

पीच्छन्ति, तदर्थं योगविभागः कर्त्तव्यः । शिलायाढञ् प्रत्ययो भवति । ...
ततो ढः । शिलेयम् ॥

शाखादिभ्यो यत् ॥ १०३ ॥

शाखा इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत् प्रत्ययो भवति इवार्थे । ...
शाख्यः । मुख्यः । जघन्यः । शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । शिरस् । उरस् । अग्र । शरण । शाखादिः ॥

द्रव्यं च भव्ये ॥ १०४ ॥

द्रव्यशब्दो निपात्यते भव्येऽभिधेये । द्रुशब्दादिवार्थे यत् प्रत्ययो निपात्यते । ...
व्यम् । भव्य आत्मवान् । अभिप्रेतानामर्थाना पात्रभूत उच्यते । ...
द्रव्योऽयं माणवकः ॥

कुशाग्राच्छः ॥ १०५ ॥

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति । कुशाग्रमिव सूक्ष्मत्वात्, ...
बुद्धिः । कुशाग्रीय वक्त्रम् ॥

समासाच्च तद्विषयात् ॥ १०६ ॥

तद्विषयनेन प्रकृत इवार्थो निर्दिश्यते । इवार्थविषयात् समासादपरस्मि...
एव छः प्रत्ययो भवति । काकतालीयम् । अजाकृपाणीयम् । अन्धकवर्त्तकीयम् । ...
किंतोपमस चित्रीकरणमुच्यते । तत् कथम् ? काकस्यागमनं यादृच्छिकम् । ...
पतनं च, तेन तालेन पतता काकस्य वधः कृतः । एवमेव देवदत्तस्य ... गमन
दस्यूनां चोपनिपातः, तैश्च तस्य वधः कृतः तत्र यो देवदत्तस्य दस्यूनां च सम
स काकतालसमागमसदृश इत्येक उपमार्थः । अतश्च देवदत्तस्य वधः, स का... ।
वधसदृश इति द्वितीय उपमार्थः । तत्र प्रथमे समासः, द्वितीये प्रत्ययः ।
यमस्मादेव ज्ञापकात् । न ह्यस्यापरं लक्षणमस्ति । सुप्सुपेति वा समासः । स चैव...
षय एव ॥

शर्करादिभ्योऽण् ॥ १०७ ॥

शर्करा इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण् प्रत्ययो भवति । शर्करेव शा...
रम् । कापालिकम् । शर्करा । कपालिका । पिष्टिक(१) । पुण्डरीक । शतपत्र । ...
मन् । गोपुच्छ । नराचि । नकुल । सिकता । शर्करादिः ॥

अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥

अङ्गुल्यादिभ्य इवार्थे ठक् प्रत्ययो भवति । अङ्गुलीवाङ्गुलिकः । भारुजिकः । ...
लि । भरुज । बभ्रु । वल्गु । मण्डर । मण्डल । शष्कुल । कपि । उदश्वित् । गोणी ।
उरस् । शिखा । कुलिश । अङ्गुल्यादिः ॥

(१) कनिष्ठिक, कपिष्ठिक इति पाठान्तरम् ।

एकशालायाष्ठजन्यतरस्याम् ॥ १०९ ॥

एकशालाशब्दादिवार्थेऽन्यतरस्यां ठच् प्रत्ययो भवति । अन्यतरस्यांग्रहणेनानन्तरष्ठक् प्राप्यते । एकशालेव, एकशालिकः । ऐकशालिकः ॥

कर्कलोहितादीकक् ॥ ११० ॥

कर्कलोहितशब्दाभ्यामिवार्थे ईकक् प्रत्ययो भवति । कर्कः शुक्लोऽश्वः, तेन सदृशः, कार्कीकः । लौहितीकः स्फटिकः स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते।

प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ १११ ॥

प्रत्न पूर्व विश्व इम इत्येतेभ्य इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये । तं त्नथा पूर्वथा विश्वथेमथा ॥

पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११२ ॥

इवार्थे इति निवृत्तम् । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः संघाः गाः । पूगवाचिनः प्रातिपदिकादग्रामणीपूर्वात् स्वार्थे ञ्यः प्रत्ययो भवति । लौहध्वज्यः । लौहध्वज्यौ । लोहध्वजाः । शैब्यः । शैब्यौ । शिबयः । चातक्यः । चातक्यौ । चातका । अग्रामणीपूर्वादिति किम् ? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः । ज्ञदत्तकाः ॥

व्रातच्फञोरस्त्रियाम् ॥ ११३ ॥

नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः । व्रातवाचिभ्यः ातिपदिकेभ्यश्च्फञ्प्रत्ययान्तेभ्यश्च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम् । कापोतपाक्यः । कापोतपाक्यौ । कपोतपाकाः । ब्रैहिमत्यः ब्रैहिमत्यौ । ब्रीहिमताः । च्फञःखल्वपि कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । ब्राध्नायन्यः । ब्राध्नायन्यौ । ध्नायनाः । अस्त्रियामिति किम् ? कपोतपाकी । ब्रीहिमती । कौञ्जायनी । ब्राध्नायनी ॥

आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ॥ ११४ ॥

आयुधजीविनां संघः आयुधजीविसंघः । स वाहीकैर्विशेष्यते । वाहीकेषु य ायुधजीविसंघस्तद्वाचिनः प्रातिपदिकाद् ब्राह्मणराजन्यवर्जितात् स्वार्थे ञ्यट् त्ययो भवति । ब्राह्मणे तद्विशेषग्रहणम् । राजन्ये स्वरूपग्रहणमेव । टकारो ोवर्थः । तेनास्त्रियामिति नानुवर्त्तते । कौण्डीवृस्यः । कौण्डीवृस्यौ । कौण्डीवृसाः । ौद्रक्यः । चौद्रक्यौ । क्षुद्रकाः । मालव्यः । मालव्यौ । मालवाः । स्त्रियां कौण्डीवृसी । ौद्रकी । मालवी । आयुधजीविग्रहणं किम् ? मल्लाः । शयण्डाः । संघग्रहणं किम् ? म्राट् । वाहीकेष्विति किम् ? शबराः । पुलिन्दाः । अब्राह्मण राजन्यादिति किम् ? ोपालवा ब्राह्मणाः । शालङ्कायना राजन्याः ॥

वृकाट्टेण्यण् ॥ ११५ ॥

आयुधजीविसंघादिति वर्त्तते । वृकशब्दादायुधजीविनः स्वार्थे टेण्यण् प्रत्ययो

भवति । टकारो ङीबर्थो णकारो वृद्ध्यर्थः । वार्केण्यः । वार्केण्यौ । वृकाः । आयुधजीविसङ्घविशेषणं जातिशब्दान्माभूत् । 'कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।'

दामन्यादित्रिगर्तषष्ठाच्छः ॥ ११६ ॥

आयुधजीविसङ्घादिति वर्तते । दामन्यादिभ्यः प्रातिपदिकेभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति । येषामायुधजीविनां सङ्घानां षडन्तर्वर्गास्तत्र च त्रिगर्तः षष्ठः । त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठा इत्युच्यन्ते । तेषु चेयमाहुस्त्रिगर्तषष्ठास्तु कौण्डोपरथदाण्डकी । क्रौष्टकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः ॥

दामन्यादिभ्यस्तावत्-दामनीयः । दामनीयौ । दामनयः । औलपीयः । औलपीयौ । उलपयः । त्रिगर्तषष्ठेभ्यः खल्वपि-कौण्डोपरथीयः । कौण्डोपरथीयौ । कौण्डोपरथाः । दाण्डकीयः । दाण्डकीयौ । दाण्डकयः । क्रौष्टकीयः । जालमानीयः । ब्रह्मगुप्तीयः । जानकीयः । दामनि । औलपि । आकिदन्ती । काकरन्ति । काकदन्ति । शत्रुन्तपि । सार्वसेनि । बिन्दु । मौञ्जायन । उलभ । सावित्रीपुत्र(१) दामन्यादि ॥

पर्श्वादियौधेयादिभ्यामणञौ ॥ ११७ ॥

आयुधजीविसङ्घादित्येव । पर्श्वादिभ्यो यौधेयादिभ्यश्च प्रातिपदिकेभ्य आयुधजीविसङ्घवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ भवतः । पार्शवः । पार्शवौ । पर्शवः । आसुरः । आसुरौ । असुराः । यौधेयः । शौभ्रेयः । पर्शु । असुर । रक्षस् । बाह्लीक । वयस् । मरुत् । दशार्ह । पिशाच । विशाल । अशनि । कार्षापण । सत्वत् । वसु । पर्श्वादि ॥ यौधेय । कौशेय । क्रौशेय । शौभ्रेय । शौक्रेय । धार्तेय । वार्तेय । जाबालेय । त्रिगर्त । भरत । उशीनर । यौधेयादि ॥

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ ११८ ॥

आयुधजीविसङ्घादिति निवृत्तम् । अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् प्रत्ययो भवति । अभिजितोऽपत्यमित्यण् । तदन्ताद्यञ् । आभिजित्यः । आभिजित्यौ । आभिजिताः । वैदभृत्यः । वैदभृत्यौ । वैदभृताः । शालावत्यः । शालावत्यौ । शालावताः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः । अणो ग्रहणमिष्यते । अभिजितो मुहूर्ते आभिजितः स्थालीपाक इत्यत्र न ।

ञ्यादयस्तद्राजाः ॥ ११९ ॥

पूगाञ्ञ्यो ग्रामणीपूर्वादित्यतः प्रभृति ये प्रत्ययास्ते तद्राजसंज्ञा भवन्ति । चैवोदाहृतम् । तद्राजप्रदेशाः तद्राजस्य बहुष्वित्येवमादयः ॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमस्याध्यायस्य तृतीयः पादः ॥५॥

---

(१) अच्युतन्ति । काकनन्ता । कुरुभ । देवयापि । शौनकी । अपच्युतकी । कक पिञ्ज । एतेऽत्र गणेऽधिका पुस्तकान्तरे ।

छन्दसि च ॥ १४२ ॥

छन्दसि च दन्तशब्दस्य दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे। पत्रदन्त ? मालभेत । उभयदत आलभते ॥

स्त्रियां संज्ञायाम् ॥ १४३ ॥

स्त्रियामन्यपदार्थे संज्ञायां विषये दन्तशब्दस्य दतृ इत्ययमादेशो भवति । अयोदती । फालदती । संज्ञायामिति किम् ? समदन्ती । स्निग्धदन्ती ॥

विभाषा श्यावारोकाभ्याम् ॥ १४४ ॥

श्याव अरोक इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययमादेशो भवति विभाषा समासान्तो बहुव्रीहौ । श्यावदन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः । अरोको निर्दीप्तिः । संज्ञायामित्येव । श्यावदन्तः । अरोकदन्तः ॥

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४५ ॥

विभाषेत्येव । अग्रान्ताच्छब्दात् शुद्ध शुभ्र वृष वराह इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा दतृ इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । शुद्धदन् । शुद्धदन्तः । शुभ्रदन् । शुभ्रदन्तः । वृषदन् । वृषदन्तः । वराहदन् । वराहदन्तः । अनुक्तसमुच्चयार्थश्चकारः । अहिदन् । अहिदन्तः । मूषिकदन् । मूषिकदन्तः । गर्दभदन् । गर्दभदन्तः । शिखरदन् । शिखरदन्तः ॥

ककुदस्यावस्थायां लोपः ॥ १४६ ॥

ककुदशब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तोऽवस्थायां गम्यमानायाम् । कालाविकृता वस्तुधर्मा वयःप्रभृतयोऽवस्था इत्युच्यते । असञ्जातं ककुदमस्य, असञ्जातककुत् । बाल इत्यर्थः । पूर्णककुत् । मध्यमवया इत्यर्थः । उन्नतककुत् । वृद्धवया इत्यर्थः । स्थूलककुत् । बलवानित्यर्थः । यष्टिककुत् । नातिस्थूलो नातिकृश इत्यर्थः । अवस्थायामिति किम् ? श्वेतककुदः ॥

त्रिककुत् पर्वते ॥ १४७ ॥

त्रिककुदि बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वतेऽभिधेये। त्रीणि ककुदान्यस्य, त्रिककुत् पर्वतः । ककुदाकारं पर्वतस्य शृङ्गं ककुदमित्युच्यते । न च सर्वस्त्रिशिखरः पर्वतस्त्रिककुत्, किं तर्हि संज्ञैषा पर्वतविशेषस्य । पर्वत इति किम् ? त्रिककुदोऽन्यः ॥

उद्विभ्यां काकुदस्य ॥ १४८ ॥

उत् वि इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे । उद्गतं काकुदमस्य, उत्काकुत् । विकाकुत् । तालु काकुदमुच्यते ॥

पूर्णाद्विभाषा ॥ १४९ ॥

पूर्णात्परस्य काकुदशब्दस्य विभाषा लोपो भवति बहुव्रीहौ समासे । पूर्णं काकुदमस्य, पूर्णकाकुत् । पूर्णकाकुदः ॥

सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५० ॥

सुहृत् दुर्हृत् इति निपात्यते यथासंख्यं मित्रामित्रयोरभिधेययोः। सुशब्दात् परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ, तथा दुःशब्दात् परस्य। शोभनं हृदयमस्य, सुहृन्मित्रम्। दुष्टं हृदयमस्य दुर्हृदमित्रम्। मित्रामित्रयोरिति किम्? सुहृदयः कारणिकः। दुर्हृदयश्चोरः॥

उरःप्रभृतिभ्यः कप् ॥ १५१ ॥

उरःप्रभृत्यन्ताद् बहुव्रीहेः कप् प्रत्ययो भवति। व्यूढमुरोऽस्य व्यूढोरस्कः। प्रियसर्पिष्कः। अवमुक्तोपानत्कः। पुमान् अनड्वान् पयो नौर्लक्ष्मीरिति विसर्गयुक्ताः पठ्यन्ते न प्रातिपदिकानि। तत्रेदं प्रयोजनम्, एकवचनान्तानामेव ग्रहणमिह विज्ञायेत, द्विवचनबहुवचनान्तानां मा भूदिति। तत्र शेषाद्विभाषेति विकल्प एव भवतीति। द्विपुमान्। द्विपुंस्कः। बहुपुमान्। बहुपुंस्कः। उरस्। सर्पिस्। उपानह्। पुमान्। अनड्वान्। नौः। पयः। लक्ष्मीः। दधि। मधु। शालि॥ अर्थान्नञः—अनर्थकः। उरःप्रभृति॥

इनः स्त्रियाम् ॥ १५२ ॥

इन्नन्ताद् बहुव्रीहेः कप् प्रत्ययो भवति स्त्रियां विषये। बहवो दण्डिनोऽस्यां शालायां बहुदण्डिका शाला। बहुच्छत्रिका। बहुस्वामिका नगरी। बहुवाग्मिका सभा। स्त्रियामिति किम्? बहुदण्डी राजा। बहुदण्डिकः। शेषाद्विभाषेत्येतद्भवति॥

नद्यृतश्च ॥ १५३ ॥

नद्यन्ताद् बहुव्रीहेर्ऋकारान्ताच्च कप् प्रत्ययो भवति। बह्व्यः कुमार्योऽस्मिन् देशे बहुकुमारीको देशः। बहुब्रह्मबन्धूकः। ऋतः खल्वपि—बहुकर्तृकः। तकारः मुखसुखोच्चारणार्थः॥

शेषाद्विभाषा ॥ १५४ ॥

यस्माद् बहुव्रीहेः समासान्तो न विहितः स शेषस्तस्माद्विभाषा कप्प्रत्ययो भवति। बह्व्यः खट्वा अस्मिन् बहुखट्वकः। बहुमालकः। बहुवीणकः। बहुखट्वाकः। बहुमालाकः। बहुवीणाकः। बहुखट्वः। बहुमालः। बहुवीणः। कथमनृक्कं साम, बह्वृक्कं सूक्तमिति, यावता विहितोऽत्र सामान्येन समासान्त ऋक्पूरिति? नैतदस्ति—विशेषे स दृश्यते। अनृचो माणवको ज्ञेयो बह्वृचश्चरणाख्यायामिति। शेषादिति किम्? प्रियपथः। प्रियधुरः॥

न संज्ञायाम् ॥ १५५ ॥

संज्ञायां विषये बहुव्रीहौ समासे कप् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। विश्वे देवा अस्य, विश्वदेवः। विश्वयशाः॥

ईयसश्च ॥ १५६ ॥

ईयसन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। सर्वा प्राप्तिः प्रतिषिध्यते। बहवः श्रेयांसोऽस्य बहुश्रेयान्। शेषाद्विभाषेत्यस्य प्रतिषेधः। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। नद्यृतश्चेत्यस्य प्रतिषेधः। ह्रस्वत्वमपि न भवति। ईयसो बहुव्रीहौ पुंवदिति वचनात्॥

वन्दिते भ्रातुः ॥ १५७ ॥

वन्दितेऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। वन्दितः स्तुतः पूजित इत्युच्यते। शोभनो भ्राताऽस्य सुभ्राता। वन्दित इति किम्? मूर्खभ्रातृकः। दुष्टभ्रातृकः॥

ऋतश्छन्दसि ॥ १५८ ॥

ऋवर्णान्ताद् बहुव्रीहेश्छन्दसि विषये कप् प्रत्ययो न भवति। हता माताऽस्य हतमाता। हतपिता। हतस्वसा। सुहोता॥

नाडीतन्त्र्योः स्वाङ्गे ॥ १५९ ॥

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। बह्व्यो नाड्योऽस्य बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। धमनीवचनस्तन्त्रीशब्दः। स्वाङ्ग इति किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा॥

निष्प्रवाणिश्च ॥ १६० ॥

निष्प्रवाणिरिति नद्र्यलक्षणस्य कपः प्रतिषेधो निपात्यते। प्रोयतेऽस्यामिति प्रवाणी। प्रवयन्ति तयेति वा प्रवाणी। करणसाधनोऽयं ल्युट्। तन्तुवायशलाका भण्यते। निर्गता प्रवाणी अस्य, निष्प्रवाणिः पटः। निष्प्रवाणिः कम्बलः। अपनीतशलाकः। समासवान् प्रत्ययो नवक उच्यते।

इति श्रीवामनविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य चतुर्थश्चरणः समाप्तः पञ्चमोऽध्यायः ॥ ५ ॥ ४ ॥

---

## अथ षष्ठाध्यायस्य प्रथमः पादः ॥

एकाचो द्वे प्रथमस्य ॥ १ ॥

अधिकारोऽयम्। एकाच इति च द्वे इति च प्रथमस्येति च त्रितयमधिकृतं वेदितव्यम्। इत उत्तरं यदित्यामः प्राक्सम्प्रसारणविधानात् तत्रैकाचः प्रथमस्य द्वे भवत इत्येवं तद्वेदितव्यम्। वक्ष्यति लिटि धातोरनभ्यासस्येति। तत्र धातोरवयवस्यानभ्यासस्य प्रथमस्यैकाचो द्वे भवतः। जजागार। पपाच। इयाय। आर। एकाच इति बहुव्रीहिनिर्देशः। एकोऽच् यस्य सोऽयमेकाच् इत्यवयवेन विग्रहः, समुदायः समासार्थः। अभ्यन्तरश्च समुदायेऽवयवोभवतीति साच्कस्यैव द्विर्वचनं भवति।

पच् इत्यत्र येनैवाचा समुदाय एकाच् तेनैव तदवयवोऽच्शब्दः पशब्दश्च । तत्र पृथगवयवैकाचो न द्विरुच्यन्ते, किं तर्हि समुदायैकाजेव । तथाहि—सकृच्छास्त्रप्रवृत्त्या सावयवः समुदायोऽनुगृह्यते । पपाचेत्यत्र प्रथमत्वं व्यपदेशिवद्भावात् । इयाय, आरेत्यत्रैकाच्त्वमपि व्यपदेशिवद्भावादेव । द्विःप्रयोगश्च द्विर्वचनमिदम्, आवृत्तिसंख्या हि द्वे इति विधीयते । तेन स एव शब्दो द्विरुच्चार्यते, न च शब्दान्तरं तस्य स्थाने विधीयते ॥

अजादेर्द्वितीयस्य ॥ २ ॥

प्रथमद्विर्वचनापवादोऽयम् । अजादेर्द्वितीयस्यैकाचो द्विर्वचनमधिक्रियते । अच् आदिर्यस्य धातोस्तदवयवस्य द्वितीयस्यैकाचो द्वे भवतः । अटिटिषति । अशिशिषति । अरिरिषति । अर्त्तेः स्मिपूङ्रञ्ज्वशां सनीति इट् क्रियते तस्मिन् कृते गुणे च रपरत्वे च द्विर्वचनेऽचीति स्थानिवद्भावः प्राप्नोति । तत्र प्रतिविधानं द्विर्वचननिमित्तेऽचीत्युच्यते । न चात्र द्विर्वचननिमित्तमिट्, किं तर्हि कार्यी । न च कार्यी निमित्तत्वेनाश्रीयते । तथाहि—क्ङिन्निमित्तयोर्गुणवृद्ध्योः प्रतिषेधो विधीयमानः शयितेत्यत्र न भवति । न हि कार्यिणः शीङो गुणं प्रति निमित्तभाव इति । अत्र केचिदजादेरिति कर्मधारयात् पञ्चमीमिच्छन्ति, अच्चासावादिश्चेत्यजादिः, अजादेरुत्तरस्यैकाचो द्वे भवत इति । तेषां द्वितीयस्येति विस्पष्टार्थं द्रष्टव्यम् ॥

न न्द्राः संयोगादयः ॥ ३ ॥

द्वितीयस्येति वर्त्तते । द्वितीयस्यैकाचोऽवयवभूतानां न्द्राणां तदन्तर्भावात् प्राप्तं द्विर्वचनं प्रतिषिध्यते । नकारदकाररेफा द्वितीयैकाचोऽवयवभूताः संयोगादयो न द्विरुच्यन्ते । उन्दिदिषति । अड्डिडिषति । अर्चिचिषति । न्द्रा इति किम् ? ईचिक्षिषते । संयोगादय इति किम् ? प्राणिणिषति । अनितेरुभौ साभ्यासस्येति णत्वम् । अजादेरित्येव । दिद्रासति । केचिदजादेरित्यपि पञ्चम्यन्तं कर्मधारयमनुवर्त्तयन्ति, तस्य प्रयोजनम्, इन्दिद्रीयिषतीति । अजादेरनन्तरस्याभावाद् दकारो द्विरुच्यत एव नकारो न द्विरुच्यते । इन्द्रमिच्छतीति क्यच् । तदन्तात्—इन्द्रीयितुमिच्छतीति सन् । *बकारस्याप्ययं प्रतिषेधो वक्तव्यः* । उब्जिजिषति । यदा बकारोपध उब्जिरुपदिश्यते तदायं प्रतिषेधः । दकारोपदेशे न वक्तव्यः । बत्वं तु दकारस्य विधातव्यम् ॥ *यकारपरस्य रेफस्य प्रतिषेधो न भवतीति वक्तव्यम्* । अरार्यते । अर्त्तेरट्यर्तिशूर्णोतीनामुपसंख्यानमिति यङ् । तत्र यङि चेति गुणस्ततः द्विर्वचनम् । *ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्* । कस्य तृतीयस्य, केचिदाहुर्व्यञ्जनस्येति । ईर्ष्यियिषति । अपरे पुनस्तृतीयस्यैकाच इति व्याचक्षते । ईर्ष्यिषिषति । *कण्ड्वादीनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्* । कण्डूयियिषति । असूयियिषति । *वा नामधातूनां तृतीयस्यैकाचो द्वे भवत इति वक्तव्यम्* । अश्वीयियिषति । अशिश्वीयि-

यति । अपर आह—॥यथेष्टं नामधातुष्विति वक्तव्यम्॥ । पुपुत्रीयियति । पुतित्रीयियति । पुत्रीयियिषति । पुपुतित्रीयियिषति । पुत्रीयियिषिषति(१) ॥

## पूर्वोऽभ्यासः ॥ ४ ॥

द्वे इति प्रथमान्तं यदनुवर्त्तते तदर्थादिह षष्ठ्यन्तं जायते । तत्र प्रत्यासत्तेरस्मिन् प्रकरणे ये द्वे विहिते तयोर्यः पूर्वोऽवयवः, सोऽभ्याससंज्ञो भवति । पपाच । पिपक्षति । पापच्यते । जुहोति । अपीपचत् । अभ्यासप्रदेशास्तु अत्र लोपोऽभ्यासस्येत्येवमादयः ॥

## उभे अभ्यस्तम् ॥ ५ ॥

द्वे इति वर्त्तमाने उभेग्रहणं समुदायसंज्ञाप्रतिपत्त्यर्थम् । ये द्वे विहिते ते उभे अपि समुदिते अभ्यस्तसंज्ञे भवतः । ददति । ददत् । दधत् । उभेग्रहणं किम् ? नेनिजतीत्यत्राभ्यस्तानामादिरिति समुदाये यथा स्यात् प्रत्येकं पर्यायेण वा माभूदिति । अभ्यस्तप्रदेशा अभ्यस्तानामादिरित्येवमादयः ॥

## जक्षित्यादयः षट् ॥ ६ ॥

अभ्यस्तमिति वर्त्तते । जक्ष भक्ष्यहसनयोरित्यादयश्चान्ये षट् धातवोऽभ्यस्तसंज्ञा भवन्ति । सेयं सप्तानां धातूनामभ्यस्तसंज्ञा विधीयते । जक्ष भक्ष्यहसनयोरित्यतः प्रभृति वेवीङ् वेतिना तुल्य इति यावत् । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति । दीध्यते । वेव्यते—इत्यत्राभ्यस्तानामादिरित्येष स्वरः प्रयोजनम् । दीध्यदिति च शतरि व्यत्ययेन संपादिते नाभ्यस्ताच्छतुरिति नुमः प्रतिषेधः ।

## तुजादीनां दीर्घोऽभ्यासस्य ॥ ७ ॥

तुजादीनामिति प्रकारे आदिशब्दः । कश्च प्रकारः । तुजेर्दीर्घोऽभ्यासस्य न विहितः, दृश्यते च, ये तथाभूतास्ते तुजादयस्तेषामभ्यासस्य दीर्घः साधुर्भवति । तूतुजानः । मामहानः । अनड्वान् दाधार । स्वधां मीमाय । दाधार । स तूताव । दीर्घश्चैषां छन्दसि प्रत्ययविशेषे एव दृश्यते, ततोऽन्यत्र न भवति । तुतोज शबलान् ।

## लिटि धातोरनभ्यासस्य ॥ ८ ॥

लिटि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः । पपाच । पपाठ । प्रोर्णुनाव । वाच्य ऊर्णोर्णुवद्भाव इति वचनाद् ऊर्णोतेरिजादेरित्याम्न भवति । लिटीति किम् ? कर्त्ता । हर्त्ता । धातोरिति किम् ? ससुवांसो विश्रृण्विरे । सोममिन्द्राय सुन्विरे । अनभ्यासस्येति किम् ? कृष्णो नोनाव वृषभो यदीदम् । नोनूयतेर्णोनाव । समान्या मरुतः संमिमिक्षुः—लिटि उसन्तः । ॥द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्॥ । यो जागार तमृचः कामयन्ते । दाति प्रियाणीति ।

---

(१) वस्तुतस्तु तृतीयस्य प्रथमद्वितीयतृतीयानां पर्यायेण द्वित्वम् । युगपत्तु त्रयाणां न बाध्यबाधकभावस्य निर्णीतत्वात् चतुर्थस्य तु न कथमपि द्वित्वं संभाव्यते अनुपस्थितत्वात् ।

सन्यङोः ॥ ९ ॥

धातोरनभ्यासस्येति वर्त्तते। सन्यङोरिति च षष्ठ्यन्तमेतत्। सन्नन्तस्य यङन्तस्य चानभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पिपचति। पिपतिषति। अरिरिषति। उन्दिदिषति। यङन्तस्य-पापच्यते। अटाट्यते। यायज्यते। अरार्यते। प्रोर्णोनूयते। अनभ्यासस्येत्येव। जुगुप्सिषते। लोलूयिषते।

श्लौ ॥ १० ॥

श्लौ परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। जुहोति। बिभेति। जिह्रेति।

चङि ॥ ११ ॥

चङि परतोऽनभ्यासस्य धातोरवयवस्य प्रथमस्यैकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। अपीपचत्। अपीपठत्। आटिटत्। आशिशत्। आर्दिदत्। पचादीनां ण्यन्तानां चङि कृते णिलोप उपधाह्रस्वत्वं द्विर्वचनमित्येषां कार्याणां प्रवृत्तिक्रमः। तथा च सन्वल्लघुनि चङ्पर इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावाच्च प्रतिषिध्यते। यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवति। न चास्मिन् कार्याणां क्रमेऽनादिष्टादचः पूर्वोऽभ्यासो भवतीति। आटिटदिति द्विर्वचनेऽचीति स्थानिवद्भावाद् द्वितीयस्यैकाचो द्विर्वचनं भवति।

दाश्वान् साह्वान् मीढ्वांश्च ॥ १२ ॥

दाश्वान् साह्वान् मीढ्वानित्येते शब्दाश्छन्दसि भाषायां च विशेषेण निपात्यन्ते। दाश्वानिति, दाशृ दाने इत्येतस्य धातोः क्वसावद्विर्वचनमनिट्त्वं च निपात्यते। दाश्वांसो दाशुषः सुतमिति। साह्वानिति, षह मर्षणे इत्येतस्य परस्मैपदमुपधादीर्घत्वमद्विर्वचनमनिट्त्वं च निपातनात्। साह्वान् बलाहकः। मीढ्वानिति, मिह सेचने इत्येतस्याद्विर्वचनमनिट्त्वमुपधादीर्घत्वं ढत्वं च निपातनात्। मीढ्वस्तोकाय तनयाय मृडय। एकवचनमतन्त्रम्। *कृञादीनां के द्वे भवत इति वक्तव्यम्*। क्रियतेऽनेनेति चक्रम्। चिक्लिदम्। क्लिदेश्च घञर्थे कविधानमिति कः प्रत्ययः। *चरिचलिपतिवदीनां द्वित्वमच्याक् चाभ्यासस्य*। चरादीनां धातूनामपि प्रत्यये परतो द्वे भवतः, अभ्यासस्याऽऽगमो भवति। आगामविधानसामर्थ्याच्च हलादिः शेषो न भवति। हलादिशेषे हि सत्यागमस्यादेशस्य च विशेषो नास्ति। चराचरः। चलाचलः। पतापतः। वदावदः। *वेति वक्तव्यम्*। तेन चरः पुरुषः। चलो रथः। पतो यानम्। वदो मनुष्यः इत्येवमाद्यपि सिद्धं भवति। *हन्तेर्घत्वं च*। हन्तेरचि प्रत्यये परतो द्वे भवतोऽभ्यासस्य च हकारस्य च घत्वमाक् चागमो भवति। परस्याभ्यासाच्चेति कुत्वम्। घनाघनः क्षोभणश्चर्षणीनाम्। *पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य*। पाटेरचि परतो द्वे भवतो णिलुक् च भवति अभ्यासस्य चोगागमो दीर्घश्च भवति। पाटूपटः॥

## ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १३ ॥

पुत्र पति इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे ष्यङः सम्प्रसारणं भवति। यणः स्थाने इग् भवतीत्यर्थः। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। करीषस्येव गन्धोऽस्य कुमुदस्येव गन्धोऽस्येति बहुव्रीहिस्तत्रोपमानाच्चेति गन्धस्येदन्तादेशः, करीषगन्धेरपत्यमित्यण् तदन्तात् स्त्रियाम् णिगोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्र इति ष्यङ् ततश्चापि विहिते षष्ठीसमासः। सम्प्रसारणस्येति दीर्घत्वम्। ष्यङ् इति किम्? इभ्यापुत्रः। क्षत्रियापुत्रः। पुत्रपत्योरिति किम्? कारीषगन्ध्याकुलम्। कौमुदगन्ध्याकुलम्। तत्पुरुष इति किम्? कारीषगन्ध्या पतिरस्य ग्रामस्य, कारीषगन्ध्यापतिरयं ग्रामः। ष्यङ इति स्त्रीप्रत्ययग्रहणम् 'स्त्रीप्रत्यये चानुपसर्जनेनेति, प्रत्ययग्रहणपरिभाषया यस्मात् स विहितस्तदादेरित्येष नियमो नास्ति। तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः। परमकारीषगन्धीपतिरित्यपि भवति। उपसर्जने तु ष्यङि न भवति अतिक्रान्ता कारीषगन्ध्यामतिकारीषगन्ध्या तस्या पुत्रोऽतिकारीषगन्ध्यापुत्रः। अतिकारीषगन्ध्यापतिः। पुत्रपत्योः केवलयोरुत्तरपदयोरिदं सम्प्रसारणं, तदादौ तदन्ते च न भवति—कारीषगन्ध्यापुत्रकुलं, कारीषगन्ध्यापरमपुत्र इति। ष्यङन्ते, यद्यप्यन्येऽपि यणः सन्ति तथापि ष्यङ एव सम्प्रसारणं, निर्दिश्यमानस्यादेशा भवन्तीति। सम्प्रसारणमिति चाधिक्रियते, विभाषा परेरिति यावत्॥

## बन्धुनि बहुव्रीहौ ॥ १४ ॥

ष्यङ' सम्प्रसारणमित्यनुवर्तते। बन्धुशब्द उत्तरपदे बहुव्रीहौ समासे ष्यङः सम्प्रसारणं भवति। कारीषगन्ध्या बन्धुरस्य, कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। बहुव्रीहाविति किम्? कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। अत्रापि, पूर्ववदेव परमकारीषगन्धीबन्धुरित्यत्र भवति। अतिकारीषगन्ध्याबन्धुरित्यत्र च न भवति, तथा कारीषगन्ध्याबन्धुधन। कारीषगन्ध्यापरमबन्धुरित्यादौन। बन्धुनीति नपुंसकलिङ्गनिर्देशः शब्दरूपापेक्षया, पुंल्लिङ्गाभिधेयस्त्वयं बन्धुशब्दः। मातच्मातृकमातृषु—ष्यङः सम्प्रसारणं भवति विभाषया बहुव्रीहावेव। कारीषगन्ध्या माताऽस्येत्येवं बहुव्रीहौ कृते एतस्मादेवोपसंख्यानात् पक्षे मातृशब्दस्य मातजादेशः। तत्र चित्करणसामर्थ्याद्बहुव्रीहिस्वरमन्तोदात्तत्वं बाधते। मातृमातृकशब्दयोश्च भेदेनोपादानाद्, नद्यृतश्चेति कबपि विकल्प्यते। कारीषगन्धीमातः। कारीषगन्ध्यामातः। कारीषगन्धीमातृकः। कारीषगन्ध्यामातृकः। कारीषगन्धीमाता। कारीषगन्ध्यामाता॥

## वचिस्वपियजादीनां किति च ॥ १५ ॥

सम्प्रसारणमिति वर्तते। ष्यङ इति निवृत्तम्। वचि—वच परिभाषणे। ब्रुवो वचिरिति च। स्वपि—ञिष्वप् शये। यजादयो, यज देवपूजासंगतिकरणदानेष्वित्यतः

प्रभृति आ गणान्तात्। तेषां वचिस्वपियजादीनां किति प्रत्यये परतः संप्रसारणं भवति। वचि-उक्तः, उक्तवान्। स्वपि-सुप्तः, सुप्तवान्। यज-इष्टः, इष्टवान्। वप्-उप्तः, उप्तवान्। वह-ऊढः, ऊढवान्। वस-उषितः, उषितवान्। वेञ्-उतः, उतवान्। व्येञ्-संवीतः, संवीतवान्। ह्वेञ्-हूतः, हूतवान्। वद-उदितः, उदितवान्। टुओश्वि-शूनः, शूनवान्। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते। तेनेह न भवति-वाच्यति वाचिक इति॥

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥१६॥

ग्रह उपादाने, ज्या वयोहानौ, वेञो वयिः, व्यध ताडने, वश कान्तौ, व्यच व्याजीकरणे, ओव्रश्चू छेदने, प्रच्छ ज्ञीप्सायां, भ्रस्ज पाके, इत्येतेषां धातूनां ङिति प्रत्यये परतश्चकारात्किति च संप्रसारणं भवति। ग्रह-गृहीतः। गृहीतवान्। ङिति-गृह्णाति। जरीगृह्यते। ज्या-जीनः। जीनवान्। ल्वादिभ्य इति निष्ठानत्वम्। ङिति-जिनाति। जेजीयते। हल इति संप्रसारणदीर्घे कृते प्वादीनामिति ह्रस्वः क्रियते। वयि-लिटि परतो वेञो वयिरादेशस्तस्य ङिदभावात् किदेवोदाह्रियते-ऊयतुः। ऊयुः। यद्येवं वयिग्रहणमनर्थकम्, यजादिषु वेञ् पठ्यते? नैवं शक्यम्। लिटि तस्य वेञ इति प्रतिषेधो वक्ष्यते। तत्र तथैव स्थानिवद्भावाद्वयेर्विधिरेवं प्रतिषेधोऽपि प्राप्नोति। नैष दोषः। लिटि वयो य इति यकारस्य संप्रसारणप्रतिषेधात् वयोर्विधौ ग्रहणं प्रतिषेधे चा ग्रहणमनुमास्यते। सत्यमेतत्। एष एवार्थः साक्षान्निर्देशेन वयेः स्पष्टीक्रियते। व्यध-विद्धः। विद्धवान्। ङिति-विध्यति, वेविध्यते। वश-उशितः। उशितवान्। ङिति-उष्टः। उशन्ति। व्यच-विचितः। विचितवान्। ङिति-विचति। वेविच्यते। व्यचेः कुटादित्वमनसि प्रतिपादितम्। तेन सर्वमाक्षिपति प्रत्यये संप्रसारणं भवति। उद्विचिता। उद्विचितुम्। उद्विचितव्यमिति। व्रश्च-वृक्णः। वृक्णवान्। अथ कथमत्र कुत्वं व्रश्चभ्रस्जेति हि षत्वेन भवितव्यम्? *निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः*। तत्र षत्वं प्रति नत्वस्य सिद्धत्वाद् झलादिनिष्ठा न भवति। कुत्वे तु कर्तव्ये तदसिद्धमेवेति प्रवर्तते कुत्वम्। ङिति-वृश्चति। वरीवृश्च्यते। प्रच्छ-पृष्टः। पृष्टवान्। ङिति-पृच्छति। परीपृच्छ्यते। प्रश्नः। नङि तु प्रश्ने चासन्नकाल इति निपातनादसंप्रसारणम्। भ्रस्ज-भृष्टः। भृष्टवान्। ङिति-भृज्जति। बरीभृज्ज्यते। सकारस्य, झलां जश् झशीति जश्त्वेन दकारः, स्तोः श्चुना श्चुरिति श्चुत्वेन जकारः॥

लिट्यभ्यासस्योभयेषाम् ॥ १७ ॥

उभयेषां वच्यादीनां ग्रह्यादीनां च लिटि परतोऽभ्यासस्य संप्रसारणं भवति। वचि-उवाच। उवचिथ। स्वप्-सुष्वाप। सुष्वपिथ। यज-इयाज। इयजिथ। टुवप्-उवाप। उवपिथ। ग्रह्यादीनां, तत्र ग्रहेरविशेषः। जग्राह। जग्रहिथ। ज्या-

जेज्यौ। जिज्यिथ। वयि-उवाय। उवयिथ। व्यध-विव्याध। विव्यधिथ। वश-उवाश। उवशिथ। व्यच-विव्याच। विव्यचिथ। वृश्चते' सत्यपति वा योगे नास्ति विशेषः। योगारम्भे तु सति यदि संप्रसारणमकृत्वा हलादि' शेषेण रेफो निवर्त्यते तदा ऋकारस्य संप्रसारणं प्राप्नोति। अथ रेफस्य संप्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते। तदानीमुरदत्वस्य स्थानिवद्भावान्न संप्रसारणे संप्रसारणमिति प्रतिषेधो भवतीत्यस्ति विशेषः। वव्रश्च। वव्रश्चिथ। पृच्छतिभृज्जत्योर्विशेषः। अकिदर्थं चेदमभ्यासस्य संप्रसारणं विधीयते। किति हि परत्वाद्धातोः संप्रसारणे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम्। ऊचतुः। ऊचुरिति। अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभयेषामिति वचनं हलादिः शेषमपि बाधित्वा संप्रसारणमेव यथा स्यादिति। विव्याध॥

स्वापेश्चङि॥ १८॥

स्वापेरिति स्वपेर्ण्यन्तस्य ग्रहणं तस्य चङि परतः संप्रसारणं भवति। असूषुपत्। असूषुपताम्। असूषुपन्। द्विर्वचनात् पूर्वमत्र संप्रसारणं, तत्र कृते लघूपधगुणस्तस्य णौ चङ्युपधाया ह्रस्वत्वं, ततो द्विर्वचनं, दीर्घो लघोरिति दीर्घत्वम्। चङीति किम्? स्वाप्यते। स्वापितः। कितीति निवृत्त, ङितीति केवलमिहानुवर्तते इत्येतदनुविज्ञानम्॥

स्वपिस्यमिव्येञां यङि॥ १९॥

ञिष्वप् शये, स्यमु स्वन ध्वन शब्दे, व्येञ् संवरणे, इत्येतेषां धातूनां यङि परतः संप्रसारणं भवति। सोषुप्यते। सेसिम्यते। वेवीयते। यङीति किम्? स्वप्नक्॥

न वशः॥ २०॥

यङिति वर्तते। वशेर्धातोर्यङि परतःसंप्रसारणं न भवति। वावश्यते। वावश्येते। वावश्यन्ते। यङीति किम्? उष्टः। उशन्ति(१)॥

चायः की॥ २१॥

यङीति वर्तते। चायृ पूजानिशामनयोरित्येतस्य धातोर्यङि परतः कीत्ययमादेशो भवति। चेकीयते। चेकीयेते। चेकीयन्ते। दीर्घकरणं यङ्लुगर्थम्। चेकीतः॥

स्फायः स्फी निष्ठायाम्॥ २२॥

स्फायीओप्यायी वृद्धावित्यस्य धातोर्निष्ठायां परतः स्फीत्ययमादेशो भवति। स्फीतः। स्फीतवान्। निष्ठायामिति किम्? स्फातिः। स्फातीभवतीत्येतदपि क्तिन्नन्तस्यैव रूपं न निष्ठान्तस्य। निष्ठायामित्येतदधिक्रियते, लिड्यङोश्चेति प्रागेतस्मात् सूत्रात्॥

स्यः प्रपूर्वस्य॥ २३॥

निष्ठायामिति वर्तते संप्रसारणमिति च। स्फी इत्येतन्न स्वर्यते। स्त्यै ष्ट्यै शब्दसङ्घा-

(१) यङीति किम्? उष्टः उशन्तीत्येकस्मिन् पुस्तके नास्ति।

तयोर्द्वयोरप्येतयोर्धात्वोः स्त्याष्टयमापन्नयोः सामान्येन ग्रहणम् । स्त्या इत्येतस्य प्रपूर्वस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति । प्रस्तीतः प्रस्तीतवान् । सम्प्रसारणे कृते यणवत्त्वं विहितमिति निष्ठानत्वं न भवति । प्रस्त्योऽन्यतरस्यामिति ॥ पक्षे मकारः क्रियते । प्रस्तीमः । प्रस्तीमवान् । प्रपूर्वस्येति किम् ? संस्त्यानः । संस्त्यानवान् । प्रस्त्य इत्येव सिद्धे पूर्वग्रहणमिहापि यथा स्यात्—प्रसंस्तीतः । प्रसंस्तीतवान् । तत्कथं ? प्रपूर्वस्येति षष्ठ्यर्थे बहुव्रीहिः । प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य स प्रपूर्वस्तदवयवस्य स्त्य इति व्यधिकरणे षष्ठ्यौ, तत्र प्रसंस्तीत इत्यत्रापि प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति ॥

## द्रवमूर्त्तिस्पर्शयोः श्यः ॥ २४ ॥

द्रवमूर्त्तौ द्रवकाठिन्ये स्पर्शे वर्त्तमानस्य श्यैङ् गतावित्यस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति । शीनं घृतं, शीना वसा, शीनं मेदः । द्रवावस्थाया काठिन्यं गतमित्यर्थः । श्योऽस्पर्शे इति निष्ठानत्वम् । स्पर्शे शीतं वर्त्तते । शीतो वायुः । शीतमुदकम् । गुणमात्रे तद्वति चास्य शीतशब्दस्य वृत्तिर्द्रष्टव्या । द्रवमूर्त्तिस्पर्शयोरिति किम् ? संश्यानो वृश्चिकः ।

## प्रतेश्च ॥ २५ ॥

श्य इति वर्त्तते । प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः सम्प्रसारणं भवति । प्रतिशीनः । प्रतिशीनवान् । द्रवमूर्त्तिस्पर्शाभ्यामन्यत्रापि यथा स्यादिति सूत्रारम्भः ।

## विभाषाऽभ्यवपूर्वस्य ॥ २६ ॥

श्य इति वर्त्तते । अभि अव इत्येवं पूर्वस्य श्यायतेर्निष्ठायां विभाषा सम्प्रसारणं भवति । अभिशीनम् । अभिश्यानम् । अवशीनम् । अवश्यानम् । द्रवमूर्त्तिस्पर्शविषयायामपि विकल्पो भवति । अभिशीनं घृतम् । अभिश्यानं घृतम् । अवशीनं मेदः । अवश्यानं मेदः । अभिशीतो वायुः । अभिश्यानः । अवशीतमुदकम् । अवश्यानमुदकम् । सेयमुभयत्र विभाषा द्रष्टव्या । पूर्वग्रहणस्य च प्रयोजनं समभिश्यानम् । समवश्यानमित्यत्र मा भूदिति केचिदाचक्षते । न किलायमभ्यवपूर्वः समुदाय इति । योऽप्यभ्यवपूर्वः समुदायस्तदाश्रयो विकल्पः कस्मान्न भवति तस्मादत्र भवितव्यमेव । यदि तु नेष्यते ततो यत्नान्तरमास्थेयमस्माद्विभाषा विज्ञानाद् व्यवस्थेयम् । पूर्वग्रहणस्य चान्यत् प्रयोजनं वक्तव्यम्—अभिसंशीनमभिसंश्यानं वा । अवसंशीनमवसंश्यानं वा, अत्र विकल्पो यथा स्याद् इति पूर्वग्रहणं स्त्य प्रपूर्वस्येतिवत् ।

## शृतं पाके ॥ २७ ॥

विभाषेत्यनुवर्त्तते । श्रा पाके इत्येतस्य धातोर्ण्यन्तस्याण्यन्तस्य च पाकेऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभाषा । शृतं क्षीरम् । शृतं हविः । व्यवस्थित

विभाषा चेयं, तेन क्षीरहविषोर्नित्यं शृभावो भवति। अन्यत्र न भवति—श्रापिता यवागूः, श्रपिता यवागूरिति। यदापि वाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते तदापि नेष्यते—श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति। श्रातिरयमकर्मकः। कर्मकर्तृविषयस्य पचेरर्थे वर्तते स ण्यन्तः प्राकृतं पच्यर्थमाह। तदत्र द्वयोरपि शृतमितीष्यते। शृतं क्षीरं स्वयमेव। शृतं क्षीरं देवदत्तेन। पाकग्रहणं निपातनविषयप्रदर्शनार्थं तेन क्षीरहविषोरेव ॥

## प्यायः पी ॥ २८ ॥

विभाषेत्येव। ओप्यायी वृद्धावित्यस्य धातोर्निष्ठायां विभाषा पीत्ययमादेशो भवति। पीनं मुखम्। पीनौ बाहू। पीनमुरः। इयमपि व्यवस्थितविभाषैव। तेनानुपसर्गस्य नित्यं भवति, सोपसर्गस्य तु नैव भवति। आप्यानश्चन्द्रमा। अन्धूधसोर्भवत्येव। आपीनोऽन्धुः, आपीनमूध इति ॥

## लिड्यङोश्च ॥ २९ ॥

विभाषेति निवृत्तम्। प्यायः पीत्येतदनन्तरेणानुकृष्यते। लिटि यङि च प्यायः पीत्ययमादेशो भवति। आपिप्ये। आपिप्याते। आपिप्यिरे। परत्वात् कृते पुनः प्रसङ्गविज्ञानाद्, द्विर्वचनमेरनेकाच इति यणादेशः। यङि—आपेपीयते आपेपीयन्ते ॥

## विभाषा श्वेः ॥ ३० ॥

लिड्यङोरिति वर्तते, सम्प्रसारणमिति च। लिटि यङि च ... संप्रसारणं भवति। शुशाव। शिश्वाय। शुशुवतुः। शिश्वियतुः। यङि—शोशूयते। शेश्वीयते। तदत्र यङि सम्प्रसारणमप्राप्तं विभाषा विधीयते। लिटि किति यजादित्वात् नित्यं प्राप्तं तत्सर्वत्र विकल्पेन भवतीत्येषोऽत्र विभाषा। यदा च धातोर्न भवति तदा लिड्यभ्यासस्योभयेषामित्यभ्यासस्यापि न भवति ॥

## णौ च संश्चङोः ॥ ३१ ॥

विभाषा श्वेरिति वर्तते। सन्परे चङ्परे च णौ परतः श्वयतेर्धातोर्विभाषा संप्रसारणं भवति। शुशावयिषति। चङि—अशूशवत्। अशिश्वयत्। संप्रसारणं संप्रसारणाश्रयं च बलीयो भवतीति वचनादन्तरङ्गमपि वृद्ध्यादिकं सम्प्रसारणेन बाध्यते। कृते संप्रसारणे वृद्धिरावादेशश्च। तत, ओः पुयण्ज्यपरे इत्येतद्वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्येति स्थानिवद्भावात् शुशब्दो द्विरुच्यते ॥

## ह्वः सम्प्रसारणम् ॥ ३२ ॥

णौ च संश्चङोरिति वर्तते। सन्परे चङ्परे च णौ परतो ह्वः संप्रसारणं भवति जुहावयिषति। जुहावयिषतः। जुहावयिषन्ति। अजूहवत्। अजूहवताम्। ... हवन्। संप्रसारणस्य बलीयस्त्वात्, शाच्छासाह्वाव्यावेपां युगिति प्रागेव यु-

भवति । संप्रसारणमिति वर्त्तमाने पुनः संप्रसारणमित्युक्तं विभाषेत्यस्य निवृत्त्यर्थम् । ह्वः सम्प्रसारणमभ्यस्तस्येत्येकयोगेन सिद्धे पृथग्योगकरणमनभ्यस्तनिमित्तप्रत्ययव्यवधाने संप्रसारणाभावज्ञापनार्थम्—ह्वायकमिच्छति ह्वायकीयति । ह्वायकीयतेः सन् जिह्वायकीयिषति ॥

## अभ्यस्तस्य च ॥ ३३ ॥

ह्व इति वर्त्तते, तदभ्यस्तस्य चेत्यनेन व्यधिकरणम्, अभ्यस्तस्य यो ह्वयतिः, कश्चाभ्यस्तस्य ह्वयतिः, कारणं, तेनाभ्यस्तकारणस्य ह्वयतेः प्रागेवद्विर्वचनात् सम्प्रसारणं भवति । जुहाव । जोहूयते । जुहूषति ॥

## बहुलं छन्दसि ॥ ३४ ॥

ह्वइति वर्त्तते । छन्दसि विषये ह्वयतेर्धातोर्बहुलं संप्रसारणं भवति । इन्द्राग्नी हुवे । देवीं सरस्वतीं हुवे । ह्वेञो लट्यात्मनेपदोत्तमैकवचने । बहुलं छन्दसीति शपो लुकि कृते संप्रसारणमुवङादेशश्च । न च भवति—ह्वयामि मरुतः शिवान् । ह्वयामि विश्वान् देवान् ॥

## चायः की ॥ ३५ ॥

बहुलं छन्दसीति वर्त्तते । चायतेर्धातोश्छन्दसि विषये बहुलं कीत्ययमादेशो भवति । विधुना निचिक्युः । नान्यं चिक्युर्न निचिक्युरन्यम् । लिट्युसि रूपम् । न भवति—अग्निर्ज्योतिर्निचाय्यः ॥

## अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशीर्त्ताः ॥३६॥

छन्दसीति वर्त्तते । अपस्पृधेथामिति—स्पर्द्ध संघर्षे इत्यस्य लङि आथामि द्विर्वचनं रेफस्य संप्रसारणमकारलोपश्च निपातनात् । इन्द्रश्च विष्णो यदपस्पृधेथाम् । अपस्पर्धेथामिति भाषायाम् । अपर आह—स्पर्द्धेरपपूर्वस्य लङ्याथामि सम्प्रसारणमकारलोपश्च निपातनात् । बहुलं छन्दस्यमाङ्योगेपीत्यडागमाभावः । अत्र प्रत्युदाहरणमपास्पर्द्धेथामिति भाषायाम् । आनृचुरानृहुरिति—अर्च्च पूजायाम्, अर्ह पूजायामित्यनयोर्धात्वोर्लिट्युसि सम्प्रसारणमकारलोपश्च निपातनात् । ततो द्विर्वचनमुरदत्वमत आदेरिति दीर्घत्वम् । तस्मान्नुड् द्विहल इति नुडागमः । त्वम्ना अर्कमानृचुः । न वसून्यानृहुः । आनर्चुः, आनर्हुरिति भाषायाम् । चिच्युषे । च्युङ् गतावित्यस्य धातोर्लिटि सेशब्देऽभ्यासस्य सम्प्रसारणमनिट् च निपातनात् । चिच्युषे । चुच्युविष इति भाषायाम् । तित्याज । त्यज हानावित्यस्य धातोर्लिट्यभ्यासस्य संप्रसारणं निपात्यते । तित्याज । तत्याजेति भाषायाम् । श्राता इति । श्रीञ् पाकइत्येतस्यधातोर्निष्ठायां श्राभावः । श्रातास्त इन्द्रसोमाः । श्रितमिति । तस्यैव श्रीणातेर्ह्रस्वत्वम् । सोमो गौरी अधिश्रितः । श्रिता नो गृहाः । अनयोः श्राभावश्रिभावयोर्विषयविभागमिच्छन्ति—सोमेषु बहुषु श्राभाव एव ।

अन्यत्र श्रिभाव इति। सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते—यदि श्रातो जुहोतन। तस्य श्राता इति बहुवचनस्याविवक्षितत्वादुपसंग्रहो द्रष्टव्य। आशीराशीर्त्ते इति। तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठाया च शीरादेशोनिष्ठायाश्च नत्वाभावो निपातनात्। तामाशीरा दुहन्ति। आशीर्त्तं ऊर्ज्जम्। क्षीरैर्मध्यत आशीर्त्तः॥

न संप्रसारणे संप्रसारणम् ॥ ३७ ॥

संप्रसारणे परतः पूर्वस्य यणः संप्रसारण न भवति। व्यध-विद्धः। व्यच-विचितः। व्येञ्-संवीत। एकयोगलक्षणमपि संप्रसारणमत एव वचनात् प्रथम परस्य यणः क्रियते, पूर्वस्य च प्रसक्त प्रतिषिध्यते। संप्रसारणग्रहण विदेशस्थस्यापि संप्रसारणस्य प्रतिषेधो यथा स्यादिति—श्वयुवमघोनामतद्धिते। यूनः। यूना। संप्रसारणग्रहणसामर्थ्यादेव पूर्वस्य प्रतिषेधे वक्तव्ये सवर्णदीर्घत्वमेकादेशो न स्थानिवद्भवति। सति वा स्थानिवत्त्वे व्यवधानमेतावदाश्रयिष्यते। *ऋचि त्रेरु… पदादिलोपश्छन्दसि*। ऋचि परतस्त्रे संप्रसारण भवति, उत्तरपदादिलोपश्च छ… विषये। तिस्र ऋचो यस्मिन् तत् तृच साम। ऋक्पूरब्धूःपथामानक्ष इति समासान्तः। छन्दसीति किम्? त्र्यृच कर्म। *रयेर्मतौ बहुलम्*। र… छन्दसि विषये मतौ परतो बहुलं संप्रसारणं भवति। आ रेवानेतु नो विशः। न च भवति-रयिमान् पुष्टिवर्द्धनः॥

लिटि वयो यः ॥ ३८ ॥

न संप्रसारणमित्यनुवर्त्तते। लिटि परतो वयो यकारस्य संप्रसारणं न भवति। उवाय। ऊयतुः। ऊयु। लिड्ग्रहणमुत्तरार्थम्॥

वश्चास्यान्यतरस्यां किति ॥ ३९ ॥

अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवत्यन्यतरस्याम्। ऊवतु। ऊवु। ऊयतुः। ऊयु। कितीति किम्? (१) उवाय। उवयिथ॥

वेञः ॥ ४० ॥

लिटित्यनुवर्त्तते। वेञ् तन्तुसन्ताने इत्यस्य धातोर्लिटि परतः संप्रसारणं न भवति। ववौ। ववतु। ववु। किति यजादित्वाद्धातोः प्राप्तमकित्यपि लिट्यभ्यासस्योभयेषामित्यभ्यासस्यात उभय प्रतिषिध्यते॥

ल्यपि च ॥ ४१ ॥

वेञ इत्यनुवर्त्तते। ल्यपि च परतो वेञः संप्रसारणं न भवति। प्रवाय। उपवाय। पृथग्योगकरणमुत्तरार्थम्॥

ज्यश्च ॥ ४२ ॥

---

(१) उवाच। उवचिथ। इति प्राचीनपुस्तके पाठ स न युक्तः।

ल्यपीत्येव। ज्या वयोहानावित्यस्य धातोर्ल्यपि परतः सम्प्रसारणं न भवति। प्रज्याय। उपज्याय॥

## व्यश्च ॥ ४३ ॥

ल्यपीत्येव। व्येञ् संवरण इत्येतस्य धातोर्ल्यपि परतः सम्प्रसारणं न भवति। प्रव्याय। योगविभाग उत्तरार्थः॥

## विभाषा परेः ॥ ४४ ॥

ल्यपि च व्यश्चेत्यनुवर्तते। परेरुत्तरस्य व्येञित्येतस्य धातोर्ल्यपि परतो विभाषा सम्प्रसारणं न भवति। परिवीय यूपम्। परिव्याय। सम्प्रसारणे कृते परपूर्वत्वे च ह्रस्वस्येति तुक् प्राप्नोति। स, हल इति दीर्घत्वेन परत्वाद् बाध्यते॥

## आदेच उपदेशेऽशिति ॥ ४५ ॥

धातोरिति वर्तते। एजन्तो यो धातुरुपदेशे तस्याकारादेशो भवति, शिति तु प्रत्यये न भवति। ग्लै-ग्लाता। ग्लातुम्। ग्लातव्यम्। शो-निशातुम्। निशातव्यम्। एच इति किम्? कर्ता। हर्ता। उपदेश इति किम्? चेता। स्तोता। अशिति किम्? ग्लायति। म्लायति। कथं जग्ले, मग्ले? नैव विज्ञायते शकार इत्यस्य लोप शिदिति, किं तर्हि श एव इत् शित्, तत्र यस्मिन् विधिस्तदादावल्ग्रहण इति शिदादौ प्रत्यये प्रतिषेधः। एत् दाकारान्तो भवति। अशितीति च प्रसज्यप्रतिषेधोऽयम्,। तेनैतदात्वमनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर्भवतीति-सुग्लः सुम्लः इति। आतश्चोपसर्ग इति कप्रत्ययः। सुग्लान, सुम्लान इत्यादौ युजित्येवमादि सिद्धं भवतीति। आकारस्यैव नित्यं स्फायतेरिति यावत्॥

## न व्यो लिटि ॥ ४६ ॥

व्येञ् इत्येतस्य धातोर्लिटि परत आकारादेशो न भवति। संविव्याय। संविव्यियि। लिट्यभ्यासस्योभयेषामित्यभ्यासस्य सम्प्रसारणम्। यस्यचोव्यितीति वृद्धिः॥

## स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥

आदेच इति वर्तते। स्फुर स्फुल चलन इत्येतयोर्धात्वोरेच स्थाने घञि परत आकारादेशो भवति। विस्फार। विस्फाल। विष्फार। विष्फाल। स्फुरतिस्फुलत्यो र्निर्निविभ्यइति वा षत्वम्॥

## क्रीङ्जीनां णौ ॥ ४८ ॥

डुक्रीञ् द्रव्यविनिमये, इङ् अध्ययने, जि जये इत्येतेषां धातूनामेच स्थाने णौ परत आकारादेशो भवति। क्रापयति। अध्यापयति। जापयति॥

## सिध्यतेरपारलौकिके ॥ ४९ ॥

णाविति वर्तते। षिधु हिंसासंराद्ध्योरित्यस्य धातोरपारलौकिकेऽर्थे वर्तमानस्यैच

स्थाने णौ परत आकारादेशो भवति । अन्नं साधयति । ग्रामं साधयति । अपारलौकिक इति किम् ? तपस्तापसं सेधयति । स्वान्येवैनं कर्माणि सेधयन्ति । अत्र हि सिध्यतिः पारलौकिके ज्ञानविशेषे वर्त्तते । तापसः सिध्यति । ज्ञानविशेषमासादयति । तं तपः प्रयुङ्क्ते । स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षणमुपसंहरन् परलोकप्रयोजनो भवति । इह कस्मान्न भवति—अन्नं साधयति, ब्राह्मणेभ्यो दास्यामीति ? सिधेरत्रार्थो निष्पत्तिः । तस्याः प्रयोजनमन्नम् । तस्य यद्दानं तत्पारलौकिकम्, न पुनः सिद्धिरेवेति न आत्वं पर्युदस्यते । साक्षात्परलोकप्रयोजने च सिध्यर्थे कृतावकाशं वचनमेवं विषय नावगाहते । सिध्यतेरिति श्यना निर्देशः, षिधु गत्यामित्यस्यस्य भौवादिकस्य निवृत्त्यर्थः ॥

मीनातिमिनोतिदीङां ल्यपि च ॥ ५० ॥

आदेच उपदेश इति वर्त्तते । मीञ् हिंसायाम्, डुमिञ् प्रक्षेपणे, दीङ् क्षये, इत्येतेषां धातूनां ल्यपि विषये चकारादेचश्च विषये उपदेश एव प्राक्प्रत्ययोत्पत्तेरलोऽन्त्यस्य स्थाने आकारादेशो भवति । प्रमाता । प्रमातव्यम् । प्रमातुम् । प्रमाय । निमाता । निमातुम् । निमातव्यम् । निमाय । उपदाता । उपदातव्यम् । उपदातुम् । उपदाय । उपदेश एवात्वविधानादिवर्णान्तलक्षणः प्रत्ययो न भवति । आकारान्तलक्षणश्च भवति—उपदायो वर्त्तते । ईषदुपदानमिति खल्युचौ भवतः ॥

विभाषा लीयतेः ॥ ५१ ॥

ल्यपीति वर्त्तते, आदेच उपदेश इति च । लीङ् श्लेषण इति दिवादिः, ली श्लेषण इति क्र्यादिस्तयोरुभयोरपि यका निर्देशः स्मर्यते । लीयतेर्लीनातेश्चापि च एचश्च विषये उपदेश एवालोऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति । विलाता । विलातुम् । विलातव्यम् । विलाय । विलेता । विलेतुम् । विलेतव्यम् । विलीय । ॐमिनिमीलियां खलचोः प्रतिषेधो वक्तव्यः॥ ईषन्निमयः । निमयः । ईषत्प्रमयः । प्रमयो वर्त्तते । ईषदुपदयः । विलयो वर्त्तते । अत्र लियो व्यवस्थितविभाषाविज्ञानात् सिद्धम् । एवं च प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्वं भवति । कस्त्वामुल्लापयते । श्येनो वर्त्तिकामुल्लापयते ॥

खिदेश्छन्दसि ॥ ५२ ॥

विभाषेति वर्त्तते । खिद दैन्य इत्यस्य धातोरेचः स्थाने छन्दसि विषये विभाषा आकार आदेशो भवति । चित्तं चिखाद । चित्तं चिखेद । छन्दसीति किम् ? चित्तं खेदयति ।

अपगुरो णमुलि ॥ ५३ ॥

गुरी उद्यमन इत्यस्य धातोरपपूर्वस्य णमुलि परत एचः स्थाने विभाषा आकार आदेशो भवति । अपगारमपगारम् । अपगोरमपगोरम् । आभीक्ष्ण्ये णमुल्चेति णमुल् । अस्यपगारं युध्यन्ते । अस्यपगोरं युध्यन्त इत्यत्र द्वितीयायां चेति णमुल् ॥

चिस्फुरोर्णौ ॥ ५४ ॥

चिञ् स्फुर इत्येतयोर्द्वयोर्णौ परतः एच स्थाने विभाषा आकारादेशो भवति। चापयति चाययति। स्फारयति। स्फोरयति ॥

प्रजने वीयतेः ॥ ५५ ॥

णाविति वर्त्तते। वी गतिप्रजनकान्त्यसनखादनेषु इत्यस्य धातोः प्रजने वर्त्तमानस्य णौ परतो विभाषा आकारादेशो भवति। पुरोवातो गाः प्रवापयति। पुरोवातो गाः प्रवाययति, गर्भं ग्राहयतीत्यर्थः। प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम् ॥

बिभेतेर्हेतुभये ॥ ५६ ॥

णाविति वर्त्तते, विभाषेति च। हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकस्ततो यद्भयं, स यस्य साक्षाद्धेतुः तद्भयं हेतुभयम्। तत्र वर्त्तमानस्य ञिभी भय इत्यस्य धातोर्णौ परतो विभाषा आकारादेशो भवति। मुण्डो भापयते मुण्डो भीषयते। जटिलो भापयते। जटिलो भीषयते। भीस्म्योर्हेतुभय इत्यात्मनेपदम्। भियो हेतुभये षुक्। स आत्वपक्षे न भवति। लिभियोरीकारप्रश्लेषनिर्देशादीकारान्तस्य भियः षुग्विधीयते। हेतुभय इति किम्? कुञ्चिकयैनं भाययति। अत्र हि कुञ्चिकातो भयं करणान्न हेतोर्वेदवत्तात् ॥

नित्यं स्मयतेः ॥ ५७ ॥

णाविति वर्त्तते, हेतुभय इति च। नित्यग्रहणाद्विभाषेति निवृत्तम्। ष्मिङ् ईषद्धसन इत्यस्य धातोर्हेतुभयेऽर्थे णौ परतो नित्यमाकारादेशो भवति। मुण्डो विस्मापयते। जटिलो विस्मापयते। भय इति किम्? कुञ्चिकयैनं विस्माययति। भयशब्देन हेत्वर्थसामान्यादिह स्मयतेरर्थोऽभिधीयते। न हि मुख्ये भये स्मयतेर्वृत्तिरस्ति ॥

सृजिदृशोर्झल्यमकिति ॥ ५८ ॥

सृज विसर्गे, दृशिर् प्रेक्षणे, इत्येतयोर्द्वयोर्झलादावकिति प्रत्यये परतोऽमागमो भवति। स्रष्टुम्। स्रष्टव्यम्। द्रष्टुम्। द्रष्टव्यम्। लघूपधगुणापवादोऽयममागमः। अस्राक्षीत्। अद्राक्षीत्। सिचि वृद्धिरमि कृते भवति, पूर्वं [redacted] बाध्यते। झलीति किम्? सर्जनम्। दर्शनम्। अकितीति किम्? सृष्टः। दृष्टः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न भवति—रज्जुसृड्भ्या देवदृग्भ्यामिति ॥

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ ५९ ॥

उपदेश इति वर्त्तते, झल्यमकितीति च। उपदेशेऽनुदात्तस्य धातोर्ऋकारोपधस्य झलादावकिति प्रत्यये परतोऽन्यतरस्याममागमो भवति। त्रप्ता। तर्पिता। तर्प्ता। द्रप्ता। दर्प्ता। दर्पिता। तृप प्रीणने दृप हर्षणमोचनयोः, इत्येतौ रधादी धातू तयोरिडागमो रधादिभ्यश्चेति विकल्प्यते। अनुदात्तोपदेश पुनरनर्थ एव। अनुदात्तस्येति किम्? वर्ढा। वर्ढुम्। वर्ढव्यम्। वृहू उद्यमने इत्ययमुदात्तोपदेश ऊदित्वाद्यस्येड्

विकल्प्यते । ऋदुपधस्येति किम् ? भेत्ता । छेत्ता । झलीत्येव । तर्पणम् । दर्पणम् । अकितीत्येव । तृप्तः । दृप्तः ॥

शीर्षश्छन्दसि ॥ ६० ॥

शीर्षन्निति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयमादेशः शिरःशब्दस्य । सोऽपि हि छन्दसि प्रयुज्यत एव । शीर्ष्णो हि तत्र सोमं क्रीतं हरन्ति । यत्ते शीर्ष्णो दौर्भाग्यम् । छन्दसीति किम् ? शिरः ॥

ये च तद्धिते ॥ ६१ ॥

शीर्षन्निति वर्त्तते । आदेशोऽयमिष्यते, स कथम् ? तद्धित इति हि परं निमित्तमुपादीयते स तदनुरूपां प्रकृतिं शिरःशब्दमाक्षिपति । यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति । शीर्षण्यो हि मुख्यो भवति । शीर्षण्यः स्वरः । शिरसि भव इति शरीरावयवाच्चेति यत् । ये चाभावकर्मणोरिति प्रकृतिभावः । तद्धित इति किम् ? शिर इच्छति शिरस्यति । छन्दसि केशेषु । शिरसः शीर्षन्नादेशो वक्तव्यः । शीर्षण्याः केशाः । शिरस्याः केशाः ॥

अचि शीर्षः ॥ ६२ ॥

अजादौ तद्धिते शीर्षशब्द आदेशो भवति । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः (१) बाह्वादिभ्यश्चेति इञ् । स्थूलशिरस इदं स्थौलशीर्षम् । शीर्षन्भावे हि, अचीति प्रकृतिभावः स्यात् । हास्तिशीर्षिशब्दात् स्त्रियामणिञोरनार्षयोः ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन ग्रहणात्, शीर्षन्नादेशः प्राप्नोति । तत्र प्रकृतिभावे सति हास्तिशीर्षण्येत्यनिष्टं रूपं स्यात् । इष्यते तु हास्तिशीर्ष्येति । तत्कथम् ? कर्तव्योऽत्र यत्नः । अणिञन्ताद् वा परः प्रत्ययः ष्यङाश्रयितव्यस्तत्र, यस्येतिलोपस्य स्थानिवद्भावाद् व्यवधानम् ॥

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ॥ ६३ ॥

पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष यकृत् शकृत् उदक आसन इत्येषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद् दत् नस् मास् हृत् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्येते आदेशा यथासंख्यं भवन्ति । पद्–निपदश्चतुरो जहि । पदा वर्त्तय गोदुहम् । पादस्य पत् । दत्–या दतो धावति तस्यै श्यावदन् । नस्–सूकरस्त्वा खनन्नसा । मास्–मासि त्वा पश्यामि चक्षुषा । हृद्–हृदा पूतेन मनसा जातवेदसम् । निश्–अमावास्यायां निशि यजेत । असन्–असिक्नोऽस्नावरोहति । यूषन्–या पात्राणि यूष्ण आसेचनानि । दोषन्–यत्ते दोष्णो दौर्भाग्यम् । यकन्–यक्नोऽवद्यति । शकन्–शक्नोऽवद्यति । उदन्–उद्नो दिव्यस्य नावा ते । आसन्–आसनि किं लभे मधूनि । शस्प्रभृतिष्विति

(१) पैलशीर्षिरित्यधिकं पुस्तकान्तरे ।

किम् ? पादौ ते प्रतिपीड्यौ, नासिके ते कुरु । केचिदत्र छन्दसीत्यनुवर्त्तयन्ति । अपरे पुनरविशेषेणेच्छन्ति, तथाहि–भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते ॥

ध्यायामघुणगात्रस्य पद्भ्यामुद्वर्तितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥

इत्येवमादयः । अन्यतरस्यामित्येतदनुवर्तयन्ति । तेन पादादयोपि प्रयुज्यन्ते । दारप्रभृतिष्विति प्रकारे प्रभृतिशब्द इति । शाला दोषणी इत्यत्रापि दोषन्नादेशो भवति । ॐपदादिषु मांस्पृत्स्नूनामुपसंख्यानम्ॐ । मास पृतना सानु इत्येतेषां स्थाने यथासंख्यं मांस् पृत् स्नु इत्येते आदेशा भवन्ति । मांस्पचन्या उखायाः । मांसपचन्या इति प्राप्ते । पृत्सु मर्त्यम् । पृतनासु मर्त्यमिति प्राप्ते । न ते दिवोन पृथिव्या अधि स्नुषु । अधि सानुष्विति प्राप्ते । ॐनस् नासिकाया यत्तस्क्षुद्रेषुॐ । नासिकाया नस्भावो वक्तव्यो यत् तस् क्षुद्र इत्येतेषु परतः । नस्यम् । नस्तः । नःक्षुद्रः । ॐयस्ति वर्णनगरयोर्नेति वक्तव्यम्ॐ । नासिक्यो वर्णः । नासिक्यं नगरम् ॥

## धात्वादेः षः सः ॥ ६४ ॥

धातोरादेः षकारस्य स्थाने सकारादेशो भवति । षह-सहते । षिच-सिञ्चति । धातुग्रहणं किम् ? षोडश । षडिकः । षण्डः । आदेरिति किम् ? कर्षति । कृषति । आदेशप्रत्यययोरित्यत्र षत्वप्रत्यर्थं षादयो धातवः केचिदुपदिष्टाः । के पुनस्ते, ये तथा पठ्यन्ते । अथवा लक्षणं क्रियते । अजन्त्यपराः सादयः षोपदेशाः स्मिस्विदिस्वदिस्विञ्जिस्वपितयश्च । ( १ ) मकारवकारयोरनन्त्यत्वान्न भवतीति अप्राप्ते विधानम् । सृपिसृजिस्तृस्त्यासेकृसवर्जम् । ॐसुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः ॐ । षोडीयति । षण्डीयति । ष्वष्कते । ष्ठिवु इत्यस्य द्वितीयस्थकारष्ठकारः इष्यते । तेन तेष्ठीव्यते टेष्ठीव्यते इति चाभ्यासरूपं द्विधा भवति ॥

## णो नः ॥ ६५ ॥

धातोरादेरित्यनुवर्त्तते । धातोरादेर्णकारस्य नकार आदेशो भवति । णीञ् । नयति । णम । नमति । णह । नह्यति । धात्वादेरित्येव । अणति । सुब्धातोरयमपि नेष्यते । णकारमिच्छति, णकारीयति । उपसर्गादसमासेऽपि णोपदेशस्येत्यत्र णत्वविधेर्थ्यवस्थार्थं णादयो धातवः केचिदुपदिश्यन्ते । केपुनस्ते । ये तथा पठ्यन्ते । अथवा लक्षणं क्रियते । सर्वे णादयो णोपदेशाः । नृतन्दिनर्दिनक्कनाटिनाथृ- नाधृवर्जम् ॥

## लोपो व्योर्वलि ॥ ६६ ॥

धातोरिति प्रकृतं यत् तद् धात्वादेरिति पुनर्धातुग्रहणान्निवृत्तम् । तेन धातोर्धातोश्च वकारयकारयोर्वलि परतो लोपो भवति । दिव । दिदिवान् दिदिवांसौ ।

( १ ) मकारवकारयोरित्यारभ्य विधान मित्यन्तः पाठो बहुषु पुस्तकेषु नास्ति ।

दिदिवास । ऊयी-ऊतम् । वनूयी-वनूतम् । गोधाया ढ्रक्-गौधेर । पचेरन् । यजेरन् । चकारस्य-जीवेरदानुक्-जीरदानु । स्रिवे-आस्रेमाणम् । उणादयो बहुलमिति बहुलवचनाच्छ्वो शूडनुनासिके चेति ऊठ् न भवति । वलीति किम्? ऊय्यते, वनूय्यते । पूर्वं लोपग्रहण किम्? वेरपृक्तलोपात् पूर्वं वलिलोपो यथा स्यात्-कण्डूयते क्विप-कण्डू । लोलूयते-लोलू । वश्चादीनामुपदेशसामर्थ्याद् वलि लोपो न भवति । वृश्चति वव्रश्चेत्यत्रापि हि सम्प्रसारणहला द लोपयोर्बहिरङ्गत्वाद् प्राप्नोति ॥

## वेरपृक्तस्य ॥ ६७ ॥

लोप इति वर्त्तते । वेरिति क्विबादयो विशेषानुबन्धानुत्सृज्य सामान्येन गृह्यन्ते । वेरपृक्तस्य लोपो भवति । ब्रह्मभ्रूणवृत्रेषु क्विप-ब्रह्महा । भ्रूणहा । स्पृशोऽनुदके क्विन्-घृतस्पृक् । तैलस्पृक् । भजो ण्वि-अर्द्धभाक् । पादभाक् । तुरीयभाक् । अपृक्तस्येति किम्? दृभ्या विन्-दर्वि । कॄगॄशॄवृजागृभ्यः क्विः-जागृवि ॥

## हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ॥ ६८ ॥

लोप इति वर्त्तते । तदिह लौकिकेनार्थेनार्थवत् कर्मसाधन द्रष्टव्यम्-लुप्यते इति लोप । हलन्तात् ङ्यन्तादाबन्ताच्च दीर्घात्पर सु ति सि इत्येतदपृक्तं हल् लुप्यते । हलन्तात् सुलोप-राजा । तक्षा । उखास्रत् । पर्णध्वत् । ङ्यन्तात्-कुमारी । गौरी । शार्ङ्गरवी । आबन्तात्-खट्वा । बहुराजा । कारीषगन्ध्या । हलन्तादेव तिलोप सिलोपश्च । तत्र तिलोपस्तावत्-अबिभर्भवान् । भृञो लङि तिपि श्लौ भृञामित् इत्यभ्यासस्येत्वम् । अजागर्भवान् । सिलोप-अभिनोऽत्र, अच्छिनोऽत्र । रुत्वस्य रेफ । हल्ङ्याब्भ्य इति किम्? ग्रामणी । सेनानी । दीर्घादिति किम्? निष्कौशाम्बि । अतिखट्व । सुतिसीति किम्? अभैत्सीत् । तिपा सहचरितस्य सिशब्दस्य ग्रहणात्सिचो ग्रहण नास्ति । अपृक्तमिति किम्? भिनत्ति । छिनत्ति (१) । हलिति किम्? बिभेद । चिच्छेद । अथ किमर्थं हलन्तात् सुतिसीनां लोपो विधीयते संयोगान्तलोपेनैव सिद्धम्? न सिद्ध्यति । राजा तक्षेत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न स्यात् । उखास्रत् पर्णध्वदित्यत्रापदान्तत्वाद्दत्व च न स्यात् । अभिनोऽत्रेत्यत्रातो रोरप्लुतादप्लुते इत्युत्व न स्यात् । अबिभर्भवानित्यत्र तु रात्सस्येति नियमाल्लोप एव न स्यात् ॥

संयोगान्तस्य लोपे हि नलोपादिर्न सिद्ध्यति ॥
रात्तु तत्रैव लोप स्याद्धलस्तस्माद्विधीयते ॥

## एङ्ह्रस्वात् सम्बुद्धेः ॥ ६९ ॥

लोप इति वर्त्तते, हलिति च । अपृक्तमिति नाधिक्रियते । तथा च पूर्वसूत्रे

(१) बिभर्तीत्यपि कमेकस्मिन्पुस्तके ।

पुनरपृक्तग्रहणं कृतम्। एङन्तात्प्रातिपदिकाद् ह्रस्वान्ताच्च परो हल्लुप्यते स चेत् सम्बुद्धेर्भवति। एङन्तात्–हे अग्ने। हे वायो। ह्रस्वान्तात् हे देवदत्त। हे नदि। हे वधु। हे कुण्ड। कुण्डशब्दादतोऽमित्यम्। अमि पूर्व इति पूर्वत्वे कृते हल्मात्रस्य मकारस्य लोपः। हे कतरदित्यत्र डिद्वयमड्डादेशस्तत्र टिलोपे सति ह्रस्वाभावान्नास्ति संबुद्धिलोपः। एङ्ग्रहणं क्रियते संबुद्धिगुणबलीयस्त्वात्॥

शेश्छन्दसि बहुलम्॥ ७०॥

शि इत्येतस्य बहुलं छन्दसि विषये लोपो भवति। या क्षेत्रा। या वना। यानि क्षेत्राणि। यानि वनानि॥

ह्रस्वस्य पिति कृति तुक्॥ ७१॥

पिति कृति परतो ह्रस्वस्य तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य। ह्रस्वस्येति किम्? ग्लाय्य। ग्रामणीः। पितीति किम्? कृतम्। कृतीति किम्? पटुतरः। पटुतमः। ग्रामणिकुलमित्यत्र ह्रस्वस्य बहिरङ्गस्यासिद्धत्वात् तुन्न भवति॥

संहितायाम्॥ ७२॥

अधिकारोऽयमनुदात्तं पदमेकवर्जमिति यावत्। प्रागेतस्मात् सूत्रादित उत्तर यदनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम्। वक्ष्यति–इको यणचि–दध्यत्र। मध्वत्र। संहितायामिति किम्? दधि अत्र। मधु अत्र॥

छे च॥ ७३॥

ह्रस्वस्य तुगिति वर्त्तते। छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति। इच्छति, गच्छ त। ह्रस्व एवात्रागमी, नावयवः। तेन चिच्छिदतु इच्छि-दुरित्यत्र तुगभ्यासस्य ग्रहणेन न गृह्यत इति हलादिः शेषेण न निवर्त्यते। नावयवावयवः समुदायावयवो भवतीति॥

आङ्माङोश्च॥ ७४॥

तुगित्यनुवर्त्तते, छ इति च। आङो ङित ईषदादिषु चतुर्ष्वर्थेषु वर्त्तमानस्य माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति। पदान्ताद्वेति विकल्पे प्राप्ते नित्यं तुगागमो भवति। ईषदर्थे–ईषच्छाया आच्छाया। क्रियायोगे–आच्छादयति। मर्यादाभिविध्योः–आच्छायायाः। आच्छायम्। माङः खल्वपि–माच्छैत्सीद्। माच्छिदत्। ङिद्विशिष्टग्रहणं किम्? आछाया। आच्छाया। प्रमाछन्दः। प्रमाच्छन्दः॥

दीर्घात्॥ ७५॥

छे तुगिति वर्त्तते। दीर्घात्परो यश्छकारस्तस्मिन् पूर्वस्य तस्यैव दीर्घस्य तुगागमो भवति। ह्रीच्छति। म्लेच्छति। अपचाच्छायते। विचाच्छायते॥

पदान्ताद्वा ॥ ७६ ॥

दीर्घाच्छे तुगिति वर्त्तते । पदान्ताद्दीर्घात्परो यश्छकारस्तस्मिन् पूर्वस्य तस्यैव दीर्घस्य पूर्वेण नित्यं प्राप्तो वा तुगागमो भवति । कुटीच्छाया । कुटीछाया । कुवलीच्छाया । कुवलीछाया । *विश्वजनादीनां छन्दसि वा तुगागमो भवतीति वक्तव्यम्* । विश्वजनच्छत्रम् । विश्वजनछत्रम् । नच्छायां कुरवोपराम् । नछायां कुरवोपराम् ॥

इको यणचि ॥ ७७ ॥

अचि परत इको यणादेशो भवति । दध्यत्र । मध्वत्र । कर्त्रर्थम् । हर्त्रर्थम् । लाकृतिः । *इकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थं यणादेशो वक्तव्य* । भोऽ३ इ इन्द्रम् , भोऽ३ यिन्द्रम् । अचीति चायमधिकारः, सम्प्रसारणाच्चेति यावत् ॥

एचोऽयवायावः ॥ ७८ ॥

एचः स्थानेऽचि परतोऽय् अव् आय् आव् इत्येते आदेशा यथासंख्य भवन्ति । चयनम् । लवनम् । चायकः । लावकः । रयेते । भ्ययेते । यावव[illegible] ॥

वान्तो यि प्रत्यये ॥ ७९ ॥

योऽयमेचः स्थाने वान्तादेश ओकारस्य अव् औकारस्याव् स यकारादौ प्रत्यये परतो भवति । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । पिचव्यः कार्पासः । नाव्यं ह्रदः । वान्त इति किम् ? राय मच्छति रैयति । यीति किम् ? गोभ्याम् । नौभ्याम् प्रत्यय इति किम् ? गोयानम् । नौयानम् । *गोर्यूतौ छन्दसि* । गोशब्दस्य यूते परतश्छन्दसि विषये वान्तादेशो वक्तव्यः । आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् छन्दसीति किम् ? गोयूतिः । *अध्वपरिमाणे च* । गोर्यूतौ परतो वान्तादेशो वक्तव्यः । गव्यूतिमात्रमध्वानं गतः ॥

धातोस्तन्निमित्तस्यैव ॥ ८० ॥

एच इति वर्त्तते, वान्तो यि प्रत्यय इति च । धातोर्य एच् तन्निमित्तो यकारादि प्रत्ययनिमित्तस्तस्य यकारादौ प्रत्यये परतो वान्तादेशो भवति । लव्यम् । पव्यम् अवश्यलाव्यम् । अवश्यपाव्यम् । धातोरिति किम् ? प्रातिपदिकस्य नियमो मा भूत् । तत्र को दोषः ? बाभ्रव्य इत्यत्रैव स्याद्, इह न स्याद्, गव्य नाव्यमिति तन्निमित्तस्येति किम् ? अतन्निमित्तस्य मा भूत्–ओयते । औयत । लौयमानिः पौयमानिः । अत इञ् । एवकारकरणं किम् ? धात्ववधारणं यथा स्यात् तन्निमित्तावधारणं मा भूदिति । तन्निमित्तस्य हि धातोश्चाधातोश्च भवति–बाभ्रव्यः । अवश्यलाव्यम् । लव्यम् ॥

क्षय्यजय्यौ शक्यार्थे ॥ ८१ ॥

क्षि जि इत्येतयोर्धात्वोर्यति प्रत्यये परतः शक्यार्थे गम्यमाने एकारस्यायादेशं

निपात्यते । शक्यः क्षेतुं, क्षय्यः । शक्यो जेतुं, जय्यः । शक्यार्थे इति किम् ? क्षेयं पापम् । जेयो वृषलः ॥

क्रय्यस्तदर्थे ॥ ८२ ॥

क्रीणातेर्धातोस्तदर्थे क्रयार्थे यत्तस्मिन्नभिधेये यति प्रत्यये परतोऽयादेशो निपात्यते । क्रय्यो गौः । क्रय्यः कम्बलः । क्रयार्थं यः प्रसारितः स उच्यते । तदर्थे इति किम् ? क्रेयं नो धान्यं, न चास्ति क्रय्यम् ॥

भय्यप्रवय्ये च च्छन्दसि ॥ ८३ ॥

बिभेतेर्धातोः प्रपूर्वस्य च वी इत्येतस्य यति प्रत्यये परतश्छन्दसि विषयेऽयादेशो निपात्यते । भय्यं किलासीत् । वत्सतरी प्रवय्या । भय्येति कृत्यल्युटो बहुलमित्यपादाने यत् प्रत्ययः । बिभेत्यस्मादिति भय्यम् । प्रवय्या इति स्त्रियामेव निपातनम् । अन्यत्र प्रवेयमित्येव भवति । छन्दसीति किम् ? भेयम् । प्रवेयम् । *हृदय्या आप उपसंख्यानम्* । हृदय्या आपः । हृदे भवा, भवे छन्दसीति यत्प्रत्ययः ॥

एकः पूर्वपरयोः ॥ ८४ ॥

अधिकारोऽयम् । ख्यत्यात् परस्येति प्रागेतस्मात् सूत्रादित उत्तरं यद्वक्ष्यामस्तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवतीत्येतद्वेदितव्यम् । वक्ष्यति, आद्गुण इति । तत्रापि पूर्वस्यावर्णात् परस्य स्थाने एको गुणो भवति । खट्वेन्द्रः । मालेन्द्रः । पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम् । एकैकस्यैव हि स्यात् । नोभे सप्तमीपञ्चम्यौ युगपत् प्रकल्पिके भवत इति । एकग्रहणं पृथगादेशनिवृत्त्यर्थं स्थानिभेदाद्धि भिन्नादिषु नत्ववद् द्वावादेशौ स्याताम् ॥

अन्तादिवच्च ॥ ८५ ॥

एक इति वर्तते, पूर्वपरयोरिति च । एकः पूर्वपरयोरिति योऽयमेकादेशो विधीयते स पूर्वस्यान्तवद्भवति, परस्यादिवद्भवति यथा तस्यान्त आदिर्वा तदन्तर्भूतस्तद्ग्रहणेन गृह्यते तद्वदेकादेशोऽपि तद्ग्रहणेन गृह्यत इत्येषोऽतिदेशार्थः । ब्रह्मबन्धूरित्यत्र ब्रह्मबन्धिवति प्रातिपदिकम्, ऊङित्यप्रातिपदिकं, तयोः प्रातिपदिकाप्रातिपदिकयोर्य एकादेशः स प्रातिपदिकस्यान्तवद्भवति । यथा शक्यते कर्तुं ङ्याप्प्रातिपदिकादिति स्वादिविधिः । वृक्षावित्यत्र सुबौकारः, असुबकारः, तयोः सुबसुपोरेकादेशः सुप आदिवद्भवति । यथा शक्यते वक्तुं सुबन्तं पदमिति । वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते, तथाच खट्वाभिरित्यत्रान्तवद्भावाभावादतो भिस् ऐसिति न भवति । ह्वयतेर्जुहावेति सम्प्रसारणपूर्वत्वस्यादिवद्भावाभावादात औ णल इति न भवति । अस्यै अश्वः, अस्या अश्व इति वृद्धिरेचीति वृद्धिरेङः पदान्तादतीत्यत्र विधावादिवन्न भवति । पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्त्यते, तत्राव-

यवयोरानुमानिकं स्थानित्वमिति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तमित्यन्तादिवद्भावो विधीयते ॥

## षत्वतुकोरसिद्धः ॥ ८६ ॥

षत्वे तुकि च कर्तव्ये एकादेशोऽसिद्धो भवति, सिद्धकार्यं न करोतीत्यर्थः। अधिकारवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च। कोऽसिचदित्यत्र ... पदान्तादतीत्येकादेशस्य पर प्रत्यादिवत्त्वादपदादेरिण उत्तरस्यादेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान्न भवति। कोऽस्य, योऽस्य, कोऽस्मै, योऽस्मै इत्येकादेशस्यासिद्धत्वादिण इति षत्वं न भवति। तुग्विधौ, अधीत्य ... प्रेत्य ... सिद्धत्वाद्, ह्रस्वस्य पिति कृति तुगिति तुग्भवति। *संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः* संप्रसारणे-प्रवृहृषु। वरिवीषु। सम्प्रसारणपूर्वत्वस्यासिद्धत्वात् षत्वं न प्राप्नोति ङौ-वृक्षेच्छत्रम्। वृक्षे छत्रम्। ङटि-अपचेच्छत्रम्। अपचे छत्रम्। ... सिद्धत्वाद् ह्रस्वलक्षणो नित्योऽत्र तुक् प्राप्नोति, दीर्घात् पदान्ताद्वेति विकल्प इष्यते ॥

## आद् गुणः ॥ ८७ ॥

अचीत्यनुवर्त्तते। अवर्णात् परो योऽच् अचि च पूर्वो योऽवर्णस्तयोः पूर्वपरयोरवर्णाचोः स्थाने एको गुण आदेशो भवति। तवेदम्। खट्वेन्द्रः। मालेन्द्रः। तवेहते। खट्वेहते। तवोदकम्। खट्वोदकम्। तवर्श्यः। खट्वर्श्यः। तवल्कारः। खट्वल्कारः। लृकारस्य स्थाने योऽण् तस्य लपरत्वमिष्यते ॥

## वृद्धिरेचि ॥ ८८ ॥

आदिति वर्त्तते। अवर्णात् परो य एच् एचि च पूर्वो योऽवर्णस्तयोः पूर्व... रैचोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणस्यापवादः। ब्रह्मैडका। खट्वैडका ब्रह्मैतिकायनः। खट्वैतिकायनः। ब्रह्मौदनः। खट्वौदनः। ब्रह्मौपगवः। खट्वौपगवः

## एत्येधत्यूठ्सु ॥ ८९ ॥

वृद्धिरेचीति वर्त्तते, आदिति च। तदेवदेज्ग्रहणमेतैरेव विशेषणं, न पुनरेधतेरव्यभिचारादूठश्चासम्भवात्। इण् गतावित्येतस्मिन् धातावेचि, एध वृद्धावित्येतस्मिन्, ऊठि च पूर्वं यदवर्णं ततश्च परो योऽच् तयोः पूर्वपरयोरवर्णाचोः स्थाने वृद्धिरेकादेशो भवति। उपैति, उपैषि। उपैमि। उपैधते। प्रैधते। प्रष्ठौहः। प्रष्ठौहा प्रष्ठौहे। ऊठ्याद्गुणापवादो वृद्धिर्विधीयते। एत्येधत्योस्त्वेङिपररूपापवादः। ओमाङोश्चेत्येतत्तु पररूपं न बाध्यते, येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति, पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इति वा। तेनेह न... उप आ इत उपेत इति। एचीत्येव, उप इत, उपेतः। *अक्षादूहिन्यां वृद्धिर्वक्तव्या*

अक्षौहिणी। *स्वादीरेरिण्योर्वृद्धिर्वक्तव्या*(१)। स्वैरम्। स्वैरिणी। *प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या*। प्रौढः। प्रौढिः। प्रैषः। प्रैष्य(२)। ऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या*। सुखेन ऋतः, सुखार्तः। दुःखेन ऋतो, दुःखार्तः। ऋत इति किम्? सुखेन इतः सुखेतः। तृतीयेति किम्? परमर्तः। समास इति किम्? सुखेनर्तः। प्रवत्सतरकम्बलवसनानामृणे वृद्धिर्वक्तव्या*। प्र, प्रार्णम्। वत्सतर, वत्सतरार्णम्। कम्बल, कम्बलार्णम्। वसन, वसनार्णम्। *ऋणदशाभ्यां वृद्धिर्वक्तव्या*। ऋणार्णम्। दशार्णम्॥

आटश्च॥ ९०॥

एचीति निवृत्तम्। अचीत्यनुवर्तते। आटः परो योऽच् अचि च पूर्वो य आट् तयोः पूर्वपरयोराडचोः स्थाने वृद्धिरेकादेशो भवति। ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोत्। औज्जीत्। चकारोऽधिकविधानार्थ—उस्योमाङोश्च पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आऊढा ओढा, तामैच्छत्, औढीयत्॥

उपसर्गादृति धातौ॥ ९१॥

आदित्येव। अवर्णान्तादुपसर्गादृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। प्रार्च्छति। उपार्ध्नोति। उपसर्गादिति किम्? खट्वर्च्छति। मालर्च्छति। प्रगता ऋच्छका अस्माद्देशात्, प्रर्च्छको देशः। यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका इति। ऋतीति किम्? उप इत, उपेतः। तपरकरणं किम्? उप ॠकारीयति उपकारीयति। वा सुप्यापिशलेरिति विकल्पः स्यात्। उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं शाकल्यनिवृत्त्यर्थम्। ऋत्यक इति हि शाकल्यस्य प्रकृतिभावः प्राप्नोति॥

वा सुप्यापिशलेः॥ ९२॥

आदिति, उपसर्गादृति धाताविति च वर्तते। सुबन्तावयवे धातावृकारादौ परतोऽवर्णान्तादुपसर्गात् पूर्वपरयोरापिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्षभीयति। उपार्षभीयति। उपल्कारीयति। उपाल्कारीयति। ऋकारऌकारयोः सावर्ण्यविधिरिति ऋतीति ऌकारोऽपि गृह्यते। आपिशलिग्रहणं पूजार्थम्। वेति मुच्यत एव॥

ओतोऽम्शसोः॥ ९३॥

ओतोऽमिशसि च परतः पूर्वपरयोराकार एकादेशो भवति। गां पश्य। गाः पश्य। द्यां पश्य। द्याः पश्य। द्योशब्दोऽप्योकारान्त एव विद्यते, ततोऽपि परं सर्वनामस्थानं

(१) स्वादीरेरिणोर्वृद्धिर्वक्तव्या। स्वैर स्वैरी। पा०। (२) ग्रन्थान्तरे ऊहग्रहणवैशिष्ट्यवार्त्तिकमुपलभ्यते तयोदाहरणमपि प्रौढ इति। अत्र वार्त्तिकेऽहग्रहणं प्रौढ इति तदुदाहरणं च पुस्तकान्तरेऽधिके।

णिदिष्यते, तेन नाग्राहायां वृद्धावयमाकारो विधीयमानस्तां बाधते । अमिति द्वितीयैकवचनं गृह्यते, शसा साहचर्यात्, सुपीति चाधिकारात् । तेनाचिनवमसुनवमित्यत्र न भवति ॥

## एङि पररूपम् ॥ ९४ ॥

आदिति वर्तते उपसर्गाद्धाताविति च । अवर्णान्तादुपसर्गादेङादौ धातौ पूर्वपरयोः पररूपमेकादेशो भवति । वृद्धिरेचीत्यस्यापवादः । उपेलयति । प्रेलयति । उपोषति । प्रोषति । केचिद्वा सुप्यापिशलेरित्यनुवर्त्तयन्ति तद्वाक्यभेदेन सुब्धातौ विकल्पं करोति–उपेडकीयति । उपैडकीयति । उपोदनीयति, उपौदनीयति । ॐशकन्ध्वादिषु पररूपं वक्तव्यम्ॐ । शक अन्धुः, शकन्धुः । कुल अटा, कुलटा । ॐसीमन्तः केशेषुॐ । सीम्नोऽन्तः, सीमन्तः, अन्यत्र सीमान्तः । ॐएवे चानियोगे पररूपं वक्तव्यम्ॐ । इह एव, इहेव । अद्य एव, अद्येव । अनियोग इति किम्? इहैव भव माऽन्यत्र गाः । ॐओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्ॐ । स्थूल ओतुः, स्थूलौतुः । स्थूलोतुः । बिम्बौष्ठी । बिम्बोष्ठी । समास इति किम्? तिष्ठ देवदत्तौष्ठं पश्य । ॐएमन्नादिषु छन्दसि पररूपं वक्तव्यम्ॐ । अपां त्वा एमन्, अपां त्वेमन् । अपां त्वा ओद्मन्, अपां त्वोद्मन् ॥

## ओमाङोश्च ॥ ९५ ॥

आदित्येव । अवर्णान्तादोमि आङि च परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । का ओमित्यवोचत् कोमित्यवोचत् । योमित्यवोचत् । आङि खल्वपि–आ ऊढा, ओढा अद्य ओढा अद्योढा । कदा ओढा । कदोढा । तदा ओढा, तदोढा । वृद्धिरेचीत्यस्यापवादः । इह तु आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादिति, अकः सवर्णे दीर्घत्वं बाधते ॥

## उस्यपदान्तात् ॥ ९६ ॥

आदित्येव । अवर्णादपदान्तादुसि पूर्वपरयोः पररूपमेकादेशो भवति । आद्गुणापवादः । भिन्द्या उस्, भिन्द्युः । छिन्द्या उस्, छिन्द्युः । अदा उस्, अदुः । अया उस् अयुः । अपदान्तादिति किम्? का उस्रा, कोस्रा । का उषिता कोषिता । आदित्येव । चक्रुः । अबिभयुः ॥

## अतो गुणे ॥ ९७ ॥

अपदान्तादिति वर्त्तते । अकारादपदान्तात् गुणे परतः पूर्वपरयोः स्थाने पररूपमेकादेशो भवति । पचन्ति । यजन्ति । अकः सवर्णे दीर्घस्यापवादः । पचे यजे इत्यत्र वृद्धिरेचीति वृद्धिः प्राप्नोति । अत इति किम्? यान्ति । वान्ति । गुण इति किम्? अपचे । अयजे । अपदान्तादित्येव । दण्डाग्रम् । यूपाग्रम् ॥

## अव्यक्तानुकरणस्यात इतौ ॥ ९८ ॥

अव्यक्तम् अपरिस्फुटवर्णं तदनुकरणं परिस्फुटवर्णमेव केनचित् सादृश्येन तदव्य-

क्रमनुकरोति तस्य योऽच्छब्दस्तस्मादितौ पूर्वपरयोः स्थाने पररूपमेकादेशो भवति। पटत् इति, पटिति । घटत् इति, घटिति । झटत् इति, झटिति । छमित् इति, छमिति। अव्यक्तानुकरणस्येति किम् ? जगत् इति, जगदिति । अत इति किम्? गरट् इति, गरडिति । इताविति किम् ? पटत् अत्र, पटदत्र । ॐअनेकाच इति वक्तव्यम्ॐ। इह मा भूत्-स्रत् इति, स्रदिति। कथं घटदिति गम्भीरमम्बुदैर्नदितमिति ? दकारान्तमेतदनुकरणं द्रष्टव्यम् ॥

## नाम्रेडितस्यान्त्यस्य तु वा ॥ ९९ ॥

अव्यक्तानुकरणस्याम्रेडितस्य योऽच्छब्द इतौ तस्य पररूपं न भवति तस्य योऽन्त्यस्तकारस्तस्य वा भवति । पटत्पटदिति, पटत्पटेति करोति । नित्यवीप्सयोरिति द्विर्वचनम् । यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपं, पटत्पटिति करोति ॥

## नित्यमाम्रेडिते डाचि(१) ॥ १०० ॥

अव्यक्तानुकरणस्यातोऽन्त्यस्येति चानुवर्तते । डाच्परं यदाम्रेडितं तस्मिन् पूर्वस्याव्यक्तानुकरणस्याच्छब्दस्य योऽन्त्यस्तकारस्तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपमेकादेशो भवति । पटपटा करोति । दमदमा करोति(२) । पटदित्यस्माद् "अव्यक्तानुकरणाद्" इति डाचि विहिते "डाचि बहुलम्" इति द्विर्वचनं तत्र टिलोपात् पूर्वमेवेष्यते ॥

## अकः सवर्णे दीर्घः ॥ १०१ ॥

अकः सवर्णेऽचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति । दण्डाग्रम् । दधीन्द्रः । मधूदके । होतॄश्यः । अक इति किम् ? अग्नये । सवर्ण इति किम् ? दध्यत्र । अक्षीस्थेव । कुमारी शेते । नाज्झलाविल्यत्र यदजिति प्रत्याहारग्रहणं तत्र ग्रहणकशास्त्रस्यानभिनिर्वृत्तत्वात् सवर्णा न गृह्यन्त इति सवर्णत्वमीकारशकारयोरप्रतिषिद्धम् । ॐसवर्णदीर्घत्वे ऋति ॠ वा वचनम्ॐ । ऋति सवर्णे परभूते तत्र ॠ वा भवतीति वक्तव्यम् । होतृ ऋकारः, होतॄकारः । यदा न ॠ तदा दीर्घ एव होतॄकारः । ॐलृति लृ वा वचनम्ॐ सवर्णे परतो लृवा भवतीति वक्तव्यम् । होतृलृकारः होतॢलृकारः। होतॄकारः । ऋकारलृकारयोः सवर्णविधिरुक्तो दीर्घपक्षे ॥ समुदायान्तरतमस्य लृवर्णस्य दीर्घस्याभावात् ऋकारः क्रियते ॥

## प्रथमयोः पूर्वसवर्णः ॥ १०२ ॥

अक इति दीर्घ इति च वर्तते । प्रथमाशब्दो विभक्तिविशेषे रूढस्तत्साहचर्यात् द्वितीयापि प्रथमेत्युक्ता । तस्यां प्रथमायां द्वितीयायां च विभक्तावचि अकः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशो भवति । अग्नी । वायू । वृक्षाः । प्लक्षाः । वृक्षान् । प्लक्षान् । अतो गुण इति यदकारे पररूपं तदकः सवर्णे दीर्घत्वमेव बाधते, न तु पूर्व-

( १ ) वार्तिकेदर्शनादपाणिनीयमेतत् । "वार्तिकमेवेदं वृत्तिकृता सूत्रत्वेन पठितम्" इति । पदमञ्जरीकृदुक्तिरपि प्रमाणम् । ( २ ) मटमटा करोतीत्यधिकं पुस्तकान्तरे ।

सवर्णदीर्घत्वं, पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इति। अक्षीत्येव, वृक्षः। प्लक्षः।अक इत्येव, नावौ। पूर्वसवर्णग्रहण किम्? अग्नी इत्यत्र परे परसवर्णो मा भूत्। दीर्घग्रहण किम्? त्रिमात्रे स्थानिनि,त्रिमात्रादेशनिवृत्त्यर्थम्॥

तस्माच्छसो नः पुंसि॥ १०३॥

तस्मात् पूर्वसवर्णदीर्घादुत्तरस्य शसोऽवयवस्य,सकारस्य पुंसि नकारादेशो भवति। वृक्षान्। अग्नीन्। वायून्। कर्तॄन्। हर्तॄन्। षण्ढान्। स्थूरान्। अरकान् पश्य। सर्वं एते पुँल्लिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति। इह तु चञ्चेव चञ्चा, लुम्मनुष्य इति कनो लुपि कृते लुपि युक्तवद्व्यक्तिवचन इति पुंसोऽपि स्त्रीलिङ्गता, तेन नत्वं न भवति, चञ्चाः पश्य, वध्रिका पश्येति। तस्मादिति किम्? एतांश्वरतो गाः पश्य। शस इति किम्? वृक्षाः। प्लक्षाः। पुंसीति किम्? धेनूः। बह्वीः। कुमारीः॥

नादिचि॥ १०४॥

अवर्णादिचि पूर्वसवर्णदीर्घो न भवति। वृक्षौ। प्लक्षौ। खट्वे। कुण्डे। आदिति किम्? अग्नी। इचीति किम्? वृक्षाः॥

दीर्घाज्जसि च॥ १०५॥

दीर्घाज्जसि इचि च परतः पूर्वसवर्णदीर्घो न भवति। कुमार्यौ। कुमार्यः। ब्रह्मबन्ध्वौ। ब्रह्मबन्ध्वः॥

वा छन्दसि॥ १०६॥

दीर्घाच्छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्णदीर्घो न भवति। मारुतीश्चतस्रः। पिण्डीः। मारुत्यश्चतस्रः। पिण्ड्यः। वाराही। उपानही। वाराह्यौ। उपानह्यौ॥

अमि पूर्वः॥ १०७॥

अक इत्येव। अमि परतोऽकः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। वृक्षम्। प्लक्षम्। अग्निम्। वायुम्। पूर्वग्रहण किम्? पूर्व एव यथा स्यात्, पूर्वसवर्णोऽन्तरतमो मा भूदिति कुमारीमित्यत्र हि त्रिमात्रः स्यात्। वा छन्दसीत्येव, शमीं च। शम्य च। गौरीं च। गौर्यं च॥

संप्रसारणाच्च॥ १०८॥

पूर्व इत्येव। सम्प्रसारणादचि परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। यजि–इष्टम्। वपि–उप्तम्। ग्रहि–गृहीतम्। सम्प्रसारणविधानसामर्थ्याद्गृहीतस्य श्रवणे प्राप्ते पूर्वत्व विधीयते। वा छन्दसीत्येव, मित्रावरुणौ यज्यमानौ पूर्वत्वविधाने सत्यर्थवत्सम्प्रसारणविधानम् इष्ट इत्येवमादिषु, इति पूर्वत्वाभावे यणादेशो भवत्येव। अन्तरङ्गे चाचिकृतार्थं वचनमिति बाह्ये पश्चात्सन्निपतिते पूर्वत्व न भवति–शाकह्वौ। शाकह्वर्थम्॥

### एङः पदान्तादति ॥ १०९ ॥

एङ् यः पदान्तस्तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति। अग्नेऽत्र। वायोऽत्र। अयवादेशयोरयमपवादः। एङ इति किम्? दध्यत्र। मध्वत्र। पदान्तादिति किम्? चयनम्। लवनम्। अतीति किम्? वायो इति। भानो इति। वायवित्ति। भानवित्ति। तपरकरणं किम्? वायवायाहि ॥

### ङसिङसोश्च ॥ ११० ॥

एङ इति वर्तते, अतीति च। एङ उत्तरयोर्ङसिङसोरति परतः पूर्वपरयोःस्थाने पूर्वरूपमेकादेशो भवति। अग्नेरागच्छति। वायोरागच्छति। अग्नेः स्वम्। वायोः स्वम्। अपदान्तार्थ आरम्भः ॥

### ऋत उत् ॥ १११ ॥

ङसिङसोरित्येव। ऋकारान्तादुत्तरयोर्ङसिङसोरति परतः पूर्वपरयोरुकार एकादेशो भवति। होतुरागच्छति। होतुः स्वम्। द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभतेऽन्यतरव्यपदेशमिति, उरण् रपर इति रपरत्वमत्र कृत्वा, रात्सस्येति सलोपः कर्तव्यः ॥

### ख्यत्यात् परस्य ॥ ११२ ॥

ङसिङसोरिति वर्तते, उदिति च। ख्यत्यादिति खितिशब्दखीतीशब्दयोस्तिशब्दसीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणं, ताभ्यां परस्य ङसिङसोरत उकारादेशो भवति। सख्युरागच्छति। पत्युः स्वम्। खीशब्दस्योदाहरणम्-सह खेन वर्तत इति सखः सखमिच्छतीति क्यच् सखीयति, सखीयतेः क्विप् सखीस्तस्य ङसिङसोः सख्युरिति। तीशब्दस्यापि लूनमिच्छति, लूनीयति, लूनीयतेः क्विपि लूने, लून्युरागच्छति। लून्युः स्वम्। निष्ठानत्व पूर्वत्रासिद्धमित्यसिद्धम्। विकृतनिर्देशादेवेह न भवति, अतिसखेरागच्छति, सेनापतेरागच्छतीति। सखिशब्दस्य केवलस्य घिसंज्ञा प्रतिषिध्यते न तदन्तस्य ॥

### अतोरोरप्लुतादप्लुते ॥ ११३ ॥

अतीति, उदिति च वर्तते। अकारादप्लुतादुत्तरस्य रोरेफस्य उकारानुबन्धविशिष्टस्य अकारेऽप्लुते परत उकारादेशो भवति। वृक्षोऽत्र। भोभगोअघोअपूर्वस्य योऽशीत्यस्मिन् प्राप्ते उत्वं विधीयते। रुत्वमस्याश्रयत्वात्, पूर्वत्रासिद्धमित्यसिद्धं न भवति। अत इति किम्? अग्निरत्र। तपरकरणं किम्? वृक्षा अत्र। सानुबन्धग्रहणं किम्? स्वरत्र। प्रातरत्र। अतीत्येव, वृक्ष इह। तस्यापि तपरत्वादत्र न भवति-वृक्ष आश्रितः। अप्लुतादिति किम्? सुस्रोता ३ अत्र न्वसि। अप्लुत इति किम्? तिष्ठतु पय आ३ग्निदत्त। अत्र प्लुतस्यासिद्धत्वादुत्वं प्राप्नोतीत्यप्लुतादप्लुत इत्युच्यते ॥

## हसि च ॥ ११४ ॥

हसि च परतोऽत उत्तरस्य रोरुकारादेशो भवति । पुरुषो याति । पुरुषो हसति । पुरुषो ददाति ।

## प्रकृत्यान्तः पादमव्यपरे ॥ ११५ ॥

एङोऽतीत्येव । एङ इति यत्पञ्चम्यन्तमनुवर्तते तदर्थादिह प्रथमान्तं भवति । प्रकृतिरिति स्वभावः कारणं वाऽभिधीयते । अन्तरित्यव्ययमधिकरणभूतं मध्यमाचष्टे । पादशब्देन च ऋक्पादस्यैव ग्रहणमिष्यते न तु श्लोकपादस्य । अवकारयकारपरेऽति परत एङ् प्रकृत्या भवति, स्वभावेनावतिष्ठते कारणाऽऽत्मना वा भवति न विकारमापद्यते । तौसेकिमित्तकार्येणावन्तः पादमृक्पादमध्ये भवतः । ते अग्रे अश्वमायुञ्जन्, ते अस्मिन् जवमादधुः । उपप्रयन्तो अध्वरम् । शिरो अपश्यम् । सुजाते अश्वसूनृते । अध्वर्यो अद्रिभिः सुतम् । अन्तःपादमिति किम् ? कया मती कुत एतास एतेऽर्चयन्ति । अव्यपर इति किम् ? तेऽवदन् । तेऽयसमयम् । एङिति किम् ? अन्वग्निरुषसामग्रमख्यत् । केचिदिदं सूत्रं, नान्तः पादमव्यपर इति पठन्ति, ते संहितायामिहैवदृश्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति ॥

## अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११६ ॥

अव्यात् अवद्यात् अवक्रमुः अव्रत अयम् अवन्तु अवस्यु इत्येतेषु वकारयकारपरेऽप्यति परतोऽन्तः पादमेङ् प्रकृत्या भवति । अग्निः प्रथमो वसुभिर्नो अव्यात् । मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रताः । शतधारो अयं मणिः । ते नो अवन्तु पितरः । कुशिकासो अवस्यवः ॥

## यजुष्युरः ॥ ११७ ॥

उरः शब्द एङन्तो यजुषि विषयेऽति प्रकृत्या भवति । उरो अन्तरिक्षम् । अपरे यजुष्युरो इति सूत्रं पठन्ति । उकारान्तमुरुशब्दं संबुद्ध्यन्तमधीयते स इदमुदाहरन्ति, उरो अन्तरिक्ष सजूरिति । यजुषि पादानामभावादनन्तःपादार्थं वचनम् ।

## आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ॥ ११८ ॥

यजुषीत्येव । आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दा अम्बे अम्बाले इत्येतौ च अम्बिकेशब्दात् पूर्वौ यजुषि पठितौ ते अति परतः प्रकृत्या भवन्ति । आपो अस्मान्मातरः शुन्धयन्तु । जुषाणो अप्तुराज्यस्य । वृष्णो अंशुभ्यां गभस्तिभिः । वर्षिष्ठे अधिनाके । अम्बे अम्बाले अम्बिके । यजुषीदमीदृशमेव पठ्यते अस्मादेव निपातनादम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वं न भवति ॥

## अङ्ग इत्यादौ च ॥ ११९ ॥

अङ्गशब्दे य एङ् तदादौ चाकारे यः पूर्वः स यजुषि विषयेऽति प्रकृत्या भवति ।

ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे अशोचिषम्॥

अनुदात्ते च कुधपरे॥ १२०॥

यजुषीत्येव। अनुदात्ते चाति कवर्गधकारपरे परतो यजुषि विषये एङ् प्रकृत्या भवति। अयं सो अग्निः। अयं सो अध्वरः। अनुदात्त इति किम्? अधोऽग्रे। अग्र शब्द आद्युदात्तो निपात्यते। कुधपर इति किम्? सोऽयमग्निः सहस्रियः॥

अवपथासि च॥ १२१॥

यजुषीत्येव। अनुदात्त इति चशब्देनानुकृष्यते। अवपथाःशब्देऽनुदात्तेऽकारादौ परतो यजुषि विषये एङ् प्रकृत्या भवति। त्री रुद्रेभ्यो अवपथाः। वपेर्लङि थासि तिङ्ङतिङ इति निघातेनानुदात्तत्वम्। अनुदात्त इत्येव, यद्रुद्रेभ्योऽवपथाः। निपातैर्यद्यदिहन्तेति निघातः प्रतिषिध्यते॥

सर्वत्र विभाषा गोः॥ १२२॥

सर्वत्र, छन्दसि भाषायां चाति परतो गोरेङ् प्रकृत्या भवति विभाषा। गो अग्रम्। गोऽग्रम्। छन्दसि—अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः॥

अवङ् स्फोटायनस्य॥ १२३॥

अतीति निवृत्तम्। अचीत्येतत्त्वनुवर्तत एव। अचि परतो गोः स्फोटायनस्याचार्यस्य मतेनावङादेशो भवति। गवाग्रम्। गोऽग्रम्। गवाजिनम्। गोऽजिनम्। गवौदनम्। गवोदनम्। गवोष्ट्रम्। गवुष्ट्रम्। आद्युदात्तश्चायमादेशो निपात्यते। स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधाने भवति। गावो अग्रमस्य, गवाग्र इति। अन्यत्र तु समासान्तोदात्तत्वेन बाध्यते। स्फोटायनग्रहणं पूजार्थं, विभाषेत्येव हि वर्तते। व्यवस्थितविभाषेयम्। तेन गवाक्ष इत्यत्र नित्यमवङ् भवति॥

इन्द्रे च नित्यम्॥ १२४॥

इन्द्रशब्दस्थेऽचि परतो गोर्नित्यमवङादेशो भवति। गवेन्द्रः। गवेन्द्रयज्ञस्वर (१)

प्लुतप्रगृह्या अचि॥ १२५॥

प्लुताश्च प्रगृह्याश्चाचि प्रकृत्या भवन्ति। देवदत्ता ३ अत्र न्वसि। यज्ञदत्ता ३ इदमानय। आश्रयादत्र प्लुतः सिद्धः। प्रगृह्याः—अग्नी इति। वायू इति। खट्वे इति। माले इति। अचीत्यनुवर्तमाने पुनरज्ग्रहणमादेशनिमित्तस्याचः परिग्रहार्थम्। तेनेह न भवति—जानु उ अस्य रुजति, जान्वस्य रुजति। प्रगृह्यादुकारात् परस्याकारस्य सवर्णदीर्घत्वं प्रत्ययनिमित्तत्वादत्र प्रकृतिभावो न भवति। नित्यग्रहणमिहानुवर्तते। प्लुतप्रगृह्याणां नित्यमयमेव प्रकृतिभावो यथा स्याद् इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेत्येतन्मा भूदिति॥

(१) 'यज्ञस्व.' इति पाठान्तरम्।

आङोऽनुनासिकश्छन्दसि ॥ १२६ ॥

आङोऽचि परतः संहितायां छन्दसि विषयेऽनुनासिकादेशो भवति, न च प्रकृत्या भवति। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे जिघांसत। केचिदाङोनुनासिकश्छन्दसि बहुलमित्यधीयते। तेनेह न भवति–इन्द्रो बाहुभ्यामातरत्। आ अतरत् ॥

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२७ ॥

इकोऽसवर्णेऽचि परतः शाकल्यस्याचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्येकः स्थाने भवति। दधि अत्र। दध्यत्र। मधु अत्र। मध्वत्र। कुमारि अत्र। कुमार्यत्र। किशोरि अत्र। किशोर्यत्र। इक इति किम्? खट्वेन्द्रः। असवर्णे इति किम्? कुमारीन्द्रः। शाकल्यस्य ग्रहणं पूजार्थम्। आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः। सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः॥। सिनि–अयं ते योनिर्ऋत्वियः। नित्यसमासे–व्याकरणम्। कुमार्यर्थम्। ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यम्॥। ईषा अक्षः। का ईमरे पिशङ्गिला। यथा अगमन् ॥

ऋत्यकः ॥ १२८ ॥

शाकल्यस्य ह्रस्वश्चेत्येतदनुवर्तते। ऋकारे परतः शाकल्यस्याचार्यस्य मतेनाकः प्रकृत्या भवन्ति, ह्रस्वश्च तस्याकः स्थाने भवति। खट्व ऋश्यः। माल ऋश्यः। कुमारि ऋश्यः। होतृ ऋश्य (१)। ऋतीति किम्? खट्वेन्द्रः। अक इति किम्? वृक्षावृश्यः। सवर्णार्थमनिगर्थं च वचनम् ॥

अप्लुतवदुपस्थिते ॥ १२९ ॥

उपस्थितं नामाऽनार्ष इतिकरणः समुदायादवच्छिद्य पदं येन स्वरूपेऽवस्थाप्यते तस्मिन् परतः प्लुतोऽप्लुतवद्भवति। प्लुतकार्यं प्रकृतिभावं न करोति। सुश्लोका ३ इति, सुश्लोकेति। सुमङ्गला ३ इति, सुमङ्गलेति। वत्करणं किम्? अप्लुत इत्युच्यमाने प्लुत एव प्रतिषिध्येत। तत्र को दोषः? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्–अग्नी ३ इति। वायू ३ इति ॥

ई ३ चाक्रवर्मणस्य ॥ १३० ॥

ई ३ कारः प्लुतोऽचि परतश्चाक्रवर्मणस्याऽऽचार्यस्य मतेनाप्लुतवद्भवति। अस्तु हीत्यब्रवीत्। अस्तु ही ३ इत्यब्रवीत्। चिनु हीदम्। चिनुही ३ इदम्। चाक्रवर्मणग्रहणं विकल्पार्थं, तदुपस्थिते निवृत्त्यर्थम्। अनुपस्थिते प्राप्त्यर्थमित्युभयत्र विभाषेयम्। इकारादन्यत्राऽप्ययमप्लुतवद्भाव इष्यते। वशा३ इयम्। वशेयम् ॥

दिव उत् ॥ १३१ ॥

एङः पदान्तादतीत्यतः पदग्रहणमनुवर्तते। दिव इति प्रातिपदिकं गृह्यते, न धातुः। सानुबन्धकत्वात्। दिवः पदस्य उकारादेशो भवति। दिवि कामो यस्य,

( १ ) पीतृऋश्य इत्यधिकं पुस्तकान्तरे।

द्युकामः। द्युमान्। विमलद्यु दिनम्। द्युभ्याम्। द्युभिः। निरनुबन्धकग्रहणादिह न भवति-अक्षद्यूभ्याम्, अक्षद्यूभिरिति। तपरकरणमूठो निवृत्त्यर्थं द्युभ्यां द्युभिरिति। अत्र हि परत्वादूठ् प्राप्नोति। पदस्येति किम्? दिवौ। दिवः॥

एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३२ ॥

एतत्तदौ यावककारौ नञ्समासे न वर्त्तेते तयोर्यः सुशब्दः कश्च तयोः सुशब्दो यस्तदर्थेन संबद्धस्तस्य संहितायां विषये हलि परतो लोपो भवति। एष ददाति। स ददाति। एष भुङ्क्ते। स भुङ्क्ते। एतत्तदोरिति किम्? यो ददाति। यो भुङ्क्ते। सुग्रहणं किम्? एतौ गावौ चरतः। अकोरिति किम्? एषको ददाति। सको ददाति। तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति रूपभेदेऽपि साकच्कावेतत्तदौ भवतः। अनञ्समास इति किम्? अनेषो ददाति। असो ददाति। उत्तरपदार्थप्रधानत्वान्नञ्समासस्यैतत्तदोरेवात्र संबद्धः सुशब्दः। हलीति किम्? एषोऽत्र। सोऽत्र।

स्यश्छन्दसि बहुलम् ॥ १३३ ॥

स्य इत्येतस्य छन्दसि हलि परतो बहुलं सोर्लोपो भवति। एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि। एष स्य ते मधुमाँ इन्द्र सोमः। न च भवति—यत्र स्यो निपतेत्॥

सोऽचि लोपे चेत् पादपूरणम् ॥ १३४ ॥

स इत्येतस्याचि परतः सुलोपो भवति लोपे सति चेत्पादः पूर्यते। सेन्दू राजा क्षयति चर्षणीनाम्। सौषधीरनुरुध्यसे। लोपे चेत्पादपूरणमिति किम्? स इद् व्याघ्रो भवेत्। अचीति विस्पष्टार्थम्। पादग्रहणेनात्र श्लोकपादस्यापि ग्रहणं केचिदिच्छन्ति। तेनेदमपि सिद्धं भवति—

सैष दाशरथी रामः, सैष राजा युधिष्ठिरः। सैष कर्णो महात्यागी सैष भीमो महाबलः॥

सुट् कात् पूर्वः ॥ १३५ ॥

अधिकारोऽयं, पारस्करप्रभृतीनि च संज्ञायामिति यावत्। इत उत्तरं यद्वक्ष्यामस्तत्र सुडिति कात् पूर्व इति चैतदधिकृतं वेदितव्यम्। वक्ष्यति-संपर्युपेभ्यः करोतौ भूषणे-संस्कर्ता संस्कर्तुं। संस्कर्तव्यम्। कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम्। तथा हि संस्कृषीष्ट, संस्क्रियत इति संयोगादिलक्षणाविड्गुणौ न भवतः। तिङ्ङतिङ इति निघातोऽपि तर्हि न प्राप्नोति सुटा व्यवहितत्वात्? स्वरविधौ व्यञ्जनमविद्यमानवदिति वचनान्नास्ति व्यवधानम्। समचस्करतुः, समचस्करुरिति गुणः कथ? तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति। संयोगोपधग्रहणं च, ऋतश्च संयोगादेर्गुण इत्यत्र कर्तव्यम्। टित्करणं सुट्स्तुस्वञ्जामित्यत्र विशेषणार्थम्॥

अड्भ्यासव्यवायेऽपि ॥ १३६ ॥

अड्व्यवायेऽभ्यासव्यवाये सुट् कात् पूर्वो भवति। समस्करोत्। समस्कार्षीत्।

संचस्कार। परिचस्कार। किमर्थं पुनरिदमुच्यते? पूर्वं धातुरुपसर्गेण युज्यत इति,। तत्र धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं सुट् क्रियते पश्चाद्‌भ्यासौ। अभ्यासश्च सुडियुक्तम्। ततः सकारादुत्तरावभ्यासावनिष्टे देशे स्याताम्। एतस्मिंस्तु सत्यत एव वचनात् कृतयोरभ्यासयोस्तदुव्यवायेऽपि सुट् कात् पूर्वः क्रियत इति सिद्धमिष्टं भवति॥

संपर्युपेभ्यः करोतौ भूषणे ॥ १३७॥

सम् परि उप इत्येतेभ्यो भूषणेऽर्थे करोतौ परतः सुट् कात् पूर्वो भवति। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। अत्र सपुकानां सत्वमिति समो मकारस्य सकारः पूर्वस्य चाक्षरस्यानुनासिकः। परिष्कर्ता। परिष्कर्तुम्। परिष्कर्तव्यम्। सुट्त्स्थवञ्जामिति षत्वम्। उपस्कर्ता। उपस्कर्तुम्। उपस्कर्तव्यम्। भूषण इति किम्? उपकरोति। सपूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते संस्कृतमन्नमिति॥

समवाये च॥ १३८॥

समवायः समुदायस्तस्मिंश्चार्थे करोतौ सपर्युपेभ्यः कात् पूर्वं सुडागमो भवति। तत्र नः संस्कृतम्। तत्र नः परिष्कृतम्, तत्र न उपस्कृतम्। समुदितमित्यर्थः॥

उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु (च)॥ १३९॥

सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः। विकृतमेव वैकृतम्। प्रज्ञादित्वादण्। गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्यस्याध्याहारः। एतेष्वर्थेषु गम्यमानेषु करोतौ धातौ परत उपात् सुट् कात् पूर्वो भवति। प्रतियत्ने तावत् एधोदकस्योपस्कुरुते। काण्डगुणस्योपस्कुरुते। वैकृते- उपस्कृतं भुङ्क्ते। उपस्कृतं गच्छति। वाक्याध्याहारे-उपस्कृतं जल्पति। उपस्कृतमधीते। एतेष्विति किम्? उपकरोति।

किरतौ लवने॥ १४०॥

उपादित्येव। उपादुत्तरस्मिन् किरतौ धातौ लवनविषये सुट्कात् पूर्वो भवति। उपस्कारं मद्रका लुनन्ति। उपस्कारं काश्मीरका लुनन्ति। विक्षिप्य लुनन्तीत्यर्थः॥ णमुलत्र वक्तव्यः। लवन इति किम्? उपाकरति देवदत्तः॥

हिंसायां प्रतेश्च॥ १४१॥

किरतावित्येव उपात् प्रतेश्चोत्तरस्मिन् किरतौ विषये सुट् कात् पूर्वो भवति। उपस्कीर्णं ह ते वृषल भूयात्। प्रतिस्कीर्णं ह ते वृषल भूयात्। तथा ते वृषल विक्षेपो भूयाद् यथा हिंसामनुबध्नातीत्यर्थः। हिंसायामिति किम्? प्रतिकीर्णम्॥

अपाच्चतुष्पाच्छकुनिष्वालेखने॥ १४२॥

किरतावित्येव। अपादुत्तरस्मिन् किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये सुट् कात् पूर्वो भवति। अपस्किरते वृषभो हृष्टः। अपस्किरते कुक्कुटो

भक्ष्यार्थी। अपस्किरते श्वा आश्रयार्थी। आलिख्य विक्षिपतीत्यर्थः। चतुष्पाच्छकुनिष्विति किम्? अपकिरति देवदत्तः। ॐहर्षजीविकाकुलायकरणेष्विति वक्तव्यम्ॐ। इह मा भूत्-अपकिरति श्वा ओदनपिण्डमादितः। ॐहर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्योपसरख्यानम्ॐ॥

कुस्तुम्बुरूणि जातिः ॥ १४३ ॥

कुस्तुम्बुरूणीति सुट् निपात्यते जातिश्चेद्भवति। कुस्तुम्बुरुर्नामौषधिजातिः। धान्यकम्। तत्फलान्यपि कुस्तुम्बुरूणि। सूत्रनिर्देशे नपुंसकलिङ्गमविवक्षितम्। जातिरिति किम्? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि। तुम्बुरुशब्देनात्र तिन्दुकीफलान्युच्यन्ते। समासेन तेषां कुत्सा॥

अपरस्पराः क्रियासातत्ये ॥ १४४ ॥

अपरस्परा इति सुट् निपात्यते क्रियासातत्ये गम्यमाने। अपरस्पराः सार्था गच्छन्ति। सन्ततमविच्छेदेन गच्छन्तीत्यर्थः। क्रियासातत्य इति किम्? अपरपराः सार्था गच्छन्ति। अपरे परे च सकृदेव गच्छन्तीत्यर्थः। नात्र गमनस्य सातत्यं प्रबन्धो विवक्षितः। किमिदं सातत्यमिति? सततस्य भावः सातत्यम्। कथं सततम्? समस्तते विकल्पेन मकारलोपो विधीयते।

लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि।
समो वा हिततत्योर्मांसस्य पचियुड्घञोः॥

गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४५ ॥

गोष्पदमिति सुट् निपात्यते तस्य च षत्वं सेवितेऽसेविते प्रमाणे च विषये। गोष्पदो देशः। गावः पदन्ते यस्मिन् देशे स गोभिः सेवितो देशो गोष्पद इत्युच्यते। असेविते-अगोष्पदान्यरण्यानि। असेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदशब्दार्थं निपातनम्। यद्येवं नार्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविष्यति? सत्यमेतत्। यत्र तु सेवितप्रसङ्गोऽस्ति तत्रैव स्यादगोष्पदमिति। यत्र त्वत्यन्तासम्भव एव तत्र न स्यादगोष्पदान्यरण्यानीति। असेवितग्रहणात्तत्रापि भवति। यानि हि महान्त्यरण्यानि येषु गवामत्यन्तासम्भवस्तान्येवमुच्यन्ते। प्रमाणे-गोष्पदमात्रं क्षेत्रम्। गोष्पदपूरं वृष्टो देवः। नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते, किं तर्हि क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम्। सेवितासेवितप्रमाणेष्विति किम्? गोः पदं, गोपदम्॥

आस्पदं प्रतिष्ठायाम् ॥ १४६ ॥

आत्मयापनाय स्थानं प्रतिष्ठा, तस्यामास्पदमिति सुट् निपात्यते आस्पदमनेन लब्धम्। प्रतिष्ठायामिति किम्। आपदात्, आपदम्॥

आश्चर्यमनित्ये ॥ १४७ ॥

अनित्यतया विषयमनुयाऽद्भुतत्वमिह लक्ष्यते तस्मिन्नाश्चर्यं निपात्यते। चरेराङि-

चार्यावित्ति यत्प्रत्यये कृते निपातनात् सुट् । आश्चर्यं यदि स भुञ्जीत । आश्चर्यं यदि सोऽधीयीत चित्रमद्भुतमित्यर्थः । अनित्य इति किम् ? आचर्यं कर्म शोभनम् ॥

वर्चस्केऽवस्करः ॥ १४८ ॥

कुत्सितं वर्चो, वर्चस्कमन्नमलं, तस्मिन्नभिधेयेऽवस्कर इति निपात्यते । अवपूर्वस्य किरतेः कर्मणि ऋदोरप् इत्यप्, निपातनात् सुट् । अवकीर्यत इत्यवस्करोऽन्नमलम् । तत्सम्बन्धाद्देशोऽपि तथोच्यते । वर्चस्क इति किम् ? अवकरः ॥

अपस्करो रथाङ्गम् ॥ १४९ ॥

अपस्कर इति निपात्यते रथाङ्गं चेद्भवति । अपपूर्वात् किरतेर्ऋदोरबित्यप्, निपातनात् सुट् । अपस्करो रथावयवः । रथाङ्गमिति किम् ? अपकरः ॥

विष्किरः शकुनिर्विकिरो वा ॥ १५० ॥

विष्किर इति किरतेर्विपूर्वस्येगुपधज्ञाप्रीकिरः क इति कप्रत्यये विहिते सुट् निपात्यते शकुनिश्चेद्भवति । विकिरशब्दाभिधेयो वा शकुनिर्भवति ।

सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते ।

विष्किरो वा शकुनाविति वाग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणमिह तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत् ॥

ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १५१ ॥

चन्द्रशब्द उत्तरपदे ह्रस्वात् परः सुडागमो भवति मन्त्रविषये । सुश्चन्द्रो युष्मान् । ह्रस्वादिति किम् ? सूर्याचन्द्रमसाविव । मन्त्र इति किम् ? सुचन्द्रा पौर्णमासी । उत्तरपद समास एव भवतीति प्रसिद्ध, तत इह न भवति–शुक्रमसि चन्द्रमसि ॥

प्रतिष्कशश्च कशेः ॥ १५२ ॥

कश गतिशासनयोरित्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते, तस्यैव षत्वम् ॥ ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः ।

वार्तापुरुषः सहायः पुरोयायी वा प्रतिष्कश इत्यभिधीयते । कशेरिति किम् ? प्रतिगता कशा, प्रतिकशोऽश्वः । अत्र यद्यपि कशेरेव कशाशब्दस्तथापि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम् । तेन धात्वन्तरोपसर्गान्न भवति ॥

प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५३ ॥

प्रस्कण्वो हरिश्चन्द्र इति सुट् निपात्यते ऋषी चेदभिधेयौ भवतः । प्रस्कण्व ऋषिः । हरिश्चन्द्र ऋषिः । हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषी इति किम् ? प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥

मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५४ ॥

मस्कर मस्करिन् इत्येतौ यथासङ्ख्यं वेणौ परिव्राजके च निपात्येते । मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकं तस्य वेणावभिधेये सुट् निपात्यते परिव्राजके त्विनिरपीति ।

मस्करो वेणुः । मस्करी परिव्राजकः । वेणुपरिव्राजकयोरिति किम् ? मकरो ग्राहः । मकरी समुद्रः । केचित्पुनरत्र माङ्युपपदे करोतेः करणेऽच्प्रत्ययमपि निपातयन्ति माङश्च ह्रस्वत्वं सुट् च । मा क्रियते येन प्रतिषिध्यते, स मस्करो वेणुः । वेणुग्रहणं च प्रदर्शनार्थमन्यत्रापि भवति । मस्करो दण्ड इति । परिव्राजकेऽपि माङ्युपपदे करोतेस्ताच्छील्य इनिर्निपात्यते । माङो ह्रस्वत्वं सुट् च तथैव । माकरणशीलो मस्करी, कर्मापवादित्वात्परिव्राजक उच्यते । स ह्येवमाह—मा कृत कर्माणि शान्तिर्वः श्रेयसीति ॥

कास्तीराजस्तुन्दे नगरे ॥ १५५ ॥

कास्तीर अजस्तुन्द इत्येतौ शब्दौ निपात्येते नगरेऽभिधेये । ईषत्तीरमस्य, अजस्येव तुन्दमस्येति,व्युत्पत्तिरेव क्रियते नगरं तु वाच्यमेतयोः । कास्तीरं नाम नगरम् । अजस्तुन्दं नाम नगरम् । नगर इति किम् ? कातीरम् । अजतुन्दम् ॥

कारस्करो वृक्षः ॥ १५६ ॥

कारस्कर इति सुट् निपात्यते वृक्षश्चेद्भवति । कारं करोतीति दिवाविभानिशाप्रभाभास्करान्तेति टप्रत्ययान्तः । कारस्करो वृक्षः । वृक्ष इति किम् ? कारकः । केचिदिदं सूत्रं नाधीयते, पारस्करप्रभृतिष्वेव कारस्करो वृक्ष इति पठन्ति ॥

पारस्करप्रभृतीनि च संज्ञायाम् ॥ १५७ ॥

पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते संज्ञायां विषये । पारस्करो देशः । कारस्करो वृक्षः । रथस्या नदी । किष्कुः प्रमाणम् । किष्किन्धा गुहा । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । तस्करश्चौरः । बृहस्पतिर्देवता । चोरदेवतयोरिति किम् ? तत्करः बृहत्पतिः । संज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहण प्रपञ्चार्थम् । प्रात्तुम्पतौ गवि कर्तरि । तुम्पतौ धातौ प्रशब्दात् परस्सुट् भवति गवि कर्तरि । प्रस्तुम्पति गौः । गवीति किम् ? प्रतुम्पति वनस्पतिः । पारस्करप्रभृतिराकृतिगणः । अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः । प्रायश्चित्तम् । प्रायश्चित्तिः । यदुक्त, प्रायस्य चित्तिचित्तयोः सुडस्कारो वेति, तत् सगृहीत भवति ॥

अनुदात्तं पदमेकवर्जम् ॥ १५८ ॥

परिभाषेयं स्वरविधिविषया । यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते तत्रानुदात्तं पदमेकं वर्जयित्वा भवतीत्येतदुपस्थितं द्रष्टव्यम् । अनुदात्ताच्कमनुदात्तम् । कः पुनरेको वर्ज्यते, यस्यासौ स्वरो विधीयते । वक्ष्यति—धातोरन्त उदात्तो भवतीति । गोपायति । धूपायति । धातोरन्त्यमच वर्जयित्वा परिशिष्टमनुदात्तं भवति । धातुस्वरं श्नास्वरो बाधते—लुनाति । श्नास्वरं तस्स्वर —लुनीतः । पुनीतः । तस्स्वरमाम्स्वरः-लुनीतस्तराम् । पुनीतस्तराम् ॥

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥

आगमस्य, चतुरनडुहोरामुदात्त—चत्वार । अनड्वाह , आगमस्वर प्रकृतिस्वर बाधते । विकारस्य—अस्थानि । दधनीत्यनङ्स्वर प्रकृतिस्वरबाधते । प्रकृते -गोपायति । ध्पायति, प्रकृतिस्वर प्रत्ययस्वर बाधते । प्रत्ययस्य—कर्त्तव्यम् । हर्त्तव्यम्, प्रत्ययस्वर प्रकृते स्वरस्य बाधक । परनित्यान्तरङ्गापवादै स्वरैर्व्यवस्था सतिशिष्टेन च । यो हि यस्मिन् सति शिष्यते स तस्य बाधको भवति, तथाहि—गोपायतीत्यत्र धातुस्वरापवाद प्रत्ययस्वरस्तेनैव धातुस्वरेण प्रत्ययान्तस्य धातो सतिशिष्टत्वाद् बाध्यते । कार्ष्णोत्तरासगपुत्र इत्यत्र च समासस्वरापवादो बहुव्रीहिस्वर सतिशिष्टेन समासान्तोदात्तत्वेन बाध्यते । विकरणस्वरस्तु सतिशिष्टोऽपि सार्वधातुकस्वर न बाधते—लुनीत इति तस एव स्वरो भवति ॥ ॐविभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम्ॐ । अतिस्र इत्यत्र, तिसृभ्यो जस इति सतिशिष्टोऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते ॥ ॐविभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम्ॐ । अचत्वार । अनड्वाह इति । यस्य विभक्तिर्निमित्तमामस्तस्य यदुदात्तत्व तन्नञ्स्वरेण बाध्यते । पदग्रहण किम् ? देवदत्त गामभ्याज शुक्ला दण्डेनेति वाक्ये हि प्रतिपद स्वर पृथग् भवति । परिमाणार्थं चेद पदग्रहण पदाधिकारस्य निवृत्ति करोति । तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालमेवाशिष्टस्या नुदात्तत्व भवति । तथा च कुवल्या विकार कौवलमित्यत्रानुदात्तादिलक्षणोऽञ् सिद्धो भवति । तथा गर्भिणीश्च दक्षानुदात्तादिलक्षणस्याञो बाधनार्थं भिक्षादिषु पठ्यते । कुवलगर्भशब्दावाद्युदात्तौ ॥

कर्षात्वतो घञोऽन्त उदात्त ॥ १५९ ॥

कर्षतेर्धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति । कर्ष । पाक । त्याग । राग । दाय । धाय । ञ्नित्यादिर्नित्यमित्यस्याऽपवाद । कर्ष इति विकृतनिर्देश कृषतेर्निवृत्त्यर्थं । तौदादिकस्य घञन्तस्य कर्ष इत्यस्याद्युदात्त एव भवति ॥

उञ्छादीना च ॥ १६० ॥

उञ्छ इत्येवमादीनामन्त उदात्तो भवति । उञ्छ । म्लेच्छ । जञ्ज । जल्प । एते घञन्ता इति ञित्स्वर प्राप्त । जप व्यध इत्यबन्तौ, तयोर्धातुस्वर प्राप्त । केचित्तु वध इति पठन्ति । युगो घञन्तस्य निपातनाद्गुणत्व विशिष्टविषये च निपातनमिदमिष्यते । कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगोऽन्यत्र हि योग एव भवति । ॐगरो दूष्येऽबन्त ॐ । गरशब्दोऽबन्त , स दूष्य एवान्तोदात्तो, गरो विषम् । अन्यत्राद्युदात्त एव ॐवेदवेदचेष्टबन्धा करणेॐ हलश्चेति घञन्ता एते करणेऽन्तोदात्ता भवन्ति । भावे आद्युदात्ता एव ॐस्तुयुद्रुवरछन्दसिॐ उपसमस्तार्थमेतत् । परिष्टुत् । सयुत् । परिद्रुत् ॐवर्त्तनि स्तोत्रेॐ स्तोत्र साम, तस्थो वर्त्तनिशब्दोऽन्तोदात्तो भवति, अन्यत्र मध्योदात्त ॐश्वभ्रेदरॐ श्वभ्रेऽभिधेये, दरशब्दोऽन्तोदात्तोऽन्यत्राबन्तत्वादाद्युदात्त ॐसाम्बतापौ भावगर्हायाम्ॐ अन्तोदात्तौ । अन्यत्राद्युदात्तौ ॐउत्तमशश्वत्तमशब्दौ सर्वत्रॐ केचित्तु भावगर्हायामित्यत्राप्यनुवर्त्तयन्ति । ॐभक्ष-

मन्थभोगदेहाश्च एते घञन्ता, भक्तिर्ण्यन्तोऽपि घञन्त एव । घञजबन्तानामिति वचनात् ॥

अनुदात्तस्य च यत्रोदात्तलोपः ॥ १६१ ॥

उदात्त इति वर्तते । यस्मिन्ननुदात्ते परत उदात्तो लुप्यते तस्यानुदात्तस्यादिरुदात्तो भवति । कुमार ई, कुमारी । कुमारशब्दोऽन्तोदात्तस्तस्य ङीप्यनुदात्ते उदात्तो लुप्यते, अनुदात्तो ङीबुदात्तः । भस्य टेर्लोपः । पथः । पथा । पथे । पथिन्शब्दोऽन्तोदात्तः । कुमुदनडवेतसेभ्यो ड्मतुप् । कुमुद्वान् । नड्वान् । वेतस्वान् । कुमुदादयोऽन्तोदात्ताः । ड्मतुबनुदात्तः । अनुदात्तस्येति किम् ? आसन्नं वहति आसन्नयः । आसन्नशब्दस्थाथादिस्वरेणान्तोदात्तः । तस्य यति, तित्स्वरितमिति स्वरिते उदात्तो लुप्यते । नैतदस्ति, स्वरिते हि विधीयमाने परिशिष्टमनुदात्तं तत्र कुत उदात्तलोपः ? तदेतदनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम् । अन्त इति हि प्रकृतत्वादन्तस्य स्यात्—मा हि धुक्षाताम् । मा हि धुक्षाथाम् । यत्रेति किम् ? भार्गवः । भार्गवी । स्रुगवः । प्राक् सुबुत्पत्तेर्गोऽप्रत्ययस्य लुक् । उदात्तग्रहणं किम् ? वैदी । शौर्वी (१) ॥

धातोः ॥ १६२ ॥

अन्त इत्येव । धातोरन्त उदात्तो भवति । पचति । पठति । ऊर्णोति । गोपायति । याति ॥

चितः ॥ १६३ ॥

चितोऽन्त उदात्तो भवति । भञ्जभासमिदो घुरच्—भङ्गुरम् । भासुरम् । मेदुरम् । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्—कुण्डिनाः । चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्यान्त उदात्त इष्यते—बहुपटवः । उच्चकैः ।

तद्धितस्य ॥ १६४ ॥

चित इत्येव । चितस्तद्धितस्यान्त उदात्तो भवति । गोत्रे कुञ्जादिभ्यश्च्फञ् । कौञ्जायनाः । मौञ्जायनाः । किमर्थमिदं ? परमपि ञित्स्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यादिति ॥

कितः ॥ १६५ ॥

तद्धितस्येत्येव । तद्धितस्य कितोऽन्त उदात्तो भवति । नडादिभ्यः फक् । नाडायनः । चारायणः । प्राग्वहतेष्ठक् । आक्षिकः । शालाकिकः ॥

तिसृभ्यो जसः ॥ १६६ ॥

तिसृभ्य उत्तरस्य जसोऽन्त उदात्तो भवति । तिस्रस्तिष्ठन्ति । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यस्यापवादः । शसि उदात्तयणो हल्पूर्वादिति सिद्धेऽन्यत्र बहुवचने, षट्त्रिचतुर्भ्यो हलादिरिति विधानाज्जसेव अन्यत्र इति जसग्रहणमुपसमस्तार्थमेक इच्छन्ति । अतितिस्रावित्यत्र स्वरो मा भूदिति ॥

---

(१) मौञ्जायनेत्यधिकमेकत्र-पुस्तके ।

चतुरः शसि ॥ १६७ ॥

चतुरः शसि परतोऽन्त उदात्तो भवति। चतुरः पश्य। (२)चतसादेशे आद्युदात्तनिपातनाद् णादेशस्य च पूर्वविधौ स्थानिवद्भावाद् स्वरो न भवति—चतस्रः पश्येति॥

सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६८ ॥

साविति सप्तमीबहुवचनस्य सुपःऽस्य ग्रहणम्। तत्र सौ य एकाच् तस्मात्परा तृतीयादिर्विभक्तिरुदात्ता भवति। वाचा। वाग्भ्याम्। वाग्भिः। वाग्भ्यः यावत्। याद्वयाम्। याद्भिः। साविति किम्? राज्ञा। राज्ञे। एकाच इति किम्? हरिणा। गिरिजा। राजसु। तृतीयादिरिति किम्? वाचौ वाचः। विभक्तिरिति किम्? वाक्तरा। वाक्तमा। सप्तमीबहुवचनस्य ग्रहणादिह न भवति—त्वया त्वयीति॥

अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६९ ॥

एकाच इति वर्तते, तृतीयादिर्विभक्तिरिति च। नित्यग्रहणं स्वर्यते तेन नित्याधिकारविहितः समासः पर्युदस्यते। नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदमन्तोदात्तमेकाच् तस्मात्परा तृतीयादिर्विभक्तिरन्यतरस्यामुदात्ता भवति। परमवाचा २। परमवाचे २। परम वचा २। परमत्वचे २। यदा विभक्तिरुदात्ता न भवति तदा समासान्तोदात्तत्वमेव। अन्तोदात्तादिति किम्? अवाचा। सुवाचा। सुत्वचा। तत्पुरुषेऽव्ययम्। तत्र तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययेति पूर्वपदप्रकृतिस्वरः। उत्तरपदग्रहणमेकाज्विशेषणेतोत्तरपदं विशेषयितुम्। अन्यथा हि समासविशेषणमेतत् स्यात्। तत्र शुन ऊरू श्वोर्व्योत्यत्रैवाय विधि. स्यात्। अनित्यसमास इति किम्? अग्निचिता। सोमसुता। उपपदमतिङ् इत्यय नित्य नित्याऽधिकारे समासो विधीयते। तत्र, गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरेण चिद् शब्द उदात्तः। यस्तु विग्रहाभावेन नित्यसमासस्तत्र भवत्येव विकल्पः—अवाचा ब्राह्मणेन, सुवाचा ब्राह्मणेनेति। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं भवति॥

अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १७० ॥

अञ्चेः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। इन्द्रो दधीचो अस्थभिः। चाविति पूर्वपदान्तोदात्तत्त्व प्राप्तम्। तृतीयादिरिति वर्तमाने शसोऽपि परिग्रहार्थमसर्वनामस्थानग्रहणम्। इहापि यथा स्यात्—प्रतीचो बाहून् प्रतिभङ्ध्येषामिति॥

ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ॥ १७१ ॥

ऊठ् इदम् पदादि अप् पुम् रै दिव् इत्येतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति। ऊठ्—प्रष्ठौहः। प्रष्ठौहा। ऊठ्युपधाग्रहणं कर्तव्यमिह मा भूत्—अक्षद्युवा।

(२) चतुरो देहीत्यपिपुस्तकान्तरे।

अघघुवे । इदम्—आभ्याम् । एभिः । अन्तोदात्तादित्यधिकारादन्वादेशे न भवति—अथो आभ्यां निपुणमधीतमिति । पदादयः पद्दन्नोमासित्येवमादयो निशपर्यन्ता इह गृह्यन्ते—निपदश्चतुरो जहि । या दतो धावति । असनप्रभृतिभ्यो विभक्तिरुदात्तैव भवति—ग्रीवायां बद्धो अपि कक्ष आसनि । मत्स्यं न दीन उदनि क्षियन्तम् । अप्—अपः पश्य । अद्भिः । अद्भ्यः । पुम्—पुंसः । पुंसा । पुंसे । पुम्भ्याम् । पुम्भ्यः । रै—रायः पश्य । राभ्याम् । राभिः । दिव्—दिवः पश्य । दिवा । दिवे ॥

## अष्टनो दीर्घात् ॥ १७२ ॥

अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति । अष्टाभिः । अष्टाभ्यः । अष्टासु । धृतादिपाठादष्टन्शब्दोऽन्तोदात्तस्तत्र झल्युपोत्तममित्यस्यापवादो विभक्तेरेवोदात्तत्वं विधीयते । दीर्घादिति किम् ? अष्टसु प्रक्रमेषु ब्राह्मणोऽग्नीनादधीत । इदमेव दीर्घग्रहणमष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च पदसंज्ञां ज्ञापयति । अन्यथा ह्यात्वपक्षे सावकाशोऽष्टनः स्वरः परत्वादनात्वपक्षे पदस्वरेण बाधिष्यत इति किं दीर्घग्रहणेन ॥

## शतुरनुमो नद्यजादी ॥ १७३ ॥

अन्तोदात्तादिति वर्तते । अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिर्विभक्तिरसर्वनामस्थानमुदात्ता भवति । तुदती । नुदती । लुनती । पुनती । तुदता । नुदता । लुनता । पुनता । अनुम इति किम् ? तुदन्ती । नुदन्ती । अत्राप्यदुपदेशादिति लसार्वधातुकानुदात्तत्वे एकादेशस्वरस्यैकादेश उदात्तेनोदात्त इत्युदात्तत्वं तस्य पूर्वत्रासिद्धत्वं नेष्यत इति शत्रन्तमन्तोदात्तं भवति । नद्यजादी इति किम् ? तुदद्भ्याम् । नुदद्भ्याम् । तुदद्भिः । अन्तोदात्तादित्येव । ददती । दधती । अभ्यस्तानामादिरित्याद्युदात्तावेतौ । *बृहन्महतोरुपसंख्यानम्* । बृहती । महती । बृहता । महता ॥

## उदात्तयणो हल्पूर्वात् ॥ १७४ ॥

उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी अजादिरसर्वनामस्थानविभक्तिरुदात्ता भवति । कर्त्री । हर्त्री । प्रलवित्री । प्रसवित्री । कर्त्रा । हर्त्रा । प्रलवित्रा । प्रसवित्रा । तृजन्ता एतेऽन्तोदात्ताः । उदात्तग्रहणं किम् ? कर्त्री । हर्त्री । कर्त्रा । हर्त्रा । तृन्नन्तोऽयमाद्युदात्तः । हल्पूर्वादिति किम् ? बहुतितवा ब्राह्मण्या । *नकारग्रहणं च कर्त्तव्यम्* । वाक्पतीय कन्या ॥

## नोङ्धात्वोः ॥ १७५ ॥

ऊङो धातोश्च य उदात्तयण् हल्पूर्वस्तस्मात्पराऽजाद्यसर्वनामस्थानविभक्तिर्नोदात्ता भवति । ब्रह्मबन्ध्वा । ब्रह्मबन्ध्वे । वीरबन्ध्वा । वीरबन्ध्वे । ऊङ् प्रत्ययस्वरेणोदात्तः । तेन सह य एकादेशः सोऽप्युदात्त इति उदात्तयणवकारस्तस्मादुदात्तत्वे

प्रतिषिद्धे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति विभक्तिस्वर्यते। धातुयणः खल्वपि—सकृल्व्या। सकृल्व्ये। खलप्वे। क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य ओः सुपि यणादेशः॥

## ह्रस्वनुड्भ्यां मतुप् ॥ १७६ ॥

अन्तोदात्तादित्येव। ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुब् उदात्तो भवति। अग्निमान्। वायुमान्। कर्तृमान्। हर्तृमान्। नुटः खल्वपि—अक्षण्वता। शीर्षण्वता। अन्तोदात्तादित्येव। वसुमान्। वसुशब्द आद्युदात्तस्तस्मान्मतुब् अनुदात्त एव भवति। अत्र च स्वरविधौ व्यञ्जनमविद्यमानवदित्येषा परिभाषा नाश्रीयते, नुड्ग्रहणात् तेन मरुत्वानित्यत्र न भवति। *रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम्*। रेवान्। *त्रेश्च प्रतिषेधो वक्तव्यः* त्रिवतीर्याज्यानुवाक्या भवन्तीति॥

## नामन्यतरस्याम् ॥ १७७ ॥

ह्रस्वग्रहणमनुवर्तते मतुप्ग्रहणं च। तेन मतुपा ह्रस्वो विशेष्यते मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तादन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम् २। वायूनाम् २। कर्तृणाम् २। मतुपा ह्रस्वविशेषणं किम्? भूतपूर्वेऽपि ह्रस्वे यथा स्यात्। अन्यथा हि साम्प्रतिक एव स्यात् तिसृणां, चतसृणामिति। मतुप्कस्य ग्रहणं किम्? धेन्वाम्। शकट्याम्। उदात्तयणो हल्पूर्वादित्ययमन्तोदात्तः। ह्रस्वादित्येव, कुमारीणाम्। अन्तोदात्तादित्येव, त्रपूणाम्। वसूनाम्॥

## ङ्याश्छन्दसि बहुलम् ॥ १७८ ॥

ङ्यन्तात्छन्दसि विषये नामुदात्तो भवति बहुलम्। देवसेनानामभिभञ्जतीनाम्। बह्वीनां पिता। न च भवति, नदीनां पारे जयन्तीनां मरुतः॥

## षट्त्रिचतुर्भ्यो हलादिः ॥ १७९ ॥

अन्तोदात्तादित्येतन्निवृत्तम्। षट्सञ्ज्ञकेभ्यस्त्रि चतुर इत्येताभ्यां च परा हलादिर्विभक्तिरुदात्ता भवति। षड्भिः। षड्भ्यः। षण्णाम्। पञ्चानाम्। सप्तानाम्। त्रि—त्रिभिः। त्रिभ्यः। त्रयाणाम्। चतुर—चतुर्भ्यः। चतुर्णाम्। हलादिरिति किम्? चतस्रः पश्य॥

## झल्युपोत्तमम् ॥ १८० ॥

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमं तत्समीपे च यत्तदुपोत्तमम्। पञ्चभिस्तपस्तपति। सप्तभिः परान् जयति। तिसृभिश्च वहसे त्रिंशता। चतुर्भिः। झलीति किम्? पञ्चानाम्। सप्तानाम्। उपोत्तममिति किम्? षड्भिः। षड्भ्यः॥

## विभाषा भाषायाम् ॥ १८१ ॥

षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति।—

भाषायां विषये । पञ्चभिः । २ । सप्तभिः । २ । तिसृभिः । २ । चतसृभिः । २ ॥

न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥ १८२ ॥

गो श्वन् साववर्ण-सौ प्रथमैकवचने यदवर्णान्तं राड् अङ् क्रुङ् कृदइत्येतेभ्यो यदुक्तं तन्न भवति । गवा । गवे । गोभ्यामिति । सावेकाचस्तृतीयादिर्विभक्तिरिति प्राप्तिः प्रतिषिद्ध्यते । सुगुना । सुगवे । सुगुभ्यामिति । अन्तोदात्तादुत्तरपदादिति प्राप्तिः । श्वन्—शुना । शुने । श्वभ्याम् । परमशुना । परमशुने । परमश्वभ्याम् । पूर्ववत् प्राप्तिः । साववर्णः—सो प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम् , येभ्यः । तेभ्यः । केभ्यः । राड्—राजतेः क्विबन्तः, राजा । परमराजः । अङ्—अञ्चतिः क्विबन्तस्तस्य सनकारस्य ग्रहणं विषयावधारणार्थं, यत्रास्य नलोपो नास्ति तत्र प्रतिषेधो यथा स्यात् । नाञ्चेः पूजायामिति प्रतिषिद्ध्यते नलोपः । प्राञ्चा । प्राङ्भ्याम् । नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वम् । प्राचा । प्राचे । प्राग्भ्याम् । क्रुङ् क्विबन्त एव—क्रुञ्चा । परमक्रुञ्चा । कृत्—करोतेः कृतिर्वा क्विबन्तः । कृता । परमकृता ॥

दिवो झल् ॥ १८३ ॥

दिवः परा झलादिर्विभक्तिर्नोदात्ता भवति । द्युभ्याम् । द्युभिः । सावेकाच इति ऊडिदम्पदाद्यप्पुम्रैद्युभ्य इति वा प्राप्तिः प्रतिषिध्यते । झलीति किम् ? दिवा ॥

नृ चान्यतरस्याम् ॥ १८४ ॥

नृ इत्येतस्मात् परा झलादिर्विभक्तिरन्यतरस्यां नोदात्ता भवति । नृभ्याम् । नृभिः । नृभ्यः । नृषु । झलित्येव । न्रा । न्रे ॥

तित् स्वरितम् ॥ १८५ ॥

तित्स्वरितं भवति । सन्नन्ताद्यत्—चिकीर्ष्यम् । जिहीर्ष्यम् । ऋहलोर्ण्यत्—कार्यम् । हार्यम् । प्रत्ययाद्युदात्तस्यापवादः ॥

तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८६ ॥

तासेरनुदात्तेतो ङितोऽकारान्तोपदेशाच्च शब्दात् परं लसार्वधातुकमनुदात्तं च भवति ह्नुङ् इङ् इत्येताभ्यां परं वर्जयित्वा । तासेस्तावत्—कर्ता । कर्तारौ । कर्तारः । प्रत्ययस्वरापवादोऽयम् । अनुदात्तेतः—आस—आस्ते । वस—वस्ते । ङित्—षुङ्—सुते । शीङ्—शेते । अदुपदेशात्—तुदतः । नुदतः । पचतः । पठतः । अनुबन्धस्यानेकान्तिकत्वादकारान्तोपदेश एव शप् । पचमानः । यजमानः । यद्यत्र मुक् अकारमात्रस्य स्यात् तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो निघातः । अथाकारान्तस्याङ्गस्य, तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वादसिद्ध इति सिद्धम् । चित्स्वरोऽनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते । तास्यादिभ्य इति किम्? चिनुतः । चिन्वन्ति । हिनुतः, स्तृणुः पूर्ववत्, कार्यं प्रति, स,नु, प्रत्ययः । उपदेशग्रहणं

किम् ? कतीह पत्रमानाः । सार्वधातुकमिति किम् ? शिश्ये । शिश्याते । शिश्यिरे । अह्न्विङोरिति किम् ? हनुते । यदधीते ॥

आदिः सिचोऽन्यतरस्याम् ॥ १८७ ॥

उदात्त इति वर्त्तते । सिजन्तस्यान्यतरस्यामादिरुदात्तो भवति । मा हि कार्ष्टाम् । मा हि कार्ष्टाम् । एकोऽत्राद्युदात्तः । अपरोऽन्तोदात्तः । मा हि लाविष्टाम् २ । एकोऽत्राद्युदात्तः । अपरो मध्योदात्तः । सिचश्चित्करणादागमानुदात्तत्व हि बाध्यते । ※सिच आद्युदात्तत्वे ऽनिटः पित पक्षे उदात्तत्वं वक्तव्यम्※ । मा हि कार्षम् । २ । अनिट इति किम् ? मा हि लाविषम् । २ । मध्योदात्त एवाद्युदात्ताभावपक्षे भवति ॥

स्वपादिहिंसामच्यनिटि ॥ १८८ ॥

लसार्वधातुकग्रहण यदनुवर्तते तदच्यनिटीति सवन्धादिह सप्तम्यन्तं भवति । स्वपादिग्रहणात् । स्वपादीनां हिंसेश्चाजादावनिटि लसार्वधातुके परतोऽन्यतरस्यामादिरुदात्तो भवति । स्वपन्ति । २ । श्वसन्ति । २ । हिंसे खल्व पे-हिंसन्ति । २ प्रत्ययस्वरेण पक्षे मध्योदात्तः । अचीति किम् ? स्वप्यात् । हिंस्यात् । अनिटीति किम् ? श्वपित । श्वसितः । ※ङ्यिाजादावेव विधिरिष्यते※ इह न भवति-स्वपानि । हिनसानि ॥

अभ्यस्तानामादिः ॥ १८९ ॥

अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति । ददति । ददतु । दधति । दधतु । जक्षति । जक्षतु । जाग्रति । जाग्रतु । अचीत्येव । दध्यात् । अनिटीत्येव । जक्षितः । आदिरिति वर्त्तमाने पुनरादिग्रहणं नित्यार्थम् ॥

अनुदात्ते च ॥ १९० ॥

अविद्यमानोदात्ते च लसार्वधातुके परतोऽभ्यस्तानामादिरुदात्तो भवति । अनजाद्यर्थ आरम्भः ( १ ) ददाति । जहाति । दधाति । जिहीते । मिमीते । अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादेशार्थ.-मा हि स्म दधात् । दधात्यत्र ॥

सर्वस्य सुपि ॥ १९१ ॥

सर्वशब्दस्य सुपि परत आदिरुदात्तो भवति । सर्वः । सर्वौ । सर्वे । सुपीति किम् ? सर्वतरः । सर्वतमः । प्रत्ययलक्षणेनाप्ययं स्वर इष्यते सर्वस्तोम इति । ※सर्वस्वरोऽनकच्कस्येति वक्तव्यम्※ । सर्वकः । चित्स्वरेणान्तोदात्तो भवति ॥

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ॥ १९२ ॥

भी ह्री भृ हु मद जन धन दरिद्रा जागृ इत्येतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात् पूर्वमुदात्तं भवति । बिभेति । जिह्रेति । बिभर्त्ति । जुहोति । ममत्तु नः परिज्मा । मदेर्बहुलं छन्दसीति विकरणस्य श्लुः । जजनदिन्द्रम् । जन जनन इत्यस्य

( १ ) अनजाद्यर्थ आरम्भ इति पदमञ्जर्यां दशनाश्नापाठः ।

पञ्चमे लकारे रूपम्। घन धान्य इत्यस्य पञ्चमे लकारे दघनत्। दरिद्राति। जागर्ति। भ्यादीनामिति किम्? ददाति। पितीति किम्? दरिद्रति।

लिति ॥ १९३ ॥

लिति प्रत्ययात् पूर्वमुदात्त भवति। चिकीर्षकः। जिहीर्षकः। भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम् ॥

आदिर्णमुल्यन्यतरस्याम् ॥ १९४ ॥

णमुलि परतोऽन्यतरस्यामादिरुदात्तो भवति। लोलूयंलोलूयम्। आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयशब्द एकत्राद्युदात्तः। अपरत्र लित्स्वरेण मध्योदात्तः ॥

अचः कर्तृयकि ॥ १९५ ॥

उपदेश इति वर्त्तते। अजन्ता ये उपदेशे धातवस्तेषां कर्तृयकि अन्यतरस्यामादिरुदात्तो भवति। लूयते केदारः स्वयमेव। २। स्तीर्यते केदारः स्वयमेव।२। यदाऽऽद्युदात्तत्वं न भवति तदा लसार्वधातुकनिघाते कृते यक एव स्वरो भवति। जनादीनामुपदेश एवात्वं द्रष्टव्यम्। तत्राप्यय स्वर इष्यते। जायते स्वयमेव। सायते स्वयमेव। खायते स्वयमेव। अच इति किम्? भिद्यते स्वयमेव। कर्तृग्रहणं किम्? लूयते केदारो देवदत्तेन ॥

थलि च सेटीडन्तो वा ॥ १९६ ॥

सेटि थलि इट् वा उदात्तो भवति अन्तो वा आदिर्वाऽन्यतरस्याम्। लुलविथ। ४। यदा नैते त्रयः स्वरास्तदा लिति प्रत्ययात् पूर्वमुदात्त भवति। तेनैते चत्वारः स्वराः पर्यायेण भवन्ति। सेटीति किम्? ययाथ। लिति प्रत्ययात् पूर्वमुदात्तमित्ययमेवात्र स्वरो भवति ॥

ञ्नित्यादिर्नित्यम् ॥ १९७ ॥

ञिति निति च नित्यमादिरुदात्तो भवति। गर्गादिभ्यो यञ्—गार्ग्यः। वात्स्यः। वासुदेवार्जुनाभ्यां वुन्। वासुदेवकः। अर्जुनकः। प्रत्ययस्वरापवादोऽयं योगः। प्रत्ययलक्षणमत्र नेष्यते। तेन गर्गाः विदाः यस्का इत्यत्र यञि ञञि कनि च लुप्ते न भवति।

आमन्त्रितस्य च ॥ १९८ ॥

आमन्त्रितस्यादिरुदात्तो भवति। देवदत्त। देवदत्तौ। देवदत्ताः। अत्र कारकादत्तश्रुतयोरेवाशिषीति आशिर्बाध्यते। लुमतापि लुप्ते प्रत्ययलक्षणमत्रेष्यते। सर्पिरागच्छ सप्तागच्छतेति ॥

पथिमथोः सर्वनामस्थाने ॥ १९९ ॥

पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ तयोः सर्वनामस्थाने परत आदिरुदात्तो भवति। पन्थाः। पन्थानौ। पन्थानः। मन्थाः मन्थानौ। मन्थानः। सर्वनामस्थान इति किम्? पथः पश्य। मथः पश्य। उदात्तनिवृत्ति-

स्वरेणान्तोदात्तो भवति । प्रत्ययलक्षणमत्रापि नेष्यते । पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः पथिशब्दः ॥

अन्तश्च तवै युगपत् ॥ २०० ॥

तवैप्रत्ययान्तस्यान्तश्चशब्दादादिश्च युगपदुदात्तौ भवतः । कर्त्तवै । हर्तवै । प्रत्ययाद्युदात्तत्वापवादः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । एकवर्जमिति वचनाद्यौगपद्यं न स्यात् ॥

क्षयो निवासे ॥ २०१ ॥

क्षयशब्दो निवासेऽभिधेये आद्युदात्तो भवति । क्षियन्ति निवसन्त्यस्मिन्निति क्षयः । पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः । क्षये जागृहि प्रपश्यन् । निवास इति किम् ? क्षयो वर्त्तते दस्यूनाम्, एरजित्ययमजन्तः ॥

जयः करणम् ॥ २०२ ॥

जयशब्दः करणवाची आद्युदात्तो भवति । जयन्ति तेनेति जयः । पुंसि संज्ञायां घः प्रायेणेति घस्तस्य प्रत्ययस्वरः प्राप्तः । जयोऽश्वः । करणमिति किम् ? जयो वर्त्तते ब्राह्मणानाम् । अत्राप्येरजित्ययमजन्तः ॥

वृषादीनां च ॥ २०३ ॥

वृष इत्येवमादीनामादिरुदात्तो भवति । वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । एते सर्वे पचाद्यच्प्रत्ययान्ताः । गय इत्यत्र गायतेर्निपातनादेत्वम् । नयः । तयः । पयः । वेदः । अंशः । दवः । एतेऽपि तथैवाच्प्रत्ययान्ताः । सूद इगुपधादिति कप्रत्ययान्तः । गुहाभिदादिरङ्प्रत्ययान्तः ॐसमरणौ संज्ञायां समतौ भावकर्मणोःॐ शमो भावे रणः कर्मणि, अजन्तावेतौ निपातनात् भावकर्मणोर्भवतः । मन्त्रः पचाद्यजन्तः । शान्तिरिति क्तिजन्तः । कामः । यामः—घञन्तावेतौ । [illegible] भिदादयः । वहो गोचरादिषु घप्रत्ययान्तः । कल्पः अजन्तः । पादो घञन्तः । [illegible] क्वचित् प्रत्ययस्वरः प्राप्त, क्वचित्, कर्षात्वतो घञोन्त उदात्त इति । [illegible] गणः । अविहितमाद्युदात्तत्वं वृषादिषु द्रष्टव्यम् ॥

संज्ञायामुपमानम् ॥ २०४ ॥

उपमानशब्दः संज्ञायामाद्युदात्तो भवति । चञ्चा । वध्रिका । खरकुटी, दासी । उपमानशब्दा एते उपमेयस्य सञ्ज्ञाः । तत्र इवे प्रतिकृताविति यत्कन् तस्य लुम्मनुष्य इति लुप् । यद्येवं किमर्थमिदमुच्यते प्रत्ययलक्षणेन सिद्धमाद्युदात्तत्वम् ? एतदेव ज्ञापयति क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवतीति । तथा च पूर्वत्रोदाहृतम् । संज्ञायामिति किम् ? अग्निर्माणवकः । उपमानमिति किम् ? देवदत्तः ॥

निष्ठा च द्व्यजनात् ॥ २०५ ॥

निष्ठान्तं च द्व्यच् संज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति । दत्तः । गुप्तः । बुद्धः । प्रत्ययस्वरापवादः । निष्ठेति किम् ? देवः । भीमः । द्व्यजिति किम् ?

चिन्तितः । रचितः । अनादिति किम् ? घ्रातः । आप्तः । संज्ञायामिति किम् ? कृतम् । हृतम् ॥

शुष्कधृष्टौ ॥ २०६ ॥

आदिरुदात्त इति वर्त्तते । शुष्क धृष्ट इत्येतावाद्युदात्तौ भवतः । शुष्कः । धृष्टः । असंज्ञार्थ आरम्भः ॥

आशितः कर्ता ॥ २०७ ॥

आशितशब्दः कर्तृवाची आद्युदात्तो भवति । आशितो देवदत्तः । अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः । तत्र, थाथघञिति प्राप्तः स्वरो बाध्यते । कर्तेति किम् ? आशितम् अन्नम् । आशितं देवदत्तेन । पूर्वत्र कर्मणि, उत्तरत्र भावे ॥

रिक्ते विभाषा ॥ २०८ ॥

रिक्तशब्दे विभाषा आदिरुदात्तो भवति । रिक्तः । रिक्तः । संज्ञायां, निष्ठा च द्व्यजनादियनेन पूर्वविप्रतिषेधेन नित्यमाद्युदात्तः ॥

जुष्टार्पिते च छन्दसि ॥ २०९ ॥

जुष्ट अर्पित इत्येते शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः । जुष्टः । २ । अर्पितः । २ । छन्दसीति किम् ? भाषायां प्रत्ययस्वरेणान्तोदात्तावेतौ ॥

नित्यं मन्त्रे ॥ २१० ॥

जुष्ट अर्पित इत्येते शब्दरूपे मन्त्रविषये नित्यमाद्युदात्ते भवतः । जुष्टं देवानाम्, अर्पितं पितॄणाम् । पूर्वेणात्र विकल्पः प्राप्तः । केचिदत्र जुष्टेत्येतदेवानुवर्तयन्ति । अर्पितशब्दस्य विभाषा मन्त्रेऽपीच्छन्ति । अन्तोदात्तोऽपि ह्ययं मन्त्रे पठ्यते । तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिता इति ॥

युष्मदस्मदोर्ङसि ॥ २११ ॥

युष्मदस्मदी मदिक्प्रत्ययान्तेऽन्तोदात्ते तयोर्ङसि परत आदिरुदात्तो भवति । तव स्वम् । मम स्वम् ॥

ङयि च ॥ २१२ ॥

युष्मदस्मदोरिति वर्त्तते, आदिरुदात्त इति च । ङेइत्येतस्मिश्च परतो युष्मदस्मदोरादिरुदात्तो भवति । तुभ्यम् । मह्यम् । पृथग्योगकरणं यथासंख्यशङ्कानिवृत्त्यर्थम् ॥

यतोऽनावः ॥ २१३ ॥

निष्ठा च द्व्यजनादित्यतो द्व्यज्ग्रहणमनुवर्तते । यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति, न चेन्नौशब्दात्परो भवति । अचो यत्-चेयम् । जेयम् । शरीरावयवाद्यत्-कण्ठ्यम् । ओष्ठ्यम् । तित्स्वरितमित्यस्यापवादः । अनाव इति किम् ? नाव्यम् । द्व्यच इत्येव । चिकीर्ष्यम् । ललाट्यम् ॥

ईड्वन्दवृशंसदुहां ण्यतः ॥ २१४ ॥

ईड वन्द वृ शंस दुह इत्येतेषां योण्यत् तदन्तस्यादिरुदात्तो भवति । ईड्यम् ।

वन्द्यम्। वार्यम्। शंस्यम्। दोह्या धेनुः। द्व्यनुबन्धकत्वात् ण्यतो यद्ग्रहणेन ग्रहणं नास्तीति तित्स्वरितमित्येतत् प्राप्तम्। वार्यमिति वृङ् संभक्तावित्यस्यायं ण्यत्। क्यब्विधौ हि वृञ एव ग्रहणमिष्यते॥

### विभाषा वेण्विन्धानयोः॥ २१५॥

वेणु इन्धान इत्येतयोर्विभाषाऽऽदिरुदात्तो भवति। वेणुः। वेणुः। इन्धानः। इन्धानः। वेणुशब्दोऽयमजिवृरीभ्यो निच्चेति णुप्रत्ययान्तो, नित्त्वान्नित्यमाद्युदात्तः प्राप्तः। इन्धानशब्दोऽपि यदा चानशन्तस्तदा चित्त्वादन्तोदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः। तदेवमिन्धाने सर्वथाऽप्राप्तमाद्युदात्तत्वं पक्षे विधीयते। वेणुरिव वेणुरित्युपमाने यदा संज्ञा भवति तदा संज्ञायामुपमानमिति नित्यमाद्युदात्तत्वमिष्यते॥

### त्यागरागहासकुहश्वठक्रथानाम्॥ २१६॥

त्याग राग हास कुह श्वठ क्रथ इत्येतेषां विभाषा आदिरुदात्तो भवति। त्यागः। २। रागः। २। हासः। २। एते घञन्तास्तेषां पक्षे कर्षात्वतो घञोऽन्त उदात्त इत्युदात्तत्वमेव भवति। कुहः। २। श्वठः। २। क्रथः। २। एते पचाद्यजन्ताः॥

### उपोत्तमं रिति॥ २१७॥

रिदन्तस्योपोत्तममुदात्तं भवति। त्रिप्रभृतीनामन्त्यमुत्तमं तस्य समीपे यत्तदुपोत्तमम्। करणीयम्। हरणीयम्। पटुजातीयः। मृदुजातीयः। प्रत्ययस्वरापवादोऽयम्॥

### चङ्यन्यतरस्याम्॥ २१८॥

चङन्तेऽन्यतरस्यामुपोत्तममुदात्तं भवति। मा हि चीकरताम् २। न माङ्योग इत्यडि प्रतिषिद्धे, हि चेति निघातेऽप्रतिषेधादिति लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति। उपोत्तमग्रहणाद् द्वयोर्न भवति—मा हि दधत्॥

### मतोः पूर्वमात् संज्ञायां स्त्रियाम्॥ २१९॥

मतोः पूर्वं आकार उदात्तो भवति तच्चेन्मत्वन्तं स्त्रीलिङ्गे संज्ञा भवति। उदुम्बरावती। पुष्करावती। वीरणावती। शरावती। शरादीनां चेति दीर्घः। आदिति किम्? इक्षुमती। द्रुमवती। संज्ञायामिति किम्? खट्वावती। स्त्रियामिति किम्? शरावान्। मतोरिति किम्? गवादिनी॥

### अन्तोऽवत्याः॥ २२०॥

संज्ञायामित्येव। अवतीशब्दान्तस्य संज्ञायामन्त उदात्तो भवति। अजिरवती। खदिरवती। हंसवती। कारण्डवती(१)। ङीपः पित्त्वादनुदात्तत्वं प्राप्तम्। अवत्या

(१) वेत्रवतीत्यधिकं पुस्तकान्तरे।

इति किमुच्यते, न यत्वा ङीपैवमुच्येत ? नैवं शक्यमिहापि स्यात्—राजवती। स्वरविधौ नलोपस्यासिद्धत्वान्नायमवतीशब्दः । वत्वं पुनराश्रयात् सिद्धम् ॥

ईवत्याः ॥ २२१ ॥

ईवतीशब्दान्तस्यान्त उदात्तो भवति स्त्रियां संज्ञायां विषये। अहीवती। कृपीवती। मुनीवती(१) ॥

चौ ॥ २२२ ॥

चावित्यञ्चतिर्लुप्तनकारो गृह्यते। तस्मिन् परतः पूर्वस्यान्त उदात्तो भवति। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। उदात्तनिवृत्तिस्वरापवादोऽयम्। ॥चावतद्धित इति वक्तव्यम्॥ दाधीचः। माधूचः। प्रत्ययस्वर एवात्र भवति॥

समासस्य ॥ २२३ ॥

समासस्यान्त उदात्तो भवति। राजपुरुषः। ब्राह्मणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजदृषत्। ब्राह्मणसमित्। स्वरविधौ व्यञ्जनमविद्यमानवदिति हलन्तेऽप्यन्तोदात्तत्वं भवति। नानापदस्वरस्यापवादः॥

इति काशिकायां वृत्तौ षष्ठस्याध्यायस्य प्रथमः पादः ॥ ६ ॥ १ ॥

---

## ॥ अथ षष्ठाध्यायस्य द्वितीयः पादः ॥

बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ १ ॥

पूर्वपदग्रहणमत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति, स्वभावेनावतिष्ठते, न विकारमनुदात्तत्वमापद्यते। समासान्तोदात्तत्वेहि सति अनुदात्तं पदमेकवर्जमिति सोऽनुदात्तः स्यादिति समासान्तोदात्तत्वापवादोऽयमारभ्यते। कार्ष्णोत्तरासङ्गाः। कृष्णो मृगस्तस्य विकारः कार्ष्णः। प्राणिरजतादिभ्योऽञित्यञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः। यूपवलजः। यूपशब्द उणादिषु, कुसुयुभ्यश्चेति पप्रत्ययान्तः। तत्र च दीर्घ इति निदिति च वर्तते तेनाद्युदात्तः। ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। स्नातकपुत्रः। स्नातकशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः। श्रोत्रियपुत्रः। श्रोत्रियशब्दो नित्वादाद्युदात्तः। मनुष्यनाथः। मनुष्यशब्दस्तित्स्वरितमिति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं चात्रानुवर्त्तते। तेन सर्वानुदात्ते पूर्वपदे विधिरेव नास्तीति समासान्तोदात्तत्वं भवति—समभाग इति समशब्दो हि सर्वानुदात्तः॥

---

(१) कपीवतीत्यधिकमेकस्मिन्पुस्तके।

तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ २ ॥

तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत् पूर्वपदं तत्प्रकृतिस्वरं भवति । तुल्यार्थ—तुल्यश्वेतः । तुल्यलोहितः । तुल्यमहान् । सदृक्श्वेतः । सदृग्लोहितः । सदृङ्महान् । सदृशश्वेतः । सदृशलोहितः । सदृशमहान् । एते कृत्यतुल्याख्या अजात्येति कर्मधारयाः । तत्र तुल्यशब्दो यतोऽनाव इत्याद्युदात्तः । सदृक्शब्दः समानान्ययोश्चेति क्विन्प्रत्ययान्तः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । सदृशशब्दोऽपि कञन्तो मध्योदात्तः । तुल्यार्थ । तृतीया-शङ्कुलया खण्डः, शङ्कुलाखण्डः । किरिणा काणः, किरिकाणः । शङ्कुपूर्वात्कलातेर्घञर्थे कविधानमिति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः । किरिशब्दोऽपि, किरतेः कॄगॄपॄकुटिभिदिछिदिभ्यश्चेतीकारप्रत्ययः किदौणादिकस्तेनासावन्तोदात्तः । तृतीया । सप्तमी—अक्षेषु शौण्डोऽक्षशौण्डः । पानशौण्डः । अशेर्देवने इति सप्रत्ययान्तोऽक्षशब्दोऽन्तोदात्तः । पानशब्दो ल्युडन्तो लित्स्वरेणाद्युदात्तः । सप्तमी । उपमान—शस्त्रीश्यामा । कुमुदश्येनी । हंसगद्गदा । न्यग्रोधपरिमण्डला । दूर्वाकाण्डश्यामा । शरकाण्डगौरी । उपमानानि सामान्यवचनैरिति समासः । शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः । कुमुदशब्दोऽपि, कौ मोदत इति मूलविभुजादित्वात् कप्रत्ययान्तो, मद्धिपदस्यानिसन्तस्येति वाऽऽद्युदात्तः । हंसशब्दो, वृतॄवदिहनिकमिकषिभ्यः स इति सप्रत्ययान्तोऽन्तोदात्तः । न्यग्रोहतीति न्यग्रोधः पचादित्वादच्प्रत्ययान्तस्य 'न्यग्रोधस्य च केवलस्य' इति निपातनाद् हकारस्य धकारो मध्योदात्तत्वं च । दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदात्तौ । उपमान । अव्यय—अब्राह्मणः । अवृषलः । कुब्राह्मणः । कुवृषलः । निष्कौशाम्बिः । निर्वाराणसिः । अतिखट्वः । अतिमालः । एतान्यव्ययान्याद्युदात्तानि । ॐअव्ययं नञ्कुनिपातानामिति वक्तव्यम्ॐ । इह मा भूत्-स्नात्वाकालक इति । अव्यय । द्वितीया—मुहूर्तसुखम् । मुहूर्तरमणीयम् । सर्वरात्रकल्याणी । सर्वरात्रशोभना । अत्यन्तसंयोगे चेति द्वितीयासमासः । मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः । सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तोऽन्तोदात्तः । द्वितीया । कृत्य—भोज्योष्णम् । भोज्यलवणम्—पानीयशीतम् । हरणीयचूर्णम् । भोज्यशब्दो ण्यदन्तोऽन्तस्वरितः । पानीयहरणीयशब्दयोरुपोत्तमं रितीति ईकार उदात्तः ॥

वर्णो वर्णेष्वनेते ॥ ३ ॥

प्रकृत्या पूर्वपदं तत्पुरुष इति च वर्तते । वर्णवाचि पूर्वपदं वर्णवाचिष्वेवोत्तरपदेषु एतच्छब्दवर्जितेषु समासे प्रकृतिस्वरं भवति । कृष्णसारङ्गो, लोहितसारङ्गः । कृष्णकल्माषो, लोहितकल्माषः । कृषेर्वर्णे इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः । लोहितशब्दोऽपि रुहेरश्च लो वेति तन्प्रत्ययान्त आद्युदात्तः । वर्ण इति किम् ? परमकृष्णः । वर्णेष्विति किम् ? कृष्णतिलाः । अनेत इति किम् ? कृष्णैतः । लोहितैतः ॥

गाधलवणयो प्रमाणे ॥ ४ ॥

प्रमाणवाचिनि तत्पुरुषे समासे गाध लवण इत्येतयोरुत्तरपदयो पूर्वपद प्रकृतिस्वर भवति । शम्बगाधमुदकम् । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थ । गोलवणम् । अश्वलवणम् । यावद्गवे दीयते तावदित्यर्थं । षष्ठीसमासा एते तत्र शमेर्बन्निति बन्प्रत्ययान्तत्वाच्छम्ब शब्द आद्युदात्त । अरित्रशब्दोऽर्तिलूधूसू इतीत्रप्रत्ययान्तो मध्योदात्त । गोशब्दो डोप्रत्ययान्तोऽन्तोदात्त । अश्वशब्दोऽशूप्रुषीति क्वन्प्रत्ययान्त आद्युदात्त । प्रमाणमियत्तापरिच्छेदमात्रमिह द्रष्टव्य न पुनरायाम एव । स्वरव्यवस्थार्थं, च प्रमाणविशेषविषयत्वमेतेषाम् । प्रमाण इति किम् ? परमगाधम् । परमलवणम् ॥

दायाद्य दायादे ॥ ५ ॥

तत्पुरुषे समासे दायादशब्द उत्तरपदे दायाद्यवाचि पूर्वपदप्रकृतिस्वर भवति । विद्यादायाद । धनदायाद । सज्ञाया समजनिपदेति विद्याशब्द क्यप्प्रत्ययान्त । उदात्त इति च तत्र वर्त्तते, तेनायमन्तोदात्त । कृपॄवृजिमन्दिनिधाञ्भ्य क्युरिति बहुलवचनात् केवलादपि धात्र क्युप्रत्ययस्तेन धनशब्द प्रत्ययस्वरेणाद्युदात्त । अथ विद्यादायाद इति केन षष्ठी ? स्वामीश्वराधिपतिदायादेति । यद्येवमप्रतिपदविधाना च षष्ठी न समस्यत इति समासप्रतिषेध प्राप्नोति ? एव तर्हि शेषलक्षणैवात्र षष्ठी । तस्यास्तु सप्तमी विधीयमाना बाधिका मा विज्ञायीति पुनरस्यनुज्ञायते । दायाद्य मिति किम् ? परमदायाद । अत्र समासान्तोदात्तत्वमेव भवति ॥

प्रतिबन्धि चिरकृच्छ्रयो ॥ ६ ॥

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयो प्रतिबन्धिवाचि पूर्वपद प्रकृतिस्वर भवति । गमनचिरम् । गमनकृच्छ्रम् । व्याहरणचिरम् । व्याहरणकृच्छ्रम् । गमनव्याहरणशब्दौ ल्युडन्तौ तयोर्लित्स्वर, गमन च यच्चिर चेति विशेषणसमासोऽय मयूरव्यसकादिर्वा द्रष्टव्य । गमन हि कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते । प्रतिबन्धीति किम् ? मूत्रकृच्छ्रम् ।

पदेऽपदेशे ॥ ७ ॥

अपदेशो व्याजस्तद्वाचिनि तत्पुरुषे समासे पदशब्द उत्तरपदे पूर्वपद प्रकृतिस्वर भवति । मूत्रपदेन प्रस्थित । उच्चारपदेन प्रस्थित । मूत्रशब्द सिविमुच्योष्टेरूच्चेति ष्ट्रन्प्रत्ययान्तो मूत्रयतेर्वा घञन्त आद्युदात्त । उच्चारशब्दोऽपि घञन्तस्थाथघञ्क्ता- जबित्रकाणामित्यन्तोदात्त । विशेषणसमासोऽय मयूरव्यसकादिर्वा । अपदेश इति किम् ? विष्णो पद, विष्णुपदम् ॥

निवाते वातत्राणे ॥ ८ ॥

निवातशब्द उत्तरपदे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपद प्रकृतिस्वर भवति । कुट्यैव निवात कुटीनिवातम् । शमीनिवातम् । कुड्यनिवातम् । वातस्या-

भावो निवातम् । अर्थाभाव इत्यव्ययीभावः । निरुद्धो वातोऽस्मिन्निति वा निवातमिति बहुव्रीहिः । तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समस्यन्ते । कुटीशमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ । कुड्यशब्दोऽपि, कवतेर्यत्, हकिश्चेति यत्प्रत्ययान्त आद्युदात्त इत्येके । क्यप्प्रत्ययान्तोऽन्तोदात्त इत्यपरे । वातत्राण इति किम् ? राजनिवाते वसति । सुखं मातृनिवातम् । निवातशब्दोऽयं पार्श्ववाची रूढिशब्दस्तत्रोभयत्र षष्ठीसमासः ॥

## शारदेऽनार्तवे ॥ ९ ॥

ऋतौ भवमार्तवम् । अनार्तववाचिनि शारदशब्द उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । रज्जुशारदमुदकम् । दृषत्शारदाः सक्तवः । शारदशब्दोऽयं प्रत्यग्रवाची तस्य नित्यसमासोऽस्वपदविग्रह इष्यते । सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते । रज्जुशब्दः, सृजेरसुम् चेति उप्रत्ययान्त आदिलोपश्च, धान्ये नित् इति च तत्र वर्तते, तेनाद्युदात्तः । दृषत्शब्दो, दृणातेः पुग् ह्रस्वश्चेति अदिक्प्रत्ययान्तोऽन्तोदात्तः । अनार्तव इति किम् ? परमशारदम् । उत्तमशारदम् । शरदि ऋतुविशेषे भवं यत्तदिह शारदम् ।

## अध्वर्युकषाययोर्जातौ ॥ १० ॥

अध्वर्यु कषाय इत्येतयोर्जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । प्राच्याध्वर्युः । कठाध्वर्युः । कलापाध्वर्युः । एते समानाधिकरणसमासा जातिवाचिनो नियतविषयाः । तत्र प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः । कठशब्दः पचाद्यचि व्युत्पादितस्ततः कठेन प्रोक्तमिति वैशम्पायनान्तेवासिभ्यश्चे [illegible] कठचरकाल्लुगिति लुक् । कलापिना प्रोक्तमिति, कलापिनोऽण् तस्मिन्नणि नपत्य इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे—सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानमिति टिलोपः । तदेवं कलापशब्दोऽन्तोदात्तः । सर्पिर्मण्डकषायम् । उमापुष्पकषायम् । दौवारिककषायम् ! षष्ठीसमासव्युत्पादिता रूढिशब्दा एते । तत्र सर्पिर्मण्डशब्द उमापुष्पशब्दश्च षष्ठीसमासावन्तोदात्तौ । दौवारिकशब्दोऽपि द्वारे नियुक्त इति ठकि सत्यन्तोदात्त एव । जाताविति किम् ? परमाध्वर्युः । परमकषायः ॥

## सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥

सदृश प्रतिरूप इत्येतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। पितृसदृशः। मातृसदृशः। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ । षष्ठीसमासार्थं च सदृशग्रहणमिह तदलुकि षष्ठ्याः प्रयोजयति–दास्याः सदृशो वृषल्याः सदृश इति । अत्र दासीवृषलीशब्दयोरन्तोदात्तत्वादुदात्तयणो हल्पूर्वादिति

विभक्तिरन्तोदात्ता। पितृप्रतिरूपः। मातृप्रतिरूपः। सादृश्य इति किम्? परमसदृशः। उत्तमसदृशः। समासार्थोऽत्र पूज्यमानता, न सादृश्यम्॥

द्विगौ प्रमाणे॥ १२॥

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्यसप्तसमः। गान्धारिसप्तसमः। सप्तसमाः प्रमाणमस्येति मात्रच उत्पन्नस्य, प्रमाणे लो द्विगोर्नित्यमिति लुक्। प्राच्यश्चासौ सप्तसमश्चेति, प्राच्यसप्तसमः। प्राच्यशब्द आद्युदात्तः। गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वा। द्विगाविति किम्? व्रीहिप्रस्थः। प्रमाण इति किम्? परमसप्तसमः।

गन्तव्यपण्यं वाणिजे॥ १३॥

वाणिजशब्द उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति। मद्रवाणिजः। काश्मीरवाणिजः। गान्धारिवाणिजः। मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः। सप्तमीसमासा एते। तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः। काश्मीरशब्दोऽपि पृषोदरादिषु मध्योदात्तः। गान्धारिशब्दः कर्दमादिषु पठ्यते तत्र कर्दमादीनां चेति पक्षे आद्युदात्तो भवति द्वितीयो वा। पण्य—गोवाणिजः। अश्ववाणिजः। गोशब्दोऽन्तोदात्तः। अश्वशब्द आद्युदात्तः। गन्तव्यपण्यमिति किम्? परमवाणिजः। उत्तमवाणिजः॥

मात्रोपज्ञोपक्रमच्छाये नपुंसके॥ १४॥

मात्रा उपज्ञा उपक्रम छाया एतेषूत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं न सरोऽस्ति किंचन। मात्रशब्दोऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्तते। तत्र भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीसमासः। तत्र भिक्षाशब्दो, गुरोश्च हल इत्यप्रत्ययान्तोऽन्तोदात्तः। समुद्रशब्दोऽपि फिषि, पाटलापालङ्काम्बासागरार्थानामित्यन्तोदात्त एव। उपज्ञा—पाणिनोपज्ञमकालकं व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। षष्ठीसमासा एते। तत्र पाणिनोपज्ञमित्यणन्तः पाणिनशब्दः प्रत्ययस्वरेणान्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः। उपक्रम—आढ्योपक्रमं प्रासादः। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि मानानि। एतेऽपि षष्ठीसमासा एव। तत्रैवैनं ध्यायन्तीत्याढ्यः। घञर्थे कविधानमिति कप्रत्ययः। आङ्पूर्वाद् ध्यायतेः, पृषोदरादित्वाद्ध्रस्य ढत्वम्। तदयमाढ्यशब्दस्थाथादिस्वरेणान्तोदात्तः। दर्शनीयशब्दो रित्वादुपोत्तमोदात्तः। सुकुमारशब्दो ... त्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोपक्रमान्तस्य नपुंसकलिङ्गतोपज्ञोपक्रमं तदाद्याचिख्यासायामिति। छाया—इषुच्छायम्। धनुश्छायम्। इषुशब्द, ईषेः किदित्युप्रत्ययान्तस्तत्र च धान्ये निदिति वर्तते, तेनाद्युदात्त

धनु शब्दोऽपि, नब्विषयस्यानिसन्तस्येत्याद्युदात्त एव । इषूणां छायेति षष्ठीसमास । छाया बाहुल्य इति नपुंसकत्वम् । नपुंसक इति किम् ? कुड्यच्छाया ॥

सुखप्रिययोर्हिते ॥ १५ ॥

सुख प्रिय इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपद प्रकृतिस्वर भवति । गमनसुखम् । वचनसुखम् । व्याहरणसुखम् । सुख । प्रिय—गमनप्रियम् । वचनप्रियम् । व्याहरणप्रियम् । समानाधिकरणसमासा एते । तत्र सुखप्रियशब्दौ हितेतासायत्या प्रीतिकरे वर्तते । तद्धि हित यदायत्या प्रीतिं करोति । गमनादिषु ल्युडन्तेषु लित्स्वर । हित इति किम् ? परमसुखम् । परमप्रियम् ॥

प्रीतौ च ॥ १६ ॥

प्रीतौ गम्यमानायां सुख प्रिय इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे पूर्वपद प्रकृतिस्वर भवति । ब्राह्मणसुख पायसम् । छात्रप्रियोऽनध्याय । कन्याप्रियो मृदङ्ग । सुखप्रिययो प्रीत्यव्यभिचारादिह प्रीतिग्रहण तदतिशयप्रतिपत्त्यर्थम् । ब्राह्मणछात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ । कन्याशब्द स्वरितान्त । प्रीताविति किम् ? राजसुखम् । राजप्रियम् ।

स्वं स्वामिनि ॥ १७ ॥

स्वामिन्शब्द उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपद प्रकृतिस्वर भवति । गोस्वामी । अश्वस्वामी । धनस्वामी । अश्वशब्द कथित एव स्वर । स्वमिति किम् ? परमस्वामी ॥

पत्यावैश्वर्ये ॥ १८ ॥

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपद प्रकृतिस्वर भवति । गृहपति । सेनापति । नरपति । धान्यपति । गेहे क इति प्रकृतिस्वरेणान्तोदात्तो गृहशब्द । सह इनेन वर्तत इति बहुव्रीहौ प्रकृत्या पूर्वपदमिति सेनाशब्द आद्युदात्त । "नॄ नये" एतस्माद् ऋदोरबिति अप्प्रत्ययान्त आद्युदात्तो नरशब्द । धान्यमन्त स्वरितम् । ऐश्वर्य इति किम् ? ब्राह्मणो वृषलीपति । वृषल्या भर्तेत्यर्थ ॥

न भूवाक्चिद्दिधिषु ॥ १९ ॥

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भू वाक् चित् दिधिषू इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति । पूर्वेण प्राप्त स्वर प्रतिषिध्यते । भूपति । वाक्पति । चित्पति । दिधिषूपति । षष्ठीसमासा एते समासस्वरेणान्तोदात्ता भवन्ति ।

वा भुवनम् ॥ २० ॥

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भुवनशब्द पूर्वपद वा प्रकृतिस्वर भवति । भुवनपति २ । पूर्वपदप्रकृतिस्वरपक्षे आदिरुदात्त । रञ्जे क्युन्निति वर्तमाने, भूसूधूभ्रस्जिभ्यश्छन्दसीति क्युन्प्रत्ययान्तो भुवनशब्द आद्युदात्तो व्युत्पा

दितः । कथ भुवनपतिरादित्य इति । उणादयो बहुलमिति बहुलवचनान्नापायामपि प्रयुज्यते ॥

आशङ्काबाधनेदीयस्सु संभावने ॥ २१ ॥

प्रकृत्या पूर्वपदं तत्पुरुष इति वर्त्तते । आशङ्क आबाध नेदीयस् इत्येतेषूत्तरपदेषु संभावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । अस्तित्वाध्यवसायः संभावनम् । गमनाशङ्कं वर्त्तते । गमनमाशङ्क्यत इति संभाव्यते । वचनाशङ्कम् । व्याहरणाशङ्कम् । आबाध—गमनाबाधम् । वचनाबाधम् । व्याहरणाबाधम् । गमनं बाध्यत इति संभाव्यते । नेदीयस्—गमननेदीयः । (१) व्याहरणनेदीयः. गमनमतिनिकटतरमिति (२) संभाव्यते । संभावन इति किम् ? परमनेदीयः । पूर्वपदानि ल्युडन्तान्युक्तस्वराणि ॥

पूर्वे भूतपूर्वे ॥ २२ ॥

पूर्वशब्द उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । आढ्यो भूतपूर्व आढ्यपूर्वः । पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्त्तते । तत्र विशेषणं विशेष्येणेति समासः । मयूरव्यंसकादिर्वा द्रष्टव्यः । दर्शनीयपूर्वः । सुकुमारपूर्वः । भूतपूर्व इति किम् ? परमपूर्वः । उत्तमपूर्वः । अत्र परमश्चासौ पूर्वश्चेति समासो न तु परमो भूतपूर्व इति । तथा हि सत्युदाहरणमेव भवति ॥

सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ २३ ॥

सविध सनीड समर्याद सवेश सदेश इत्येतेषूत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । मद्रसविधम् । गान्धारिसविधम् । काश्मीरसविधम् । मद्रसनीडम् । गान्धारिसनीडम् । काश्मीरसनीडम् । मद्रसमर्यादम् । गान्धारिसमर्यादम् । काश्मीरसमर्यादम् । मद्रसवेशम् । गान्धारिसवेशम् । काश्मीरसवेशम् । मद्रसदेशम् । गान्धारिसदेशम् । काश्मीरसदेशम् । पूर्वपदान्युक्तस्वराणि । सन्निधादीनां सह विधयेत्येवमादिका व्युत्पत्तिरेव केवलम् । समीपवाचिनस्त्वेते समुदायाः । मद्राणां सविधं समीपमित्यर्थः । सामीप्य इति किम् ? सह मर्यादया वर्त्तते समर्यादं क्षेत्रम् । देवदत्तस्य समर्यादं देवदत्तसमर्यादम् । सविधादिष्विति किम् ? देवदत्तसमया ॥

विस्पष्टादीनि गुणवचनेषु ॥ २४ ॥

विस्पष्टादीनि पूर्वपदानि गुणवचनेषूत्तरपदेषु प्रकृतिस्वराणि भवन्ति । विस्पष्टकटुकम् । विचित्रकटुकम् । व्यक्तकटुकम् । विस्पष्टलवणम् । विचित्रलवणम् । व्यक्तलवणम् । विस्पष्टं कटुकमिति विगृह्य सुप्सुपेति समासः । विस्पष्टादयो ह्यत्र प्रवृत्ति-

(१) वचननेदीय इति पुस्तकान्तरेऽधिकम् । (२) अंतिक्तमम् पा० २ ।

निमित्तस्य विशेषणम्। (१) कटुकादिभिश्च शब्दैर्गुणवद्द्रव्यमभिधीयत इत्यसामाना धिकरण्यमतो नास्ति कर्मधारय । विस्पष्टशब्दो गतिरनन्तर इत्याद्युदात्त । विचित्र शब्दोऽप्यव्ययस्वरेणाद्युदात्त । विचित्तश ब्दमन्ये पठन्ति । सोऽपि बहुव्रीहिस्वरेणाद्यु दात्त एव । व्यक्तशब्द उदात्तस्वरितयोर्यण स्वरितोऽनुदात्तस्येत्यादिस्वरित । ये चात्रापरे पठ्यन्ते तत्र सपत्नशब्दस्याथादिस्वरेणान्तोदात्त । पटुपण्डितशब्दौ प्रत्यय स्वरेणा तोदात्तौ । कुशलशब्द कृत्स्वरेणान्तोदात्त । चपलशब्दश्चित्स्वरेणान्तोदात्त । कृपेरचोपधाया इत्यत्र हि चिदिति वर्त्तते । निपुणशब्दस्याथादिस्वरेणान्तोदात्त । पुणे रिगुपधलक्षण कप्रत्ययोऽयम् । विस्पष्टादीनीति किम् ? परमलवणम् । उत्तमलवणम् । गुणवचनेष्विति किम् ? विस्पष्टब्राह्मण । विस्पष्ट । विचित्र । व्यक्त । सपत्न । कटु । पण्डित । कुशल । चपल । निपुण ॥ विस्पष्टादि ॥

श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ ७५ ॥

श्र ज्य अवम कन् इत्येतेषु पापशब्दवति चोत्तरपदे कर्मधारये समासे भाववाचि पूर्वपद प्रकृतिस्वर भवति । गमनश्रेष्ठम् । गमनश्रेय । ज्य वचनज्येष्ठम् । वचन ज्याय । अवम—गमनावमम् । वचनावमम । कन्—गमनकनिष्ठम् । गमनकनीय । पापवत्—गमनपापिष्ठम । गमनपापीय । ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेणा द्युदात्तानि । श्रज्यकनामादेशाना ग्रहणमिति सामर्थ्यात्तद्वदुत्तरपद गृह्यते । श्रादि ष्विति किम् ? गमनशोभनम् । भाव इति किम् ? गम्यतेऽनेनेति गमन तत् श्रेयो गमनश्रेय । कर्मधारय इति किम् ? गमनस्य श्रेयो गमनश्रेय ॥

कुमारश्च ॥ ७६ ॥

कुमारशब्द पूर्वपद कर्मधारये समासे प्रकृतिस्वर भवति । कुमारश्रमणा । कुमार कुलटा । कुमारतापसी । कुमारशब्दोऽन्तोदात्त अत्र केचिल्लक्षणप्रतिपदोक्तपरि भाषया कुमारश्रमणादिभिरित्यत्रैव समासे स्वरमेतमिच्छन्ति । केचित्पुनरविशेषेण सर्वत्रैव कर्मधारये ॥

आदि॰ प्रत्येनसि ॥ ७७ ॥

कर्मधारय इति वर्त्तते । प्रतिगत एनसा प्रतिगतमेनो वा यस्य स प्रत्येना । तस्मिन्नुत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो भवति । कुमारप्रत्येना । उदात्त इत्ये तदत्र सामर्थ्याद्वेदितव्यम् । पूर्वपदप्रकृतिस्वर एव ह्ययमादेरपदिश्यते ॥

पूगेष्वन्यतरस्याम् ॥ ७८ ॥

पूगा गणास्तद्वाचिन्युत्तरपदे कर्मधारये समासे कुमारस्यान्यतरस्यामादिरुदात्तो भवति । कुमारचातका २ । कुमारलोहध्वजा २ । कुमारबलाहका । २ । कुमारजी मूता २ । चातकादय पूगशब्दास्तेभ्य पूगाञ्ञ्यो ग्रामणीपूर्वादिति ञ्य

(१) न द्रव्यस्यैत्यधिक पुस्तकान्तरे ।

स्तस्य तद्राजस्य बहुष्विति लुक्। अत्र यदाऽऽद्युदात्तत्वं न भवति तदा कुमारश्चेतिपूर्वपदप्रकृतिस्वरत्वमेके कुर्वन्ति। ये तु तत्र प्रतिपदोक्तस्य ग्रहणमिच्छन्ति तेषां समासान्तोदात्तत्वमेव भवति॥

इगन्तकालकपालभगालशरावेषु द्विगौ॥ २९॥

इगन्त उत्तरपदे कालवाचिनि कपाल भगाल शराव इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति। इगन्त—पञ्चारत्नि। दशारत्निः। पञ्चारत्नयः प्रमाणमस्य दशारत्नय. प्रमाणमस्येति तद्धितार्थे द्विगुः, प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लोपः। इगन्त। काल—पञ्चमास्यः। दशमास्यः। पञ्च मासान् भृतो भूतो भावी वेति तद्धितार्थे द्विगोर्यप्। पञ्चवर्षः। दशवर्षः। वर्षाल्लुक् चेति ठञो लुक्। काल। कपाल—पञ्चकपालः। दशकपालः। कपाल। भगाल—पञ्चभगालः। दशभगाल.। भगाल। शराव—पञ्चशराव। दशशरावः। संस्कृतं भक्षा इति तद्धितार्थे एते समासाः द्विगोर्लुगनपत्य इति कृताणप्रत्ययलोपा द्रष्टव्याः। इगन्तादिष्विति किम्? पञ्चभिरश्वैः क्रीतः पञ्चाश्वः। दशाश्वः। द्विगाविति किम्? परमारत्निः। परमशरावम्। पञ्चारत्न्यो दशारत्नय इति च यण्गुणयोर्बहिरङ्गलक्षणयोरसिद्धत्वात्। स्थानिवद्भावाद्वा द्विगुस्वर इगन्तलक्षणः प्रवर्त्तते॥

बह्वन्यतरस्याम्॥ ३०॥

बहुशब्द पूर्वपदमिगन्तादिषूत्तरपदेषु द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति। पूर्वेण नित्ये प्राप्ते विकल्पः। बह्वरत्नि.। २। बहुमास्य। २। बहुकपाल.। २। बहुभगाल। २। बहुशरावः। २। बहुशब्दोऽन्तोदात्तस्तस्य प्रकृतिस्वरे कृते यत्र यणादेशस्तत्रोदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्येष स्वरो भवति॥

दिष्टिवितस्त्योश्च॥ ३१॥

दिष्टि वितस्ति इत्येतयोरुत्तरपदयोर्द्विगौ समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। पञ्चदिष्टिः। २। पञ्चवितस्तिः। २। दिष्टिवितस्त्योः प्रमाणे, तेनाऽत्र मात्रचो लुक्॥

सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्॥ ३२॥

सप्तम्यन्तं पूर्वपदं सिद्ध शुष्क पक्व बन्ध इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति सा चेत् सप्तमी कालाद्य भवति। सांकाश्यसिद्ध.। काम्पिल्यसिद्धः। सांकाश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तावन्तोदात्तौ। किंपि तु सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानामन्तः पूर्वं वेति पठ्यते तत्र पक्षे मध्योदात्तावपि भवतः। शुष्क—ऊरुशुष्क.। निधनशुष्क.। ऊरुशब्दो बहुलवचनादवतेः क्कप्रत्ययान्तोऽन्तोदात्तः। निधनशब्दो नधाञः क्युप्रत्यये मध्योदात्तः। पक्व—कुम्भीपक्वः। किलासीपक्वः (१)। भ्राष्ट्रपक्वः।

कुम्भाविलासीशब्दौ ङीषन्तावन्तोदात्तौ। आप्टशब्दः प्रत्ययान्त आद्युदात्तः। बन्धे चारबन्धः। चारकबन्धः। चरशब्दोऽन्तोदात्तः। अकालादिति किम्? पूर्वाह्णे सिद्धः। अपराह्णे सिद्धः। सप्तमीस्वरः कृत्स्वरेण वा प्राप्तः पुनरयं विधीयते (१)॥

## परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥

परि प्रति उप अप इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि चोत्तरपदे प्रकृतिस्वरा भवन्ति। परित्रिगर्त्तं वृष्टो देवः। परिसौवीरम्। परिसार्वसेनि। प्रति प्रतिपूर्वाह्णम्। प्रत्यपराह्णम्। प्रतिपूर्वरात्रम्। प्रत्यपररात्रम्। उप उपपूर्वाह्णम्। उपापराह्णम्। उपपूर्वरात्रम्। उपापररात्रम्। अप-अपत्रिगर्त्तं वृष्टो देवः। अपसौवीरम्। अपसार्वसेनि। निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमिति आद्युदात्तानि पूर्वपदानि। तत्पुरुषे बहुव्रीहौ च सिद्ध एव दयाभावाय आरम्भः। तत्रापपरी वर्जने वर्तेते इति तयोरेव वर्ज्यमानमुत्तरपदं गतम्यो। अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्तीति न पृथगुदाहियते। वर्ज्यमानाहोरात्रावयवेष्विति किम्? प्रत्यग्नि शलभाः पतन्ति। परिषिक्तमित्यत्र बन समास इत्यतन्नवति॥

## राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ ३४ ॥

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्तते तत्र पूर्वपदं प्रकृतिस्वरं भवति। श्वाफल्कचैत्रकरोधकाः। शिनिवासुदेवाः। श्वाफल्कचैत्रकशब्दौ ऋष्यन्धकवृष्णिकुरुभ्यश्चेति अणन्तावन्तोदात्तौ। शिनिशब्द आद्युदात्तः। स तदपत्येषु अभेदेन वर्तते। राजन्य इति किम्? द्वैप्यहैमायनाः (२) द्वीपे भवा इति द्वीपदनुसमुद्रं यञ्। हैमरथस्य युवा हैमायनाः। अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम्। एते च नाभिषिक्तवंश्याः। बहुवचनग्रहणं किम्? संकर्षणवासुदेवौ। द्वन्द्व इति किम्? वृष्णीनां कुमाराः, वृष्णिकुमाराः। अन्धकवृष्णिष्विति किम्? कुरुपञ्चालाः॥

## संख्या ॥ ३५ ॥

द्वन्द्वसमासे संख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति। एकादश। द्वादश। त्रयोदश। इगन्तकालकपालभगालशरावेष्विति नित्याद्युदात्तः एकशब्दः। त्रयस्त्रयस आन्दोऽन्तोदात्तो निपात्यते॥

## आचार्योपसर्जनश्चान्तेवासी ॥ ३६ ॥

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वस्तत्र पूर्वपदं प्रकृतिस्वरं भवति। आपिशलपाणिनीयाः। पाणिनीयरौढीयाः। रौढीयकाशकृत्स्नाः। आपिशलेरपत्यमापिशलिराचार्यः। अत इञ्। तेनप्रोक्तमापिशलम्। इञश्चेत्यण्। तदधीयते येऽन्तेवासिनस्तेऽप्यापिशलाः प्रोक्ताल्लुगिति तस्य तद्धितस्याध्येतरि विहितस्य लुक् क्रियते।

(१) प्राप्तप्रमुखत। पा० । (२) द्वैप्यभमायन पा०

आपिशलेर्वा छात्रा आपिशला इत्युभयथाप्याचार्योपसर्जनश्चान्तेवासी भवति। आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थं सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत। इह मा भूत्-पाणिनीयदेवदत्तौ। आचार्योपसर्जन इति किम्? छान्दसवैयाकरणाः। अन्तेवासीति किम्? आपिशलपाणिनीये शास्त्रे॥

कार्तकौजपादयश्च॥ ३७॥

कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति। विभक्त्यन्तानां पाठो वचनविवक्षार्थः। चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः। कार्तकौजपौ कृतस्यापत्यं कुजपस्यापत्यम् इत्यणन्तावेतौ। सावर्णिमाण्डूकेयौ। सावर्णिरिजन्तः। अवन्त्यश्मकाः। अवन्तेरपत्यानि बहूनि तन्निवासो जनपदो वाऽवन्तयः तथाऽश्मकाः। पैलश्यापर्णेयाः। युवद्वन्द्वोऽयम्। पीलाया अपत्यं पैलस्तस्यापत्यं युवेति अणो द्व्यचः इति विहितस्य फिञः पैलादिभ्यश्चेति लुक्। श्यापर्णशब्दो बिदादिस्तस्यापत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः। बहुवचनमतन्त्रं, तेन पैलश्यापर्णेयावित्यत्रापि भवति। कपिश्यापर्णेयाः। कपिरन्तोदात्तस्तस्यापत्यं बहुत्वे कपिबोधादाङ्गिरसे इत्युत्पन्नस्य यञो, यञञोश्चेति लुक्। तेनात्र बहुत्वमाश्रीयत एव। शैतिकाक्षपाञ्चालेयाः। शितिकाक्षो नाम ऋषिस्तस्यापत्यमिति ऋष्यण् तदपत्ये यूनि बहुषु तस्य ण्यक्षत्रियार्षञितो यूनीति लुक्। पाञ्चालस्यापत्यं स्त्री पाञ्चाली तदपत्यं युवा पाञ्चालेयः। अत्रापि बहुवचनमविवक्षितमिति शैतिकाक्षपाञ्चालेयावित्यत्रापि भवति। कटुकवार्चलेयाः। कटुकस्यापत्यमिति अत इञ्, तस्य बह्वच इञः प्राच्यभरतेष्विति बहुषु लुक्। वर्चलाया अपत्यं वार्चलेयः। शाकलशुनकाः। शकलाया अपत्यं शाकल्यस्तस्य छात्राः शाकलाः। कण्वादिभ्यो गोत्रे इत्यण्। शुनकस्यापत्यमिति बिदादिभ्योऽञ्, तस्य बहुषु लुक्। शाकलसणका इति केचित् पठन्ति। तेषां सणकशब्दादुत्पन्नस्येञो, बह्वच इञः प्राच्यभरतेष्विति बहुषु लुक्। शुनकधात्रेयाः। धात्र्याः अपत्यं, धात्रेयाः। सणकबाभ्रवाः। बभ्रोरपत्यं बाभ्रवः। आर्चाभिमौद्गलाः। ऋचाभेन प्रोक्तमधीयते आर्चाभिनः। वैशम्पायनान्तेवासित्वादिणिनिः। मुद्गलः कण्वादिस्तदपत्यस्य छात्रा मौद्गलाः। कुन्तिसुराष्ट्राः। कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वोऽयम्। कुन्तिचिन्तिशब्दावन्तोदात्तौ। चिन्तिसुराष्ट्राः। कुन्तिसुराष्ट्रवत्। तण्डवतण्डाः। पचाद्यच्प्रत्ययान्तावन्तोदात्तावेतौ गर्गादिषु पठ्येते। तत्रापत्यबहुत्वे यञो लुक् क्रियते। गर्गवत्साः। अत्रापि अपत्यबहुत्वे यञो लुक्। अविमत्तकामविद्धाः। अविमत्तशब्दो नञ्स्वरेणाद्युदात्तः। द्वयोरप्येतयोरपत्येषु बहुषु इञो बह्वच इञः प्राच्यभरतेष्विति लुक् क्रियते। बाभ्रवशालङ्कायनाः। बभ्रोरपत्यं बाभ्रवः। शलङ्कुशलङ्कं चेति शालङ्कायनः। बाभ्रवदानच्युताः। दानच्युतशब्दादिञो बह्वच इति लुक्। कठकालापाः। कठेन प्रोक्तम-

धीयते कठा । वैशम्पायनान्तेवासित्वाद् णिनि । तस्य कठचरकाल्लुक् । कलापिना प्रोक्तमधीयते कालापा । कलापिनोऽण् इत्यणप्रत्ययस्तस्मिन् इनण्यनपत्य इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पीत्यादिनोपसंख्यानेन टिलोप । कठकौथुमा । कुथुमिना प्रोक्तमधीयते इति प्राग्दीव्यतोऽण् । तत्र पूर्ववत् टिलोप । कौथुमलौकाक्षा । लोकाक्षेण प्रोक्तमधीयते लौकाक्षा लोकाक्षस्य वाऽपत्यलौकाक्षि । तस्य छात्रा लौकाक्षा । स्त्रीकुमारम् । स्त्रीशब्दोऽन्तोदात्त । मौदपैप्पलादा । मुद (?)स्यापत्य मौदि तस्य छात्रा मौदा ।तथा पैप्पलादा ।मौदपैप्पलादा इति द्वि पठ्यते। तस्य प्रयोजन पक्षे समासान्तोदात्तत्वमेव यथा स्यादिति । वत्सजरत् । वत्सश्च जरच्च वत्सोऽन्तोदात्त । सौश्रुतपार्थवा । सुश्रुतस्य पृथोश्च छात्रा । प्राग्दीव्यतोऽण् । जरामृत्यू । याज्यानुवाक्ये । यजर्ण्यत् यजयाचेति कुत्वाभाव । तित्स्वरितमित्यन्तस्वरित । अनुवाक्येति वचेरनुपूर्वाद्ण्यत् आचार्योपसर्जनान्तेवासिनामिह पाठ प्रपञ्चार्थ ॥

महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥३८॥

प्रकृत्या पूर्वपदमिति वर्तते, द्वन्द्व इति निवृत्तम् । महानित्येतत्पूर्वपद व्रीहि अपराह्ण गृष्टि इष्वास जाबाल भार भारत हैलिहिल रौरव प्रवृद्ध इत्येतेषूत्तरपदेषु प्रकृतिस्वर भवति । महाव्रीहि । महापराह्ण । महागृष्टि । महेष्वास । महाजाबाल । महाभार । महाभारत । महाहैलिहिल । महारौरव । महाप्रवृद्ध । महच्छब्दोऽन्तोदात्त । तस्य प्रतिपदोक्तो य समास सन्महत्परमोत्तमोत्कृष्टा इति तत्रैव स्वरस्तेनैषा षष्ठीसमासेऽन्तोदात्त एव भवति । महतो व्रीहि महद्व्रीहिरिति । कर्मधारये निष्टेयमपि श्रेण्यादिसमासे विधिरिति प्रवृद्धशब्द इह पठ्यते ॥

क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥

क्षुल्लक इत्येतत्पूर्वपद महांश्च वैश्वदेव उत्तरपदे प्रकृतिस्वर भवति । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् । क्षुध लातीति क्षुल्ल । तस्मादज्ञातादिषु प्रागिवात्केऽन्तोदात्त क्षुल्लकशब्द ॥

उष्ट्र सादिवाम्यो ॥ ४० ॥

उष्ट्रशब्द पूर्वपद सादिवाम्योरुत्तरपदयो प्रकृतिस्वर भवति । उष्ट्रसादि । उष्ट्रवामि । उष्ट्रशब्द, उषे ष्ट्रन्प्रत्ययान्त आद्युदात्त । कर्मधारयोऽयं षष्ठीसमासो वा ॥

गौ सादसादिसारथिषु ॥ ४१ ॥

गोशब्द पूर्वपद साद सादि सारथि इत्येतेषूत्तरपदेषु प्रकृतिस्वर भवति । गो साद गोसाद । गा सादयतीति वा गोसाद । गो सादि, गोसादि । गोसारथि ॥

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवातैतिलकद्रू

## पण्यकम्बलो दासीभाराणां च ॥ ४२ ॥

कुरुगार्हपत रिक्तगुरु असूतजरती अश्लीलदृढरूपा पारेवडवा तैतिलकद्रू पण्यकम्बल इत्येते समासास्तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरूणां गार्हपतं, कुरुगार्हपतम्। कृग्रोरुच्चेति कुरुशब्द: कुप्रत्ययान्तोऽन्तोदात्तः। ॐकुरुवृज्योर्गार्हपत इति वक्तव्यम्ॐ। वृजीनां गार्हपतं, वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः। रिक्तो गुरुः रिक्तगुरुः। रिक्ते विभाषेति पूर्वपदमाद्युदात्तमन्तोदात्तं वा। असूता जरती, असूतजरती। अश्लीला दृढरूपा, अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीर्यस्यास्ति तत्, श्लीलम्। सिध्मादेराकृतिगणत्वाल्लच्। कपिलका दित्वाच्च लत्वम्। अश्लीलदृढरूपापि हि स्वस्थानमात्रेण शोभना निःश्रीका लावण्यविरहितोच्यते। पारेवडवेव पारेवडवा। निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशब्दो घृतादित्वादन्तोदात्तः। तैतिलानां कद्रूः, तैतिलकद्रूः। तितिलिनोऽपत्यं छात्रो वा तैतिल इत्यणन्तः। पण्यकम्बलः। पण्यशब्दो यदन्तत्वादाद्युदात्तः। पण्यकम्बलः। ॐसंज्ञायामिति वक्तव्यम्ॐ। अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वमेव। प्रतिपदोक्ते हि कृत्यानां समासे, कृत्यैरिति इत्येष विहितः स्वरः। दास्या भारो, दासीभारः। देवहूतिः। देवभूतिः। देवसूतिः। देवनीतिः। अन्तोदात्तं पूर्वपदम्। वसुनीतिः।

वसुशब्द आद्युदात्तः। दाधृञ्सिहिभ्यस्यसिवसीत्यत्र हिधान्ये निवृत्तिर्वर्तते। औषधिः। ओषो धीयतेऽस्यामिति, कर्मण्यधिकरणे चेति किप्रत्ययः। ओषशब्दो घञन्तत्वादाद्युदात्तः। चन्द्रमा। चन्द्रे मो डिदित्यसिप्रत्ययान्तोऽयम्। चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादन्तोदात्तः। यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते, न च विहितः स सर्वो दासीभारादिषु द्रष्टव्यः॥

## चतुर्थी तदर्थे ॥ ४३ ॥

चतुर्थ्यन्तं पूर्वपदं तदर्थ उत्तरपदे तदभिधेयार्थं यत्तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवति। तदिति चतुर्थ्यन्तस्यार्थः परामृश्यते। यूपदारु। कुण्डलहिरण्यम्। यूपशब्द आद्युदात्तः। कुसुयुभ्यश्चेत्यत्र नित्किदिति वर्तते। कुण्डलशब्दोऽपि वृषादिभ्यश्चिदिति कलप्रत्ययान्तोऽन्तोदात्तः। रथदारु। वल्लीहिरण्यम्। रथशब्द आद्युदात्तः। हनिकुषीत्यादिना क्थन्प्रत्ययः। वल्लीशब्दो ङीप् स्वरेणान्तोदात्तः। तदर्थ इति किम्? कुबेरबलिः। प्रकृतिविकारभावे स्वरोऽयमिष्यते॥

## अर्थे ॥ ४४ ॥

चतुर्थीति वर्तते। अर्थशब्द उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। मात्रे इदं, मात्रर्थम्। पित्रर्थम्। देवतार्थम्। अतिथ्यर्थम्। मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ। देवताशब्दो लित्स्वरेण मध्योदात्तः। अतिथिरित्यतेरिथिन्नित्यतीथिन्प्रत्य-

यान्त । तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति न स्वर्थशब्दवाच्य सामान्य मित्य-तदर्थोऽयमारम्भ । केचत्पुनराहु—ज्ञापकार्थमिदमेतदनेन ज्ञाप्यते, पूर्वो विधि प्रकृतिविकृत्यो समासे भवति । अश्वघास श्वश्रुसुखमित्यत्र सत्यपि तादर्थ्ये न भवति ॥

क्ते च ॥ ४५ ॥

क्तान्ते चोत्तरपदे चतुर्थ्यन्त पूर्वपद प्रकृतिस्वर भवति । गोहितम् । अश्वहितम् । मनुष्यहितम् । गोरक्षितम् । अश्वरक्षितम् । वन तापसरक्षितम् । अश्वशब्द आद्युदात्तो मनुष्यशब्दोऽन्तस्वरित । परिशिष्टपूर्वपदमन्तोदात्तम् । गोभ्यो रक्षितमिति सम्प्रदाने चतुर्थी ॥

कर्मधारयेऽनिष्ठा ॥ ४६ ॥

कर्मधारये समासे क्तान्त उत्तरपदेऽनिष्ठान्त पूर्वपद प्रकृतिस्वर भवति । श्रेणिकृता । ऊककृता । पूगकृता । निधनकृता । श्रेणिशब्द आद्युदात्त । ऊकपूगशब्दावन्तोदात्तौ । निधनशब्दोऽयं मध्योदात्त । कर्मधारय इति किम् ? श्रेण्या कृत श्रेणिकृतम् । अनिष्ठेति किम् ? कृताकृतम् ॥

अहीने द्वितीया ॥ ४७ ॥

अहीनवाचिनि समासे क्तान्त उत्तरपदे द्वितीयान्त पूर्वपद प्रकृतिस्वर भवति । कष्टश्रित । त्रिशकलपतित । ग्रामगत । कष्टशब्दोऽन्तोदात्त । त्रीणि शकलान्यस्य त्रिशकल बहुव्रीहिस्वरेणाद्युदात्त । ग्रामशब्दो नित्स्वरेणाद्युदात्त । अहीन इति किम् ? कान्तारातीत । योजनातीत (१) । ॐद्वितीयानुपसर्ग इति वक्तव्यम्ॐ । इह मा भूत्—सुखप्राप्त । दुःखप्राप्त । सुखापन्नो, दुःखापन्न । अनन्तरस्याधे स्यस्यापवादोऽयम् ॥

तृतीया कर्मणि ॥ ४८ ॥

कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्त पूर्वपद प्रकृतिस्वर भवति । अहिहत । वज्रहत (२) महाराजहत । नखनिर्भिन्ना । दात्रलूना । आङि श्रिहनिभ्या ह्रस्वश्चेति अहिरन्तोदात्तो व्युत्पादित । केचिदाद्युदात्तमिच्छन्ति । वज्रो रन्प्रत्ययान्त । महाराजष्टच्प्रत्ययान्त । नास्य समस्ताति बहुव्रीहौ नखुत्वचेति नखशब्दो निपातित । तेन नञ्सुभ्यामित्यन्तोदात्त । दात्रशब्दो दाम्नीशसेति ष्ट्रन्प्रत्ययान्त । कर्मणीति किम् ? रथेन यातो रथयात । गत्यर्थत्वात् कर्त्तरि क्त ॥

गतिरनन्तर ॥ ४९ ॥

क्ते कर्मणीति वर्त्तते । कर्मवाचिनि क्तान्त उत्तरपदे गतिरनन्तर पूर्वपद प्रकृति-

(१) हीन त्यक्त विमुक्तमित्यनर्थान्तरमित्यधिक पुस्तकान्तरे । (२) वज्रहत । पा० ।

स्वर भवति। प्रकृतः। प्रहृतः। अनन्तर इति किम्? अभ्युद्धृतः। समुद्धृतः। समुदाहृतः। व्यवहितस्य गतेरथ स्वरो न भवति। अनन्तरे पुनरिष्यते। कारकपूर्वस्य सति शिष्टत्वात् थाथादिस्वर एव भवति, दूरादागत इति। अनन्तरग्रहणसामर्थ्यादेव, कृद्ग्रहणे गतिकारकपूर्वस्यापीत्येतन्नाश्रीयते। कर्मणीत्येव, प्रकृतः कटं देवदत्त। थाथादिस्वरापवादो योगः॥

तादौ च निति कृत्यतौ ॥ ५० ॥

तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः प्रकृतिस्वरो भवति। प्रकर्त्ता। प्रकर्त्तुम्। प्रकृतिः। प्रकर्त्तेति तृजन्तः। कृत्स्वरबाधनार्थं वचनम्। तादाविति किम्? प्रजल्पाकः। निर्तीति किम्? प्रकर्त्ता। तृजन्तः। कृद्ग्रहणमुपदेशे तादार्थम्। इहापि यथा स्यात्, प्रलपिता प्रलपितुमिति। अताविति किम्? आगन्तुः॥

तवै चान्तश्च युगपत् ॥ ५१ ॥

तवैप्रत्ययस्यान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वर इति एतदुभयं युगपद्भवति। अन्वेतवै। परिस्तरितवै। परिपातवै। तस्मात् पिता नाभिचरितवै। उपसर्गा आद्युदात्ता अभिवर्जमित्यभिरन्तोदात्तः। कृत्स्वरापवादो योगः॥

अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ५२ ॥

अनिगन्तो गतिः प्रकृतिस्वरो भवत्यञ्चतौ वप्रत्यये परतः। प्राङ्। प्राञ्चौ। प्राञ्चः। स्वरितो वानुदात्ते पदादाविस्ययमेकादेश उदात्तः स्वरितो वा। पराङ्। पराञ्चौ। पराञ्च। अनिगन्त इति किम्? प्रत्यङ्। प्रत्यञ्चौ। प्रत्यञ्चः। कृदुत्तरपदप्रकृतिस्वर इह भवति। वप्रत्यय इति किम्? उदञ्चनः। (१) चोरनिगन्तोऽञ्चतौ वप्रत्यय इत्येष स्वरो भवति विप्रतिषेधेन। पराचः। पराचा॥

न्यधी च ॥ ५३ ॥

नि अधि इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः। न्यङ्। न्यञ्चौ। न्यञ्चः। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्यञ्चतेरकारः स्वरितः। अध्यङ्, अध्यञ्चौ, अध्यञ्चः, अधीचः, अधीचा॥

ईषदन्यतरस्याम् ॥ ५४ ॥

ईषदित्येतत्पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति। ईषत्कडारः। २। ईषत्पिङ्गलः। २। ईषदित्ययमन्तोदात्तः। ईषद्भेद इत्येवमादौ कृत्स्वर एव भवति॥

हिरण्यपरिमाणं धने ॥ ५५ ॥

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्द उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति। द्विसुवर्णधनम्। २। द्वौ सुवर्णौ परिमाणमस्य द्विसुवर्णं, तदेव धनमिति कर्मधारयः।

(१) 'चौ' इत्युत्तरस्वरादित्यर्थः।

बहुव्रीहावपि परत्वाद्विकल्प एव भवति । द्विगुवर्गधनः । २ । हिरण्यग्रहणं किम् ? प्रस्थधनम् । परिमाणग्रहणं किम् ? काञ्चनधनम् । धन इति किम् ? निष्कमाला ॥

प्रथमोऽचिरोपसंपत्तौ ॥ ५६ ॥

प्रथमशब्दः पूर्वपदमचिरोपसपत्तौ गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति । अचिरोपसपत्तिरचिरोपश्लेषोऽभिनवत्वम् । प्रथमवैयाकरणः । अभिनववैयाकरणः । सम्प्रति व्याकरणमध्येतु प्रवृत्त इत्यर्थः । प्रथमशब्दः प्रथेरमजिति चित्वादन्तोदात्तः । अचिरोपसपत्ताविति किम् ? प्रथमवैयाकरणः । वैयाकरणानामाद्यो मुख्यो वा यः स नित्यमन्तोदात्त एव ॥

कतरकतमौ कर्मधारये ॥ ५७ ॥

कतरशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । कतरकठः । २ । कतमकठः । २ । कर्मधारयग्रहणमुत्तरार्थमिह तु प्रतिपदोक्तत्वादेव सिद्धम् ।

आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥

आर्यशब्दः पूर्वपदं ब्राह्मणकुमारशब्दयोरुत्तरपदयोः कर्म[illegible] प्रकृतिस्वरं भवति । आर्यब्राह्मणः । २ । आर्यकुमारः । २ । आर्यशब्दो [illegible] ऽन्तस्वरितः । आर्य इति किम् ? परमब्राह्मणः । परमकुमारः । ब्राह्मणकुमारयोरिति किम् ? आर्यक्षत्रियः । कर्मधारय इत्येव । आर्यस्य ब्राह्मणः आर्यब्राह्मणः ॥

राजा च ॥ ५९ ॥

राजा च पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । राजब्राह्मणः । २ । राजकुमारः । २ । कर्मधारय इत्येव । [illegible] ब्राह्मणोराजब्राह्मणः । राजकुमारः । पृथग्योगकरणमुत्तरार्थम् ॥

षष्ठी प्रत्येनसि ॥ ६० ॥

राजेति वर्त्ततेऽन्यतरस्यामिति च । षष्ठ्यन्तो राजन्शब्दः पूर्वपदं प्रत्येनस्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । राज्ञः प्रत्येनाः, राजप्रत्येनाः । षष्ठीति किम् ? राजा चासौ प्रत्येनाश्च, राजप्रत्येनाः ॥

क्ते नित्यार्थे ॥ ६१ ॥

क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । नित्यप्रहसितः । २ । सततप्रहसितः । २ । काला इति द्वितीयासमासोऽयम् । नित्यशब्दस्त्यब् नेर्ध्रुव इति त्यबन्तमाद्युदात्तः । सततं इति यदा भावे क्तस्तदा [illegible] रेणान्तोदात्तः । नित्यार्थ इति किम् ? मुहूर्त्तप्रहसितः ॥

ग्रामः शिल्पिनि ॥ ६२ ॥

ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति ।

नापितः । २ । ग्रामकुलालः । २ । ग्रामशब्द आद्युदात्तः । ग्राम इति किम् ? परम नापितः । शिल्पिनीति किम् ? ग्रामरथ्या ॥

राजा च प्रशंसायाम् ॥ ६३ ॥

राजन् शब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदे प्रशंसायां गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति । राजनापितः २ । राजकुलालः २ । कर्मधारये राजगुणाध्यारोपे णोत्तरपदार्थस्य प्रशंसा । षष्ठीसमासे च राजयोग्यतया तस्य । राज्ञेति किम् ? परमनापितः । प्रशंसायामिति किम् ? राजनापितः । शिल्पिनीत्येव । राजहस्ती ॥

आदिरुदात्तः ॥ ६४ ॥

आदिरुदात्त इत्येतदधिकृतमित उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्यादिरुदात्तो भवतीत्येव तद्वेदितव्यम् । वक्ष्यति–सप्तमीहारिणौ धर्म्येऽहरणे इति । स्तूपेशाणः । मुकुटेकार्षापणम् । याज्ञिकाश्वः । वैयाकरणहस्ती । द्रपदिमाषकः । आदिरिति प्राग न्ताधिकारात् । उदात्त इति प्रकृत्या भगालमिति यावत् ॥

सप्तमीहारिणौ धर्म्येऽहरणे ॥ ६५ ॥

सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवति । हारीति देयं यः स्वीकरोति सोऽभिधीयते । धर्म्यमित्याचारनियतं देयमुच्यते, धर्मो ह्यनुवृत्त आचारस्तस्मादनपेतं तेन वा प्राप्यमिति । स्तूपेशाणः । मुकुटेकार्षापणम् । हलेद्विपदिका । हलेत्रिपदिका । द्रपदिमाषकः । संज्ञायामिति सप्तमीसमासः, कारनाम्नि चेति विभक्तेरलुक् । हारिणि–याज्ञिकाश्वः । वैयाकरणहस्ती । मातुलाश्वः । पितृव्यगवः । क्वचिदेवमाचारो व्यवस्थितः–स्तूपादिषु शाणादि दातव्यं, याज्ञिकादीनामश्वादीति । धर्म्य इति किम् ? स्तम्बेरमः । कर्णेकरवर्द्धितकः । (१) अहरण इति किम् ? वाडवहरणम् । वडवाया अयं वाडवः । तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते, हरणमिति तदुच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेनेत्येतदहरण इत्यनेन ज्ञाप्यते । तेन वाडवहार्यमिति हारिस्वरः सिद्धो भवति ।

युक्ते च ॥ ६६ ॥

युक्तवाचिनि च समासे पूर्वपदमाद्युदात्तं भवति । गोवल्लवः । अश्ववल्लवः । गोमणिन्दः । अश्वमणिन्दः । गोसङ्ख्यः । अश्वसङ्ख्यः । युक्त इति समाहितः कर्त्तव्ये तत्परो यः स उच्यते ॥

विभाषाऽध्यक्षे ॥ ६७ ॥

अध्यक्षशब्द उत्तरपदे विभाषा पूर्वपदमाद्युदात्तं भवति । गवाध्यक्षः । २ । अश्वाध्यक्षः ॥ २ ॥

---

(१) वर्द्धितको नाम मुने स्थूलोऽग्रेसूक्ष्म ओदनपिण्डः स कर्णेकरात्‌ दीयते–यथा कर्म सकुर्यादिति तत्त्व धर्म इति । अयमस्यार्थः पदमञ्जरीकारेण विवृत ।

पापं च शिल्पिनि ॥ ६८ ॥

पापशब्दः शिल्पिवाचिन्युत्तरपदे विभाषाऽऽद्युदात्तो भवति। पापनापितः २। पापकुलालः २। पापाणके कुत्सितैरिति प्रतिपदोक्त पापशब्दस्य समानाधिकरणसमास इति षष्ठीसमासे न भवति—पापस्य नापित पापनापित इति ॥

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ६९ ॥

गोत्रवाचिन्यन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेपवाचिनि सन्, पूर्वपदमाद्युदात्तं भवति। जङ्घावात्स्य'। यो जङ्घाद्दान ददाम्यहमिति वात्स्यः स ते स जङ्घावात्स्य इति क्षिप्यते। भार्यासौश्रुतः। सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः। घृताद्धाक्षकनेयः। घृतकृतशब्दः शुभ्रादिषु पठ्यते। गोत्र। अन्तेवासि—कुमारी दाक्षाः। कम्बलचारायणीयाः। घृतरौढीयाः। ओदनपाणिनीयाः। कुमार्यादिलाभ-कामा ये दाक्षादिभि प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त , क्षिप्यन्ते अन्तेवासि। माणव—भिक्षामाणव.। भिक्षा लप्स्येऽहमिति माणवो भवति माणव। ब्राह्मण—दासीब्राह्मणः। वृषलीब्राह्मणः। भयब्राह्मण.। यो भयेन ब्राह्मणः सपद्यते। अत्र यस्मान्यत् समासलक्षण नास्ति, सुप्सुपेत्येव तत्र समास. दर्तव्यः गोत्रादिष्विति किम्? दासीश्रोत्रियः। क्षेप इति किम्? महाब्राह्मण. ॥

अङ्गानि मैरेये ॥ ७० ॥

मैरेयशब्द उत्तरपदे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि भवन्ति। गुडमैरेयः। मधुमैरेय'। मद्यविशेषो मैरेयस्तस्य गुडविकारस्य गुडोऽङ्ग भवति मधुविकारस्य मधु मध्व-ङ्गम्। अङ्गानीति किम्? परममैरेयः। मैरेय इति किम्? पुष्पासवः। फलासव. ॥

भक्ताख्यास्तदर्थेषु ॥ ७१ ॥

भक्तमन्न तदाख्यास्तद्वाचिनः शब्दास्तदर्थेषूत्तरपदेषु आद्युदात्ता भवन्ति। भिक्षा-कंस। श्राणाकंसः। भाजीकंस.। भिक्षादयोऽन्नवचना'। भक्ताख्या इति किम्? सम शाराव'। समशन समश इति क्रियामात्रमुच्यते, न द्रव्यम्। तदर्थेष्विति किम् भिक्षाप्रियः। बहुव्रीहिरयमत्र पूर्वपदमन्तोदात्तम् ॥

गोबिडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥

गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। धान्यगवः। हिरण्य-गव। भिक्षाबिडाल'। तृणसिंहः। काष्ठसिंह.। सक्तुसैन्धवः। पानसैन्धवः। धान्य गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् उपमितं व्याघ्रादिभिरिति समासः। उपमा-नार्थोऽपि यथासभव यथाप्रसिद्ध च योजयितव्य.। गवाकृत्याऽवस्थित(१) धान्यग-वशब्देनोच्यते। उपमान इति किम्? परमसिंहः ॥

(१) सन्निवेशेश्वर मति पाठ०।

अके जीविकार्थे ॥ ७३

अकप्रत्ययान्त उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। दन्तलेखकः। नखलेखकः। अवस्करशोधकः। रमणीयकारकः। दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्ते। नित्यक्रीडाजीविकयोरिति समासः। अक इतिकिम्? रमणीयकर्त्ता। जीविकार्थ इति किम्? इक्षुभक्षिकांमे धारयसि॥

प्राचां क्रीडायाम् ॥ ७४ ॥

प्राग्देशवर्त्तिनां या क्रीडा तद्वाचिनि समासेऽकप्रत्ययान्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति। उद्दालकपुष्पभञ्जिका। वीरणपुष्पप्रचायिका। शालभञ्जिका। तालभञ्जिका। सञ्ज्ञायामिति ण्वुल्, नित्य क्रीडाजीविकयोरिति षष्ठीसमासः। प्राचामिति किम्? जीवपुत्त्रप्रचायिका। इयमुदीचां क्रीडा। क्रीडायामिति किम्? तव पुष्पप्रचायिका। पर्याये ण्वुच् प्रत्ययो भवति॥

अणि नियुक्ते ॥ ७५ ॥

अण्णन्त उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं भवति। छत्रधारः। तूणीरधारः। कमण्डलुग्राहः। भृङ्गारधारः। नियुक्तोऽधिकृतः, स च कस्मिंश्चित् कर्त्तव्ये तत्परो न भवतीति नियुक्त इत्यनेन सिध्यति(१)। नियुक्त इति किम्? काण्डलावः। शरलावः।

शिल्पिनि चाकृञः ॥ ७६ ॥

शिल्पिवाचिनि समासेऽण्णन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति स चेदण् कृञो न भवति। तन्तुवायः। तुन्नवायः। वालवायः। शिल्पिनीति किम्? काण्डलावः। अकृञ इति किम्? कुम्भकारः। अयस्कारः॥

सञ्ज्ञायां च ॥ ७७ ॥

सञ्ज्ञायां विषयेऽण्णन्त उत्तरपदेऽकृञः पूर्वपदमाद्युदात्तं भवति। तन्तुवायो नाम कीटः। वालवायो नाम पर्वतः। अकृञ इत्येव। रथकारो नाम ब्राह्मणः॥

गोतन्तियवं पाले ॥ ७८ ॥

गो तन्ति यव इत्येतानि पूर्वपदानि पालशब्द उत्तरपदे आद्युदात्तानि भवन्ति। गोपालः। तन्तिपालः। यवपालः। अनियुक्तार्थ आरम्भः। गोतन्तियवमिति किम्? वत्सपालः। पाल इति किम्? गोरक्षः॥

णिनि ॥ ७९ ॥

णिनन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति। फलहारी। पर्णहारी॥

उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतावेव णिनन्त उत्तरपद आद्युदात्तं भवति।

(१) नियुक्त इत्यनेन सिध्यतीत्यस्यस्थाने युक्त इत्यनेन न सिध्यतीति पा०॥

उपमानं नियम्यते । उष्ट्रक्रोशी । ध्वाङ्क्षरावी । खरनादी । उपमानग्रहणमस्य पूर्वस्य च योगस्य विषयविभागार्थम् । शब्दार्थप्रकृताविति किम् ? वृकवञ्ची । वृकप्रेक्षी । प्रकृतिग्रहणं किम् ? प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था भवति तत्रैव यथा स्याद्, इह मा भूद्—गर्दभोच्चारी, कोकिलाभिव्याहारीति । एवकारकरणमुपमानावधारणार्थम् । शब्दार्थप्रकृतौ खलूपमानमुपमानं चाद्युदात्तं भवति—सिंहविनर्दी । पुष्कलजल्पी ॥

युक्तारोह्यादयश्च ॥ ८१ ॥

युक्तारोह्यादयः समासा आद्युदात्ता भवन्ति । युक्तारोही । आगतरोही । आगतयोधी । आगतवञ्ची । आगतनर्दी । आगतप्रहारी । एते णिन्यन्ता णिनेरिस्यस्यैवोदाहरणार्थं पठ्यन्ते । पूर्वोत्तरपदनियमार्था इति केचित् । इह मा भूद्, वृक्षारोही युक्ताध्यायीति । आगतमत्स्या । क्षीरहोता । भगिनीभर्ता । याजकादित्वात् षष्ठीसमासा-

[illegible]

दात्तत्वं प्राप्तमित्याद्युदात्तत्व विधीयते । एवमपि नार्थं एतेन, इगन्ते द्विगाविति सिद्धत्वात् । एव तर्हि ज्ञापकार्थम्, एतज् ज्ञापयति—शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवतीति । तेन द्विशितिपादित्यत्र तिशब्द उदात्तो भवति । निमित्तिस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव ज्ञापकं वर्णयन्ति । पात्रेसमितादयश्च युक्तारोह्यादयस्ततस्तेऽप्याद्युदात्ता भवन्ति ॥

दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ ८२ ॥

दीर्घान्तं पूर्वपदं काश तुष भ्राष्ट्र वट इत्येतानि च जे उत्तरपदे आद्युदात्तानि भवन्ति । कुटीजः । शमीजः । काशजः । तुषजः । भ्राष्ट्रजः । वटजः ॥

अन्त्यात् पूर्वं बह्वचः ॥ ८३ ॥

उत्तरपदे बह्वचः पूर्वपदस्यान्त्यात् पूर्वमुदात्तं भवति । उपसरजः । मन्दुरजः । आमलकीजः । बडवाजः । बह्वच इति किम् ? दग्धजानि तृणानि ॥

ग्रामेऽनिवसन्तः ॥ ८४ ॥

ग्रामशब्द उत्तरपदे पूर्वपदमाद्युदात्त भवति, न चेन्निवसद्वाचि भवति । मल्लग्रामः । वणिग्ग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः । देवस्वामिक इत्यर्थः । अनिवसन्त इति किम् ? दाक्षिग्रामः । माहकिग्रामः । दाक्ष्यादयो वसन्ति यस्मिन् ग्रामे स तेषामिति व्यपदिश्यते ॥

घोषादिषु च ॥ ८५ ॥

घोषादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्त भवति । दाक्षिघोषः । दाक्षिकटः । दाक्षि-

पलद(१)। दाक्षिह्रदः। दाक्षिबदरी। दाक्षिपिङ्गलः। दाक्षिपिशङ्गः। दाक्षिशाला। दाक्षिरक्षा। दाक्षिशिल्पी। दाक्षप्रस्थः। कुन्दतृणम्। दाक्षिशाल्मली। आश्रममुनिः। शाल्मलिमुनिः। दाक्षिप्रेक्षा। दाक्षिकूटः। यान्यत्र नियासनामधेयानि तेषु निवसद्वाचीन्यपि पूर्वपदान्याद्युदात्तानि भवन्ति। अनिष्ठसम्ब इति नानुवर्त्तयन्ति केचित्। अपरे पुनरनुवर्त्तयन्ति॥

छात्र्यादयः शालायाम्॥ ८६॥

शालायामुत्तरपदे छात्र्यादय आद्युदात्ता भवन्ति। छात्रिशाला। पैलिशाला। भाण्डिशाला। छात्रि। पैलि। भाण्डि। व्याडि। आखिशलि। आनडि। आपारि। गोमि। छात्र्यादिः। यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, तदापि, तत्पुरुषे शालायां नपुंसक इत्येतस्मात् पूर्वविप्रतिषेधेन पूर्वपदमाद्युदात्त भवति। छात्रिशालम्। पैलिशालम्॥

प्रस्थेऽवृद्धमकर्क्यादीनाम्॥ ८७॥

प्रस्थशब्द उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवति। इन्द्रप्रस्थः। कुण्डप्रस्थः। हृदप्रस्थः। सुवर्णप्रस्थ। अवृद्धमिति किम्? दाक्षिप्रस्थः। माहकिप्रस्थः। अकर्क्यादीनामिति किम्? कर्कीप्रस्थः। मघीप्रस्थः। कर्की। मघी। मकरी। कर्कन्धू। शमी। करीर। कटुक। कुवल(२)। बदर। कर्क्यादिः॥

मालादीनां च॥ ८८॥

प्रस्थ इति वर्त्तते। प्रस्थ उत्तरपदे मालादीनामादिरुदात्तो भवति। मालाप्रस्थः। शालाप्रस्थः। माला। शाला। शोणा। द्राक्षा। क्षौमा। क्षामा। काञ्ची। एक। काम। मालादिः। वृद्धार्थ आरम्भः। एकशोणाशब्दयोरेङ् प्राचां देश इति वृद्धसंज्ञा॥

अमहन्नवं नगरेऽनुदीचाम्॥ ८९॥

नगरशब्द उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदमाद्युदात्तं भवति, तच्चेदुदीचां न भवति। सुह्मनगरम्। पुण्ड्रनगरम्(३)। अमहन्नवमिति किम्? महानगरम्। नवनगरम्। अनुदीचामिति किम्? नन्दीनगरम्। कान्तीनगरम्॥

अर्मे चावर्णं द्व्यच्त्र्यच्॥ ९०॥

अर्मशब्द उत्तरपदे द्व्यच् त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं भवति। दत्तार्मम्। गुप्तार्मम्। कुक्कुटार्मम्। वायसार्मम्। अवर्णमिति किम्? बृहदर्मम्। द्व्यच्त्र्यजिति किम्? कपिञ्जलार्मम्। अमहन्नवमित्येव। महार्मम्। नवार्मम्।

न भूताधिकसंजीवमद्राश्मकज्जलम्॥ ९१॥

भूत अधिक संजीव मद्र अश्मन् कज्जल इत्येतानि पूर्वपदानि अर्मशब्द उत्तरपदे

---

१. दाक्षिवल्लभ.। इति पा०। २. कवल। इति पा०। ३. विराटनगरमिति पाठान्तरेऽधिकम्।

नाद्युदात्तानि भवन्ति । मूतामंम् । अधिकामंम् । संजीवामंम् । मद्रारमग्रहणं संघातविगृहीतार्थम् । मद्रामंम् । अरमामंम् । मद्राश्मामंम् । कज्जलामंम् । समासान्तोदात्तत्वमेवात्र भवति । ॐआद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्ॐ । दिवोदासाय गायत । वध्र्यश्वाय दाशुषे ॥

अन्तः ॥ ९२ ॥

अन्त इत्यधिकृतमित उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्यान्त उदात्तो भवतीत्येव वेदितव्यम् । वक्ष्यति-सर्वं गुणकार्त्स्न्ये । सर्वश्वेत । सर्वकृष्णः । प्रागुत्तरपदादिरित्येतस्मादयमधिकारो वेदितव्यः ॥

सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्तमानमन्तोदात्तं भवति । सर्वश्वेतः । सर्वकृष्णः । सर्वमहान् । सर्वमिति किम् ? परमश्वेतः । आश्रयव्याप्त्या परमर्थं श्वेतत्वस्येति गुणकार्त्स्न्ये वर्तते । गुणग्रहणं किम् ? सर्वसौवर्णः । सर्वराजतः । कार्त्स्न्ये इति किम् ? सर्वेषां श्वेततरः सर्वश्वेतः । गुणात्तरेण समासस्तरलोपश्च वक्तव्य इत्येवमत्र समासस्तरब्लोपश्च ॥

संज्ञायां गिरिनिकाययोः ॥ ९४ ॥

संज्ञायां विषये गिरि निकाय इत्येतयोरुत्तरपदयोः पूर्वपदमन्तोदात्तं भवति । अञ्जनागिरिः । भञ्जनागिरिः । निकाये—शापिण्डिनिकायः । मौण्डिनिकायः । चिखिल्लिनिकायः(१) । संज्ञायामिति किम् ? परमगिरिः । ब्राह्मणनिकायः ॥

कुमार्यां वयसि ॥ ९५ ॥

कुमार्यामुत्तरपदे वयसि गम्यमाने पूर्वपदमन्तोदात्तं भवति । वृद्धकुमारी । जरत्कुमारी । कुमारीशब्दः पुंसा सहासंप्रयोगमात्रप्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति । तत्र वय इह गृह्यते, न कुमारत्वमेव । वयसीति किम् ? परमकुमारी ॥

उदकेऽकेवले ॥ ९६ ॥

अकेवलं मिश्रं तद्वाचिनि समासे उदकशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति । गुडमिश्रमुदकम्(२)गुडोदकम् । तिलोदकम् । स्वरे कृते एकादेशः, "स्वरितो वानुदात्ते पदादौ" इति पक्षे स्वरितो भवति । अकेवल इति किम् ? शीतोदकम् । उष्णोदकम् ॥

द्विगौ क्रतौ ॥ ९७ ॥

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं भवति । गर्गत्रिरात्रः । चरकत्रिरात्रः । कुसुरविन्दसप्तरात्रः । गर्गाणां त्रिरात्रः गर्गत्रिरात्रः । द्विगाविति किम् ?

१. चिक्लिनिकायः । इति पा० । २. तण्डुलोदकमित्यधिकं पुस्तकान्तरे ।

अतिरात्र । अचश्चित्वादन्तोदात्त । क्रताविति किम् ? बिल्वसप्तरात्र । बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रो, बिल्वसप्तरात्र ॥

सभाया नपुसके ॥ ९८ ॥

सभाशब्द उत्तरपदे नपुसकलिङ्गे समासे पूर्वपदमन्तोदात्त भवति । गोपालसभम् । पशुपालसभम् । स्त्रीसभम् । दासीसभम् । सभायामिति किम् ? ब्राह्मणसेनम् । नपुसकमिति किम् ? राजसभा । ब्राह्मणसभा । सभाया प्रतिपदोक्तमिह नपुसकलिङ्ग गृह्यत इति रमणीयसभ ब्राह्मणकुलमित्यत्र न भवति ॥

पुरे प्राचाम् ॥ ९९ ॥

पुरशब्द उत्तरपदे प्राचां देशे पूर्वपदमन्तोदात्त भवति । लडाटपुरम् । काञ्चीपुरम् । शिवदत्तपुरम् । कार्णिपुरम् । नार्मपुरम् । प्राचामिति किम् ? शिवपुरम् ॥

अरिष्टगौडपूर्वे च ॥ १०० ॥

अरिष्ट गौड इत्येव पूर्वे समासे पुरशब्द उत्तरपदे पूर्वपदमन्तोदात्त भवति । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहण किम् ? इहापि यथा स्यात्-अरिष्टश्रितपुरम् । गौडभृत्यपुरम् ॥

न हास्तिनफलकमार्देया ॥ १०१ ॥

हास्तिन फलक मार्देय इत्येतानि पूर्वपदानि पुरशब्दे उत्तरपदे नान्तोदात्तानि भवन्ति । पुरे प्राचामिति प्राप्ति प्रतिषिध्यते । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदोरपत्य, मार्देय । शुभ्रादित्वाद् ढक् ॥

कुसूलकूपकुम्भशाल बिले ॥ १०२ ॥

कुसूल कूप कुम्भ शाला इत्येतानि पूर्वपदानि बिलशब्द उत्तरपदेऽन्तोदात्तानि भवन्ति । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालाबिलम् । कुसूलादिग्रहण किम् ? सर्पबिलम् । बिल इति किम् ? कुसूलस्वामी ।

दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥

दिक्शब्दा पूर्वपदानि अन्तोदात्तानि भवन्ति ग्रामजनपदाख्यानवाचिषूत्तरपदेषु चानराटशब्दे च । पूर्वेषुकामशमी । अपरेषुकामशमी । पूर्वकृष्णमृत्तिका । अपरकृष्णमृत्तिका । जनपद-पूर्वपञ्चाला । अपरपञ्चाला । आख्यान-पूर्वाधिरामम्(१) । पूर्वयायातम् । अपरयायातम् । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् । तथा यायातम् । चानराट-पूर्वचानराटम् । अपरचानराटम् । शब्दग्रहण कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम् ॥

आचार्योपसर्जनश्चान्तेवासिनि ॥ १०४ ॥

आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ता भवन्ति । पूर्व

१ पूर्वाधिरामकमित्यधिकमन्यत्र ।

पाणिनीयाः । अपरपाणिनीयाः । पूर्वकाशकृत्स्नाः । अपरकाशकृत्स्नाः । आचार्योपसर्जन इति किम् ? पूर्वशिष्याः । अन्तेवासिनीति किम् ? पूर्वपाणिनीयं शास्त्रम् ॥

उत्तरपदवृद्धौ सर्वं च ॥ १०५ ॥

उत्तरपदस्येत्यधिकृत्य या विहिता वृद्धिस्तद्वत्युत्तरपदे सर्वशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति । सर्वपाञ्चालकः । पूर्वपाञ्चालकः । उत्तरपाञ्चालकः । सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिना जनपदलक्षणो वुञ्प्रत्ययः । सुसर्वार्द्धाज्जनपदस्य दिशो मद्राणामिति चोत्तरपदवृद्धिः । अधिकारलक्षणादिह न भवति—सर्वमासः सर्वकारक इति ॥

बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०६ ॥

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं संज्ञायां विषयेऽन्तोदात्तं भवति । विश्वदेवः । विश्वयशाः । विश्वमहान् । पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम् । बहुव्रीहाविति किम् ? विश्वे च ते देवाः विश्वदेवाः । संज्ञायामिति किम् ? विश्वे देवा अस्य विश्वदेवः । विश्वामित्रो विश्वाजित इत्यत्र, संज्ञायां मित्राजिनयोरित्येतद्भवति परत्वात् । बहुव्रीहाविन्येतदधिक्रियते प्रागव्ययीभावसंज्ञानात् ॥

उदराश्वेषुषु ॥ १०७ ॥

उदर अश्व इषु इत्येतेषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । वृकोदरः । दामोदरः । हर्यश्वः । यौवनाश्वः । सुवर्णपुंखेषुः । महेषुः ॥

क्षेपे ॥ १०८ ॥

क्षेपे गम्यमाने उदरादिषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । कुण्डोदरः । घटोदरः । कटुकाश्वः । स्पन्दिताश्वः । अनिघातेषुः । चलाचलेषुः । अनुदरः, सूदर इत्यत्र नञ्सुभ्यामित्येतद्भवति विप्रतिषेधेन ॥

नदी बन्धुनि ॥ १०९ ॥

बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्तं भवति । गार्गीबन्धुः । वात्सीबन्धुः । नदीति किम् ? ब्रह्मबन्धुः । ब्रह्मन्शब्द आद्युदात्तः । बन्धुनीति किम् ? गार्गीप्रियः ॥

निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ ११० ॥

बहुव्रीहौ समासे निष्ठान्तमुपसर्गपूर्वं पूर्वपदमन्यतरस्यामन्तोदात्तं भवति । प्रधौतमुखः २ । प्रक्षालितपादः । २ । यदि मुखशब्दः स्वाङ्गवाची तदा पक्षे मुखं स्वाङ्गमित्येतद्भवति, न चेत् पूर्वपदप्रकृतिस्वरत्वेन गतिरनन्तर इत्येतद्भवति । । किम् ? प्रसेचकमुखः । उपसर्गपूर्वमिति किम् ? शुष्कमुखः ॥

उत्तरपदादिः ॥ १११ ॥

उत्तरपदादिरित्येतदधिकृतम् । यदित ऊर्ध्वमनुक्रमि

भवतीत्येवं तद्वेदितव्यम् । वक्ष्यति, कर्णो वर्णलक्षणात् । शुक्लकर्णः । कृष्णकर्णः । उत्तरपदस्येत्येवद्यापादपरिसमाप्तेः । आदिरिति प्रकृत्या भगालमिति यावत् ॥

कर्णो वर्णलक्षणात् ॥ ११२ ॥

बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदमाद्युदात्तं भवति । शुक्लकर्णः । कृष्णकर्णः । लक्षणात्–दात्रकर्णः । शङ्कुकर्णः । कर्णे लक्षणस्येति दीर्घत्वम् । पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्ण इत्यत्र न भवति । कर्ण इति किम् ? श्वेतपादः । कूटशृङ्गः । वर्णलक्षणादिति किम् ? शोभनकर्णः ॥

संज्ञौपम्ययोश्च ॥ ११३ ॥

संज्ञायामौपम्ये च यो बहुव्रीहिर्वर्तते तत्र कर्णशब्द उत्तरपदमाद्युदात्तं भवति संज्ञायाम् । कुञ्चिकर्णः । मणिकर्णः । औपम्ये—गोकर्णः । खरकर्णः ॥

कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥

कण्ठ पृष्ठ ग्रीवा जङ्घा इत्येतानि उत्तरपदानि बहुव्रीहौ समासे संज्ञौपम्ययोराद्युदात्तानि भवन्ति । कण्ठः संज्ञायाम्–शितिकण्ठः । नीलकण्ठः । औपम्ये–खरकण्ठः । उष्ट्रकण्ठः । पृष्ठः संज्ञायाम्–काण्डपृष्ठः । नाकपृष्ठः । औपम्ये–गोपृष्ठः । अजपृष्ठः । ग्रीवा संज्ञायाम्–सुग्रीवः । नीलग्रीवः । दशग्रीवः । औपम्ये–गोग्रीवः । अश्वग्रीवः । जङ्घा संज्ञायाम्–नाडीजङ्घः । तालजङ्घः । औपम्ये–गोजङ्घः । अश्वजङ्घः । एणीजङ्घः ॥

शृङ्गमवस्थायां च ॥ ११५ ॥

शृङ्गशब्दः उत्तरपदमवस्थायां संज्ञौपम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति । उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । अङ्गुलशृङ्गः । अत्र शृङ्गोद्गमनादिकृतो गवादीनां वयोविशेषोऽवस्था । संज्ञायाम्–ऋष्यशृङ्गः । औपम्ये–गोशृङ्गः । मेषशृङ्गः । अवस्थादिष्विति किम् ? स्थूलशृङ्गः ॥

नञो जरमरमित्रमृताः ॥ ११६ ॥

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति । अजरः, अमरः, अमित्रः, अमृतः (१) । नञ इति किम् ? ब्राह्मणमित्रः । जरादय इति किम् ? अशत्रुः । नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वमेवात्र भवति ॥

सोर्मनसी अलोमोषसी ॥ ११७ ॥

सोरुत्तरं मन्नन्तमसन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोषसी वर्जयित्वा । सुकर्मा । सुधर्मा । सुप्रथिमा । असन्तम्–सुपयाः । सुयशाः । सुस्रोताः । सुजनः । सुभ्वत् । सोरिति किम् ? कृतकर्मा । कृतयशाः । मनसी इति किम् ?

१. अ यत्र पुस्तकान्तरेऽय पाठो दृश्यते–"मरशब्दोऽच् प्रत्ययान्त इष्यते मरणं मरः" इति ।

सुराजा। सुतक्षा। अलोमोषसी इति किम्? सुलोमा। सूषाः। अनिनस्मन्ग्रहणा-न्यर्थवताऽनर्थकेन चेत्यनर्थकयोरपि मनसोरिह ग्रहणम्। नञ्सुभ्यामित्यस्यायमप-वादः। कपि तु परत्वात्, कपि पूर्वमित्येतद्भवति—सुकर्मकः। सुस्रोतस्कः॥

क्रत्वादयश्च॥ ११८॥

क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्ता भवन्ति। सुक्रतुः। सुदृशीकः। क्रतु। दृशीक। प्रतीक। प्रपूर्ति। हव्य। भग। क्रत्वादिः॥

आद्युदात्तं द्व्यच्छन्दसि॥ ११९॥

यदाद्युदात्तं द्व्यच् उत्तरपदं बहुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषये। स्वश्वास्त्वा सुरथामर्जयेम। निस्वरेणाश्वरथशब्दावाद्युदात्तौ। आद्युदात्तमिति किम्? या सुबाहुः स्वङ्गुरिः। बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः। द्व्यजिति किम्? सुगुरसत्। सुहिरण्यः। स्वश्वः। नञ्सुभ्यामित्यस्यायमपवादः॥

वीरवीर्यौ च॥ १२०॥

वीर वीर्य इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः। सुवीरेण ते। सुवीर्यस्य पतयः स्याम। वीर्यमिति यत्प्रत्ययान्त, तत्र यतोऽनाव इति आद्युदात्तत्व न भवतीत्येतदेव वीर्यग्रहण ज्ञापकम्। तत्र हि सति पूर्वेणैव सिद्धं स्यात्॥

कूलतीरतूलमूलशालाक्षसममव्ययीभावे॥ १२१॥

कूल तीर तूल मूल शाला अक्ष सम इत्येतानि उत्तरपदानि अव्ययीभावसमासे, आद्युदात्तानि भवन्ति। परिकूलम्। उपकूलम्। परितीरम्। उपतीरम्। परितूलम्। उपतूलम्। परिमूलम्। उपमूलम्। परिशालम्। उपशालम्। उपाक्षम्। पर्यक्षम्। सुषमम्। निषमम्। त्रिषमम्। दुःषमम्। तिष्ठद्गुप्रभृतिष्वेते पठ्यन्ते। ... किम्? उपकुम्भम्। अव्ययीभाव इति किम्? परमकूलम्। उत्तमकूलम्। ... कूलादीनामाद्युदात्तत्व विप्रतिषेधेन भवति—परिकूलम्॥

कंसमन्थशूर्पपाय्यकाण्डं द्विगौ॥ १२२॥

कस मन्थ शूर्प पाय्य काण्ड इत्येतान्युत्तरपदानि द्विगौ समासे ... भवन्ति। द्विकंसः। त्रिकंसः। द्विमन्थः। त्रिमन्थः। द्विशूर्पः। त्रिशूर्पः। द्विपाय्यः त्रिपाय्यः। द्विकाण्डः। त्रिकाण्डः। द्विगाविति किम्? परमकंसः। उत्तमकंसः॥

तत्पुरुषे शालायां नपुंसके॥ १२३॥

शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं भवति। ब्राह्मणशालम्। क्षत्रियशालम्। विभाषा सेनासुराच्छायाशालानिशानामिति नपुंसकलिङ्गता। तत्पुरुष इति किम्? दृढशालं ब्राह्मणकुलम्। शालायामिति किम्? ब्राह्मणसेनम्। नपुंसक इति किम्? ब्राह्मणशाला॥

कन्या च ॥ १२४ ॥

तत्पुरुषे समासे नपुंसकलिङ्गे कन्याशब्द उत्तरपदमाद्युदात्तं भवति । सौशमिकन्थम् । आह्वरकन्थम् । चप्पककन्थम् । संज्ञायां कन्थोशीनरेष्विति नपुंसकलिङ्गता । षष्ठीसमासा एते । नपुंसक इत्येव । दाक्षिकन्था ॥

आदिश्चिहणादीनाम् ॥ १२५॥

कथान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति । चिहणकन्थम् । मडरकन्थम् । मद्रुर इति केचित् पठन्ति । मद्रुरकन्थम् । चिहण । मडर । मद्रुर । वैतुल । पटत्क । वैडालिकर्णं । वैतालकर्णिरिति अन्ये पठन्ति । कुक्कट । चिक्कण । चित्कण इत्यपरे पठन्ति । चिहणादि । आदिरिति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम् ॥

चेलखेटकटुककाण्डं गर्हायाम् ॥ १२६ ॥

चेल खेट कटुक काण्ड इत्येतान्युत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति । पुत्रचेलम् । भार्याचेलम् । उपानत्खेटम् । नगरखेटम् । दधिकटुकम् । उदश्वित्कटुकम् । भूतकाण्डम् । प्रजाकाण्डम् । चेलादिसादृश्येन पुत्रादीनां गर्हा । तत्र पुत्रश्चेलमिवेति विगृह्य व्याघ्रादेराकृतिगणत्वात् , उपमितं व्याघ्रादिभिरिति समासः । गर्हायामिति किम् ? परमचेलम् ॥

चीरमुपमानम् ॥ १२७ ॥

चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति । वस्त्रं चीरमिव, वस्त्रचीरम् । पटचीरम् । कम्बलचीरम् । उपमानमिति किम् ? परमचीरम् ॥

पललसूपशाकं मिश्रे ॥ १२८ ॥

पलल सूप शाक इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । गुडपललम् । घृतपललम् । घृतसूपः । मूलकसूपः । घृतशाकम् । मुद्गशाकम् । गुडेन मिश्रं पललं, गुडपललम् । भक्ष्येण मिश्रीकरणमिति समासः । मिश्र इति किम् ? परमपललम् ॥

कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १२९ ॥

कूल सूद स्थल कर्ष इत्येतान्युत्तरपदानि तत्पुरुषे समासे संज्ञायां विषये आद्युदात्तानि भवन्ति । दाक्षिकूलम् । माहकिकूलम् । देवसूदम् । भाजीसूदम् । दाण्डायनस्थली । माहकिस्थली । गार्डिकर्षः । ग्रामनामधेयान्येतानि । स्थलग्रहणे लिङ्गविशिष्टस्यात् स्थलीशब्दोऽपि गृह्यते । जानपदकुण्डेत्यनेन ङीष् । संज्ञायामिति किम् ? परमकूलम् ॥

अकर्मधारये राज्यम् ॥ १३० ॥

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यमित्येतदुत्तरपदमाद्युदात्तं भवति । ब्राह्मण

राज्यम् । क्षत्रियराज्यम् । अकर्मधारय इति किम् ? परमराज्यम् । चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन । कुचेलम् । कुराज्यम् ॥

वर्ग्यादयश्च ॥ १३१ ॥

वर्ग्य इत्येवमादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदात्तानि भवन्ति । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । अर्जुनपक्ष्यः । अकर्मधारय इत्येव-परमवर्ग्यः । वर्ग्यादयः प्रातिपदिकेषु न पठ्यन्ते । दिगादिषु तु वर्ग पूग गण पक्ष इत्येवमादयो ये पठितास्त एव यत्प्रत्ययान्ता वर्ग्यादय इह प्रतिपत्तव्याः ॥

पुत्रः पुंभ्यः ॥ १३२ ॥

पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे आद्युदात्तो भवति । कौनटिपुत्रः । दामकपुत्रः । माहिषकपुत्रः । पुत्र इति किम् ? कौनटिमातुलः । पुम्भ्य इति किम् ? गार्गीपुत्रः । वात्सीपुत्रः ॥

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥

आचार्य उपाध्यायः । राजा ईश्वरः । ऋत्विजो याजकाः । संयुक्ताः स्त्रीसंबन्धिनः श्यालादयः । ज्ञातयो मातृपितृसंबन्धिनो बान्धवाः । आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति । आख्याग्रहणात् स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुः पुत्रः । संयुक्तपुत्रः । संबन्धिपुत्रः । श्यालपुत्रः । ज्ञातिपुत्रः । भ्रातुष्पुत्रः । ऋतो विद्यायोनिसंबन्धेभ्य इति षष्ठ्या अलुक् । पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वमेव भवति ॥

चूर्णादीन्यप्राणिषष्ठ्याः ॥ १३४ ॥

उत्तरपदादिरिति वर्तते तत्पुरुष इति च । चूर्णादीन्युत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात् पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । मुद्गचूर्णम् । मसूरचूर्णम् । अप्राणि इति किम् ? मत्स्यचूर्णम् । षष्ठ्या इति किम् ? परमचूर्णम् । चूर्ण । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप । चमसी । चक्कन(१) । चौल । चूर्णादिः । चूर्णादीन्यप्राण्युपग्रहादिति सूत्रस्य पाठान्तरम् । तत्रोपग्रह इति षष्ठ्यन्तमेव पूर्वाचार्योपचारेण गृह्यते ॥

षट् च काण्डादीनि ॥ १३५ ॥

षट् पूर्वोक्तानि काण्डादीन्युत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि भवन्ति काण्डं गर्हायामित्युक्तमगर्हायामपि भवति-दर्भकाण्डम् । शरकाण्डम् । चीरमुपमानमित्युक्तमनुपमानमपि भवति-दर्भचीरम् । कुशचीरम् । पललसूपशाकं मिश्रइत्यु-

१. चक्कनशब्दमन्ये पठन्ति । इति पदमञ्जरी ।

क्तमिश्रेऽपि भवति-तिलपललम् । मुद्गसूप । मूलकशाकम् । कूल संज्ञायामित्युक्तमसंज्ञायामपि भवति-नदीकूलम् । समुद्रकूलम् । षडिति किम् ? राजसूद (१) ॥

कुण्डं वनम् ॥ १३६ ॥

कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्त्तते । कुण्डमित्येतदुत्तरपद वनवाचि तत्पुरुषे समासे आद्युदात्त भवति । दर्भकुण्डम् । शरकुण्डम् । वनमिति किम् ? मृत्कुण्डम् ॥

प्रकृत्या भगालम् ॥ १३७ ॥

भगालवाच्युत्तरपद तत्पुरुषे समासे प्रकृतिस्वर भवति । कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । भगालादयो मध्योदात्ता । प्रकृत्येतदधिकृतमन्त इति यावद्वेदितव्यम् ॥

शितेर्नित्याबह्वज्बहुव्रीहावभसत् ॥ १३८ ॥

शितेरुत्तरपद नित्य यदबह्वज् भसच्छब्दवर्जित बहुव्रीहौ समासे तत्प्रकृतिस्वर भवति । शितिपाद । शित्यंस । शित्योष्ठ । पादशब्दो वृषादित्वादाद्युदात्त । असौष्ठशब्दौ च प्रत्ययस्य नित्वादाद्युदात्तौ । शितेरिति किम् ? दर्शनीयपाद । नित्यग्रहण किम् ? शितिककुत् । ककुदस्यावस्थायां लोपो विधीयते । तत्रावस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपद भवतीति तेन न नित्याबह्वच । अबह्वजिति किम् ? शितिललाट । बहुव्रीहाविति किम् ? शिते पाद , शितिपाद । अभसदिति किम् ? शितिभसत् । शितिशब्द आद्युदात्त । पूर्वपदप्रकृतिस्वरापवादो योग ॥

गतिकारकोपपदात्कृत् ॥ १३९ ॥

तत्पुरुष इति वर्त्तते, न बहुव्रीहाविति । गते, कारकादुपपदाच्च कृदन्तमुत्तरपद तत्पुरुषे समासे प्रकृतिस्वर भवति । प्रकारक । प्रकरणम् । प्रहारक । प्रहरणम् । कारकात्-इध्मप्रव्रश्चन । पलाशशातन । श्मश्रुकल्पन । उपपदात्-ईषत्कर । दुष्कर । सुकर । सर्वत्रैवात्र लित्स्वर । गतिकारकोपपदादिति किम् ? देवदत्तस्य कारको, देवदत्तकारक । देवदत्तस्येति शेषलक्षणा षष्ठी । कृद्ग्रहण विस्पष्टार्थम् । प्रपचतितराम् । प्रपचतितमाम् इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम् । तत्र सति शिष्टत्वादाम एव स्वरो भवतीत्येके । प्रपचतिदेश्याद्यर्थं कृद्ग्रहण दृश्यत एव ॥

उभे वनस्पत्यादिषु युगपत् ॥ १४० ॥

प्रकृत्येति वर्त्तते । वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवत । वनस्पति । वनस्पतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट् । बृहस्पति । बृहता पति । तद्बृहतो करपत्योश्चोरदेवतयो सुट् तलोपश्चेति सुट् तकारलोपश्च । बृहदित्येतदन्तोदात्त निपातयन्ति । तस्य केचिदाद्युदात्तत्व वर्णयन्ति ।

१ अप्राणिषष्ठ्या इति किम् ? देवदत्तकाण्ड इत्यधिक पुस्तकान्तरे ।

शचीपतिः। शचीशब्दः कृदिकारादक्तिन इति ङीषन्तत्वादन्तोदात्तः। केचित्तु शार्ङ्गरवादिषु पठन्ति, तेषामाद्युदात्तः। तनूनपात्। तनोतेरौणादिक ऊप्रत्ययस्तेन तनूशब्दोऽन्तोदात्तः। न पाति न पालयति वा नपात् क्विबन्तः। नभ्राण्नपादित्यादिनाऽऽद्युदात्तो निपातितः। तन्वा नपात्, तनूनपात्। नराशंसः। नरा अस्मिन्नासीनाः शंसन्ति, नरा एवं शंसन्तीति वा नराशंसः। नॄ नये। अबन्तो नरशब्द आद्युदात्तः। शंसशब्दोऽपि घञन्तः। अन्येषामपि दृश्यत इति दीर्घत्वम्। शुनः शेपः। शुन इव शेपोऽस्येति बहुव्रीहिः। तत्र शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामिति षष्ठ्या अलुक्। उभावाद्युदात्तौ। शण्डामर्को। शण्डमर्कशब्दौ यजन्तत्वादाद्युदात्तौ। तयोर्द्वन्द्वेऽन्येषामपि दृश्यत इति दीर्घत्वम्। तृष्णावरूत्री। तृष्णाशब्द आद्युदात्तः। वरूत्रीशब्दो, ग्रसितादिसूत्रे निपातितोऽन्तोदात्तः। तत्र द्वन्द्वे दीर्घत्वं पूर्ववत्। बम्बाविश्ववयसौ। बम्बशब्दोऽन्तोदात्तः। विश्ववयःशब्देऽपि, बहुव्रीहौ विश्वं संज्ञायामिति विश्वशब्दोऽन्तोदात्तः। तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत्। मर्मृत्युः। मरिति, मृङो विच्प्रत्ययः। मृत्युशब्दोऽन्तोदात्तः। द्वन्द्वानामदेवताद्वन्द्वार्थोऽनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः॥

देवताद्वन्द्वे च॥ १४१॥

देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। ऋज्रेन्द्राग्रेति इन्द्रशब्द आद्युदात्तो निपातितः। सोम इति मन्प्रत्ययान्त (१)। वरुण उनन्प्रत्ययान्तस्तेनाऽऽद्युदात्तः। बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्व्युदात्तौ, तेनेन्द्राबृहस्पती इत्यत्र त्रय उदात्ता भवन्ति। देवताग्रहणं किम्? प्लक्षन्यग्रोधौ। द्वन्द्वग्रहणं किम्? अग्निष्टोमः॥

नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु॥ १४२॥

उत्तरपदेऽनुदात्तादौ पृथिवीरुद्रपूषमन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत् प्रकृतिस्वरे भवतः। इन्द्राग्नी। इन्द्रवायू। अग्निवायुशब्दावन्तोदात्तौ। उत्तरपदग्रहणम् अनुदात्तादाविप्युत्तरपदविशेषणं यथा स्याद्, द्वन्द्वविशेषणं मा भूदिति। अनुदात्तादाविति विधिप्रतिषेधयोर्विषयविभागार्थम्। अपृथिव्यादिष्विति किम्? द्यावापृथिव्यौ। द्यावाशब्द आद्युदात्तो निपातितः। पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः। रुद्र-सोमारुद्रौ। रोदेर्णिलुक् चेति रुद्रशब्दो रक्प्रत्ययान्तोन्तोदात्तः। पूषन्-इन्द्रापूषणौ। श्वन्नुक्षन्पूषन्निति पूषाऽन्तोदात्तो निपात्यते। मन्थिन्-शुक्रामन्थिनौ। मन्थोऽस्यास्तीति मन्थी। इन्नन्तत्वादन्तोदात्त। पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव॥

अन्तः॥ १४३॥

अन्त इत्यधिकारो यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र समासस्योत्तरपदस्यान्त

१. नित्वादाद्यु ात इत्यधिकमन्यत्र।

उदात्तो भवतीत्येवं तद्वेदितव्यम्। वक्ष्यति—थाथघञ्क्ताजबित्रकाणामिति। सुनीथः। अवभृथः॥

थाथघञ्क्ताजबित्रकाणाम् ॥ १४४ ॥

थ अथ घञ् क्त अज् अप् इत्र क इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात्परेषामन्त उदात्तो भवति। सुनीथः। अवभृथः। हनिकुषिनीरमिकाशिभ्यः क्थन् इति थके भृञ इति च क्थन्प्रत्ययान्तावेतौ। तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यात्। अथ,—आवसथः। उपवसथः। उपसर्गे वसेरित्यथन्प्रत्ययः। घञ्—प्रभेदः। काष्ठभेदः। रज्जुभेदः। क्त—दूरादागतः। विशुष्कः। आतपशुष्कः। अच्—प्रक्षयः। प्रजयः। क्षयो निवासे, जयः करणमिति चाद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः। अप्—प्रलवः। प्रसवः। इत्र—प्रलवित्रम्। प्रसवित्रम्। क—गोवृषः। खरीवृषः। गां वर्षति खरीं वर्षतीति, मूलविभुजादित्वात्कप्रत्ययः। प्रवृषः। प्रहृषः। इगुपधज्ञेति कप्रत्ययः। वृषादीनां चेति वृषशब्द आद्युदात्तः। गतिकारकोपपदादित्येव। सुस्तुतं भवता। कर्मप्रवचनीयेऽव्ययस्वर एव भवति॥

सूपमानात् क्तः ॥ १४५ ॥

सु इत्येतदुपमानाच्च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति। सुकृतम्। सुभुक्तम्। सुपीतम्। उपमानात्—वृकावलुप्तम्। शशप्लुतम्। सिंहविनर्दितम्। सुशब्दाद् गतिरनन्तर इति प्राप्ते। उपमानादपि तृतीया कर्मणीति, अयमपवादः। गतिकारकोपपदादित्येव। सुस्तुतं भवता॥

संज्ञायामनाचितादीनाम् ॥ १४६ ॥

संज्ञायां विषये गतिकारकोपपदात् क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन् वर्जयित्वा। संभूतो रामायणः। उपहूतः शाकल्यः। परिजग्धः कौण्डिन्यः। संभूत इति प्राप्त्यर्थाद् भवतेः कर्मणि क्तः। गतिरनन्तर इत्यत्र हि कर्मणीत्यनुवर्तते तद्बाधनार्थं चेदम्। धनुष्खाता नदी। कुद्दालखातं नगरम्। हस्तिमृदिता भूमिः। तृतीया कर्मणीति प्राप्तिरिह बाध्यते। अनाचितादीनामिति किम्? आचितम्। पर्याचितम्। आस्थापितम्। परिगृहीतम्। निरुक्तम्। प्रतिपन्नम्। प्रश्लिष्टम्। उपहतम्। उपस्थितम् ॥संहितागवि॥ संहिताशब्दो यदा गोरन्यस्य संज्ञा तदाऽन्तोदात्तो न भवति। यदा तु, गोः संज्ञा तदाऽन्तोदात्त एव॥

प्रवृद्धादीनां च ॥ १४७ ॥

प्रवृद्धादीनां च क्तान्तमुत्तरपदमन्तोदात्तं भवति। प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुक्ताः सक्तवः। आकर्षेऽवहितः। अवहितो भोगेषु। खट्वारूढः। कविशस्तः। यानादीनामत्र गणे पाठः प्रायो वृत्तिप्रदर्शनार्थो न विषयनियमार्थः। यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव। विषयनियमार्थ एवेत्येके। असंज्ञार्थोऽयमारम्भः।

आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः । तेन पुनरुत्स्यूतं वासो देयं पुनर्निष्कृतो रथ इत्येवमादि सिद्धं भवति ॥

कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥

संज्ञायामिति वर्त्तते, क्त इति च । संज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति । देवा एनं देयासुर्देवदत्तः । विष्णुरेनं श्रूयाद् विष्णुश्रुतः । कारकादिति किम् ? कारकान्नियमो मा भूत् । सम्भूतो(१) रामायणः । दत्तश्रुतयोरिति किम् ? देवपालितः । एतस्मान्नियमादत्र संज्ञायामनाचितादीनामित्यन्तोदात्तत्वं न भवति, तृतीया कर्मणीत्येवात्र भवति । एवकारकरणं किम् ? कारकावधारणं यथा स्याद्, दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति । सम्श्रुतः । विश्रुतः । आशिषीति किम् ? अनाशिषि नियमो मा भूत्-देवैः खाता देवखाता । कारकाद्दत्तश्रुतयोराशिष्येवेत्येवमत्र नियम इष्यते । तेनाहतो नदति देवदत्त इत्यत्र न भवति । देवदत्त इति कस्यचित् शङ्खस्य नाम । तत्र तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वमेव भवति ॥

इत्थम्भूतेन कृतमिति च ॥ १४९ ॥

इमं प्रकारमापन्न इत्थम्भूतः । इत्थम्भूतेन कृतमित्येतस्मिन्नर्थे यः समासो वर्त्तते तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुप्तप्रलपितम् । उन्मत्तप्रलपितम् । प्रमत्तगीतम् । विपन्नश्रुतम् । कृतमिति क्रियासामान्ये करोतिर्वर्त्तते, नाभूतप्रादुर्भाव एव । तेन प्रलपितादयपि कृतं भवति । तृतीया कर्मणीत्यस्यायमपवादः । भावे तु यदा प्रलपितादयस्तदा, थाथादिस्वरेणैव सिद्धमन्तोदात्तं भवति ॥

अनो भावकर्मवचनः ॥ १५० ॥

अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात्परमन्तोदात्तं भवति । ओदनभोजनं सुखम् । पयःपानं सुखम् । चन्दनप्रियङ्गुकालेपनं सुखम् । कर्मवचन— राजभोजनाः शालयः । राजाच्छादनानि वासांसि । कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखमित्ययं योग उभयथा वर्ण्यते—कर्मण्युपपदे भावे ल्युड् भवति । कर्मण्यभि— ल्युड्भवतीति तत्र पूर्वस्मिन्सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि । अन इति किम् ? हस्तहार्यमुदश्वित् । भावकर्मवचन इति किम् ? दन्तधावनम् । करणे ल्युट् । कारकादित्येव, निदर्शनम् । अवलेखनम् । सर्वेषु ... णेषु प्रकृतिस्वरो भवति ॥

मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥ १५१ ॥

मन्नन्त क्तिन्नन्त व्याख्यान शयन आसन स्थान इत्येतानि याजकादयः क्रीतश्चोत्तरपदमन्तोदात्तं भवति । मन्—रथवर्त्म । शकटवर्त्म । क्तिन्—पाणिनिकृतिः

१. 'संश्रुत' इत्यपि क्वचित् ।

आपिशलिः प्रकृतिः । व्याख्यान-ऋगयनव्याख्यानम् । छन्दोव्याख्यानम् । शयन-राजशयनम् । ब्राह्मणशयनम् । आसन-राजासनम् । ब्राह्मणासनम् । स्थान-गोस्थानम् । अश्वस्थानम् । याजकादि-ब्राह्मणयाजकः । क्षत्त्रिययाजकः । ब्राह्मणपूजकः । क्षत्त्रियपूजकः । याजकादयो ये, याजकादिभिश्चेति षष्ठीसमासार्थाः पठ्यन्ते त एवेह गृह्यन्ते । क्रीत-गोक्रीतः । अश्वक्रीतः । कृत्स्वरापवादोऽयं योगः । क्रीतशब्दे तु तृतीया कर्मणीत्यस्यापवादः । व्याख्यानशयनासनस्थानानामभावकर्मार्थं ग्रहणम् । कारकादित्येव, प्रकृतिः । प्रहृतिः ॥

सप्तम्याः पुण्यम् ॥ १४२ ॥

सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं भवति । अध्ययने पुण्यम्, अध्ययनपुण्यम् । वेदे पुण्य, वेदपुण्यम् । सप्तमीति योगविभागात् समासः । तत्पुरुषे तुल्यार्थ इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते । उणादीनां तु व्युत्पत्तिपक्षे कृत्स्वरेणाद्युदात्तः पुण्यशब्दः स्यादिति । सप्तम्या इति किम् ? वेदेन पुण्य, वेदपुण्यम् ॥

ऊनार्थकलहं तृतीयायाः ॥ १४३ ॥

ऊनार्थान्युत्तरपदानि कलहशब्दश्च तृतीयान्तात्पराण्यन्तोदात्तानि भवन्ति । माषोनम् । कार्षापणोनम् । माषविकलम् । कार्षापणविकलम् । कलह-असिकलहः । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः । अत्र केचिदर्थ इति स्वरूपग्रहणमिच्छन्ति, धान्येनार्थो धान्यार्थः । ऊनशब्देनैव स्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वादेव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ॥

मिश्रं चानुपसर्गमसन्धौ ॥ १४४ ॥

तृतीयेति वर्तते । मिश्र इत्येतदुत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तं भवत्यसन्धौ गम्यमाने । गुडमिश्राः । तिलमिश्राः । सर्पिर्मिश्राः । मिश्रमिति किम् ? गुडधानाः । अनुपसर्गमिति किम् ? गुडसंमिश्राः । इहानुपसर्गग्रहणं ज्ञापकमन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य । तेन मिश्रश्लक्ष्णैरिति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति । असन्धाविति किम् ? ब्राह्मणमिश्रो राजा । ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः । सन्धिरिति हि पणबन्धेनैकार्थ्यमुच्यते । केचित्पुनराहुर्गृह्यमाणविशेषा प्रत्यासत्तिः(१) सन्धिरिति । तत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्तिविभागस्वरूपभेदो गृह्यत इति ब्राह्मणमिश्रो राजेति प्रत्युदाह्रियते । उदाहरणेष्वविभागापत्तिरेव गुडमिश्रा इति ॥

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ॥ १४५ ॥

सम्पादि अर्ह हित अलम् इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुण-

१. गृह्यमाणो विशेषो ययोर्वस्तुनोर्यस्यां प्रत्यासत्तौ सा गृह्यमाणविशेषा प्रत्यासत्तिरिति पदमञ्जरी ॥

प्रतिषेधे वर्तमानात् पराण्यन्तोदात्तानि भवन्ति। सम्पादि-कर्णवेष्टकाभ्यां सम्पादि, सुख, कार्णवेष्टकिकं, न कार्णवेष्टकिकं अकार्णवेष्टकिकम्। अर्ह-छेदमर्हति छैदिकः। न छैदिकोऽच्छैदिकः। हित-वत्सेभ्यो हितो वत्सीयो, न वत्सीयोऽवत्सीयः। अलमर्थ—सन्तापाय प्रभवति सान्तापिकः। न सान्तापिकोऽसान्तापिकः। नञ इति किम्? गार्दभरथमर्हति गार्दभरथिकः। विगार्दभरथिकः। गुणप्रतिषेध इति किम्? गार्दभरथिकादन्योऽगार्दभरथिकः। गुण इति तद्धितार्थप्रवृत्तिनिमित्त सम्पाद्युच्यते तत्प्रतिषेधो यत्रोच्यते समासे तत्राय विधिः। कर्णवेष्टकाभ्यां न सम्पादि मुखमिति। सम्पाद्यर्हहितालमर्था इति किम्? पाणिनीयमधीते पाणिनीयो न पाणिनीयोऽपाणिनीयः। तद्धिता इति किम्? कन्या वोढुमर्हति कन्यावोढा न वोढाऽवोढा। अर्हे कृत्यतृचश्चेति तृच्॥

## ययतोश्चातदर्थे॥ १२६॥

य यत् इत्येतौ यौ तद्धितावतदर्थे वर्तेते तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति। पाशानां समूहः पाश्या, न पाश्या अपाश्या। अतृण्या। यत्-दन्तेषु भवं दन्त्यं न दन्त्यमदन्त्यम्। अकर्ण्यम्। अतदर्थे इति किम्? सुखकं पाद्यम्। न पाद्यमपाद्यम्। तद्धिता इत्येव। अदेयम्। गुणप्रतिषेध इत्येव दन्त्यादन्यदवदन्त्यम्। निरनुबन्धकैकानुबन्धकयोर्यंयतोर्ग्रहणादिह न भवति-वामदेवाड्ड्यड्ड्यौ, वामदेव्य, न वामदेव्यमवामदेव्यमिति॥

## अच्कावशक्तौ॥ १२७॥

अच् क इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपद नञः परमन्तोदात्त भवति अपचो यः पक्तु न शक्नोति। अजयः। क-लिखवपि-अविक्षिपः। अविलिखः। अशक्ता-विति किम्? अपचो दीक्षितः। अपचः परिव्राजक(१)॥

## आक्रोशे च॥ १२८॥

आक्रोशे च गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तं भवति। ...अपचो जाल्मः। अपठोऽय जाल्मः। पक्तु पठितु शक्तोऽप्येवमाक्रुश्यते। अविक्षिपः। अविलिखः॥

## सज्ञायाम्॥ १२९॥

आक्रोशे गम्यमाने नञः परमुत्तरपद सज्ञाया वर्तमानमन्तोदात्त भवति। अदेवदत्तः। अयज्ञदत्तः। अविष्णुमित्रः।

## कृत्योकेष्णुच्चार्वादयश्च॥ १३०॥

कृत्य उक इष्णुच् इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति। अकर्तव्यम्। अकरणीयम्। उक-अनागामुकम्। अनपलाषुकम्। इष्णुच्-अनलङ्करिष्णुः। अनिराकरिष्णुः। इष्णुज्ग्रहणे कर्तरि भुवः खिष्णुजित्यस्य ६ ...

१. गुणप्रतिषेध इत्येव, अन्योयः पचादयच इत्यधिक पुस्तकान्तरे।

ग्रहणमिकारादेर्विधानसामर्थ्याद्भवति । अनाढ्यम्भविष्णुः । असुभगम्भविष्णुः । चार्वादयः—अचारुः । असाधुः । अयौधिकः । अवदान्यः । चारु । साधु । यौधिक । अनङ्गमेजय । अत्र द्वितीये नञ्समासेऽन्तोदात्तत्वम्—अनङ्गमेजयः । वदान्य । अकस्मात् । अत्रापि द्वितीये नञ्समासेऽन्तोदात्तत्वम्—अनकस्मात् ॥ वर्त्तमानवर्द्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः सञ्ज्ञायाम् ॥ एते वर्त्तमानादयः सञ्ज्ञायां द्रष्टव्याः ॥ विकारसदृशे व्यस्तसमस्ते ॥ अविकारः । असदृशः । अविकारसदृशः । गृहपति । गृहपतिकः ॥ राजाह्नोश्छन्दसि ॥ अराजा । अनहः । भाषायां नञ्स्वर एव भवति ॥

## विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥

तृन्नन्त अन्न तीक्ष्ण शुचि इत्येतेषु नञ उत्तरेषु विभाषाऽन्त उदात्तो भवति । अकर्त्ता । २ । अन्न—अनन्नम् २ । तीक्ष्ण—अतीक्ष्णम् २ । शुचि—अशुचिः । २ । पक्षेऽव्ययस्वर एव भवति ॥

## बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥

बहुव्रीहौ समासे इदम् एतद् तदित्येभ्य उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्त्तमानस्यान्त उदात्तो भवति । इदं प्रथमं गमनं भोजनं वा यस्य स इदम्प्रथमः । इदंद्वितीयः । इदन्तृतीयः । एतत्प्रथमः । एतद्द्वितीयः । एतत्तृतीयः । तत्प्रथमः । तद्द्वितीयः । तत्तृतीयः । बहुव्रीहाविति किम् ? अनेन प्रथम इदम्प्रथमः । तृतीयेति योगविभागात् समासः । इदमेतत्तद्भ्य इति किम् ? यत्प्रथमः । प्रथमपूरणयोरिति किम् ? तानि बहून्यस्य तद्बहुः । क्रियागणन इति किम् ? अयं प्रथम एषां त इदम्प्रथमाः । द्रव्यगणनमेतत् । गणन इति किम् ? अयम्प्रथम एषामिदम्प्रथमाः । इदम्प्रधाना इत्यर्थः । उत्तरपदस्य कार्यित्वात् अपि पूर्वमन्तोदात्तं भवति-इदम्प्रथमकाः । बहुव्रीहावित्येतत्, नञ् समास इति प्रागेतस्मादधिकृतं वेदितव्यम् ॥

## संख्यायाः स्तनः ॥ १६३ ॥

सङ्ख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति । द्विस्तना । त्रिस्तना । चतुःस्तना । संख्याया इति किम् ? दर्शनीयस्तना । स्तन इति किम् ? द्विशिरा (१)॥

## विभाषा छन्दसि ॥ १६४ ॥

छन्दसि विषये बहुव्रीहौ समासे सङ्ख्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति । द्विस्तनां कुर्याद्वामदेवः । द्विस्तनां करोति द्यावापृथिव्योर्दोहाय । चतुःस्तनां करोति पशूनां दोहाय । चतुःस्तना करोति ॥

## संज्ञायां मित्राजिनयोः ॥ १६५ ॥

संज्ञायां विषये बहुव्रीहौ समासे मित्र अजिन इत्येतयोरुत्तरपदयोरन्त उदात्तो

१. द्विशिरा इत्यर्धिकमन्यत्र ।

भवति । देवमित्रः । ब्रह्ममित्रः । वृकाजिनः । कूलाजिनः । कृष्णाजिनः । संज्ञायामिति किम् ? प्रियमित्रः । महाजिनः ॥ ऋषिप्रतिषेधो मित्रे ॥ विश्वामित्र ऋषिः ॥

व्यवायिनोऽन्तरम् ॥ १६६ ॥

व्यवायी व्यवधाता । तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति । वस्त्रान्तरः, पटान्तरः, कम्बलान्तरः । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । वस्त्रव्यवधायक इत्यर्थः । व्यवायिन इति किम् ? आत्मान्तरः । आत्मा स्वभावोऽन्तरोऽन्यो यस्यासावात्मान्तरः ॥

मुखं स्वाङ्गम् ॥ १६७ ॥

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति । गौरमुखः । भद्रमुखः । स्वाङ्गमिति किम् ? दीर्घमुखा शाला । स्वाङ्गमद्रवादिलक्षणमिह गृह्यते ॥

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ १६८ ॥

अव्यय दिक्शब्द गो महत् स्थूल मुष्टि पृथु वत्स इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति । अव्यय–उच्चैर्मुखः । नीचैर्मुखः । दिक्शब्द–प्राङ्मुखः, प्रत्यङ्मुखः । गो–गोमुखः । महत्–महामुखः । स्थूल–स्थूलमुखः । मुष्टि–मुष्टिमुखः । पृथु–पृथुमुखः । वत्स–वत्समुखः । पूर्वपदप्रकृतिस्वरो यथायोगमेषु भवति । गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते ॥

निष्ठोपमानादन्यतरस्याम् ॥ १६९ ॥

निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति । प्रक्षालितमुखः । यदैतदुत्तरपदान्तोदात्तत्वं न भवति तदा निष्ठोपसर्गपूर्वमन्यतरस्यामिति पक्षे पूर्वपदान्तोदात्तत्वं, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति । उपमानात्–सिंहमुखः २ । व्याघ्रमुखः ॥ २ ॥

जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः ॥१७०॥

जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति । सारङ्गजग्धः । पलाण्डुभक्षितः । काल–मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । सुखादिभ्यः–सुखजातः । दुःखजातः । तृप्तजातः । जात्यादिभ्य इति किम् ? पुत्रजातः । आहिताग्न्यादित्वात् परनिपातः । अनाच्छादनादिति किम् ? वस्त्रच्छन्नः । वसनच्छन्नः । अकृतमितप्रतिपन्ना इति किम् ? कुण्डकृतः । कुण्डमितः । कुण्डप्रतिपन्नः । एतेषु बहुव्रीहिषु निष्ठान्तस्य(१) पूर्वनिपातो न भवत्येतस्मादेव ज्ञापकात् । प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो. योऽयमित्यादि । सुखादयस्तृतीयेऽध्याये पठ्यन्ते ।

---

१. पूर्वनिपातो न भवतीत्यस्य स्थाने परनिपातो भवति । इति पा० ।

### वा जाते ॥ १७१ ॥

जातशब्द उत्तरपदे वा अन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः । दन्तजातः । २ स्तनजातः । २ कालात्—मासजातः । २ । संवत्सरजातः । २ सुखादिभ्य—सुखजातः । २ दुःखजातः । २

### नञ्सुभ्याम् ॥ १७२ ॥

नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति । अयवो देशः । अव्रीहिः । अमाषः । सुयवः । सुव्रीहिः । सुमाषः । समासस्यैतदन्तोदात्तत्वमिष्यते । समासान्ताश्चावयवा भवन्तीत्यनृचो बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति

### कपि पूर्वम् ॥ १७३ ॥

नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति । अकुमारीको देशः । अवृषलीकः । अब्रह्मबन्धूकः । सुकुमारीकः । सुवृषलीकः । सुब्रह्मबन्धूकः ।

### ह्रस्वान्तेऽन्त्यात् पूर्वम् ॥ १७४ ॥

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे । अयवको देशः । अव्रीहिकः । अमाषकः । सुयवकः । सुव्रीहिकः । सुमाषकः । पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं, प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम् । ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति । तेनाज्ञकः सुज्ञक इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति ।

### बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥

उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्त्तते तस्मान्नञ इव स्वरो भवति । नञ्सुभ्यामित्युक्तम् । बहोरपि तथा भवति—बहुयवो देशः । बहुव्रीहिः । बहुतिलः । कपि पूर्वमित्युक्तं बहोरपि तथा भवति—बहुकुमारीको देशः । बहुवृषलीकः । बहुब्रह्मबन्धूकः । ह्रस्वान्तेऽन्त्यात् पूर्वमित्युक्तं । बहोरपि तथा भवति—बहुयवको देशः । बहुव्रीहिकः । बहुमाषकः । नञो जर मरमित्रमृता इत्युक्तं बहोरपि तथा भवति—बहुजरः । बहुमरः । बहुमित्रः । बहुमृतः । उत्तरपदभूम्नीति किम् ? बहुषु मनोऽस्य बहुमना अयम् ।

### न गुणादयोऽवयवाः ॥ १७६ ॥

गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बहुच्छन्दो मानम् । बहुसूक्तः । बह्वध्यायः । गुणादिराकृतिगणो द्रष्टव्यः । अवयवा इति किम् ? बहुगुणो ब्राह्मणः । अध्ययनश्रुतसदाचारादयोऽत्र गुणाः ।

### उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रपृष्ठः । प्रोदरः । प्रललाटः । ध्रुवमित्येकरूपमुच्यते । ध्रुवमस्य शीतमिति यथा । सततं यस्य

प्रगतं पृष्ठं भवति स प्रपृष्ठः । उपसर्गादिति किम् ? दर्शनीयललाटः । स्वाङ्गमिति किम् ? प्रशाखो वृक्षः । ध्रुवमिति किम् ? उद्बाहुः क्रोशति । अपर्शिति किम् ? उत्पर्शुः । विपर्शुः ।

वनं समासे ॥ १७८ ॥

समासमात्रे वनमित्येतदुत्तरपदमुपसर्गात् परमन्तोदात्तं भवति । प्रवणे यष्टव्यम् । निर्वणे प्रणिधीयते । प्रनिरन्तरिति णत्वम् । समासग्रहणं समासमात्रपरिग्रहार्थं बहुव्रीहावेव हि स्यात् ।

अन्तः ॥ १७९ ॥

अन्तरशब्दादुत्तरं वनमन्तोदात्तं भवति । अन्तर्वणो देशः । अनुपसर्गार्थं आरम्भः ।

अन्तश्च ॥ १८० ॥

अन्तरशब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति । प्रान्तः । पर्यन्तः । बहुव्रीहिरयं प्रादिसमासो वा ॥

न निविभ्याम् ॥ १८१ ॥

नि वि इत्येताभ्यामुत्तरोऽन्तरशब्दो नान्तोदात्तो भवति । न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः । तत्रोदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वरितो भवति ॥

परेरभितोभावि मण्डलम् ॥ १८२ ॥

परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति । परिकूलम् । परितीरम् । परिमण्डलम् । बहुव्रीहिरयं प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावपक्षेऽपि हि, परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्विति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते । अभित इत्युभयतः । अभितो भावोऽस्यास्तीति तदभितोभावि । यच्चैवंस्वभावं कूलादि तदभितोभाविग्रहणेन गृह्यते ॥

प्रादस्वाङ्गं संज्ञायाम् ॥ १८३ ॥

प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति । प्रकोष्ठम् । प्रगृहम् । प्रद्वारम् । अस्वाङ्गमिति किम् ? प्रहस्तम् । प्रपदम् । संज्ञायामिति किम् ? प्रपीठम्(१)॥

निरुदकादीनि च ॥ १८४ ॥

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति । निरुदकम् । निरुलपम् । निरुपलमित्यन्ये पठन्ति । निर्मशकम् । निर्मक्षिकम् । एषां प्रादिसमासो बहुव्रीहिर्वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् । निष्कालकः । निष्क्रान्तः कालकादिति कन् प्रत्ययान्तेन कालकशब्देन प्रादिसमासः । निष्कालिक इत्यन्ये पठन्ति । निष्पेषः । दुस्तरीपः । अतितृस्तृतन्त्रिभ्य ई । तरीः । तां पातीति तरीपः । कुत्सितस्त-

१. प्रष्ठः ।

रीपं दुस्तरीपः। निस्तरीप इति केचित् पठन्ति। अपरे निस्तरीक इति। ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति। निरजिनम्। उदजिनम्। उपाजिनम्। परेर्हस्तपादकेशकर्षाः। परिहस्तः। परिपादः। परिकेशः। परिकर्षः। निरुदकादिराकृतिगणः॥

अभेर्मुखम्॥ १८५॥

अभेरुत्तरं मुखमन्तोदात्तं भवति। अभिमुखः। बहुव्रीहिरयं प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। उपसर्गात् स्वाङ्गमिति सिद्धे वचनम् बहुव्रीहार्थमध्रुवार्थमस्वाङ्गार्थं च। अभिमुखा शाला॥

अपाच्च॥ १८६॥

अपाच्चोत्तरं मुखमन्तोदात्तं भवति। अपमुखः। अपमुखम्। अव्ययीभावोऽप्यत्र प्रयोजयति। तत्रापि हि परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेष्विरयुक्तम्। योगविभाग उत्तरार्थः॥

स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च॥ १८७॥

स्फिग पूत वीणा अञ्जस् अध्वन् कुक्षि इत्येतान्युत्तरपदानि सीरनामानि नामशब्दश्चापादुत्तराण्यन्तोदात्तानि भवन्ति। अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। अपाध्वा। उपसर्गादध्वन इति यदा समासान्तो नास्ति तदाऽनेनान्तोदात्तत्वं भवति। तस्मिन् हि सत्यच्प्रत्ययस्य चित्वादेव सिद्धम्। अनित्यश्च समासान्त इत्येतदेव ज्ञापकम्। अपकुक्षिः। अपसीरः। अपहलम्। अपलाङ्गलम्। अपनाम। सर्वत्र प्रादिसमासो बहुव्रीहिरव्ययीभावो वा। स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीहार्थमध्रुवार्थमस्वाङ्गार्थं च॥

अधेरुपरिस्थम्॥ १८८॥

अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति। अधिदन्तः। अधिकर्णः। अधिकेशः। अध्यारूढो दन्त इति प्रादिसमासः। अध्यारूढो वा दन्त इति समानाधिकरण उत्तरपदलोपी समासः। दन्तस्योपरि योऽन्यो दन्तो जायते स उच्यतेऽधिदन्त इति। उपरिस्थमिति किम्? अधिकरणम्॥

अनोरप्रधानकनीयसी॥ १८९॥

अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति। अनुगतो ज्येष्ठमनुज्येष्ठः। अनुमध्यमः। पूर्वपदार्थप्रधानः प्रादिसमासोऽयम्। अनुगतः कनीयाननुकनीयान्। उत्तरपदार्थप्रधानोऽयम्। प्रधानार्थं च कनीयोग्रहणम्। अप्रधानकनीयसी इति किम्? अनुगतो ज्येष्ठोऽनुज्येष्ठः॥

पुरुषश्चान्वादिष्टः॥ १९०॥

पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति। अन्वादिष्टः पुरुषोऽनुपुरुषः। अन्वादिष्टोऽन्यत्रितः कथितानुकथितो वा। अन्वादिष्ट इति किम्? अनुगतः पुरुषोऽनुपुरुषः॥

अतेरकृत्पदे ॥ १६१ ॥

अते परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति। अत्यङ्कुशो नागः। अतिकशोऽश्वः। पदशब्दः खल्वपि—अतिपदा शक्वरी। अकृत्पदे इति किम्? अतिकारकः। ॐअतेर्धातुलोप इति वक्तव्यम्ॐ। इह मा भूत्—शोभनो गार्ग्यः। अतिगार्ग्यः। इह च यथा स्यात्—अतिक्रान्तः कारकादतिकारक इति ॥

नेरनिधाने ॥ १९२ ॥

नेः परमुत्तरपदमन्तोदात्तं भवति अनिधाने। निधानमप्रकाशता। तद्भिन्नमनिधानं प्रकाशनम्। निमूलम्। न्यक्षम्। नितृणम्। बहुव्रीहिरयं प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्। अनिधान इति किम्? निधाय वृषलः। निदण्डः। निहितवाक् निहितदण्ड इत्यर्थः। निशब्दोऽत्र निधानार्थं ब्रवीति। प्रादयो हि वृत्तिविषये ससाधना क्रियामाहुः ॥

प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति। प्रतिगतोंऽशुः, प्रत्यंशुः। प्रतिजनः। प्रतिराजा। राजन्शब्दः समासान्तस्यानित्यत्वज्ञापकः टज् नास्ति तदा प्रयोजयति। तस्मिन् हि सति चित्त्वादेवान्तोदात्तत्वं सिद्धम्। अंशु। जन। राजन्। उष्ट्र। खेटक। अजिर। आर्द्रा। श्रवण। कृत्तिका। अर्ध। पुर। अंश्वादिः। तत्पुरुष इति किम्? प्रतिगता अंशवोऽस्य प्रत्यंशुरयमुष्ट्रः ॥

उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥

उपादुत्तरं द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा। उपगतो देवमुपदेवः। उपसोमः। उपेन्द्रः। उपक्रोडः। अजिन—उपाजिनम्। अगौरादय इति किम्? उपगौरः। उपतैषः। गौर। तैष। तैल। लेट। लोट। जिह्वा। कृष्णा। कन्या। गुध। कल्प। पाद। गौरादिः। तत्पुरुष इत्येव। उपगतः सोमोऽस्य उपसोमः ॥

सोरवक्षेपणे ॥ १९५ ॥

सुशब्दात् परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने। अवक्षेपणं निन्दा। इह खल्विदानीं सुस्थण्डिले सुस्फिताभ्यां सुप्रत्यवसितः। सुशब्दोऽत्र पूजायामेव। वाक्यार्थस्त्ववक्षेपणमसूयया तथाभिधानात्। सोरिति किम्? कुब्राह्मणः। अवक्षेपण इति किम्? शोभनेषु तृणेषु सुतृणेषु ॥

विभाषोत्पुच्छे ॥ १९६ ॥

उत्पुच्छशब्दे तत्पुरुषे विभाषाऽन्त उदात्तो भवति। उत्क्रान्तः पुच्छाद्, उत्पुच्छः। यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच्, उत्पुच्छस्तदा, थाथादिसूत्रेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्र विभाषा भवति। तत्पुरुष इत्येव। उदस्तं पुच्छमस्य, उत्पुच्छः ॥

द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ ॥ १९७ ॥

द्वि त्रि इत्येताभ्यामुत्तरेषु पाद् दत् मूर्द्धन् इत्येतेषूत्तरपदेषु यो बहुव्रीहिस्तत्र विभाषाऽन्त उदात्तो भवति । द्वौ पादावस्य, द्विपात् । २ । त्रिपात् । २ । द्विदन् । २ । द्विमूर्द्धा । २ । त्रिमूर्द्धा । २ । त्रिदन् । पादिति कृताकारलोपः पादशब्दो गृह्यते । ददिति कृतदद्भावादेशो दन्तशब्दः । मूर्द्धन्निति त्वकृतसमासान्तो नान्त एव मूर्द्धन्शब्दः । तस्यैतत्प्रयोजनमसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकमनित्यः समासान्तो भवतीति । यदापि समासान्तः क्रियते तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव—द्विमूर्द्धः । त्रिमूर्द्धः । द्वित्रिभ्यामिति किम् ? कल्याणमूर्द्धा । पादादिष्विति किम् ? द्विहस्तम् । बहुव्रीहाविति किम् ? द्वयोर्मूर्द्धा, द्विमूर्द्धा ॥

सक्थं चाक्रान्तात् ॥ १९८ ॥

सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात् परो विभाषाऽन्तोदात्तो भवति । गौरसक्थः । २ । श्लक्ष्णसक्थः । २ । अक्रान्तादिति किम् ? चक्रसक्थः । पक्षेऽस्मिन्नित्यमन्तोदात्तत्वं भवति ॥

परादिश्छन्दसि बहुलम् ॥ १९९ ॥

छन्दसि विषये परादिरुदात्तो भवति बहुलम् । परशब्देनात्र सक्थशब्द एव गृह्यते । अञ्जिसक्थमालभेत । त्वाष्ट्रौ लोमसक्थौ । ऋजुबाहुः । वाक्पतिः । चित्पतिः ॥

परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥

परादिरुदाहृतः । परान्तः । ❀अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्❀ । त्रिचक्रेण त्रिवन्धुरेण । त्रिवृता रथेन । पूर्वान्तः । ❀पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम्❀ । मरुद्वृधः । पूर्वादिः । ❀पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्❀ । दिवोदासाय सामगाय ते इत्येवमादि सर्वं संगृहीत भवति ॥

इति काशिकायां वृत्तौ षष्ठाध्यायस्य द्वितीयः पादः ॥ ६ ॥ २ ॥

# अथ षष्ठाध्यायस्य तृतीयः पादः ।

## अलुगुत्तरपदे ॥ १ ॥

अलुगिति च उत्तरपदे इति च एतदधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद्वेदितव्यम् । वक्ष्यति—पञ्चम्याः स्तोकादिभ्यः । स्तोकान् मुक्तः । अल्पान् मुक्तः । उत्तरपद इति किम् ? निष्क्रान्तः स्तोकाद्, निःस्तोकः । अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निवृत्तिं करोतीत्येवमर्थं लक्षणप्रतिपदोक्तपरिभाषा नाश्रयितव्या । अलुगधिकारः प्रागानङः । उत्तरपदाधिकारः प्रागङ्गाधिकारात्॥

## पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि तेभ्यः परस्याः पञ्चम्या उत्तरपदेऽलुग्भवति । स्तोकान् मुक्तः । अल्पान् मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान् मुक्तः । समासे कृते प्रातिपदिकत्वात् सुपो लुकि प्राप्ते प्रतिषेधः क्रियते । द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात् समास एव न भवति—स्तोकाभ्यां मुक्तः । स्तोकेभ्यो मुक्त इति । तेनात्र न कदाचिद्धमैकपद्यमैकस्वर्यं च भवति । ॐब्राह्मणाच्छंसिन उपसंख्यानम्ॐ । ब्राह्मणाद्दादाय शंसतीति, ब्राह्मणाच्छंसीति ऋत्विग्विशेषस्य(१)रूढिरियम् । तस्य व्युत्पत्तिरसता सता वाक्यवार्थेन क्रियते ॥

## ओजःसहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥

ओजस् सहस् अम्भस् तमस् इत्येतेभ्य उत्तरस्यास्तृतीयाया अलुग्भवति उत्तरपदे । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । ॐअञ्जस उपसंख्यानम्ॐ । अञ्जसाकृतम् । ॐपुंसानुजो जनुषान्ध इति वक्तव्यम्ॐ । पुंसानुजः । पुंसा हेतुनानुजः । जनुषान्धः । जनुषा हेतुनाऽन्धः । तृतीयेति योगविभागात् समासः । जनुरिति जन्मनो नामधेयम्(२) ॥

## मनसः संज्ञायाम् ॥ ४ ॥

मनस उत्तरस्यास्तृतीयायाः संज्ञायामलुग्भवति । मनसादत्ता । मनसागुप्ता । मनसासंगता । संज्ञायामिति किम् ? मनोदत्ता । मनोगुप्ता ॥

## आज्ञायिनि च ॥ ५ ॥

आज्ञायिन्युत्तरपदे मनस उत्तरस्यास्तृतीयाया अलुग्भवति । मनसाऽऽज्ञातुं शीलमस्य, मनसाज्ञायी ॥

## आत्मनश्च पूरणे ॥ ६ ॥

आत्मन उत्तरस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदेऽलुग्भवति । आत्मनाप-

---

१ विशेषस्य कस्यचिदिति पुस्तकान्तरेऽधिकम् । २. पुंसा हेतुनेत्यारभ्य नामधेयमित्यन्तोऽपपाठः पदमञ्जर्यां सत्त्वात् ।

ञ्चमः । आत्मनाषष्ठः । तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया । तृतीयेति योगविभागात् समासः । आत्मना वा कृतः पञ्चमः, आत्मनापञ्चमः । कथं जनार्दनस्त्वात्मचतुर्थ एवेति ? बहुव्रीहिरयमात्मा चतुर्थोऽस्यासावात्मचतुर्थः ॥

वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥

वैयाकरणस्याख्या वैयाकरणाख्या । आख्या संज्ञा । यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्यामात्मन उत्तरस्याश्चतुर्थ्या अलुग्भवति । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात् समासः ॥

परस्य च ॥ ८ ॥

परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुग्भवति । परस्मैपदम् । परस्मैभाषा ॥

हलदन्तात् सप्तम्याः संज्ञायाम् ॥ ९ ॥

हलन्तादवन्ताच्चोत्तरस्याः सप्तम्याः संज्ञायामलुग्भवति । युधिष्ठिरः । त्वचिसारः । गविष्ठिर इत्यत्र, गवियुधिभ्यां स्थिर इत्यत एव वचनादलुक् । अदन्तात्--अरण्येतिलकाः । अरण्येमाषकाः । वनेकिंशुकाः । वनेहरिद्रकाः । वनेबल्वजकाः । पूर्वाह्णस्फोटकाः । कूपेपिशाचकाः । हलदन्तादिति किम् ? नद्यां कुक्कुटिका, नदीकुक्कुटिका । भूम्यां पाशाः, भूमिपाशाः । संज्ञायामिति किम् ? अक्षशौण्डः । ॐहृद्द्युभ्यां ङेः॥ । हृद् दिव इत्येताभ्यामुत्तरस्य ङेरलुक् भवति । हृदिस्पृक् । दिविस्पृक् ॥

कारनाम्नि च प्राचां हलादौ ॥ १० ॥

प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या अलुग्भवति । सूपेशाण(१) । दृषदिमाषकः । हलेद्विपदिका । हलेत्रिपदिका । कारविशेषस्य संज्ञा एताः । तत्र पूर्वेणैव सिद्धे नियमार्थमिदम् । एते च त्रयो नियमविकल्पा अन्विष्यन्ते—कारनाम्न्येव प्राचामेव हलादावेवेति । कारनाम्नीति किम् ? अभ्यर्हिते पशुः, अभ्यर्हितपशुः । कारादन्यस्यैतद्देयस्य नाम । प्राचामिति किम् ? यूथेपशुः यूथपशुः । हलादाविति किम् ? अविकटे उरणः, अविकटोरणः । हलदन्तादित्येव । नद्यां दोहनी, नदीदोहनी ॥

मध्याद्गुरौ ॥ ११ ॥

मध्यादुत्तरस्याः सप्तम्या गुरावुत्तरपदेऽलुग्भवति । मध्येगुरुः ॥ ॐअन्ताच्चेति वक्तव्यम्ॐ ॥ अन्तेगुरुः । सप्तमीति योगविभागात्समासः ॥

अमूर्धमस्तकात् स्वाङ्गादकामे ॥ १२ ॥

मूर्धमस्तकवर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्या अकाम उत्तरपदेऽलुग्भवति । कण्ठेकालोऽस्य कण्ठेकालः । उरसिलोमा । उदरेमणिः । अमूर्धमस्तकादिति किम् ? मूर्ध-

१. मुकुटे कार्षापणमित्यधिकं पुस्तकान्तरे ।

शिल । अकाम इति किम्? मुखे कामोऽस्य, मुखकाम । स्वाङ्गादिति किम्? अक्ष शौण्ड । हलन्तादित्येव । अङ्गुलित्राण । जङ्घावलि ॥

बन्धे च विभाषा ॥ १३ ॥

बन्ध इति घजन्तो गृह्यते । तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्या सप्तम्या विभाषाऽलुग् भवति । हस्तेबन्ध । हस्तबन्ध । चक्रेबन्ध । चक्रबन्ध । उभयत्र विभाषेयम् । स्वाङ्गाद् बहुव्रीहौ पूर्वेण नित्यमलुक प्राप्नोति । तत्पुरुषे तु स्वाङ्गादस्वाङ्गाच्च नन्सिद्धबध्नातिषु चेति प्रतिषेध प्राप्नोति । हलदन्तादित्येव । गुप्तिबन्ध (१) ॥

तत्पुरुषे कृति बहुलम् ॥ १४ ॥

तत्पुरुषे समासे कृदन्ते उत्तरपदे सप्तम्या बहुलमलुग्भवति । स्तम्बेरम । कर्णेजप । न च भवति–कुरुचरे, मद्रचर ॥

प्रावृट्शरत्कालदिवां जे ॥ १५ ॥

प्रावृट् शरद काल दिव इत्येतेषा ज उत्तरपदे सप्तम्या बहुलमलुग्भवति । प्रावृषिज । शरदिज । कालेज । दिविज । पूर्वस्यैवाय प्रपञ्च ॥

विभाषावर्षक्षरशरवरात् ॥ १६ ॥

वर्ष क्षर शर वर इत्येतेभ्य उत्तरस्या सप्तम्या ज उत्तरपदे विभाषाऽलुग्भवति । वर्षेज । वर्षज । क्षरेज । क्षरज । शरेज । शरज । वरेज । वरज ॥

घकालतनेषु कालनाम्न ॥ १७ ॥

घसज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परत कालनाम्न उत्तरस्या सप्तम्या विभाषाऽलुग्भवति । घ पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे । काल-पूर्वाह्णेकाले । पूर्वाह्णकाले । तन–पूर्वाह्णेतने । पूर्वाह्णतन । कालनाम्न इति किम्? शुक्लतरे। शुक्लतमे । हलदन्तादित्येव । रात्रितरायाम् । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते । हृदयस्य हृल्लेखेति लेखग्रहणाल्लिङ्गात् । तत्र घतनग्रहणे तदन्तग्रहण न भवति । कालेति स्वरूपग्रहणम् ॥

शयवासवासिष्वकालात् ॥ १८ ॥

शय वास वासिन् इत्येतेषूत्तरपदेष्वकालवाचिन उत्तरस्या सप्तम्या विभाषाऽलुग्भवति । खेशय । खशय । ग्रामेवास । ग्रामवास । ग्रामेवासी । ग्रामवासी । अकालादिति किम्? पूर्वाह्णशय । हलन्तादित्येव । भूमिशय । ॐअपो योनियन्मतुपु सप्तम्या अलुग्वक्तव्य ॐ । अप्सुयोनि । अप्सव्य । अप्सुमन्तौ । अप्सु भव इति दिगादित्वाद्यत्प्रत्यय । सर्वत्र सप्तमीति योगविभागात् समास ॥

नेन्सिद्धबध्नातिषु च ॥ १९ ॥

इन्नन्ते सिद्धशब्दे बध्नातौ च परत सप्तम्या अलुग्न भवति । स्थण्डिलशायी(२)

१ कारिकाबन्ध इत्यधिकमेकस्मिन्पुस्तके । २ स्थण्डिलवर्तीत्यधिकमत्र पुस्तके ।

सिद्ध–साङ्काश्यसिद्धः । काम्पिल्यसिद्धः । बध्नाति–चक्रबन्धकः । चारकबन्धकः । सप्तमीति योगविभागात् समासः । चक्रबन्ध इति केचिदुदाहरन्ति । तत्पचाद्यजन्तं द्रष्टव्यम् । घञन्ते हि बन्धे च विभाषेत्युक्तम् ॥

स्थे च भाषायाम् ॥ २० ॥

स्थे चोत्तरपदे भाषायां सप्तम्या अलुग् भवति । समस्थः । विषमस्थः । कूटस्थः । पर्वतस्थः । भाषायामिति किम् ? कृष्णोऽस्याखरेष्टः । पूर्वपदादिति षत्वम् ॥

षष्ठ्या आक्रोशे ॥ २१ ॥

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग्भवति । चौरस्यकुलम् । वृषलस्यकुलम् । आक्रोश इति किम् ? ब्राह्मणकुलम् । ॐषष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग्वक्तव्यः ॐ । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । ॐआमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग्वक्तव्यः ॐ अमुष्यापत्यमामुष्यायणः । नडादित्वात् फक् । अमुष्य पुत्रस्य भावः, आमुष्यपुत्रिका । मनोज्ञादित्वाद् वुञ् । तथा आमुष्यकुलिकेति । ॐदेवानां प्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः ॐ । देवानांप्रियः । ॐशेपपुच्छलाङ्गूलेषु शुनः सञ्ज्ञायां षष्ठ्या अलुग्वक्तव्यः ॐ । शुनःशेपः, शुनःपुच्छः, शुनोलाङ्गूलः । ॐदिवश्च दासे षष्ठ्या अलुग्वक्तव्यः ॐ । दिवोदासाय गायति ॥

पुत्रेऽन्यतरस्याम् ॥ २२ ॥

पुत्रशब्द उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्या अलुग्भवति । दास्याःपुत्रः, दासीपुत्रः । वृषल्याःपुत्रः, वृषलीपुत्रः । आक्रोश इत्येव । ब्राह्मणीपुत्रः ॥

ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ २३ ॥

ऋकारान्तेभ्यो विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग्भवति । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । ऋत इति किम् । आचार्यपुत्रः । मातुलपुत्रः । विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् । विद्यायोनिसम्बन्धवाचिन्येवोत्तरपदे यथा स्यादन्यत्र मा भूत्–होतृधनम् । पितृधनम् होतृगृहम् । पितृगृहम् ॥

विभाषा स्वसृपत्योः ॥ २४ ॥

स्वसृ पति इत्येतयोरुत्तरपदयोर्ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यो विभाषाऽलुग्भवति । मातुःष्वसा । मातुःस्वसा । मातृष्वसा । पितुःष्वसा । पितुःस्वसा । पितृष्वसा । यदा लुक् तदा, मातृपितृभ्यां स्वसेति नित्यं षत्वम्, यदा त्वलुक् तदा, मातुःपितुर्भ्यामन्यतरस्यामिति विकल्पेन षत्वम् । दुहितुःपतिः । दुहितृपतिः । ननान्दुःपतिः । ननान्दृपतिः ॥

आनङ् ऋतो द्वन्द्वे ॥ २५ ॥

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङा

देशो भवति । होतापोतारौ । नेष्टोद्गातारौ । प्रशास्ताप्रतिहर्त्तारौ । योनिसम्बन्धेभ्य – मातापितरौ । याताननान्दरौ । नकारोच्चारण रपरत्वनिवृत्त्यर्थम् । ऋत इति किम् ? पितृपितामहौ । पुत्र इत्यनुवर्त्तते, ऋत इति च । तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्यानङादेशो भवति-पितापुत्रौ । मातापुत्रौ ॥

देवताद्वन्द्वे च ॥ २६ ॥

देवतावाचिना यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति । इन्द्रावरुणौ । इन्द्रासोमौ । इन्द्राबृहस्पती । द्वन्द्व इति वर्त्तमाने पुनर्द्वन्द्वग्रहण प्रसिद्धसाहचर्यार्थम् । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्व इति निपात्यते । तत्र ये लोके प्रसिद्धसाहचर्या वेदे च सहभावेन ये निर्दिष्टास्तेषामिह ग्रहण भवति । तेन ब्रह्मप्रजापती शिववैश्रवणाविस्येवमादौ न भवति । ॐउभयत्र वायो प्रतिषेधो वक्तव्य ॐ । अग्निवायू । वाय्वग्नी ॥

ईदग्ने सोमवरुणयो ॥ २७ ॥

सोम वरुण इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशो भवति । अग्नीषोमौ । अग्नीवरुणौ । अग्ने स्तुत्स्तोमसोमा इति षत्वम् ॥

इद् वृद्धौ ॥ २८ ॥

कृतवृद्धावुत्तरपदे देवताद्वन्द्वेऽग्नेरिकारादेशो भवति । आग्निवारुणीमनड्वाहीमालभेत । आग्निमारुत कर्म्म क्रियते । अग्नीवरुणौ देवतेऽस्य । अग्नामरुतौ देवते स्येति तद्धित । तत्र देवताद्वन्द्वे चेत्युभयपदवृद्धौ कृतायामानङमीत्व च बाधित्विकार क्रियते । वृद्धाविति किम् ? आग्नेन्द्र । नेन्द्रस्य परस्य-युत्तरपदवृद्धि प्रतिषिध्यते ॥ ॐइद्वृद्धौ विष्णो प्रतिषेधो वक्तव्य ॐ । आग्नावैष्णव चरु निर्वपेत् ॥

दिवो द्यावा ॥ २९ ॥

दिवित्येतस्य द्यावा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । द्यावाक्षामा । द्यावाभूमी ॥

दिवसश्च पृथिव्याम् ॥ ३० ॥

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो दिवसित्ययमादेशो भवति चकाराद् द्यावा च । दिवस्पृथिव्यौ । द्यावापृथिव्यौ(१) । अकारोच्चारण सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति । कथ द्यावा चिदस्मै पृथिवी नमेते इति । कर्त्तव्योऽत्र यत्न ॥

उषासोषस ॥ ३१ ॥

उषस उषासा इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । उषासासूर्यम् । उषासानक्ता ॥

---

१ द्यौश्च पृथिवी च द्यावापृथिव्यौ इत्यधिक पुस्तकान्तरे ।

केशीभार्य । दीर्घकेशीपाशा । श्लक्ष्णकेशीपाशा । दीर्घकेशीयते । श्लक्ष्णकेशीयते । स्वाङ्गादिति किम् ? पटुभार्य । ईत इति किम् ? अकेशभार्य । अमानिनीति किम् ? दीर्घकेशमानिनी ॥

जातेश्च ॥ ४१ ॥

जातेश्च स्त्रिया न पुंवद्भवति अमानिनि परत । कठीभार्य । बह्वृचीभार्य । कठीपाशा । बह्वृचीपाशा । कठीयते । बह्वृचीयते । अमानिनीत्येव । कठमानिनी । बह्वृचमानिनी ॥ अय प्रतिषेध औपसंख्यानिकस्य पुंवद्भावस्य नेष्यते ॥ हस्तिनीनां समूहो, हास्तिकम् ॥

पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥

कर्मधारये समासे जातीयदेशीय इत्येतयोश्च प्रत्यययोर्भाषितपुंस्कादनूङ् स्त्रिया पुंवद्भवति । प्रतिषेधार्थोऽयमारम्भ । न कोपधाया इत्युक्त तत्रापि भवति-पाचक वृन्दारिका । पाचकजातीया । पाचकदेशीया । सञ्ज्ञापूरण्योश्चेत्युक्त तत्रापि भवति-दत्तवृन्दारिका । दत्तजातीया । दत्तदेशीया । पूरण्या-पञ्चमवृन्दारिका । पञ्चमजातीया । पञ्चमदेशीया । वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इत्युक्त तत्रापि भवति-स्रौघ्नजातीया । स्रौघ्नदेशीया । स्वाङ्गाच्चेतोऽमानिनीत्युक्तम्-तत्रापि भवति-श्लक्ष्णमुखवृन्दारिका । श्लक्ष्णमुखजातीया । श्लक्ष्णमुखदेशीया । जातेश्चेत्युक्तं तत्रापि भवति-कठवृन्दारिका । कठजातीया । कठदेशीया । भाषितपुंस्कादित्येव, खट्वावृन्दारिका । अनूङित्येव, ब्रह्मबन्धूवृन्दारिका । ॐकुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्य ॐ । कुक्कुट्या अण्ड, कुक्कुटाण्डम् । मृग्या पद, मृगपदम् । मृग्या क्षीर, मृगक्षीरम् । काक्या शाव, काकशाव । न वाऽस्त्रीपूर्वपदस्य विवक्षितत्वात् । स्त्रीत्वेन विना पूर्वपदार्थोऽत्र जाति सामान्येन विवक्षित । पुंवद्भावाद् ह्रस्वत्व खिद्घादिषु भवति विप्रतिषेधेन । खित्-कालिमन्या । हरिणिमन्या । घादि-पट्वितरा । पट्वितमा । पटविरूपा । पटविकल्पा । क-पट्विका । मृद्विका । इहैड विड् दरद् पृथु उशिनित्येते जनपदशब्दा क्षत्रियवचना । तत्र तद्राजप्रत्ययस्य स्त्रियामतश्चेति लुकि कृते इडविडवृन्दारिकेति विगृह्य समास क्रियते । तत पुंवद्भावेन ऐडविडादय पुंशब्दा क्रियन्ते । एडविडवृन्दारिका । औशिजवृन्दारिका(१) ॥

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्व ॥ ४३ ॥

घ रूप कल्प चेलट् ब्रुव गोत्र मत हत इत्येतेषु भाषितपुंस्कात्परो यो ङीप्रत्यय स्तदन्तस्यानेकाचो ह्रस्वो भवति । घ,-ब्राह्मणितरा । ब्राह्मणितमा । रूप-ब्राह्मणिरूपा । ब्राह्मणिकल्पा । चेलट्-ब्राह्मणिचेली । ब्रुव-ब्राह्मणिब्रुवा । गोत्र-ब्राह्मणिगोत्रा । मत-ब्राह्मणिमता । हत-ब्राह्मणिहता । घरूपकल्पा प्रत्ययाश्चेलडादीन्युत्तरपदानि ।

१ दारदवृन्दारिका । पाचकवृन्दारिकेत्यधिकपुस्तकान्तरे ।

ध्रुव इति ब्रवीतीति ब्रुवः पचाद्यचि वच्यादेशो गुणश्च निपातनाच्च भवति । ङ्य इति किम्? दत्तातरा । गुप्तातरा । अनेकाच इति किम्? नद्याः शेपस्यान्यतरस्यामिति वक्ष्यति । भाषितपुंस्कादित्येव । आमलकीतरा । कुवलीतरा ॥

नद्याः शेषस्यान्यतरस्याम् ॥ ४४ ॥

नद्याः शेषस्य घादिषु परतो ह्रस्वो भवति अन्यतरस्याम् । कश्च शेषः? अङी च या नदी, ङ्यन्त च यदेकाच् । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । वीरबन्धुतरा । वीरबन्धूतरा । स्त्रितरा । स्त्रीतरा । स्त्रितमा । स्त्रीतमा । ॥कृन्नद्याः प्रतिषेधो वक्तव्य ॥ । लक्ष्मीतरा । तन्त्रीतरा ॥

उगितश्च ॥ ४५ ॥

उगितश्च परस्या नद्या घादिषु अन्यतरस्यां ह्रस्वो भवति । श्रेयसितरा । श्रेयसीतरा । श्रेयस्तरा । विदुषितरा । विदुषीतरा । विद्वत्तरा । पुंवद्भावोऽन्यत्र पक्षे वक्तव्यः । प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वाद्वा सिद्धम् ॥

आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥

समानाधिकरण उत्तरपदे जातीये च प्रत्यये परतो महत आकारादेशो भवति । महादेवः । महाब्राह्मणः । महाबाहु । महाबलः । जातीये-महाजातीयः । समानाधिकरणजातीययोरिति किम्? महत पुत्रो महत्पुत्र । लाक्षणिकत्वादेवात्र न भविष्यतीति चेद् बहुव्रीहावपि न स्याद् महाबाहुरिति । तदर्थं समानाधिकरणग्रहण कर्तव्यम् । अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा इत्यत्र गौणत्वान्महदर्थस्य न भवत्यात्वम् । ॥महदात्वे घासकरविशिष्टेषूपसंख्यान पुंवद्वचन चासमानाधिकरणार्थम्॥ । महत्या घासः । महाघासः । महत्याः करः, महाकरः । महत्या विशिष्टः, महाविशिष्ट । ॥अष्टन कपाले हविष्युपसंख्यानम्॥ । अष्टाकपाले चरु निर्वपेद् । हविषीति किम्? अष्टकपाल ब्राह्मणस्य । ॥गवि च युक्तेऽष्टन उपसंख्यान कर्तव्यम्॥ । अष्टागवेन शकटेन । युक्त इति किम्? अष्टगव ब्राह्मणस्य । तपरकरण विस्पष्टार्थम् ॥

द्व्यष्टन. संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥

द्वि अष्टन् इत्येतयोराकारादेशो भवति संख्यायामुत्तरपदे अबहुव्रीह्यशीत्यो । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । द्व्यष्टन इति किम्? पञ्चदश । संख्यायामिति किम्? द्वैमातुर. । आष्टमातुर. । अबहुव्रीह्यशीत्योरिति किम्? द्वित्राः । त्रिदशाः । द्व्यशीति. । ॥प्राक् शतादिति वक्तव्यम्॥ । इह मा भूत्-द्विशतम् । द्विसहस्रम् । अष्टशतम् । अष्टसहस्रम् ॥

त्रेस्त्रयः ॥ ४८ ॥

त्रि इत्येतस्य त्रयसित्ययमादेशो भवति संख्यायामबहुव्रीह्यशीत्योः । त्रयोदश ।

त्रयोविंशतिः । त्रयस्त्रिंशत् । सङ्ख्यायामित्येव, त्रैमातुरः । अबहुव्रीह्यशीत्योरित्येव । त्रिदशाः । त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥

चत्वारिंशत्प्रभृतौ सङ्ख्यायामुत्तरपदे अबहुव्रीह्यशीत्योः सर्वेषां द्व्यष्टन् त्रि इत्येतेषां यदुक्तं तद्विभाषा भवति । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । त्रिपञ्चाशत् । त्रयःपञ्चाशत् । अष्टपञ्चाशत् । अष्टापञ्चाशत्(१) । प्राक् शतादित्येव । द्विशतम् । अष्टशतम् । त्रिशतम्(२) ॥

हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥

हृदयस्य हृदित्ययमादेशो भवति लेख यत् अण् लास इत्येतेषु परतः । हृदयं लिखतीति, हृल्लेखः । यत्–हृदयस्य प्रियं, हृद्यम् । अण्–हृदयस्येदं, हार्दम् । लास–हृदयस्य लासो, हृल्लासः । लेख इत्यणन्तस्य ग्रहणमिष्यते । घञि तु हृदयस्य लेखो हृदयलेख एतदेव । लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य ॥

वा शोकष्यञ्रोगेषु ॥ ५१ ॥

शोक ष्यञ् रोग इत्येतेषु परतो हृदयस्य वा हृदित्ययमादेशो भवति । हृच्छोकः । हृदयशोकः । ष्यञ्–सौहार्द्यम् । सौहृदय्यम् । ब्राह्मणादित्वात् ष्यञ् । हृदादेशपक्षे, हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेति उभयपदवृद्धिः । रोग–हृद्रोगः । हृदयरोगः । हृदयशब्देन समानार्थो हृच्छब्दः प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधानं प्रपञ्चार्थम् ॥

पादस्य पदाज्यातिगोपहतेषु ॥ ५२ ॥

पादस्य पद इत्ययमादेशो भवति आजि आति ग उपहत इत्येतेषूत्तरपदेषु । पादाभ्यामजतीति, पदाजिः । पादाभ्यामततीति, पदातिः । अजयतिभ्यां पादे चेत्यौणादिक इण्प्रत्ययः । तत्राजेर्वीभावो न भवत्यत एव निपातनात् । पादाभ्यां गच्छतीति, पदगः । पादेनोपहतः, पदोपहतः । पादशब्दो वृषादित्वादाद्युदात्तस्तस्य स्थाने पदादेश उपदेश एवान्तोदात्तो निपात्यते, तेन पदोपहत इति तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वेनोदात्तं भवति । पदाजिः, पदातिः, पदग इत्येतेषु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम् ॥

पद्यत्यतदर्थे ॥ ५३ ॥

यप्रत्यये परतः पादस्य पदित्ययमादेशो भवत्यतदर्थे । पादौ विध्यन्ति, पद्याः शर्कराः । पद्याः कण्टकाः । अतदर्थ इति किम् ? पादार्थमुदकं पाद्यम् । *पद्भावे इके चरतावुपसङ्ख्यानम्* । पादाभ्यां चरति, पदिकः । पर्पादिभ्यः ष्ठन्निति पादशब्दात्

१ अष्टचत्वारिंशत् अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् त्रयश्चत्वारिंशत् । द्विपञ्चाशत् । द्वापञ्चाशत्' । इत्यधिकः क्वचित् पाठः । २ सर्वेषां ग्रहणं बह्वादामपि यथा स्यादित्यधिकमन्यस्मिन् पुस्तके ।

छन् प्रत्ययः। शरीरावयववचनस्य पादशब्दस्य ग्रहणमिह इष्यते। तेन पणपादमाषशताद्यद् इत्यत्र पदादेशो न भवति द्विपाद्यम्। त्रिपाद्यम् ॥

हिमकाषिहतिषु च ॥ ५४ ॥

हिम काषिन् हति इत्येतेषु पादशब्दस्य पदित्ययमादेशो भवति। हिम-पद्धिमम्। काषिन्-अथ पत्काषिणो यान्ति। हति-पद्धति ॥

ऋचः शे ॥ ५५ ॥

१] ऋक्सम्बन्धिन पादशब्दस्य शे परतः पदित्ययमादेशो भवति। पच्छो गायत्रीं शंसति। पादं पादं शंसतीति संख्यैकवचनाच्च वीप्सायामिति शस्प्रत्ययः। ऋच इति किम्? पादशः कार्षापणं ददातीति ॥

वा घोषमिश्रशब्देषु ॥ ५६ ॥

घोष मिश्र शब्द इत्येतेषु चोत्तरपदेषु पादस्य वा पदित्ययमादेशो भवति। पद्घोषः। पादघोषः। पन्मिश्रः। पादमिश्रः। पच्छब्दः। पादशब्दः। ॐनिष्के चेति वक्तव्यम्ॐ। पन्निष्कः। पादनिष्कः ॥

उदकस्योदः संज्ञायाम् ॥ ५७ ॥

उदकशब्दस्य संज्ञाया विषये उद इत्ययमादेशो भवति, उत्तरपदे परतः। उदमेघो नाम, यस्य औदमेघिः पुत्रः। उदवाहो नाम, यस्य औदवाहिः पुत्रः। संज्ञायामिति किम्? उदकगिरिः। ॐसंज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम्ॐ। लोहितोदः। नीलोदः। क्षीरोदः ॥

पेषंवासवाहनधिषु च ॥ ५८ ॥

पेष वास वाहन धि इत्येतेषु चोत्तरपदेषु उदकस्य उद इत्ययमादेशो भवति। उदपेषं पिनष्टि। स्नेहने पिष इति णमुल्। वास-उदकस्य वासः, उदवासः। वाहन-उदकस्य वाहनं, उदवाहनं। धि उदकं धीयतेऽस्मिन्निति उदधिः ॥

एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५९ ॥

उदकस्योद इति वर्त्तते। एकोऽसहायस्तुल्यजातीयेनानन्तरेण हलादिना, हल् आदिर्यस्योत्तरपदस्य तदेकहलादि तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्यामुदकस्य उद इत्ययमादेशो भवति। उदकुम्भः। उदककुम्भः। उदपात्रम्। उदकपात्रम्। एकहलादाविति किम्? उदकस्थालम्। पूरयितव्य इति किम्? उदकपर्वतः ॥

मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥ ६० ॥

मन्थ ओदन सक्तु बिन्दु वज्र भार हार वीवध गाह इत्येतेषूत्तरपदेषूदकस्य उद इत्ययमादेशो भवति, अन्यतरस्याम्। उदकेन मन्थः, उदमन्थः। उदकमन्थः। ओदन-उदकेनौदनः, उदौदनः। उदकौदनः। सक्तु-उदकेन सक्तुः, उदसक्तुः। उदकसक्तुः। बिन्दु-उदकस्य बिन्दुः, उदबिन्दुः। उदकबिन्दुः। वज्र-उदकस्य वज्रः, उदवज्रः।

ननु शब्दान्तरादिति विकरणोऽनित्यः। विकरणे कृते संप्रसारणमडागमानित्यत्वादेव भवति, संप्रसारणे च कृतेऽजाद्यङ्गजातमिति आडजादीनामित्याडागमः ॥

छन्दस्यपि दृश्यते ॥ ७३ ॥

छन्दसि विषये आडागमो दृश्यते, यत्र हि विहितस्ततोऽन्यत्रापि दृश्यते। आडजादीनामित्युक्तमनजादीनामपि दृश्यते–सुरुचो वेन आवः। आनक्। आयुनक्। आव इति वृञो लुङि, मन्त्रे घसह्वरेति च्लेर्लुकि कृते च भवति। तथा आनगिति नशे। आयुनगिति युजेर्लङि।

न माङ्योगे ॥ ७४ ॥

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति। मा भवान् कार्षीत्। मा भवान् हार्षीत्। मा स्म करोत्। मा स्म हरत्। मा भवानीहिष्ट। मा स्म भवानीहत। मा स्म भवानीक्षत ॥

बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७५ ॥

छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः, अमाङ्योगेऽपि न भवतः। अमाङ्योगे तावत्–जनिष्ठा उग्रः। काममूनयीत्। काममर्दयीत्। माङ्योगेऽपि भवतः–मा वः क्षेत्रे परबीजान्यवाप्सुः। मा अभित्थाः। मा आवः ॥

इरयो रे ॥ ७६ ॥

इरे इत्येतस्य छन्दसि विषये बहुलं रे इत्ययमादेशो भवति। गर्भं प्रथमं दध्रे आपः। धाऽस्य परिदध्रे। धाञो रेभावस्यासिद्धत्वादातो लोपो भवति। न च भवति–परमाया धियोऽग्निकर्माणि चक्रिरे। अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते। तदर्थमिरयोरित्यत्र द्विवचननिर्देशः ॥

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥

श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य भ्रू इत्येतस्य च इयङ् उवङ् इत्येतावादेशौ भवतोऽचि परतः। आप्नुवन्ति। राध्नुवन्ति। शक्नुवन्ति। धातोः चिक्षियतुः। चिक्षियुः। लुलुवतुः। लुलुवुः। नियौ। नियः। लुवौ। लुवः। भ्रुवौ। भ्रुवः। अचीति किम्? आप्नुयात्। शक्नुयात्। राध्नुयात्। श्नुधातुभ्रुवामिति किम्? लक्ष्म्यै। वध्वै। य्वोरिति किम्? चक्रतुः। चक्रुः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। चयनम्। चायकः। लवनम्। लावकः ॥ ॐइयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्त्तव्यम्ॐ। तन्वं पुषेम। तनुवं पुषेम। विष्वं पुषेम। विषुवं पुषेम। स्वर्गो लोकः। सुवर्गो लोकः। त्र्यम्बकं यजामहे। त्रियम्बकं यजामहे ॥

अभ्यासस्यासवर्णे ॥ ७८ ॥

अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ् उवङ् इत्येतावादेशौ भवतः। इयेष। उवोष। इयर्त्ति। असवर्ण इति किम्? ईषतुः। ईषुः। ऊषतुः। ऊषुः। अचीत्येव। इयाय। उवाप ॥

स्त्रियाः ॥ ७९ ॥

स्त्री इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति । स्त्री । स्त्रियौ । स्त्रियः । स्त्रीणामित्यत्र परत्वान्नुडागमः । पृथग्योगकरणमुत्तरार्थम् ॥

वाऽम्शसोः ॥ ८० ॥

अमि शसि परतः स्त्रियां वा इयङादेशो भवति । स्त्रीं पश्य । स्त्रियं पश्य । स्त्रीः पश्य । स्त्रियः पश्य ॥

इणो यण् ॥ ८१ ॥

इणोऽङ्गस्य यणादेशो भवति अचि परतः । यन्ति । यन्तु । आयन् । इयङादेशापवादोऽयम् । मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इति गुणवृद्धिभ्यां परत्वादयं बाध्यते—अयनम् । आयकः ॥

एरनेकाचोऽसंयोगपूर्वस्य ॥ ८२ ॥

धातोरिति वर्त्तते तेन संयोगो विशेष्यते । धातोरवयवः संयोगः पूर्वो यस्मादिवर्णाद् भवति असावसंयोगपूर्वस्तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति । निन्यतुः । निन्युः । उन्न्यौ । उन्न्यः । ग्रामण्यौ । ग्रामण्यः । एरिति किम् ? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद् अङ्गविशेषणं मा भूदिति । लुलुवतुः, लुलुवुः, इत्यंतरक्षोः सुपीति नियमादपि सिध्यति । अनेकाच इति किम् ? नियौ । नियः । असंयोगपूर्वस्येति किम् ? यवक्रियौ । यवक्रियः । धातुना संयोगविशेषणं किम् ? इहापि यथा स्याद्—उन्न्यौ । उन्न्य इति । गतिकारकाभ्यामन्यपूर्वस्य नेष्यते—परमनियौ । परमनिय इति ॥

ओः सुपि ॥ ८३ ॥

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णाद् भवति तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति । खलप्वौ । खलप्वः । शतस्वौ । शतस्वः । सकृल्ल्वौ । सकृल्ल्वः । सुपीति किम् ? लुलुवतुः । लुलुवुः । अनेकाच इत्येव । लुवौ । लुवः । असंयोगपूर्वस्येत्येव । कटप्रुवौ । कटप्रुवः । गतिकारकाभ्यामन्यपूर्वस्य नेष्यते इत्येव । परमलुवौ । परमलुवः ॥

वर्षाभ्वश्च ॥ ८४ ॥

वर्षाभू इत्येतस्याजादौ सुपि परतो यणादेशो भवति । वर्षाभ्वौ । वर्षाभ्वः । *पुनर्भ्वश्चेति वक्तव्यम्* । पुनर्भ्वौ । पुनर्भ्वः । कारापूर्वस्यापीष्यते—काराभ्वौ । काराभ्वः ॥

न भूसुधियोः ॥ ८५ ॥

भू सुधी इत्येतयोर्यणादेशो न भवति । प्रतिभुवौ । प्रतिभुवः । सुधियौ । सुधियः ॥

छन्दस्युभयथा ॥ ८६ ॥

छन्दसि विषये भू सुधी इत्येतयोरुभयथा दृश्यते । वनेषु चित्रं विभ्वं विशेविशे विभुवम् । सुध्यो हव्यमग्ने । सुधियो हव्यमग्ने ॥

हुश्नुवोः सार्वधातुके ॥ ८७ ॥

हु इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽसयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति । जुह्वति । जुह्वतु । जुह्वत् । सुन्वन्ति । सुन्वन्तु । असुन्वन् । हुश्नुवोरिति किम् ? योयुवति । रोरुवति । इदमेव हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति । छन्दसि छन्दस्युभयथेत्यार्द्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । न च यङ्लुगन्तादन्यत् प्रत्युदाहरणमुवर्णान्तमनेकाजसयोगपूर्वं सार्वधातुके विद्यते । सार्वधातुक इति किम् ? जुहुवतुः । जुहुवुः । असयोगपूर्वस्येत्येव । आप्नुवन्ति । राध्नुवन्ति ॥

भुवो वुग्लुङ्लिटोः ॥ ८८ ॥

भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः । अभूवन् । अभूवम् । लिट्— बभूव । बभूवतुः । बभूवुः ॥

ऊदुपधाया गोहः ॥ ८९ ॥

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति, अजादौ प्रत्यये परतः । निगूहति । निगूहक । साधु निगूही । निगूहम् । निगूहन्ति । गूहो वर्त्तते । उपधाया इति किम् ? अन्त्यस्य मा भूत् । गोह इति विकृतग्रहणं विषयार्थम्(१) । यत्रास्यैतद्रूपं तत्रैव यथा स्यादिह मा भूत्—निजुगुहतुः । निजुगुहुः । अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति । निगूह्य गत इत्यूरवस्यासिद्धत्वमत्र नास्ति । णावूत्वं, ण्यन्तस्य च ल्यप्ययादेश इति । अचीत्येव । निगोढा । निगोढुम् ॥

दोषो णौ ॥ ९० ॥

दोष उपधाया ऊकार आदेशो भवति णौ परतः । दूषयति । दूषयतः । दूषयन्ति । विकृतग्रहणं प्रक्रमाभेदार्थम् । पूर्वत्र हि गोह इत्युक्तम्(२) । णाविति किम् ? दोषो वर्त्तते ॥

वा चित्तविरागे ॥ ९१ ॥

चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः । चित्त दूषयति । चित्त दोषयति । प्रज्ञां दूषयति । प्रज्ञा दोषयति ॥

मितां ह्रस्वः ॥ ९२ ॥

मितो धातवो घटादयो मित इत्येवमादयो ये प्रतिपादितास्तेषामुपधाया ह्रस्वो भवति णौ परतः । घटयति । व्यथयति । जनयति । रजयति । शमयति । ज्ञपयति । केचिदत्र वेत्यनुवर्त्तयन्ति । सा च व्यवस्थितविभाषा । तेन उत्क्रामयति, सङ्क्रामयतीत्येवमादि सिद्धं भवति ॥

(१) विषयनियमार्थमिति क्वचित्पाठः । (२) णावीदृशस्यैव सम्भवादित्यधिकमेकस्मिन्पुस्तके ।

चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥

चिण्परे णमुल्परे च णौ परतो मितामङ्गानामुपधाया दीर्घो भवति अन्यतरस्याम्। अशमि। अशामि। अतमि। अतामि। शमंशमम्। शामंशामम्। तमंतमम्। तामंतामम्। दीर्घग्रहणं किं, न ह्रस्वविकल्प एव विधीयते? नैवं शक्यं, शमयन्तं प्रयुक्तवान् इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात्, णिलोपस्य स्थानिवद्भावात्, दीर्घविधौ त्वजादेशो न स्थानिवत्। शमयन्तं प्रयुक्तवान्—अशमि। अशामि। शमंशमम्। शामंशामम्। शशमयते, अशशमि। अशशामि। शशमम्। शशामम्। योऽसौ णौ णिर्लुप्यते यश्च यङकारश्च तयोर्दीर्घविधौ आदेशो न स्थानिवद्भवतीति अस्थानिवद्भावाद्दीर्घं सिद्धो भवति, ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात्। णिण्यन्ते यङ्ण्यन्ते स्वसिद्धिरेव। व्याश्रयत्वादसिद्धत्वमपि नास्ति। णौ हि णियङोर्लोपः चिण्णमुल्परे णावङ्गस्य दीर्घत्वम् ॥

खचि ह्रस्वः ॥ ९४ ॥

खच्परे णौ परतो ह्रस्वो भवत्यङ्गस्योपधायाः। द्विषंतपः। परंतपः। पुरंदरः ॥

ह्लादो निष्ठायाम् ॥ ९५ ॥

ह्लादेरङ्गस्योपधाया ह्रस्वो भवति निष्ठायां परतः। प्रह्लन्नः। प्रह्लन्नवान्। निष्ठायामिति किम्? प्रह्लादयति। ह्लाद इति योगविभागः क्रियते। क्तिन्यपि यथा स्यात्-प्रह्लत्तिरिति(१) ॥

छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥

छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये परत उपधाया ह्रस्वो भवति। उरश्छदः। प्रच्छदः। दन्तच्छदः। णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र न भवतीति ह्रस्वभाविन्युपधा भवति। अद्व्युपसर्गस्येति किम्? समुपच्छादः ? *अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्*। समुपातिच्छादः। उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्तयति। न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते ॥

इस्मन्त्रन्क्विषु च ॥ ९७ ॥

इस् मन् त्रन् क्वि इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति। छदिः। छद्म। छत्त्रम्। धामच्छत्। उपच्छत् ॥

गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥

गम हन जन खन घस इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङिति अनङि परतः। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। जज्ञे। जज्ञाते। जज्ञिरे। चख्नतुः। चख्नुः। जक्षतुः। जक्षुः। अक्षन्नमीमदन्त पितरः। क्ङितीति किम्? गमनम्। हननम्। अनङीति किम्? अगमत्। अघसत्। वचीत्येव। गम्यते। हन्यते ॥

(१) ह्लाद इति योगविभाग इत्यारभ्य प्रह्लत्तिरित्यन्तः पाठो बहुषु पुस्तकेषु नास्ति।

तनिपत्योश्छन्दसि ॥ ९९ ॥

तनि पति इत्येतयोश्छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः। वितत्निरे कवयः। शकुना इव पप्तिम। छन्दसीति किम्? वितेनिरे। पेतिम॥

घसिभसोर्हलि च ॥ १०० ॥

घसि भस इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः। सग्धिश्च मे सपीतिश्च मे। बब्धां ते हरी धानाः। सग्धिरित्यदेः क्तिनि, बहुलं छन्दसीति घस्लादेशे उपधाया लोपे च कृते, झलो झलीति सकारलोपः। धत्वं, तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः सग्धिरिति समासे कृते समानस्य सभावः। बब्धामिति भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधालोपसलोपधत्वजश्त्वानि कर्त्तव्यानि। द्विर्वचनात्परत्वान्नित्यत्वाच उपधालोपः प्राप्नोति छान्दसत्वात् स तथा न क्रियते। अजादौ—बप्सति। क्ङितीत्येव। अंशून् बभस्ति॥

हुझल्भ्यो हेर्धिः ॥ १०१ ॥

हु इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति। जुहुधि। झलन्तेभ्यः—भिन्द्धि। छिन्द्धि। हुझल्भ्य इति किम्? क्रीणीहि। प्रीणीहि। हेरिति किम्? जुहुताम्। हलीत्येव। रुदिहि। स्वपिहि। इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते सकृद्गतौ विप्रतिषेधे यद्बाधितत्तद्बाधितमेवेति पुनर्धिभावो न भवति। भिन्द्धि छिन्द्धीत्यत्र परत्वाद् धिभावे कृते पुनःप्रसङ्गविज्ञानादकच् क्रियते॥

श्रुशृणुपृकृवृभ्यश्छन्दसि ॥ १०२ ॥

श्रु शृणु पृ कृ वृ इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये। श्रुधी हवमिन्द्र। शृणुधी गिरः। पूर्धि। उरुणस्कृधि। अपावृधि। शृणुधीत्यत्र धिभावविधानसामर्थ्यादुतश्च प्रत्ययादिति हेर्लुक्न भवति। अन्येषामपि दृश्यत इति दीर्घत्वम्। अतोऽन्यत्र व्यत्ययो बहुलमिति शप्, तस्य बहुलं छन्दसीति लुक्॥

अङितश्च ॥ १०३ ॥

अङितश्च हेर्धिरादेशो भवति। वा छन्दसीति पित्त्वेनास्याङित्त्वम्। सोम रारन्धि। अस्मभ्यं तद्धर्यश्व प्रयन्धि। युयोध्यस्मज्जुहुराणमेनः। अङित इति किम्? इन्द्र प्रीणीहि। रारन्धीति रमेर्व्यत्ययेन परस्मैपदम्। शपः श्लुरभ्यासदीर्घत्वं छान्दसत्वात्। मलोपाभावश्च अङित्वादेव। प्रयन्धीति यमेः शपो लुक्। युयोधीति यौतेः शपः श्लुः॥

चिणो लुक् ॥ १०४ ॥

चिण उत्तरस्य प्रत्ययस्य लुग्भवति। अकारि। अहारि। अलावि। अपाचि। अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति, चिणो लुगित्येतद्विषयभेदाद्भिद्यते॥

अतो हेः ॥ १०५ ॥

अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति । पच । पठ । गच्छ । धाव । अत इति किम्? युहि । रुहि । तपरकरणं किम् ? लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वादाकार एव भवति ॥

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । चिनु । सुनु । कुरु । उत इति किम् ? लुनीहि । पुनीहि । प्रत्ययादिति किम् ? रुहि । युहि । असंयोगपूर्वादिति किम् ? प्राप्नुहि । राघ्नुहि । तक्ष्णुहि । *उतश्च प्रत्ययाच्छन्दो वा वचनम्* । उतश्च प्रत्ययादित्यत्र छन्दसि चेति वक्तव्यम् । आतनुहि यातुधानान् । धिनुहि यज्ञपतिम् । तेन मा भागिन कृणुहि ॥

लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥

योऽयमुकारोऽसंयोगपूर्वस्तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो भवति वकारमकारादौ प्रत्यये परतः । सुन्वः । सुनुवः । सुन्मः । सुनुमः । तन्वः । तनुवः । तन्मः । तनुमः । प्रत्ययस्येत्येव । युवः । युमः । असंयोगपूर्वस्येत्येव । शक्नुवः । शक्नुमः । लुगिति वर्त्तमाने लोपग्रहणमन्त्यलोपार्थम् ॥

नित्यं करोतेः ॥ १०८ ॥

करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति । कुर्वः । कुर्मः । उकारलोपस्य दीर्घविधावस्थानिवद्भावाद् हलि चेति दीर्घत्वं प्राप्तं न भकुर्छुरामिति प्रतिषिध्यते ॥

ये च ॥ १०९ ॥

यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति । कुर्यात् । कुर्याताम् । कुर्युः ॥

अत उत्सार्वधातुके ॥ ११० ॥

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति सार्वधातुके क्ङिति परतः । कुरुतः । कुर्वन्ति । सार्वधातुकग्रहणं किम् ? भूतपूर्वेऽपि सार्वधातुके यथा स्यात् । कुरु । तपरकरणं रघूपधस्य गुणनिवृत्त्यर्थम् । क्ङितीत्येव । करोति । करोषि । करोमि ॥

श्नसोरल्लोपः ॥ १११ ॥

श्न स्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । रुन्धः । रुन्धन्ति । भिन्तः । भिन्दन्ति । अस्तेः—स्तः । सन्ति । क्ङितीत्येव । भिनत्ति । अस्ति । श्नसोरिति पररूप शकन्ध्वादिषु द्रष्टव्यम् ॥

### श्नाभ्यस्तयोरातः ॥ ११२ ॥

श्ना इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके ङिति परतः । लुनते । लुनताम् । अलुनत(१) । अभ्यस्तानाम्–मिमते । मिमताम् । अमिमत । संजिहते । संजिहताम् । समजिहत । श्नाभ्यस्तयोरिति किम् ? यान्ति । वान्ति । आत इति किम् ? बिभ्रति । ङितीत्येव । अलुनात् । अजहात् ॥

### ई हल्यघोः ॥ ११३ ॥

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः । लुनीतः । पुनीतः । लुनीथ । पुनीथः । लुनीते । पुनीते । अभ्यस्तानाम्—मिमीते । मिमीषे । मिमीध्वे । संजिहीते । संजिहीध्वे । हलीति किम् ? लुनन्ति । मिमते । अघोरिति किम् ? दत्तः । धत्त. । क्ङितीत्येव । लुनाति । जहाति ॥

### इद्दरिद्रस्य ॥ ११४ ॥

दरिद्रातेर्हलादौ सार्वधातुके ङिति परत इकारादेशो भवति । दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः । हलीत्येव । दरिद्रति । क्ङितीत्येव । दरिद्राति । ॐदरिद्रातेरार्धधातुके लोपो वक्तव्य ॐ । ॐसिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम्ॐ । दरिद्रातीति दरिद्र. । आकारान्तलक्षणो प्रत्ययो न भवति, पचादित्वादजेव भवति । न दरिद्रायके लोपो दरिद्राणे च नेष्यते । दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥ ॐअद्यतन्यां वेति वक्तव्यम्ॐ(२) । अदरिद्रीत् । अदरिद्रासीत् । दरिद्रस्येति निर्देशो छान्दस ह्रस्वश्च द्रष्टव्यम् ॥

### भियोऽन्यतरस्याम् ॥ ११५ ॥

भी इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परत. । बिभितः । बिभीतः । बिभियः । बिभीथः । बिभिव । बिभीव । बिभिम । बिभीमः । हलीत्येव । बिभ्यति । क्ङितीत्येव । बिभेति । सार्वधातुके इत्येव । भीयते(३) ॥

### जहातेश्च ॥ ११६ ॥

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परत. । जहित. । जहीतः । जहियः । जहीथ. । हलादावित्येव । जहति । क्ङितीत्येव । जहाति । सार्वधातुक इत्येव हीयते(४) जेहीयते । पृथग्योगकरणमुत्तरार्थम् ॥

---

( १ ) पुनते पुनताम्, अपुनत, इ यधिक पुस्तकान्तरे । ( २ ) लुङ इत्येषा पूर्वाचार्यसंज्ञा । ( ३ ) हलीत्येवेत्यारभ्य भीयत इत्यन्त बहुषु पुस्तकेषु नास्ति, युक्त चैतत् । पदमञ्जर्यां हलादौ क्ङिति सार्वधातुक इत्येषां नास्त्योपयोग इत्युक्तत्वात् ॥ ( ४ ) सार्वधातुके इत्येव. हीयते. जेहीयते. इति पुस्तकेषु बहुषु नास्ति । पदमञ्जर्यां नास्त्योपयोग इत्युक्तत्वेदमेवयुक्तम् ।

आ च हौ ॥ ११७ ॥

जहातेराकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः। जहाहि। जहिहि। जहीहि ॥

लोपो यि ॥ ११८ ॥

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः। जह्यात्। जह्यास्ताम्। जह्युः ॥

घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यासलोपश्च। देहि। धेहि। अस्ते.—श्नसोरल्लोप इत्यकारलोपः। एधि। शिदयं लोपस्तेन सर्वस्याभ्यासस्य भवति ॥

अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥

लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति अभ्यासलोपश्च लिटि क्ङिति परतः। रेणतुः। रेणुः। येमतुः। येमुः। पेचतुः। पेचुः। देभतुः। देभुः। अत इति किम्? दिदिवतुः। दिदिवुः। तपरकरणं किम्? ररासे। ररासाते। ररासिरे। एकहल्मध्य इति किम्? ररक्षतुः। ररक्षुः(१)। तत्सरतुः। तत्सरुः। अनादेशादेरिति किम्? चकणतुः। चकणुः। जगणतुः। जगणुः। बभणतुः। बभणुः। लिटि आदेशविशेषणं किम्? इहापि यथा स्यात्—नेमतुः। नेमुः। सेहे। सेहाते। सेहिरे। अनैमित्तिके णत्वसत्वे तदादिर्लिड्यादेशादिर्न भवति। इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति। तेन तदादिरप्यादेशादिर्भवति। तथा च फलिभजोरेत्वं विधीयते। रूपाभेदे त्वादेशादिर्नाभीप्सित इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्। अन्यथा हि पेचतुः पेचुः, देभतुः देभुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात्। क्ङितीत्येव। अहं पपच। अहं पपठ॥ ❀दम्भेरेत्वं वक्तव्यम्❀। देभतुः। देभुः। नलोपस्यासिद्धत्वान्न प्राप्नोति। ❀नशिमन्योरलिट्येत्वं वक्तव्यम्❀। अनेशम्। मेनका। अनेशमिति नशेर्लुङि पुषादित्वादङ्। मेनकेति मनेराशिषि चेति वुन्। क्षिपकादिषु प्रक्षेपादित्वं न क्रियते॥ ❀छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम्❀। व्येमानम्। अमेर्विपूर्वस्य चानशि मुक् न क्रियते। लिटि पेचिरन्। पेचिरन्नित्येतस्य छान्दसं ह्रस्वत्वम्॥ ❀यजिवप्योश्च❀। आयेजे। ओवेपे। यजेर्वपेश्च लङि इटि छन्दस्यपि दृश्यते इत्यनजादेरप्याडागमः॥

थलि च सेटि ॥ १२१ ॥

थलि च सेटि परतोऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकार आदेशो भवति अभ्यासलोपश्च। पेचिथ। शेकिथ। सेटीति किम्? पपक्थ। थल्ग्रहणं विस्प-

---

(१) इदमयुक्तं संयोगात्परत्वेन लिटः कित्त्वाभावात्।

ष्ठार्थम् । अङ्गिदर्थमेतद्वचनमित्यन्यस्येटोऽसम्भवात् । अत इत्येव । दिदेविथ । एक-हल्मध्यगतस्येत्येव । ततक्षिथ । ररक्षिथ । अनादेशादेरित्येव । चकणिथ । वमणिथ ॥

## तृफलभजत्रपश्च ॥ १२२ ॥

तृ फल भज त्रप इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । तेरतुः । तेरुः । तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे । त्रेपाते । त्रेपिरे । तरतेर्गुणार्थं वचनम् । फलिभजो-रादेशार्थम् । त्रपेरनेकहल्मध्यार्थम् ॥ श्रन्थेश्चेति वक्तव्यम् ॥ श्रेथतुः । श्रेथुः ॥

## राधो हिंसायाम् ॥ १२३ ॥

राधो हिंसायामर्थेऽवर्णस्य एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । अपरेधतुः । अपरेधुः । अपरेधिथ । हिंसायामिति किम् ? रराधतुः । रराधुः । रराधिथ । अत इत्येतदिहोपस्थितं तपरत्वकृतमपास्य काकाक्षिगोलकन्यायेन सम्भवादवर्णमात्रं प्रतिपादयति । अथ वा रनाभ्यस्तयोरात इत्यनुवर्तत इति व्याख्येयम् । एकहल्मध्ये वा यः स स्थानी भविष्यति ॥

## वा जृभ्रमुत्रसाम् ॥ १२४ ॥

जृ भ्रमु त्रस इत्येतेषामङ्गानामतः स्थाने वा एकारादेशो भवति अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रेमतुः । भ्रेमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । त्रेसतुः । त्रेसुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ ॥

## फणां च सप्तानाम् ॥ १२५ ॥

फणादीनां सप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । भ्रेशे । भ्रेशाते । भ्रेशिरे । बभ्राशे । बभ्राशाते । बभ्राशिरे । भ्लेशे । भ्लेशाते । भ्लेशिरे । बभ्लाशे । बभ्लाशाते । बभ्लाशिरे । स्येमतुः । स्येमुः । स्येमिथ । सस्यमतुः । सस्यमुः । सस्यमिथ । स्वेनतुः । स्वेनुः । स्वेनिथ । सस्वनतुः । सस्वनुः । सस्वनिथ । सप्तानामिति किम् ? दध्वनतुः । दध्वनुः । दध्वनिथ ॥

## न शसददवादिगुणानाम् ॥ १२६ ॥

शस दद इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च । विशशसतुः । विशशसुः । विशशसिथ । ददे । ददाते । ददिरे । वादीनाम्—ववमतुः । ववमुः । ववमिथ । गुणस्य—विशशरतुः । विशशरुः । विशशरिथ । लुलविथ । पुपविथ । गुणशब्देनेहाभिनिर्वृत्तस्याकारस्य चायमकार इति एव प्रतिषिध्यते ॥

अर्वणस्त्रसावनञः ॥ १२७ ॥

अर्वन्नित्येतस्याङ्गस्य तृ इत्ययमादेशो भवति, सुश्चेत्ततः परो न भवति, स च नञ उत्तरो न भवति। अर्वन्तौ। अर्वन्तः। अर्वन्तम्। अर्वन्तौ। अर्वतः। अर्वता। अर्वद्भ्याम्। अर्वद्भिः। अर्वती। आर्वतम्। असाविति किम्? अर्वा। अनञ इति किम्? अनर्वाणौ। अनर्वाणः। अनर्वाण वृषभं मन्द्रजिह्वम्॥

मघवा बहुलम् ॥ १२८ ॥

मघवन्नित्येतस्याङ्गस्य बहुलं तृ इत्ययमादेशो भवति। मघवान्। मघवन्तौ। मघवन्तः। मघवन्तम्। मघवन्तौ। मघवतः। मघवता। मघवती। माघवतम्। न च भवति-मघवा। मघवानौ। मघवान। मघवानम्। मघवानौ। मघोनः। मघोना। मघवभ्याम्। मघवभिः। मघोनी। माघवनम्॥

भस्य ॥ १२९ ॥

भस्येत्ययमधिकार आ अध्यायपरिसमाप्तेः, यदित ऊर्ध्वमनुक्रमिष्यामो भस्येत्येवं तद्वेदितव्यम्। वक्ष्यति, पादः पत्। द्विपदः पश्य। द्विपदा कृतम्। भस्येति किम्? द्विपादौ। द्विपादः॥

पादः पत् ॥ १३० ॥

पादिति पादशब्दो लुप्ताकारो गृह्यते। तदन्तस्याङ्गस्य भस्य पदित्ययमादेशो भवति। स च निर्दिश्यमानस्यादेशा भवन्तीति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य। द्विपदः पश्य। द्विपदा। द्विपदे। द्विपदिकां ददाति। त्रिपदिकां ददाति। वैयाघ्रपद्यः॥

वसोः संप्रसारणम् ॥ १३१ ॥

वस्वन्तस्य भस्य सम्प्रसारणं भवति। विदुषः पश्य। विदुषा। विदुषे। पेचुषः पश्य। पेचुषा। पेचुषे। पपुषः पश्य। आतो लोपे कर्त्तव्ये वसुसम्प्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति। वसुसम्प्रसारणे क्वसोरपि ग्रहणमिष्यते॥

वाह ऊठ् ॥ १३२ ॥

वाह इत्येवमन्तस्य भस्य ऊठ् इत्येतत्सम्प्रसारणं भवति। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। दित्यौहः। दित्यौहा। दित्यौहे। एत्येधत्यूठ्सु इति वृद्धिः। अथ किमर्थमूठ् क्रियते, सम्प्रसारण एव कृते गुणे च वृद्धिरेचीति वृद्धौ सत्यां सिद्धं रूपं भवति-प्रष्ठौह इति, अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते? ज्ञापकार्थम्। एतज् ज्ञापयति-भवत्येषा परिभाषा असिद्धं बहिरङ्गमन्तरङ्गे इति। तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वात् अन्तरङ्गो गुणो न स्यात्॥

श्वयुवमघोनामतद्धिते ॥ १३३ ॥

श्वन् युवन् मघवन् इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः सम्प्रसारणं भवति।

शुन । शुना । शुने । यून । यूना । यूने । मघोन । मघोना । मघोने । अतद्धित इति किम् ? शौवन मांसम् । यौवन वर्त्तते । माघवन स्थालीपाकं । शुनो विकारे प्रागिरजतादिभ्योऽञ्, द्वारादित्वादैजागम ॥ श्वादीनामेतत्सम्प्रसारण नकारान्तानां मिष्यते ॥ इह न भवति–युवती पश्य । मघवत । मघवता । मघवते । तदर्थमुत्तरत्र योगविभाग कुर्वन्ति–अल्लोप । अन । अन इत्युभयो शेष इति ॥

अल्लोपोऽनः ॥ १३४ ॥

अनित्येवमन्तस्य भस्य अकारलोपो भवति । राज्ञ पश्य । राज्ञा । राज्ञे । तक्ष्ण पश्य । तक्ष्णा । तक्ष्णे । अनो नकारान्तस्यैव लोप इष्यते । इह न भवति–राजकीयमिति ॥

षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥

षकारपूर्वो योऽन् हनो धृतराज्ञश्च, तस्याकारलोपो भवति अणि परत । औक्ष्ण । ताक्ष्ण । भ्रौणघ्न(१) । धार्तराज्ञ । षपूर्वहन्धृतराज्ञामिति किम् ? सामन । यामन । अणीति प्रकृतिभावेनाल्लोपस्यल्लोपाभावेऽपि न भवत । अणीति किम् ? ताक्ष्ण्य ॥

विभाषाङिश्योः ॥ १३६ ॥

ङौ परत शीशब्दे च अनो विभाषा अकारलोपो भवति । राज्ञि । राजनि । साम्नि । सामनि । साम्नी । सामनी ॥

न संयोगाद्वमन्तात् ॥ १३७ ॥

वकारमकारान्तात् संयोगादुत्तरस्यानोऽकारस्य लोपो न भवति । पर्वणा । पर्वणे। अथर्वणा । अथर्वणे(२) । संयोगादिति किम् ? प्रतिदीव्ना । प्रतिदीव्ने । साम्ना । साम्ने । वमन्तादिति किम् ? तक्ष्णा । तक्ष्णे ॥

अचः ॥ १३८ ॥

अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यते, तदन्तस्य भस्य अकारस्य लोपो भवति। दधीच पश्य । दधीचा । दधीचे । मधूच पश्य । मधूचा । मधूचे ॥

उद ईत् ॥ १३९ ॥

उद उत्तरस्याच ईकारादेशो भवति । उदीच । उदीचा । उदीचे ॥

आतो धातोः ॥ १४० ॥

आकारान्तस्य धातोर्भस्य लोपो भवति । कीलालप पश्य । कीलालपा । कीलालपे । शुभंय पश्य । शुभया । शुभये । आत इति किम् ? निया । निये । धातोरिति किम् ? खट्वा पश्य । माला पश्य । आत इति योगविभाग । तेन क्त्वो ल्यप, हल श्न शानजिति सिद्ध भवति ॥

(१) भ्रौणघ्न इत्यधिक पुस्तकान्तरे ॥ (२) चर्मणा, चर्मणे इत्यधिक पुस्तकान्तरे ॥

### मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति। त्मना देवेभ्यः। त्मना सोमेषु। मन्त्रेष्विति किम्? आत्मना कृतम्। आङीति किम्? यदात्मनस्तनो वरिष्ठा॥ *आङोऽन्यत्रापि छन्दसि लोपो दृश्यते*। त्मन्यासमञ्जत मह्यम्॥

### विंशतेर्डिति ॥ १४२ ॥

भस्य विंशतेरितिशब्दस्य डिति प्रत्यये परतो लोपो भवति। विंशत्या क्रीतः विंशकः। विंशं शतम्। विंशतेः पूरणो विंशः। एकविंशः। डितीति किम्? विंशत्या॥

### टेः ॥ १४३ ॥

टिसंज्ञस्य डिति प्रत्यये परतो लोपो भवति। कुमुद्वान्। नड्वान्। वेतस्वान्। उपसरजः, मन्दुरजः। त्रिंशता क्रीतः, त्रिंशकः। डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् टिलोपो भवति॥

### नस्तद्धिते ॥ १४४ ॥

नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः। आग्निशर्मिः। औडुलोमिः। बाह्वादित्वादिञ्प्रत्ययः। न इति किम्? सात्वतः। तद्धित इति किम्? शर्मणा। शर्मणे। *नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानं कर्तव्यम्*। अत्र ये इन्नन्तास्तेषामिनण्यनपत्ये इति प्रकृतिभावः प्राप्त, ये त्वन्नन्तास्तेषामनिति। सब्रह्मचारिण इमे, साब्रह्मचाराः। पीठसर्पिणः पैठसर्पाः। कलापिना प्रोक्तमधीयते, कालापाः। कुथुमिनः, कौथुमाः। तैतिलिजाजलिनामाचार्यौ तत्कृतो ग्रन्थ उपचारात्तैतिलिजाजलिशब्दाभ्यामभिधीयते। स ग्रन्थमधीयते तैतिलाः। जाजलाः। शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति। एवं लाङ्गलाः। शैलालाः। शिखण्डिनः, शैखण्डाः। सूकरसद्मनः, सौकरसद्माः। सुपर्वण, सौपर्वाः। *अश्मनो विकार उपसंख्यानम्*। अश्मनो विकार, आश्मः। आश्मनोऽन्यः। *चर्मणः कोश उपसंख्यानम्*। चार्मः कोशः। चार्मणोऽन्यः। *शुनः संकोच उपसंख्यानम्*। शौवः संकोचः। शौवनोऽन्यः। *अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानम्*। के पुनः सायंप्रातिकादयः। येषामव्ययानामविहितष्टिलोपः प्रयोगे च दृश्यते ते सायंप्रातिकप्रकारा ग्रहीतव्याः। सायंप्रातर्भवः, सायंप्रातिकः। पौनः पुनिकः। बाह्यः। कौतस्कुतः। कालाट् ठञिति ठञ्प्रत्ययः। ट्युट्युलौ [illegible] नेष्येते। आरातीयः। शाश्वतिकः। शाश्वत इत्येवमादिषु न दृश्यते टिलोपः॥

### अह्नष्टखोरेव ॥ १४५ ॥

अहन्नित्येतस्य टखोरेव परतष्टिलोपो भवति। द्वे अहनी समाहृते, द्व्यहः। त्र्यहः। द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः, त्र्यहीनः, अह्नां समूहः अह्नः,

अहीनः॥ *अह्नः समूहे खो वक्तव्यः*। सिद्धे सत्यारम्भो नियमार्थः। इह मा भूत्-अह्ना निर्वृत्तमाह्निकम्। एवकारकरणं विस्पष्टार्थम्। अह्न एव टखोरित्येवं नियमो न भविष्यति, आत्माध्वानौ खे इति प्रकृतिभावविधानात्॥

ओर्गुणः॥ १४६॥

उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। परशव्यमयः। औपगवः। कापटवः। ओरोदिति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यात् तेन स्वायंभुव इति सिद्धं भवति।

ढे लोपोऽकद्र्वाः॥ १४७॥

ढे परत उवर्णान्तस्य भस्याकद्र्वा लोपो भवति। कामण्डलेयः। शैतिबाहेयः। जाम्बेयः। माद्रबाहेयः। अकद्र्वा इति किम्? काद्रवेयो मन्त्रमपश्यत्॥

यस्येति च॥ १४८॥

इवर्णान्तस्यावर्णान्तस्य च भस्य ईकारे परे तद्धिते च लोपो भवति। इवर्णान्तस्य ईकारे-दाक्षी। प्लाक्षी। सखी। सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्र एकादेशस्यान्तवत्त्वादसखीति घिसंज्ञायाः प्रतिषेधः स्यात्। इवर्णान्तस्य तद्धिते-दुलि-दौलेयः। बलि-बालेयः। अत्रि-आत्रेयः। अवर्णान्तस्य ईकारे-कुमारी। गौरी शार्ङ्गरवी। अवर्णान्तस्य तद्धिते-दाक्षिः। प्लाक्षिः। चौडिः। बालाकिः। सौमित्रिः। *यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः*। काण्डे। कुड्ये। शौर्ये हिमवतः शृङ्गे। औङः शीभावे कृते यस्येति चेति सूर्यतिष्यागस्त्यमत्स्यानां य उपधाया इति च लोपः प्राप्नोति। *इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन*। वत्सान् प्रीणाति, वत्सप्रीः। तस्यापत्यं, वात्सप्रेयः। चतुष्पाद्भ्यो ढञ् इति ढञ् प्रत्ययः। लेखाभ्रूः शुभ्रादिः, तस्या अपत्यं लैखाभ्रेयः॥

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः॥ १४९॥

सूर्य तिष्य अगस्त्य मत्स्य इत्येतेषां यकारस्य उपधाया भस्य लोपो भवति ईति परतस्तद्धिते च। सूर्येणैकदिक्-सौरी बलाका। अपि यो यस्येति लोपस्तस्यासिद्धत्वं नास्ति, व्याश्रयत्वात्। ईकारे तु यस्तस्यासिद्धत्वाद् उपधायकारो भस्यानन्तरस्य सूर्यस्य सम्बन्धीति लुप्यते। तिष्य-तैषमहः। तैषी रात्रिः। अगस्त्यस्यापत्यं स्त्री ऋषित्वादणि कृते आगस्ती। आगस्तीयः। मत्स्य-गौरादित्वान्ङीष्, मत्सी। उपधाया इति किम्? मत्स्यचरी। यग्रहणमुत्तरार्थम्। विषयपरिगणनमत्र कर्त्तव्यम्। *मत्स्यस्य ङ्यामिति वक्तव्यम्*। इह मा भूत्—मत्स्यस्येदं मांसं मात्स्यम्। *सूर्यागस्त्ययोश्छे च ङ्यां च*। सौरीयः। सौरी। आगस्तीयः। आगस्ती। इह मा भूत्-सौर्यं चरुं निर्वपेत्। आगस्त्यः। *तिष्यपुष्ययोर्नक्षत्राणि*। तिष्येण नक्ष-

त्रेण युक्तः कालः। तैप। पोष.। *अन्तिकस्य तसि कादिलोप आद्युदात्तं च*। अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादिशब्दस्य लोपो वक्तव्य, आद्युदात्तं च। अन्तितो न दूरात् *तमे तादेश्च* तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः। तत्र तादिलोपे अन्तमः। कादिलोपे अन्तितमः। *कादिलोपे बहुलमिति वक्तव्यम्*। अन्यत्रापि हि दृश्यते-अन्तिके सीदतीति, अन्तिषत्। पूर्वपदादिति पत्वम्। *ये च*। अन्तियः॥

## हलस्तद्धितस्य ॥ १५० ॥

हल उत्तरस्य तद्धितयकारस्य उपधाया ईति परतो लोपो भवति। गार्गी। वात्सी। हल इति किम्? कारिकेयी। तद्धितस्येति किम्? वैयस्य भार्या वैयी॥

## आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥

आपत्ययकारस्य हल उत्तरस्य तद्धिते अनाकारादौ परेलोपो भवति। गार्गीणां समूहो, गार्गकम्। वात्सकम्। आपत्यस्येति किम्? साङ्काश्यकः। काम्पिल्यकः। तद्धितग्रहणमोरयनापत्यस्यापि लोपार्थम्—सौमी इष्टिः। अनातीति किम्? गार्ग्यायणः। वात्स्यायनः। हल इत्येव। कारिकेयस्यापत्य, कारिकेयिः॥

## क्यच्व्योश्च ॥ १५२ ॥

क्य च्वि इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य लोपो भवति। वात्सी-यति। गार्गीयति। वात्सीयते। गार्गीयते। च्वौ—गार्गीभूतः। वात्सीभूतः। आपत्य स्येत्येव। साङ्काश्यायते। साङ्काश्यीभूतः। हल इत्येव। कारिकेयीयति। कारिकेयीभूतः

## बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥

नडादिषु बिल्वादय पठ्यन्ते। नडादीनां कुक् चेति *कुगागमा बिल्वकादयो भवन्ति। तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति। बिल्वा यस्यां सन्ति बिल्वकीया, तस्या भवाः, बैल्वकाः। वेणुकीया। वैणुकाः। वेत्रकीया। वैत्रकाः। वेतसकीया। वैतसकाः। तृणकीया। तार्णकाः। इक्षुकीया। ऐक्षुकाः। काष्ठकीया। काष्ठकाः। कपोतकीया। कापोतकाः *क्रुञ्चा ह्रस्वत्वं च* क्रुञ्चकीया। क्रौञ्चकाः। छग्रहणं किम्? छमात्रस्य लुग्यथा स्याद् कुको निवृत्तिर्मा भूदिति। अन्यथा हि सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव इति कुगपि निवर्तेत। लुग्ग्रहणं सर्वलोपो यथा स्याद् यकारमात्रस्य मा भूत्॥

## तुरिष्ठेमेयःसु ॥ १५४ ॥

इष्ठन् इमनिच् ईयसुन् इत्येतेषु परतः तृशब्दस्य लोपो भवति। आसुतिं करिष्ठः। विजयिष्ठः। वहिष्ठः। दोहीयसी धेनुः। सर्वस्य तृशब्दस्य लोपार्थं वचनम्। अन्त्यस्य हि टेरित्येव सिद्धः। लुगित्येतदत्र नानुवर्तते, तथाहि सति नलुमताङ्गस्येति प्रतिषेधाद् गुणो न स्यात्। इमनिज्ग्रहणमुत्तरार्थम्। इतरा तु, तुरछन्दसीति भवतः॥

टेः ॥ १५५ ॥

भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः। पटु-पटिष्ठः। पटिमा। पटीयान्। लघु-लघिष्ठः। लघिमा। लघीयान्। णाविष्ठवत् प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम्॥ किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादिपरार्थम्। पुंवद्भावः-एनीमाचष्टे, एतयति। श्येतयति। तसिलादिष्वाकृत्वसुच इति इष्टे पुंवद्भाव उक्तः। रभावः-पृथुमाचष्टे, प्रथयति। म्रदयति। टिलोपः-पटुमाचष्टे, पटयति। लघयति। यणादिपरम्-स्थूलमाचष्टे, स्थवयति(१)। भारद्वाजीयास्तु पठन्ति-णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कन्नर्थमिति। स्रग्विणमाचष्टे स्रजयति। वसुमन्तमाचष्टे, वसयति। युवानमाचष्टे, यवयति। कनयति एतदुभयमप्युदाहरणमात्रं न परिगणनम्। प्रादयोऽविहोप्यन्ते-प्रियमाचष्टे, प्रापयति॥

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥ १५६ ॥

स्थूल दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः पूर्वस्य च गुणो भवति। स्थूल-स्थविष्ठः। स्थवीयान्। दूर-दविष्ठः। दवीयान्। युवन्-यविष्ठः। यवीयान्। ह्रस्व-ह्रसिष्ठः। ह्रसीयान्। ह्रसिमा। क्षिप्र-क्षेपिष्ठः। क्षेपीयान्। क्षेपिमा। ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते। क्षुद्र-क्षोदिष्ठः। क्षोदीयान्। क्षोदिमा। परग्रहणं किम्? यविष्ठः। यवीयान्। ह्रसिष्ठः। ह्रसीयान्, इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत्। पूर्वग्रहणं विस्पष्टार्थम्॥

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥ १५७ ॥

प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्राघि वृन्द इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः। प्रिय-प्रेष्ठः। प्रेमा। प्रेयान्। स्थिर-स्थेष्ठः। स्थेयान्। स्फिर-स्फेष्ठः। स्फेयान्। उरु-वरिष्ठः। वरिमा। वरीयान्। बहुल-बंहिष्ठः। बंहीयान्। बंहिमा। गुरु-गरिष्ठः। गरीयान्। गरिमा। वृद्ध-वर्षिष्ठः। वर्षीयान्। तृप्र-त्रपिष्ठः। त्रपीयान्। दीर्घ-द्राघिष्ठः। द्राघीयान्। द्राघिमा। वृन्दारक-वृन्दिष्ठः। वृन्दीयान्। प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते। तेनान्येषामिमनिज् न भवतीति नोदाह्रियते॥

बहोर्लोपो भू च बहोः ॥ १५८ ॥

बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति तस्य च बहोः स्थाने भू इत्ययमादेशो भवति। भूयान्। भूमा। बहुशब्दः पृथ्वादिषु पठ्यते। बहोरिति पुनर्ग्रहणं स्थानिवत्प्रतिपत्त्यर्थम्। अन्यथा हि प्रत्ययानामेव भूभावः स्यात्॥

---

(१) दवयति इत्यधिकं पुस्तकान्तरे॥

इष्ठस्य यिट् च ॥ १५९ ॥

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति बहोश्च भूरादेशो भवति। भूयिष्ठ । लोपापवादो यिडागम, तस्मिन्विकार उच्चारणार्थ ॥

ज्यादादीयस ॥ १६० ॥

ज्यादुत्तरस्य ईयस आकार आदेशो भवति। ज्यायान्। लोपस्य यिण व्यवहितत्वादादित्युच्यते। लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिद्ध्यति ॥

र ऋतो हलादेर्लघो ॥ १६१ ॥

रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परत । प्रथिष्ठ । प्रथीयान्। प्रथिमा। म्रदिष्ठ । म्रदीयान्। म्रदिमा। ऋत इति किम्? पटिष्ठ, पटिमा, पटीयान्। हलादेरिति कि? ऋजिष्ठ । ऋजिमा । ऋजीयान्। लघोरिति किम्? कृष्णिष्ठ । कृष्णीयान्। कृष्णिमा। परिगणनमत्र कर्त्तव्यम् ॥

पृथु मृदु भृश चैव कृश च दृढमेव च। परिपूर्वं वृढ चैव षडेतान् रविधौ स्मरेत् ॥

तत इह न भवति-कृतमाचष्टे, कृतयति। मातरमाचष्टे, मातयति। भ्रातयति ॥

विभाषर्जोश्छन्दसि ॥ १६२ ॥

ऋजु इत्येतस्य ऋत स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतश्छन्दसि विषये। रजिष्ठमति पन्थानम्। ऋजिष्ठ ॥

प्रकृत्यैकाच् ॥ १६३ ॥

एकाच् यच्छब्दरूप तदिष्ठेमेयस्सु परत प्रकृत्या भवति। स्रग्विनित्येतस्य विन्मतस्य स्रजिष्ठ । स्रजीयान्। स्रजयति। स्रुग्वानित्येतस्य मतवन्तस्य स्रुचिष्ठ। स्रुचीयान्। स्रुचयति। एकाचिति किम्? वसुमदित्यतस्य वसिष्ठ । वसीयान्। ॐप्रकृत्याऽके राजन्यमनुष्ययुवान ॐ । अके प्रत्यय परतो राजन्य मनुष्य युवन्नित्यते प्रकृत्या भवन्ति। राजन्याना समूहो, राजन्यकम्। मनुष्याणा समूहो मानुष्यकम्। आपत्यस्य च तद्धितनातीति यलोप प्रकृतिभावेन न भवति। यूना भाव, यौवनिका। मनोज्ञादित्वाद् वुञ्। तस्य नस्तद्धित इति टिलोपो न भवति ॥

इनण्यनपत्ये ॥ १६४ ॥

इन्नन्तमनपत्यार्थेऽणि परत प्रकृत्या भवति। साङ्कूटिनम्। सारारविणम्। सासांजिनम्। अभिविधौ भाव इनुण्। अणिनुण इत्यण्(१)। स्रग्विण इद, स्राग्विणम्। अणीति किम्? दण्डिना समूहो, दाण्डम्। अनुदात्तादेरञित्यञ्प्रत्यय । अनपत्य इति किम्? मेधाविनोऽपत्य, मैधाव ॥

( १ ) अभिविधावित्यारभ्य इत्यण् इत्यन्त पाठो बहुत्र नास्ति ॥

गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥

गाथिन् विदथिन् केशिन् गणिन् पणिन् इत्येते चापि प्रकृत्या भवन्ति। गाथिन । वैदथिन । कैशिन । गाणिन । पाणिन । अपत्यार्थोऽयमारम्भ ॥

संयोगादिश्च ॥ १६६ ॥

संयोगादिश्च इनपि प्रकृत्या भवति। शङ्खिनोऽपत्य, शाङ्खिन । माद्रिण । वाज्रिण ॥

अन् ॥ १६७ ॥

अनन्तमपि प्रकृत्या भवति अपत्ये चानपत्ये च। सामन । वैमन । सौत्वन । जैत्वन ॥

ये चाभावकर्मणो ॥ १६८ ॥

यकारादौ च तद्धितेऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति। सामसु साधु, सामन्य । ब्रह्मण्य । अभावकर्मणोरिति किम्? राज्ञो भाव कर्म वा, राज्यम्। राजन्निति पुरोहितादिषु पठ्यते। ततोऽयं यक् प्रत्यय ॥

आत्माध्वानौ खे ॥ १६९ ॥

आत्मन् अध्वन् इत्येतौ खे परत प्रकृत्या भवत । आत्मने हित, आत्मनीन । अध्वानमलङ्गामी, अध्वनीन । ख इति किम्? प्रत्यात्मम् । प्राध्वम् । प्रत्यात्ममित्य व्ययीभावेऽनश्चेति समासान्तष्टच्प्रत्यय । प्राध्वमित्युपसर्गादध्वन इति अच्प्रत्यय ॥

न मपूर्वोऽपत्येऽवर्मण ॥ १७० ॥

मपूर्वोऽन् अवर्मणोऽपि परतोऽपत्येऽर्थे न प्रकृत्या भवति। सुषाम्णोऽपत्य, सौषाम । चान्द्रसाम । मपूर्व इति किम्? सौत्वन । अपत्य इति किम्? चर्मणा परिवृतो रथ, चार्म्मण । अवर्मण इति किम्? चक्रवर्मणोऽपत्य, चाक्रवर्मण ॥ *अपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम्*। हितनाम्नोऽपत्य, हैतनाम । हैतनामन ॥

ब्राह्मोऽजातौ ॥ १७१ ॥

योगविभागोऽत्र क्रियते-ब्राह्म इत्यत्रानपत्याधिकारेऽपि सामर्थ्यादपत्यादन्यत्रापि टिलोपार्थं निपात्यते। ब्राह्मो गर्भ । ब्राह्म वस्त्रम् । ब्राह्म हवि । ततोऽजातौ। अपत्य इत्येव । अपत्ये जातावपि ब्रह्मणष्टिलोपो न भवति। ब्रह्मणोऽपत्य, ब्राह्मण । अपत्य इत्येव । ब्राह्मी औषधि ॥

कार्म्मस्ताच्छील्ये ॥ १७२ ॥

कार्म्म इति ताच्छील्ये टिलोपो निपात्यते। कर्म्मशील, कार्म्म । शील छत्रादिभ्यो ण इति णप्रत्यय । यद्येवं, किमर्थमिदं, नस्तद्धित इत्येव टिलोप सिद्ध? सत्यमेतत्। ज्ञापकार्थं तु। एतत् ज्ञापयति-ताच्छीलिके णेऽण्कृतानि भवन्तीति। तेन चौरी तापसीति अण्कृतान्दीप्सिद्धो भवति। ताच्छील्य इति किम्? कर्मण इदं, कार्म्मणम् ॥

### औक्षमनपत्ये ॥ १७३ ॥

औक्षमित्यनपत्येऽणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्य इति किम् ? उक्ष्णोऽपत्यमौक्ष्णः । षपूर्वहन्धृतराज्ञामणि इत्यल्लोपः ॥

### दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्य-धैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥

दाण्डिनायन हास्तिनायन आथर्वणिक जैह्माशिनेय वाशिनायनि भ्रौणहत्य धैवत्य सारव ऐक्ष्वाक मैत्रेय हिरण्मय इत्येतानि निपात्यन्ते । दण्डिन् हस्तिन् इत्येतौ नडादिषु पठ्येते, तयोरायने परतः प्रकृतिभावो निपात्यते । केषाञ्चित्तु हस्तिन्निति नडादिषु न पठ्यते । तेषामत एव निपातनात् फगपि भवति । दण्डिनोऽपत्यं, दाण्डिनायनः । हस्तिनोऽपत्यं, हास्तिनायनः । अथर्वन्निति वसन्तादिषु पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते । तमधीते यः स, आथर्वणिकः । इ... प्रकृतिभावो निपात्यते । जिह्माशिन्निति शुभ्रादिषु पठ्यते । तस्य ढ्ये परतः प्रकृतिभावो निपात्यते । जिह्माशिनोऽपत्यं, जैह्माशिनेयः । वाशिनोऽपत्यम्, उदीचां वृद्धाद् गोत्रादिति फिञ् तत्र प्रकृतिभावो निपात्यते । वाशिनायनिः । भ्रूणहन् धी... इत्येतयोः ष्यञि परतस्तकारादेशो निपात्यते । भ्रूणघ्नो भावः, भ्रौणहत्यम् । धी... नो भावो, धैवत्यम् । हनस्तोऽचिण्णलोरिति यत्तत्व तद्धातुप्रत्यय एवेति भ्रौणघ्नो इत्यत्र न भवति यतो भ्रौणहत्ये तस्य निपात्यते । सारव इति सरयू इत्येतस्य ...णि परतो यूशब्दस्य वकारादेशो निपात्यते । सरय्वां भवं, सारवमुदकम् । ऐक्ष्वाक इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोऽयमाद्युदात्तोऽन्तोदात्तश्च निपात्यते । इक्ष्वाकोरपत्यं, जनपदशब्दात् क्षत्रियादञित्यञ्, तत्र उकारलोपो निपात्यते । ऐक्ष्वाकः । इक्ष्वाकुषु जनपदेषु भवः कोपधादणित्यण् । ऐक्ष्वाकः । मैत्रेय इति मित्रयुशब्दो गृष्ट्यादिषु पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते । मित्रयोरपत्यम्, मैत्रेयः । अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव न पठ्यते, तत्राञि कृते यादेरिति इयादेशेनैव सिद्धमेव च लोपार्थं निपातनं कर्त्तव्यं न भवति, यस्कादिषु च बहुषु लुगर्थः पाठो न कर्त्तव्यो भवति, मित्रयवः इत्यञो 'यञञोश्च' इत्येव हि लुक् सिद्धत्वात् ? नैतदस्ति । मित्रयूणां सङ्घ इत्यत्र गोत्रचरणाद् वुञ् बाधित्वा मैत्रयकः सङ्घ इत्यत्र, सङ्घाङ्कलक्षणेष्वञ्यञिञामणित्यण् प्राप्नोति । हिरण्मयमिति हिरण्यस्य मयटि यादिलोपो निपात्यते हिरण्यस्य विकारः, हिरण्मयः ॥

### ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ॥ १७५ ॥

ऋत्व्य वास्त्व्य वास्त्व माध्वी हिरण्यय इत्येतानि निपात्यन्ते छन्दसि विषये ऋतु वास्तु इत्येयोर्यति यणादेशो निपात्यते । ऋतौ भवम्, ऋत्व्यम्

वास्तौ भवं, वास्तव्यम्। वस्तुशब्दस्यापि यणादेशो निपात्यते। वस्तुनि भवो, वास्त्वः। मधुशब्दस्यापि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययम् ॥

इत्युपाध्यायश्रीवामनकृतायां काशिकायां षष्ठस्याध्यायस्य चतुर्थः पादः ॥ ६ ॥ ४ ॥

समाप्तश्चाय षष्ठोऽध्यायः ॥ ६ ॥

## ॥ अथ सप्तमाध्यायस्य प्रथमः पादः ॥

### युवोरनाकौ ॥ १ ॥

यु वु इत्येतयोरुच्चरितविशेषणयोरनुनासिकयोः प्रत्यययोर्ग्रहणं, तयोः स्थाने यथासङ्ख्यमन अक इत्येतावादेशौ भवतः। योरन, वोरकः। नन्द्यादिभ्यो ल्युः–नन्दन.। रमणः। सायमादिभ्यष्ट्युट्युलौ तुट्–सायतन। चिरंतनः। ण्वुल्तृचौ–कारक.। हारक। वासुदेवार्जुनाभ्यां वुन् (१)। वासुदेवक। अर्जुनक.। अनुनासिकयोरिति किम्? ऊर्णोतेर्युस्–ऊर्णायु। भुजिमृङ्भ्यां युक्त्युकौ। भुज्युर्मृत्युरित्येवमादीनां हि यणोऽनुनासिकत्वं न प्रतिज्ञायते, प्रतिज्ञानुनासिक्याः पाणिनीयाः। युवोरिति निर्देशाद् द्वन्द्वैकवद्भावपक्षेऽनित्यमागमशासनमिति नुम् न क्रियते। नपुंसकलिङ्गता वा, लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति न भवति। ऋत-रेतरयोगपक्षेषु छान्दसो वर्णलोपो द्रष्टव्यः ॥

(२) युवोश्चेद् द्विवनिर्देशो द्वित्वे यणतु प्रसज्यते।
अथ चेदेकवद्भावः कथ पुवद्भवेदयम् ॥
द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता।
अशिष्यत्वाद्धि लिङ्गस्य पुस्त्व चेह समाश्रितम् ॥

### आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ २ ॥

आयन् एय् ईन् ईय् इय् इत्येते आदेशा भवन्ति यथासरव्यं फ ढ ख छ घ इत्येतेषां प्रत्ययादीनाम्। फ इत्येतस्यायनादेशो भवति। नडादिभ्यः फक्–नाडायनः। चारायण। ढस्य एयादेशो भवति। स्त्रीभ्यो ढक्–सौपर्णेय। वैनतेय.। खस्य ईनादेशो भवति। कुलात्खः–आढ्यकुलीनः। श्रोत्रियकुलीन.। छस्य ईयादेशो भवति। वृद्धाच्छः–गार्गीयः। वात्सीयः। घ इत्येतस्येयादेशो भवति। क्षत्राद् घ–क्षत्रिय। प्रत्ययग्रहण किम्? फक्कति। ढौकते। खनति। छिनत्ति। घूर्णते। आदिग्रहण किम्? ऊरुदघ्नम्। जानुदघ्नम्। एते आयनादय. प्रत्ययोपदेशकाल एव भवन्ति। कृतेष्वे-

(१) न्यासेऽय पाठो दृश्यते तस्मात्सूत्रे प्रक्षिप्तो भाति। (२) इद कारिकाद्वय न्यासपदमञ्जर्योर्न व्याख्यातमतः प्रक्षिप्त भाति।

तेषु प्रत्ययाद्युदात्तत्वं भवति। तथा च घच्छौ चेति घकारस्य करणमर्थवद्भवति। शङ्ख। ष (१) ण्ढ, इत्येवमादीना हि 'उणादयो बहुलमिति' बहुलवचनादादेशा न भवन्ति। 'ऋतेरीयङिति' वा वचन ज्ञापक धातुप्रत्ययानामादेशाभावस्य (२)। 'एजे खश्' 'पदरुजविशस्पृशो घञि' त्येवमादिषु तु इत्संज्ञया भवितव्यम्। तद्धि तेषु हि खकारघकारयोरादेशवचनमवकाशवदितीत्संज्ञा बाधितु नोत्सहते। आयनी-नोर्नकारस्येत्संज्ञाया प्राप्ताया प्रतिविधातव्य, निकार्यं हि सभवति॥

झोऽन्तः॥ ३॥

प्रत्ययग्रहणमनुवर्तते, आदिग्रहण निवृत्तम्। प्रत्ययावयवस्य झस्य अन्त इत्ययमादेशो भवति। कुर्वन्ति। सुन्वन्ति। चिन्वन्ति। अद्य श्वो विजनिष्यमाणा पतिभि सह शयान्तै। 'जृविशिभ्या झच्'। जरन्तो, वेशन्त। प्रत्ययस्येत्येव। उज्झिता। उज्झितुम्। उज्झितव्यम्। अस्मिन्नप्यन्तादेशे कृते प्रत्ययाद्युदात्तत्व भवति॥ तथाच झचश्चित्करणमर्थवद्भवति।

अदभ्यस्तात्॥ ४॥

अभ्यस्ताद्धातुरुत्तरस्य झकारस्य अदित्ययमादेशो भवति। ददति। ददतु। दधति। दधतु। जक्षति। जक्षतु। जाग्रति। जाग्रतु। अन्तादेशापवादोऽय, शुल शेन तु बाध्यते। अदद्रु (३)। अदधु। अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्व भवति॥

आत्मनेपदेष्वनतः॥ ५॥

आत्मनेपदेषु यो झकारस्तस्यानकारान्तादङ्गादुत्तरस्यादित्ययमादेशो भवति चिन्वते। चिन्वताम्। अचिन्वत (४) लुनते। लुनताम्। अलुनत। आत्मनेपदेष्विति किम्? चिन्वन्ति। लुनन्ति। अनत इति किम्? च्यवन्ते। प्लवन्ते। शप् विकरणे कृते झान्तादेशेन भवितव्यमित्यदादेशो न भवति। झकारविशेषण किम्? इह मा भूत् अद्य श्वो विजनिष्यमाणा पतिभि सह शयान्तै

शीङो रुट्॥ ६॥

शीङोऽङ्गादुत्तरस्य झादेशस्यातो रुडागमो भवति। शेरते। शेरताम्। अशेरत। रुडय परादि क्रियते। स यदि झकारस्यैव स्यात्तदादेशो न स्यादित्यत एवायमादेशस्यागमो विधीयते। सानुबन्धग्रहणमयङ्लुगर्थम्। तेनेह न भवति—व्यतिशेशयते॥

वेत्तेर्विभाषा॥ ७॥

वेत्तेरङ्गादुत्तरस्य झादेशस्यातो विभाषा रुडागमो भवति। संविद्रते। संविदते।

---

(१) "शमे ख, षणो ढ, शङ्ख, षण्ढ" इति क्वचित् पाठ। (२) धातुविहितप्रत्ययानामादेशा न भवन्ति इति क्वचित्पाठ। (३) अनचुरागमरित्यधिकन्यासे। (४) अत्र पूर्वपुनव इत्यधिक न्यासे।

संविद्रताम्। संविदताम्। समविद्रत। समविदत। वेत्तेरिति लुग्विकरणस्येदं ग्रहणम्। इह मा भूत्—विन्ते। विन्दाते। विन्दते इति॥

बहुलं छन्दसि ॥ ८ ॥

छन्दसि विषये बहुलं रुडागमो भवति। देवा अदुह्र। गन्धर्वा अप्सरसो अदुह्र। दुहेर्लङि झकारस्यादादेशे कृते रुट्। 'लोपस्त आत्मनेपदेष्विति' तकारलोपः। न च भवति—अदुह्रत। बहुलवचनादन्यत्रापि भवति—अदृश्रमस्य केतवः (१)। 'रुदृशोऽङि गुणः' इत्येतदपि बहुलवचनादेवात्र न भवति॥

अतो भिस ऐस् ॥ ९ ॥

अकारान्तादङ्गादुत्तरस्य भिस ऐसित्ययमादेशो भवति। वृक्षैः। प्लक्षैः। अतिजरसैः। जरामतिक्रान्तैरिति विगृह्य समासे कृते ह्रस्वत्वे च भिस ऐसादेशो भवति। एकदेशविकृतमनन्यवद्भवतीति जरशब्दस्य जरसादेशः। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषेयमनित्या। कष्टाय क्रमण इति निर्देशात् (२)। अत इति किम्? अग्निभिः। वायुभिः। तपरकरणं किम्? खट्वाभिः। मालाभिः॥

एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति॥

अत इत्यधिकारो 'जसः शीति' यावत्॥

बहुलं छन्दसि ॥ १० ॥

छन्दसि विषये बहुलमैसादेशो भवति। अत इत्युक्तमनतोऽपि भवति—नद्यैरिति। अतो न भवति—देवेभिः सर्वेभिः प्रोक्तमिति॥

नेदमदसोरकोः ॥ ११ ॥

इदम् अदस् इत्येतयोरककारयोर्भिस ऐस् न भवति। एभिः। अमीभिः। अकोरिति किम्? इमकैः। अमुकैः। अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकं तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति। इदमदसोः कादिति नोक्तं, विपरीतोऽपि नियमः संभाव्येत—इदमदसोरेव कादिति। ततश्चेह न स्यात्—सर्वकैः। विश्वकैः। इह च स्यादेव—एभिः। अमीभिः। प्रतिषेधकरणं विपरीतनियमनिवृत्त्यर्थम् (३)॥

टाङसिङसामिनात्स्याः ॥ १२ ॥

अकारान्तादङ्गादुत्तरेषां टाङसिङसाम् इन आत् स्य इत्येते आदेशा भवन्ति। यथासंख्यम्—टा इत्येतस्येनादेशो भवति—वृक्षेण। प्लक्षेण। ङसीत्येतस्य आत्—वृक्षात्। प्लक्षात्। ङसित्येतस्य स्यादेशो भवति—वृक्षस्य। प्लक्षस्य। अत इति

(१) अद्रश्रमिति न्यासे। (२) न्यासपर्यालोचनया कष्टायकमण इति निर्देशादिति मूलपाठो न प्रतिभाति। (३) ततश्चेहेत्यारभ्य निवृत्त्यर्थमित्यन्त पाठः क्वचित्पुस्तके नास्ति।

किम् ? सख्या । पत्या । अतिजरसिन अतिजरसादिति केचिदिच्छन्ति यथा तु भाष्ये तथा नैतदिष्यत इति लक्ष्यते ॥

ङेर्यः ॥ १३ ॥

ङेरिति चतुर्थ्येकवचनस्य ग्रहणम् । अकारान्तादङ्गादुत्तरस्य ङे इत्येतस्य य इत्ययमादेशो भवति । वृक्षाय । प्लक्षाय । अत इति किम् ? सख्ये । पत्ये । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषेयमनित्या तेन, दीर्घो भवति ॥

सर्वनाम्नः स्मै ॥ १४ ॥

अकारान्तात् सर्वनाम्न उत्तरस्य ङे- स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । यस्मै । कस्मै । तस्मै । अत इत्येव । भवते । अयोऽस्मै इत्यन्वादेशेऽशादेशे एकादेशः प्राप्नोति तत्रान्तरङ्गत्वादेकादेशात् पूर्वं स्मैभाव क्रियते, पश्चादेकादेश इति ।

ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥

ङसि ङि इत्येतयोरकारान्तात् सर्वनाम्न उत्तरयोः स्मात् स्मिन् इत्येतावादेशौ भवतः । ङसीत्येतस्य स्मात्–सर्वस्मात् । विश्वस्मात् । यस्मात् । तस्मात् । कस्मात् । ङीत्येतस्य स्मिन्–सर्वस्मिन् । विश्वस्मिन् । यस्मिन् । अन्यस्मिन् । अत इत्येव । भवतः । भवति । सर्वनाम्न इत्येव । वृक्षात् । वृक्षे ॥

पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥

पूर्वादिभ्यो नवभ्यः सर्वनाम्न उत्तरयोर्ङसिङ्योः स्मात् स्मिन् इत्येतावादेशौ वा भवतः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । परस्मात् । परात् । परस्मिन् । परे । अवरस्मात् । अवरात् । अवरस्मिन् । अवरे । दक्षिणस्मात् । दक्षिणात् । दक्षिणस्मिन् । दक्षिणे । उत्तरस्मात् । उत्तरात् । उत्तरस्मिन् । उत्तरे । अपरस्मात् । अपरात् । अपरस्मिन् । अपरे । अधरस्मात् । अधरात् । अधरस्मिन् । अधरे । स्वस्मात् । स्वात् । स्वस्मिन् । स्वे । अन्तरस्मात् । अन्तरात् । अन्तरस्मिन् । अन्तरे । नवभ्य इति किम् ? त्यस्मात् । त्यस्मिन् ॥

जसः शी ॥ १७ ॥

अकारान्तात् सर्वनाम्न उत्तरस्य जस शीत्ययमादेशो भवति । सर्वे । विश्वे । ये । के । ते । दीर्घोच्चारणमुत्तरार्थम्–त्रपुणी । जतुनी ॥

औङ आपः ॥ १८ ॥

आबन्तादङ्गादुत्तरस्यौङ- शीत्ययमादेशो भवति । खट्वे तिष्ठत । खट्वे पश्य । बहुराजे । कारीषगन्ध्ये । ङकारः सामान्यग्रहणार्थः । औटोऽपि ग्रहणं यथा स्यात् ।

औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चासञ्जनेऽस्मिन् ङित्कार्यं ते स्यात् प्रसक्तः स दोषः ॥
ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत् स्यात्तच्च विद्यात्तदादौ ॥
वर्णश्चायं तेन ङित्त्वेऽप्यदोषो निर्दिष्टोऽयं पूर्वसूत्रेण वा स्यात् ॥

नपुंसकाच्च ॥ १९ ॥

नपुंसकादङ्गादुत्तरस्य औङः शी इत्ययमादेशो भवति। कुण्डे तिष्ठतः। कुण्डे पश्य। यस्येति लोपः प्राप्तः। *श्यां प्रतिषेधो वक्तव्यः*। इति न भवति–दधिनी। मधुनी। त्रपुणी। जतुनी॥

जश्शसोः शिः ॥ २० ॥

नपुंसकादङ्गादुत्तरयोर्जश्शसोः शि इत्ययमादेशो भवति। कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। दधीनि। मधूनि। त्रपूणि। जतूनि। जसा सहचरितस्य शसो ग्रहणादिह न भवति–कुण्डशो ददाति। वनशः प्रविशन्तीति॥

अष्टाभ्य औश् ॥ २१ ॥

अष्टाभ्य इति कृताकारोऽष्टन्शब्दो गृह्यते। तस्माद्उत्तरयोर्जश्शसोरौशित्ययमादेशो भवति। अष्टौ तिष्ठन्ति। अष्टौ पश्य। कृताकारस्य ग्रहणं किम्? अष्ट तिष्ठन्ति। अष्ट पश्य। एतदेव कृतात्वस्य ग्रहणं ज्ञापकमष्टन आ विभक्तावित्यात्वविकल्पस्य। षड्भ्यो लुगित्यस्यायमपवादो, नाप्राप्ते तस्मिन्निदमारभ्यते। यस्तु, 'सुपो धातुप्रातिपदिकयोरिति' तस्मिन् प्राप्ते चाप्राप्ते चेति स न बाध्यते–अष्टपुत्रः। अष्टभार्य इति। तदन्तग्रहणमत्रेष्यते–परमाष्टौ। उत्तमाष्टौ। प्रियाष्टान इत्यत्रात्वस्याभावादौश्त्वं न भवति॥

षड्भ्यो लुक् ॥ २२ ॥

षट्संज्ञकेभ्य उत्तरयोर्जश्शसोर्लुग्भवति। षट् तिष्ठन्ति। षट् पश्य। पञ्च। सप्त। नव। दश। षट्प्रधानात्तदन्तादपि भवति–परमषट्। उत्तमषट्। यत्र तूपसर्जनं षट् ततो न भवति–प्रियषषः, प्रियपञ्चान इति॥

स्वमोर्नपुंसकात् ॥ २३ ॥

सु अम् इत्येतयोर्नपुंसकादुत्तरयोर्लुग्भवति। दधि तिष्ठति। दधि पश्य। मधु पश्य। त्रपु। जतु। तद् ब्राह्मणकुलमिति यत्र लुका त्यदाद्यत्वं बाध्यते पूर्वविप्रतिषेधेन नित्यत्वाद्वा। लुको हि निमित्तमतोऽमिति लक्षणान्तरेण विहन्यते, न पुनस्त्यदाद्यत्वे कृत्वे, यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति॥

अतोऽम् ॥ २४ ॥

अकारान्तान्नपुंसकादुत्तरयोः स्वमोरमित्ययमादेशो भवति। कुण्डं तिष्ठति। कुण्डं पश्य। वनम्। पीठम्। मकारः कस्मान्न क्रियते? दीर्घत्वं प्राप्नोति॥

अद्ड् डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥

डतरादिभ्यः परयोः स्वमोरद्ड् इत्ययमादेशो भवति। कतरत्तिष्ठति। कतरत् पश्य। कतमत्तिष्ठति। कतमत् पश्य। इतरत्। अन्यतरत्। अन्यत्। पञ्चभ्य इति किम्? नेम तिष्ठति। नेम पश्य। डित्करणं किम्? कतरत्तिष्ठतीत्यत्र पूर्वसवर्णदीर्घो मा भूत्। इह

तु कतरत्परयेति स्थानिवद्भावादमि पूर्वत्वेनापि सिद्ध्यति । एवं तर्हि तकारादेश एव कस्मान्न विधीयते ? हे कर्तरदिति सम्बुद्धेर्लोपो मा भूत्।

अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु ।
अद्ड्डित्वाड्डतरादीनां न लोपो नापि दीर्घता ॥

नेतराच्छन्दसि ॥ २६ ॥

इतरशब्दादुत्तरयोः स्वमोश्छन्दसि विषये अद्डादेशो न भवति । इतरमितरमण्डमजायत । वार्त्रघ्नमितरम् । छन्दसीति किम् ? इतरत्काष्ठम् । इतरत्कुड्यम् । अतोऽमित्यस्मादनन्तरमितराच्छन्दसीति वक्तव्य, नेतराच्छन्दसीति वचनं योगविभागार्थम् ॥ एकतराद्धि सर्वत्र छन्दसि भाषाया प्रतिषेध इष्यते ॥ एकतरं तिष्ठति। एकतरं पश्येति ॥

युष्मदस्मद्भ्यां ङसोऽश् ॥ २७ ॥

युष्मदस्मदित्येताभ्यामुत्तरस्य ङसोऽशित्ययमादेशो भवति । तव स्वम् । मम स्वम् । शित्करणं सर्वादेशार्थम् । अन्यथा ह्यादेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च योऽचीत्येतन्न स्यात् ॥

ङे प्रथमयोरम् ॥ २८ ॥

ङे इत्यविभक्तिको निर्देशः । ङे इत्येतस्य प्रथमयोश्च विभक्त्योः प्रथमाद्वितीययोर्युष्मदस्मद्भ्यामुत्तरयोरमित्ययमादेशो भवति । तुभ्यं दीयते । मह्यं दीयते । प्रथमयोः–त्वम् । अहम् । युवाम् । आवाम् । यूयम् । वयम् । त्वाम् । माम् । युवाम् । आवाम् ॥

शसो न ॥ २९ ॥

युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति । युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणान् । युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः । युष्मान् कुलानि । अस्मान् कुलानि(१) ॥

भ्यसो भ्यम् ॥ ३० ॥

युष्मदस्मद्भ्यामुत्तरस्य भ्यसो भ्यमित्ययमादेशो भवति । युष्मभ्यं दीयते । अस्मभ्यं दीयते । भ्यमादेशे कृते शेषे लोपे च बहुवचने झल्येदित्येत्वं प्राप्नोति । तदङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति न भवति । केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति । येषां तु शेषे लोपष्टिलोपस्तेषामभ्यमादेश एव । उदात्तनिवृत्तिस्वरश्चादेरेव भवति ॥

---

१. क्वचिदयं पाठोऽधिको दृश्यते 'तस्माच्छसोन' पुंसीति सिद्धे स्त्रीनपुंसकार्थं वचनम्। भाष्ये 'युष्मदस्मदो' ।

पञ्चम्या अत् ॥ ३१ ॥

पञ्चम्या भ्यसो युष्मदस्मद्भ्यामुत्तरस्य अदित्ययमादेशो भवति। युष्मद्गच्छन्ति। अस्मद्गच्छन्ति ॥

एकवचनस्य च ॥ ३२ ॥

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुत्तरस्यादित्ययमादेशो भवति। त्वद्गच्छन्ति। मद्गच्छन्ति ॥

साम आकम् ॥ ३३ ॥

साम इति षष्ठीबहुवचनमागतसुटक गृह्यते। तस्य युष्मदस्मद्भ्यामुत्तरस्याकमित्ययमादेशो भवति। युष्माकम्। अस्माकम्। अथ किमर्थमागतसुट्को गृह्यते। न ह्यादेशविधानकाले सुड्विद्यते? तस्यैव तु भाविन सुटो निवृत्त्यर्थम्। आदेशे कृते हि शेषे लोपे युष्मदस्मदोरकारान्तत्वात्सुट प्राप्नोति। स स्थानिन्यन्तर्भूतत्वान्निवर्तते। दीर्घोच्चारण सवर्णदीर्घार्थम्। अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्व न प्राप्नोति। तत्सामर्थ्यमेव प्रति भविष्यतीति अकारकरणमेत्वनिवृत्त्यर्थमिति अतोगुणे पररूपत्व स्यात् ॥

आत औ णल ॥ ३४ ॥

आकारान्ताद्धातुरुत्तरस्य णल औकारादेशो भवति। पपौ। तस्थौ। जग्लौ। मम्लौ। अत्रौत्वमेकादेश स्थानिवद्भावो द्विर्वचनमित्यनेन क्रमेण कार्याणि क्रियन्ते। एकादेशादनवकाशत्वादौत्व द्विर्वचनादपि परत्वादेकादेश इति ॥

तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ३५ ॥

तु हि इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम्। जीवताद्भवान्। जीवतात्त्वम्। जीवतु भवान्। जीव त्वम्। ङित्करण गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ भवति। ङित्वाच्चास्य स्थानिवद्भावात्पित्त्व प्राप्नोति तन्निवर्तते, ङिच्च पिन्न भवति। तेन ब्रुवस्तादिति भूतादभवानितीण् न भवति। आशिषीति किम्? आम गच्छतु भवान्। गच्छ त्वम् ॥

तातङि ङित्त्व सङ्क्रमकृत्स्यादन्त्यविधिश्चेत्तथा न।
हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥
तातङो ङित्वसामर्थ्याच्चायमन्त्यविधि स्मृत।
न तद्वदनङादीना तेन तेऽन्त्यविकारजा ॥

शतुर्वसु ॥ ३६ ॥

विद ज्ञान इत्येतस्माद्धातोरुत्तरस्य शतुर्वसुरादेशो भवति। विद्वान्। विद्वांसौ। विद्वांस। स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरण, वसो सम्प्रसारणमित्यत्र क्वसोरपि सामान्यग्रहणार्थम्। एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्येतदपि न

भवति। तथा सत्युकारकरणमनर्थकं स्यात्। अन्यतरस्यांग्रहणं केचिदनुवर्त्तयन्ति। विदन्। विदन्तौ। विदन्तः॥

## समासेऽनञ्पूर्वे क्त्वो ल्यप्॥ ३७॥

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य ल्यबित्ययमादेशो भवति। प्रकृत्य। प्रहृत्य। पार्श्वतः कृत्य। नानाकृत्य। द्विधाकृत्य। समास इति किम्? कृत्वा। हृत्वा। अनञ्पूर्व इति किम्? अकृत्वा। अहृत्वा। परमकृत्वा। उत्तमकृत्वा। अनञिति हि नञोऽन्यदनञ् नञ्सदृशमव्ययं परिगृह्यते। तेन नञ् अनव्ययं चानञ् न भवति। स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल्ल्यबादेशो न भवति। समासे इति निर्धारणे सप्तमी। तेन क्त्वान्तः समास एव परिगृह्यते। स च प्रैविधिस्तदन्तस्येत्यनेन तदन्तविधिना, न तु कृद्ग्रहणे गतिकारकपूर्वस्यापीति। ... चानञ्पूर्वं इत्युच्यते। गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति नञ् गतिर्न च कारकमिति। प्रधाय प्रस्थायेत्यादिषु हिमन्त्रतीनन्तरङ्गानपि बहिरङ्गो ल्यब्बाधत एवेति ज्ञापितम्॥

## क्त्वापि छन्दसि॥ ३८॥

समासेऽनञ्पूर्वे क्त्वा इत्येतस्य क्त्वा इत्ययमादेशो भवति, ल्यबपि ... भवपि छन्दसि विषये। कृष्णं वासो यजमानं परिधापयित्वा। प्रत्यञ्चमर्कं ... यित्वा। ल्यबपि भवति—उद्धृत्य जुहोति। वा छन्दसीति नोक्त ... चार्थम्। तेनासमासेऽपि ल्यब्भवति। अर्च्य तान् देवान् गतः। छन्दोऽधिकार, आऽऽ ... सेरसुगिति यावत्(१)॥

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः॥ ३९॥

छन्दसि विषये सुपां स्थाने सु लुक् पूर्वसवर्ण आ आत् शे या डा ड्या याच् आल इत्येते आदेशा भवन्ति। सु—अनृक्षरा ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते ॐसुपां सुपो भवन्तीति वक्तव्यम्ॐ। धुरि दक्षिणायाः। दक्षिणायामिति प्राप्ते ॐतिडां तिङो भवन्तीति वक्तव्यम्ॐ। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते लुक्—आर्द्रे चर्मन्। लोहिते चर्मन्। चर्मणीति प्राप्ते। (२)हविर्धाने यत्सुन्वन्ति सामिधेनीरन्वाह। यस्मिन् सुन्वन्ति तस्मिन् सामिधेनीरिति प्राप्ते। पूर्वसवर्णः—धीती मती। सुष्टुती। धीत्या मत्या सुष्टुत्या इति प्राप्ते। आ—उभा यन्तारौ। उभौ यन्तारौ इति प्राप्ते। आत्—न ताद् ब्राह्मणाद् निन्दामि। तान् ब्राह्मणानिति प्राप्ते। शे—न युष्मे वाजबन्धवः। अस्मे इन्द्राबृहस्पती। यूयं वयमिति प्राप्ते। यूयादेशो वयादेशश्च छान्दसत्वान्न भवति। या—उरुया। धृष्णुया। उरुणा धृष्णुनेति प्राप्ते। डा—नाभा

१. वाछन्दसीत्यारभ्य यावदित्यन्त. पाठो नास्ति पुस्तकान्तरे। २ हविर्धानायेति पाठान्तरम्॥

पृथिव्याम्। नाभौ पृथिव्यामिति प्राप्ते। ड्या-अनुष्ट्या च्यावयतात्। अनुष्टुभेति प्राप्ते। याच्-साधुया। साध्विति सोर्लुकि प्राप्ते। आल्-वसन्ता यजेत। वसन्त इति प्राप्ते। ॐइयाडियाजीकाराणामुपसंख्यानम्ॐ। इया-उर्विया परिधानम्। दार्विया। उरुणा दारुणेति प्राप्ते। डियाच्-सुक्षेत्रिया। सुगात्रिया। सुक्षेत्रिणा सुगात्रिणेति प्राप्ते। ईकारः-दृतिं न शुष्कं सरसी शयानम्। सरसि शयानमिति प्राप्ते। ॐआड्याजयाराणामुपसंख्यानम्ॐ। आङ्-प्रबाहवा। प्रबाहुनेति प्राप्ते। अयाच्-स्वप्नया सच सेवनम्। स्वप्नेनेति प्राप्ते। अयार्-सिन्धुमिव नावया। नावेति प्राप्ते(१)।

अमो मश् ॥ ४० ॥

अम् इति मिबादेशो गृह्यते। तस्य छन्दसि विषये मशादेशो भवति। वधीं वृत्रम्। क्रमीं वृक्षस्य शाखाम्(२)। लुङि, बहुलं छन्दस्यमाङ्योगेऽपीत्यडागमाभावः। शित्करणं सर्वादेशार्थम्। मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात्॥

लोपस्त आत्मनेपदेषु ॥ ४१ ॥

आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपो भवति। देवा अदुह्र। गन्धर्वाप्सरसो अदुह्र। अदुह्रतेति प्राप्ते। दुहामश्विभ्यां पयो अघ्न्येयम्। दुग्धामिति प्राप्ते। दक्षिणतः शये। शेत इति प्राप्ते। अपीत्यधिकारान्न भवति-तत्र आत्मानमनृतं कुरुते। आत्मनेपदेष्विति किम्? वत्स दुहन्ति कलशं चतुर्बिलम्॥

ध्वमो ध्वात् ॥ ४२ ॥

छन्दसि विषये ध्वमो ध्वादित्ययमादेशो भवति। अन्तरेवोष्माणं वारयध्वात्। वारयध्वमिति प्राप्ते॥

यजध्वैनमिति च ॥ ४३ ॥

यजध्वमित्येतस्य एनमित्येतस्मिन् परतो मकारलोपो निपात्यते वकारस्य च यकारश्छन्दसि विषये। यजध्वैनं प्रियमेधाः। यजध्वमेनमिति प्राप्ते॥

तस्य तात् ॥ ४४ ॥

तशब्दस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने तादित्ययमादेशो भवति। गात्रंगात्रमस्या नूनं कृणुतात्। कृणुतेति प्राप्ते। ऊवध्यं गोहं पार्थिवं खनतात्। खनतेति प्राप्ते। अस्नारक्षः संसृजतात्। संसृजतेति प्राप्ते। सूर्यं चक्षुर्गमयतात्। गमयतेति प्राप्ते॥

तप्तनप्तनथनाश्च ॥ ४५ ॥

तस्येति वर्तते। छन्दसि विषये तस्य स्थाने तप् तनप् तन थन इत्येते आदेशा भवन्ति। तप्-शृणोत ग्रावाणः। शृणुतेति प्राप्ते। सुनोत। सुनुतेति प्राप्ते। तनप्-

---

१. "अयारिति रेफ उपोत्तमं रितीत्युपोत्तमस्योदात्तार्थ इति क्वचित्पाठः। २. अक्षिषमक्रमिषमिति प्राप्ते इत्यधिकं क्वचित्॥

सवरत्ना दधातन । धत्तेति प्राप्ते । तन-जुजुष्टन । जुषतेति प्राप्ते(१) । छान्दसत्वात्, श्लु । थन-यदिष्टन । यदिच्छतेति प्राप्ते । पित्करणमङित्त्वार्थम् ॥

इदन्तो मसि ॥ ४६ ॥

छन्दसि विषये मसित्यय शब्द इकारान्तो भवति । मस' सकारान्तस्य इकारागमो भवति, तद्ग्रहणेन गृह्यत इत्यर्थः । पुनस्त्वा दीपयामसि । दीपयाम इति प्राप्ते । शलभ भञ्जयामसि । भञ्जयाम इति प्राप्ते । त्वयि रात्रिं वासयामसि । वासयाम इति प्राप्ते ॥

क्त्वो यक् ॥ ४७ ॥

क्त्वा इत्येतस्य यगागमो भवति छन्दसि विषये । दत्त्वाय सविता धिय । दत्त्वेति प्राप्ते । क्त्वापिच्छन्दसीत्यस्यानन्तरमिदं कस्मान्नोच्यते ? समास इति तत्रानुवर्त्तते ॥

इष्ट्वीनमिति च ॥ ४८ ॥

इष्ट्वीनमित्यय शब्दो निपात्यते छन्दसि विषये । यजे क्त्वाप्रत्ययान्तस्य ईनमादेशोऽन्त्यस्य निपात्यते । इष्ट्वीन देवान् । इष्ट्वा देवानिति प्राप्ते ॥ पीत्वीनमित्यपीष्यते ॥ चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धम् ॥

स्नात्व्यादयश्च ॥ ४९ ॥

स्नात्वी इत्येवमादय शब्दा निपात्यन्ते छन्दसि विषये । स्नात्वी मलादिव । स्नात्वेति प्राप्ते । पीत्वी सोमस्य वावृधे । पीत्वेति प्राप्ते । प्रकारार्थोयमादिशब्द ॥

आज्जसेरसुक् ॥ ५० ॥

अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवति छन्दसि विषये । ब्राह्मणास' पितर' सोम्यास । ब्राह्मणा सोम्या इति प्राप्ते । ये पूर्वासो य उ परास इत्यत्र परत्वादसुकि पुन प्रसङ्गविज्ञानाच्छीभाव प्राप्त' । सकृद्गतौ विप्रतिषेधे यद् बाधित तद्बाधितमेवेति न भवति ॥

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ॥

छन्दसीत्यत प्रभृति निवृत्तम् । अश्व क्षीर वृष लवण इत्येतेषामङ्गानामात्मप्रीतिविषय क्यचि परतोऽसुगागमो भवति । अश्वस्यति वडवा । क्षीरस्यति माणवक । वृषस्यति गौ । लवणस्यत्युष्ट्र । आत्मप्रीताविति किम् ? अश्वीयति । क्षीरीयति । लवणीयति ॥ ॐअश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम्ॐ । ॐक्षीरलवणयोर्लालसायामिति वक्तव्यम्ॐ । तृष्णातिरेको लालसा । अन्यत्रात्मप्रीतावपि न भवति । अपर आह-ॐसर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्य ॐ । दध्यस्यति, मध्वस्यति, इत्येवमाद्यर्थम् । अपर आह-ॐसुग्वक्तव्य ॐ । दधिस्यति, मधुस्यति, इत्येवमाद्यर्थम् ॥

( १ ) जुषेरनुदात्तत्वाज्जषध्वमिति प्राप्ते इति युक्त पाठ ।

आमि सर्वनाम्नः सुट् । ५२ ॥

आदिति वर्त्तते ॥ अवर्णात् सर्वनाम्न उत्तरस्यामः सुडागमो भवति । सर्वेषाम् । विश्वेषाम् । येषाम् । तेषाम् । सर्वासाम् । यासाम् । तासाम् । आदित्येव । भवताम् । आमीति षष्ठीबहुवचनं गृह्यते, न कैराम् नयाम्नीम्य इति, तस्य हि परत्वादाड्याट् स्याटो भवति । अथ घादामुः, आमश्च छिटि, न तौ सर्वनाम्नः स्तः । सानुबन्धका विति वा न गृह्येते । आमीति सप्तमीनिर्देश उत्तरार्थः । इह तु सर्वनाम्न इति पञ्चमीनिर्द्देशात्तस्मादित्युत्तरस्येति षष्ठीप्रक्लृप्तिर्भविष्यति ॥

त्रेस्त्रयः ॥ ५३ ॥

त्रि इत्येतस्य आमि परे त्रय इत्ययमादेशो भवति । त्रयाणाम् ॥ त्रीणामित्यपि छन्दसीष्यते । त्रीणामपि समुद्राणामिति ॥

ह्रस्वनद्यापो नुट् ॥ ५४ ॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चोत्तरस्यामो नुडागमो भवति । ह्रस्वान्तात्तावत्-वृक्षाणाम् । प्लक्षाणाम् । अग्नीनाम् । साधूनाम्(१) । कर्तृणाम्(२) । नद्यन्तात्-कुमारीणाम् । किशोरीणाम् । गौरीणाम् । शार्ङ्गरवीणाम् । लक्ष्मीणाम् । ब्रह्मबन्धूनाम् । वीरबन्धूनाम् । आबन्तात्-खट्वानाम् । मालानाम् । बहुराजानाम् । कारीषगन्ध्यानाम् ॥

षट्चतुर्भ्यश्च ॥ ५५ ॥

षट्संज्ञकेभ्यश्चतुःशब्दाच्चोत्तरस्यामो नुडागमो भवति । षण्णाम् । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् । चतुर्णाम् । रेफान्तायाः सङ्ख्यायाः षट्संज्ञा न विहिता । षड्भ्यो लुगिति लुग् मा भूत् । बहुवचननिर्द्देशादत्र संख्याप्रधानस्य ग्रहणं भवति—परमषण्णाम् । परमपञ्चानाम् । परमसप्तानाम् । परमचतुर्णाम् । उपसर्जनीभूतायास्तु सङ्ख्याया न भवति-प्रियषषाम् । प्रियपञ्चाम् । प्रियचतुरामिति ॥

श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥

श्री ग्रामणी इत्येतयोश्छन्दसि विषये आमो नुडागमो भवति । श्रीणामुदारो धरुणो रयीणाम् । अन्यत्र सूतग्रामणीनाम् । श्रीशब्दस्य, वामीति विकल्पेन नदीसंज्ञा । तत्र नित्यार्थं वचनम् । सूतग्रामणीनामिति यदा सूताश्च ते ग्रामण्यश्च सूतग्रामण्यो भवन्ति तदर्थमिदं वचनम् । यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि । सूतग्रामणि च सूतग्रामणि च सूतग्रामणि चेति सूतग्रामणीनामिति, तदा ह्रस्वादित्येव सिद्धम् ॥

गोः पादान्ते ॥ ५७ ॥

गो इत्येतस्मादृक्पादान्ते वर्त्तमानादुत्तरस्यामो नुडागमो भवति । विद्मा हि त्वा त्वपतिं शूरगोनाम् । पादान्त इति किम् ? गवां गोत्रमुदसृजो यदङ्गिरः । सर्वे विध-

(१) वायूनां, इति पण्डितपत्रे ॥ (२) कर्तृणां इति बहुषुपुस्तकेषु अस्ति ।

यश्छन्दसि विकल्प्यन्त इति पादान्तेऽपि क्वचिन्न भवति-हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥

इदितो नुम् धातोः ॥ ५८ ॥

इदितो धातोर्नुमागमो भवति । कुडि-कुण्डिता । कुण्डितुम् । कुण्डितव्यम् । कुण्डा । हुडि-हुण्डिता । हुण्डितुम् । हुण्डितव्यम् । हुण्डा । इदित इति किम् ? पचति । पठति । अयं धातूपदेशावस्थायामेव नुमागमो भवति । कुण्डा हुण्डेति, गुरोश्च हलः इत्यकारप्रत्ययो यथा स्यात् । तथाहि-धिन्विकृण्व्योरच्चेति प्रत्ययविधावेव नुमनुषक्तयोर्ग्रहणम् । धातुग्रहणं चह क्रियते धातूपदेशकाले एव नुमागमो यथा स्यादित्येवमर्थम् । तासिसिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते । अमस्तेत्येवमादौ हि, हल इत्येति क्वचिद्विधानसामर्थ्याद्धकारलोपो न भवति । मन्तेत्यत्राप्यसिद्धवदत्राभादिति टिलोपस्यासिद्धत्वाद्धलोपो न भवति । इह कस्मान्न भवति-भेत्ता छेत्तेति ? इदिता समुदायस्यत्साद्देतीविद्य नास्ति । अवयवशोऽपी संज्ञायां सत्यां, णो पादान्त इतोऽन्तग्रहणमनुवर्त्तयितव्यम् । तेनान्तेदितो धातवो गृह्यन्ते ॥

शे मुचादीनाम् ॥ ५९ ॥

शे प्रत्यये परतो मुचादीनां नुमागमो भवति । मुच्लृ-मुञ्चति । लुप्लृ-लुम्पति । विद्लृ-विन्दति । लिपि-लिम्पति । सिच् सिञ्चति । कृती-कृन्तति । खिद्-खिन्दति । पिश-पिंशति । श इति किम् ? मोक्ता । मोक्तुम् । मोक्तव्यम् । मुचादीनामिति किम् ? तुदति । नुदति । ॐशे तृम्फादीनामुपसंख्यानं कर्त्तव्यम्ॐ । के पुनस्तृम्फादयः ? तृफ तृम्फ तृप्तौ, दृफ दृम्फ उत्क्लेशे । गुफ गुम्फ ग्रन्थे । उभ उम्भ पूरणे, शुभ शुम्भ शोभार्थे, इत्यत्र ये सानुषङ्गास्ते तृम्फादयः, स्तेषामनिदितां हल उपधायाः क्ङितीत्यनुनासिकलोपे कृते नुम्विधीयते । स च विधानसामर्थ्यान्न लुप्यते । तृम्फति । दृम्फति । गुम्फति । उम्भति । शुम्भति । ये तु निरनुषङ्गास्तेषां तृफति । दृफति गुफति शुभतीत्येव भवति ।

मस्जिनशोर्झलि ॥ ६० ॥

मस्जि नशि इत्येतयोरङ्गयोर्झलादौ प्रत्यये नुमागमो भवति । मङ्क्ता । मङ्क्तुम् । मङ्क्तव्यम् । नंष्टा । नंष्टुम् । नंष्टव्यम् । झलीति किम् ? मज्जनम् । नशिता मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम् ॥ मग्न । मग्नवान् ॥

रधिजभोरचि ॥ ६१ ॥

रधि जभि इत्येतयोरजादौ प्रत्यये नुमागमो भवति । रन्धयति । रन्धकः । साधु रन्धी । रन्धो वर्त्तते । जम्भयति । जम्भकः । साधुजम्भी । जम्भञ्जम्भम् । जम्भो वर्त्तते । परापि सती वृद्धिर्नुमा बाध्यते, नित्यत्वात् । अचीति किम् ? रद्धा । जब्धम् ।

नेटयलिटि रधेः ॥ ६२ ॥

इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति। रधिता। रधितुम्। रधितव्यम्। इटीति किम्? रन्धनम्। रन्धकः। अलिटीति किम्? ररन्धिव। ररन्धिम। नुमि कृते सयोगान्तत्वादसयोगाल्लिट् किदिति कित्त्वं नास्तीति नलोपो न भवति। अथ कृतौ कथं भवितव्यम्? रेधिवानीति। कथम्? धृत्वाभ्यासलोपयोः कृतयोरिडागमः क्रियते। ततो नुमागमस्तस्यौपदेशिकलिडाश्रयोऽलोपः। अथ, इटि लिटीत्येव नियमः कस्मान्न क्रियते—लिट्येवेटि, नान्यत्रेति? विपरीतमप्यवधारणं सम्भाव्यते—इट्येव लिटि, नान्यत्रेति। तथा हि सति ररन्धेत्यत्र न स्यात्, रधितेत्यत्र च स्यादेव ॥

रभेरशब्लिटोः ॥ ६३ ॥

रभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति। आरम्भी। आरम्भक। साध्वारम्भी। आरम्भमारम्भम्। आरम्भो वर्त्तते। अशब्लिटोरिति किम्? आरभते। आरेभे। अचीत्येव। आरब्धा ॥

लभेश्च ॥ ६४ ॥

लभेश्चाजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति। लम्भयति। लम्भकः। साधुलम्भी। लम्भलम्भम्। लम्भो वर्त्तते। अशब्लिटोरित्येव। लभते। लेभे। अचीत्येव। लब्धा। लभेश्च पृथग्योगकरणमुत्तरार्थम् ॥

आङो यि ॥ ६५ ॥

आङ उत्तरस्य लभेर्यकारादिप्रत्ययविषये नुमागमो भवति। आलम्भ्यो गौः। आलम्भ्या वडवा। प्राक्प्रत्ययोत्पत्तेर्नुमि कृते विहतमदुपधत्वमिति, ऋहलोर्ण्यदिति, ण्यत्प्रत्ययस्तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनान्तस्वरितत्वं भवति। यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात्। आङ इति किम्? लभ्य(१)। कथमग्निष्टोम आलभ्य इति? सर्वे विधयश्छन्दसि विकल्प्यन्ते। अथवा आलभ्य इत्यत्र नुमि कृतेऽनुपज्ञलोपः क्रियते ॥

उपात् प्रशंसायाम् ॥ ६६ ॥

उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति। उपलम्भ्या भवता विद्या। उपलम्भ्यानि धनानि। ण्यत्प्रत्ययान्तत्वादन्तस्वरितत्वमेव। प्रशंसायामिति किम्? उपलभ्यमस्माद्वृषलात् किंचित्। पोरदुपधादिति यत्प्रत्ययान्तमिदम् ॥

उपसर्गात् खल्घञोः ॥ ६७ ॥

उपसर्गादुत्तरस्य लभेः खल्घञोः परतो नुमागमो भवति। ईषत्प्रलम्भः।

(१) "अदुपधत्वाद्यत्प्रत्ययान्तमेतत्। यतीति किम्? आलभ्या" इति पुस्तकान्तरेऽधिकम्।

सुप्रलभः। दुष्प्रलम्भः। घञि-प्रलम्भो, विप्रलम्भः। सिद्धे सत्यारम्भो नियमार्थः—उपसर्गादेव लभेः, खल्घञोः परतो नुमागमो भवति, नान्यत्र। ईषल्लभः। लाभो वर्त्तते॥

## न सुदुर्भ्यां केवलाभ्याम्॥ ६८॥

सु दुरित्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यामुपसृष्टस्य लभेः खल्घञोः परतो नुमागमो न भवति। सुलभम्। दुर्लभम्। घञि—सुलाभो दुर्लाभः। केवलाभ्यामिति किम्? सुप्रलम्भः। दुष्प्रलम्भः। सुदुर्भ्यामिति तृतीयां मत्वा केवलग्रहणं क्रियते। पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः। अतिसुलभमित्यत्र कर्मप्रवचनीयत्वादतेः केवल एव सुशब्द उपसर्ग इति भवति प्रतिषेधः। यदा त्वतिशब्दो न कर्मप्रवचनीयस्तदा नुम्भवत्येवातिसुलम्भ इति। पञ्चमीनिर्देशपक्षेऽप्येवमर्थं केवलग्रहणं कर्त्तव्यम्॥

## विभाषा चिण्णमुलोः॥ ६९॥

चिण् णमुल् इत्येतयोर्विभाषा लभेर्नुम्भवति। अलाभि। अलम्भि। लाभम् २। लम्भम् २। व्यवस्थितविभाषा चेयं, तेनानुपसृष्टस्य विकल्पः, उपसृष्टस्य नित्यं नुम्भवति—प्रालम्भि। प्रलम्भम्॥

## उगिदचां सर्वनामस्थानेऽधातोः॥ ७०॥

उगितामङ्गानां धातुवर्जितानामञ्चतेश्च सर्वनामस्थाने परतो नुमागमो भवति। भवतु-भवान्। भवन्तौ। भवन्तः। ईयसुन्-श्रेयान्। श्रेयांसौ। श्रेयांसः। शतृ-पचन्। पचन्तौ। पचन्तः। अञ्चतेः-प्राङ्। प्राञ्चौ। प्राञ्चः। उगिदचामिति किम्? दृषद्। दृषदौ। दृषदः। सर्वनामस्थान इति किम्? भवतः पश्य। श्रेयसः पश्य। अञ्चतिग्रहणं नियमार्थम्, अञ्चतेरेव धातोर्नान्यस्य मा भूत्—उखास्रत्। पर्णध्वत्। अधातोरिति किम्? अधातुभूतपूर्वस्य यथा स्यात्-गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः, गोमान्। अत्र हि धातुत्वादञ्चतिग्रहणाच्च स्यात्॥

## युजेरसमासे॥ ७१॥

युजेरसमासे सर्वनामस्थाने परतो नुमागमो भवति। युङ्। युञ्जौ। युञ्जः। असमास इति किम्? अश्वयुक्। अश्वयुजौ अश्वयुजः। युजेरितीकारनिर्देशात्, युज समाधावित्यस्य ग्रहणं न भवति-युजमापन्ना ऋषयः॥

## नपुंसकस्य झलचः॥ ७२॥

नपुंसकस्य झलन्तस्याजन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति। उदश्विन्ति। शकृन्ति। यशांसि। पयांसि। अजन्तस्य-कुण्डानि। वनानि। त्रपूणि। जतूनि। नपुंसकस्येति किम्? अग्निचिद् ब्राह्मणः। झलच इति किम्? बहुपुरि। बहुधुरि। विमलदिवि। चत्वारि। अहानि उगितो झलन्तस्य नपुंसकस्य परत्वादने-

नैव नुमभवति। श्रेयांसि। भूयांसि। कुर्वन्ति। कृषन्ति-ब्राह्मणकुलानि। ॐबहूर्जि प्रतिषेधो वक्तव्य ॐ। बहूर्जि ब्राह्मणकुलानि। अन्त्यात् पूर्वं नुममेक इच्छन्ति। बहूर्ञ्जि ब्राह्मणकुलानि॥

इकोऽचि विभक्तौ ॥ ७३ ॥

इगन्तस्य नपुंसकस्याङ्गस्याजादौ विभक्तौ नुमागमो भवति। त्रपुणी। जतुनी। तुम्बुरुणी। त्रपुणे। जतुने। तुम्बुरुणे। इक इति किम्? कुण्डे। पीठे। अज्ग्रहणमुत्तरार्थम्। यत्रेव, तत्रैव कर्त्तव्यम्। इह तु करणे प्रयोजनं-हे त्रपो इत्यत्र नुम् मा भूदिति। न ङिसम्बुद्ध्योरिति नलोपप्रतिषेधः स्यात्। ननु च, नलुमताङ्गस्येति प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव नास्ति? एतदेवाज्ग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधोऽत्र न भवतीति। तथाच सम्बुद्धिगुणः क्रियते। विभक्ताविति किम्? तौम्बुरवं चूर्णम्॥

इकोऽचि व्यञ्जने माभूदस्तु लोपः स्वरः कथम्।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति॥
रायास्व तिसृभावश्च व्यवधानान्नुमा अपि।
नुट् वाच्य उत्तरार्थं तु इह किंचित् त्रपो, इति॥

तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ॥ ७४ ॥

तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कनपुंसकलिङ्गमिगन्तं गालवस्याचार्यस्य मतेन पुंवद्भवति। यथा पुंसि ह्रस्वनुमौ न भवतस्तद्वदत्रापि न भवत इत्यर्थः। ग्रामण्यब्राह्मण। ग्रामणि ब्राह्मणकुलम्। ग्रामण्या ब्राह्मणकुलेन। ग्रामणिना ब्राह्मणकुलेन। ग्रामण्ये ब्राह्मणकुलाय। ग्रामणिने ब्राह्मणकुलाय। ग्रामण्यो ब्राह्मणकुलात्। ग्रामणिनो ब्राह्मणकुलात्। ग्रामण्यो ब्राह्मकुलस्य। ग्रामणिनो ब्राह्मणकुलस्य। ग्रामण्योर्ब्राह्मणकुलयोः। ग्रामणिनोर्ब्राह्मणकुलयोः। ग्रामण्यां ब्राह्मणकुलानाम्। नुमचिरेति पूर्वविप्रतिषेधेन नुट्। ग्रामणीनां ब्राह्मणकुलानाम्। ग्रामण्यां ब्राह्मणकुले। ग्रामणिनि ब्राह्मणकुले। शुचिर्ब्राह्मण। शुचि ब्राह्मणकुलम्। शुचिना ब्राह्मणकुलेन २। शुचये ब्राह्मणकुलाय। शुचिने ब्राह्मणकुलाय। शुचेर्ब्राह्मणकुलात्। शुचिनो ब्राह्मणकुलात्। शुचेर्ब्राह्मणकुलस्य। शुचिनो ब्राह्मणकुलस्य। शुच्योर्ब्राह्मणकुलयोः। शुचिनोर्ब्राह्मणकुलयोः। शुचौ ब्राह्मणकुले। शुचिनि ब्राह्मणकुले। तृतीयादिष्विति किम्? ग्रामणिनी ब्राह्मणकुले। शुचिनी ब्राह्मणकुले। भाषितपुंस्कमिति किम्? त्रपुणे। जतुने। इह कस्मान्न भवति-पीलुर्वृक्ष, पीलु फलं पीलुने फलायेति? समानायामाकृतौ यद्भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावः। इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य। फलाकृतिर्नपुंसके। तदेतदेव कथं भवति भाषितपुंस्कमिति? भाषित. पुमान् येनैकस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते। तदेगाऽभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम्। तस्य प्रातिपदिकं यच्छब्दरूप

तदपि भाषितपुंस्कमिति । इक इत्येव । कीलालपा ब्राह्मणः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन । अचीत्येव । ग्रामणिभ्यां ब्राह्मणकुलाभ्याम् ॥

### अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ ७५ ॥

अस्थि दधि सक्थि अक्षि इत्येतेषां नपुंसकानां तृतीयादिष्वजादिषु विभक्तिषु परतोऽनङित्ययमादेशो भवति, स चोदात्तो भवति । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । सक्थ्ना । सक्थ्ने । अक्ष्णा । अक्ष्णे । अस्थ्यादय आद्युदात्तास्तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यादित्युदात्तवचनम् । तत्र भसंज्ञायामल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति ॥ एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्याप्यङ्गस्य तदन्तग्रहणमिष्यते ॥ प्रियसक्थ्ना ब्राह्मणेन । प्रियदध्ना(१) तृतीयादिष्विति किम् ? अस्थिनी । दधिनी । अचीत्येव । अस्थिभ्याम् । दधिभ्याम् ॥

### छन्दस्यपि दृश्यते ॥ ७६ ॥

अस्थिदधिसक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते । यत्र विहितस्ततोऽन्यत्रापि दृश्यते । अचीत्युक्तमनजादावपि दृश्यते—इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः । तृतीयादिष्वित्युक्तमतृतीयादिषु दृश्यते—अस्थान्युत्कृत्य जुहोति । विभक्तावित्युक्तमविभक्तावपि दृश्यते—अस्थन्वता लाङ्गलेन । अस्थन्वन्तं यदनस्था बिभर्ति ॥

### ई च द्विवचने ॥ ७७ ॥

द्विवचने परतश्छन्दसि विषयेऽस्थ्यादीनामीकारादेशो भवति, स चोदात्तः । अक्षी ते इन्द्र पिङ्गले कपेरिव । अक्षीभ्यां ते नासिकाभ्याम् । अक्षी इत्यत्र नुम्परत्वादीकारेण बाध्यते तत्र कृते, सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति पुनर्नुम्न क्रियते ॥

### नाभ्यस्ताच्छतुः ॥ ७८ ॥

अभ्यस्तादङ्गादुत्तरस्य शतुर्नुम्न भवति । ददत् । ददतौ । ददतः । दधत् । दधतौ । दधतः । जक्षत् । जक्षतौ । जक्षतः । जाग्रत् । जाग्रतौ । जाग्रतः । शतुरनन्तर ईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते ॥

### वा नपुंसकस्य ॥ ७९ ॥

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य वा नुमागमो भवति । ददति ददन्ति कुलानि । दधति दधन्ति कुलानि । जक्षति जक्षन्ति कुलानि । जाग्रति जाग्रन्ति कुलानि ॥

### आच्छीनद्योर्नुम् ॥ ८० ॥

अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः । तुदती कुले ।

---

(१) "प्रियास्थ्ने । प्रियदध्ने । प्रियसक्थ्ना । प्रियसक्थ्ने । प्रियाक्ष्णा । प्रियाक्ष्णे । इति क्वचित्पाठः ।

तुदन्ती कुले । तुदती ब्राह्मणी । तुदन्ती ब्राह्मणी । याती कुले । यान्ती कुले । याती ब्राह्मणी । यान्ती ब्राह्मणी । करिष्यती कुले । करिष्यन्ती कुले । करिष्यती ब्राह्मणी । करिष्यन्ती ब्राह्मणी । अत्र अन्तरङ्गत्वादादेशे कृते व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुम् । उभयत आश्रयणे नान्तादिवदित्यन्तादिवद्भावोऽपि नास्ति भूतपूर्वगत्याश्रयणे वाऽदती घ्नतीत्येवमादिष्वतिप्रसङ्ग इति । अत्र समाधिं केचिदाहु -शतुरवयवे शतृशब्दो वर्तते । अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति(१) । अपरे पुनराहु -आदित्येतेन शीनद्यावेव विशेष्येते । अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः शत्रन्तस्य नुम्भवतीति । तत्र, येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति तकारेणैवाव्यवधानमाश्रयिष्यते । आदिति किम् ? कुर्वती, सुन्वती । शीनद्योरिति किम् ? तुदताम् । तुदताम् ॥

शप्श्यनोर्नित्यम् ॥ ८१ ॥

शप् श्यन् इत्येतयोः शतु शीनद्योः परतो नित्यं नुमागमो भवति । पचन्ती कुले । पचन्ती ब्राह्मणी । दीव्यन्ती कुले । दीव्यन्ती ब्राह्मणी । सीव्यन्ती कुले । सीव्यन्ती ब्राह्मणी । नित्यग्रहणं वेत्यस्याधिकारस्य निवृत्त्यर्थम् । इहारम्भसामर्थ्यान्नित्यमुत्तत्र विकल्प एवेत्याशङ्क्येत ॥

सावनडुहः ॥ ८२ ॥

सौ परतोऽनडुहोऽङ्गस्य नुमागमो भवति । अनड्वान् । हे अनड्वन् । अत्र केचिदाम्यधिकारादाममो कृतयोर्नुमं कुर्वन्ति । तेन नुमाममागमौ न बाध्येते, आममभ्यां च नुमिति । अपरे तु सत्यपि सामान्यविशेषत्वे आममोर्नुमश्च समावेशमिच्छन्ति । न बाध्यबाधकभाव, यथा चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोरिति ॥

दृक्स्ववस्स्वतवसां छन्दसि ॥ ८३ ॥

दृक स्ववस् स्वतवस् इत्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये । ईदृङ् । तादृङ् । यादृङ् । सदृङ् । स्ववान् । स्वतवान् पायुरग्ने ॥

दिव औत् ॥ ८४ ॥

दिवित्येतस्य सौ परत औदित्ययमादेशो भवति । द्यौः । दिविति प्रातिपदिकमस्ति निरनुबन्धकम् । धातुस्तु सानुबन्धकः स इह न गृह्यते—अक्षद्यूः ॥

पथिमथ्यृभुक्षामात् ॥ ८५ ॥

पथिन् मथिन् ऋभुक्षिन् इत्येतेषामङ्गानां सौ परत आकार आदेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । स्थानिन्यनुनासिकेऽपि आकारोऽनुनासिको न भवति । भाव्यमानेन सवर्णानां ग्रहणं न भवतीति(२) शुद्धो ह्ययमुच्चार्यते ॥

---

(१) "यथा ग्रामो दग्ध इति ग्रामैकदेशो ग्रामशब्दो निर्दिश्यते" इति क्वचिदधिक पाठ उपलभ्यते । (२) भाव्यमानोऽण् सवर्णान् न गृह्णातीति पा० ॥

इतोत्सर्वनामस्थाने ॥ ८६ ॥

पथ्यादीनामिकारस्य स्थाने अकारादेशो भवति सर्वनामस्थाने परतः। पन्थाः। पन्थानौ। पन्थानः। पन्थानम्। पन्थानौ। मन्थाः। मन्थानौ। मन्थानः। मन्थानम्। मन्थानौ। ऋभुक्षाः। ऋभुक्षाणौ। ऋभुक्षाणः। ऋभुक्षाणम्। ऋभुक्षाणौ। आदिति वर्त्तमाने पुनरद्वचनं पपूर्वार्थम्। ऋभुक्षणमित्यत्र, वा षपूर्वस्य निगम इति दीर्घविकल्पः॥

थो न्थः ॥ ८७ ॥

पथिमथोस्थकारस्य स्थाने न्थ इत्ययमादेशो भवति सर्वनामस्थाने परतः। पन्थाः। पन्थानौ। पन्थानः। मन्थाः। मन्थानौ। मन्थानः॥

भस्य टेर्लोपः ॥ ८८ ॥

पथ्यादीनां भसञ्ज्ञकानां टेर्लोपो भवति। पथः। पथा। पथे। मथः। मथा। मथे। ऋभुक्षः। ऋभुक्षा। ऋभुक्षे। सर्वनामस्थान इत्यनुवर्त्तमानमपि विरोधादिह न सम्बध्यते॥

पुंसोऽसुङ् ॥ ८९ ॥

पुंस इत्येतस्य सर्वनामस्थाने परतोऽसुङित्ययमादेशो भवति। पुमान्। पुमांसौ। पुमांसः (१)। इह परमपुमानिति प्रागेव विभक्त्युत्पत्तेः समासान्तोदात्तत्वमुत्पन्नायां विभक्तौ असुङित्यनिष्टः स्वरः प्राप्नोति। तदर्थमसुङ्ङुपदेशियद्वचनं कर्त्तव्यम्। तेन परमपुमानित्यन्तोदात्तो भवति। पुमानित्यत्र पुनराद्युदात्त एव॥

गोतो णित् ॥ ९० ॥

गोशब्दात् परं सर्वनामस्थानं णिद्वद्भवति। णित्कार्याणि तत्र भवन्तीत्यर्थः। गौः। गावौ। गावः। तपरकरणं किम्? चित्रगुः। शबलगुः। कथं, हे चित्रगो, हे शबलगव(२) इति, अन्तर्वृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति सबुद्धिलोपोर्गुणे कृते णित्त्वं न भवति। अथवा गोत इति सम्बन्धलक्षणा षष्ठी। गोतः संबन्धि यत्सर्वनामस्थानमिति। यच्च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद्गोः सर्वनामस्थानमित्युच्यते। चित्रगुशब्दात्तु यत् सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह। तपरकरणं तु निर्देशार्थमेव। केचिदोतो णिदिति पठन्ति। द्योशब्दादपि यत्सर्वनामस्थानं विद्यते तदर्थम्। द्यौः। द्यावौ। द्यावः। गोत इत्येव तपरकरणनिर्देशादोकारान्तोपलक्षणं द्रष्टव्यम्। वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम्॥

णलुत्तमो वा ॥ ९१ ॥

उत्तमो णलवा णिद् भवति। णित्कार्यं तत्र वा भवतीत्यर्थः। अहं चकर। अहं चकार। अहं पपच। अहं पपाच॥

(१) सर्वनामस्थान इत्येव पुंस पश्य इत्यधिक पुस्तकान्तरे॥ (२) हे चित्रगव इति पाठान्तरम्॥

## सख्युरसंबुद्धौ ॥ ९२ ॥

असंबुद्धौ यः सखिशब्दस्तस्मात्पर सर्वनामस्थानं णिद्भवति। सखायौ। सखायः। असंबुद्धाविति किम्? हे सखे॥

## अनङ् सौ ॥ ९३ ॥

सखिशब्दस्य सौ परतोऽनङित्ययमादेशो भवति स चेत्सुशब्दः संबुद्धिर्न भवति। सखा। असंबुद्धाविति किम्? हे सखे॥

## ऋदुशनस्पुरुदंसोऽनेहसां च(१) ॥ ९४ ॥

ऋकारान्तानामङ्गानामुशनस् पुरुदंसस् अनेहस् इत्येतेषां चाऽसंबुद्धौ सौ परतोऽनङादेशो भवति। कर्त्ता। हर्त्ता। माता। पिता। भ्राता। उशना। पुरुदंसा। अनेहा। असंबुद्धावित्येव। हे कर्त्तः। हे मातः। हे पितः। हे पुरुदंसः। हे अनेहः। हे उशनः। उशनसः संबुद्धावपि पक्षेऽनङ् इष्यते—हे उशनन्। न ङिसंबुद्ध्योरिति नलोपप्रतिषेधोऽपि पक्ष इष्यते—हे उशन। तथा चोक्तम्॥

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥

इति। तपरकरणमसन्देहार्थम्॥

## तृज्वत् क्रोष्टुः ॥ ९५ ॥

क्रोष्टुशब्दस्तुन्प्रत्ययान्तः सञ्ज्ञाशब्दः सर्वनामस्थानेऽसंबुद्धौ परतः तृज्वद्भवति। तृजन्तस्य यद्रूपं तदस्य भवतीत्यर्थः। रूपातिदेशोऽयम्। प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद्रूपं तदतिदिश्यते। तच्च क्रोष्टृ इत्येतदन्तोदात्तम्। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ। सर्वनामस्थान इत्येव। क्रोष्टून्। असंबुद्धावित्येव। हे क्रोष्टो॥

## स्त्रियां च ॥ ९६ ॥

असर्वनामस्थानार्थमारम्भः। स्त्रियां च क्रोष्टुशब्दस्य तृज्वद्भवति। क्रोष्ट्री। क्रोष्ट्रीभ्याम्। क्रोष्ट्रीभिः। क्रोष्टुशब्दं केचिद्गौरादिषु पठन्ति। ते ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति। तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतः पञ्चक्रोष्टृभी रथैरिति स्त्रीशब्दस्य (२) लुकि कृते न सिद्ध्यति। तत्र प्रतिविधेयम्। ये तु गौरादिषु न पठन्ति। तेषां स्त्रियामित्यर्थनिर्देशः, स्त्रियां वर्त्तमानः क्रोष्टुशब्दस्तृज्वद्भवति। कृतेऽतिदेशे, ऋन्नेभ्यो ङीबिति ङीप्प्रत्ययः। तत्रोदात्तयणो हल्पूर्वादित्यन्तोदात्त एव क्रोष्ट्रीशब्दो भवति॥

## विभाषा तृतीयादिष्वचि ॥ ९७ ॥

तृतीयादिषु विभक्तिष्वजादिषु क्रोष्टुर्विभाषा तृज्वद्भवति। क्रोष्ट्रा। क्रोष्टुना।

(१) पाठिकप्रत्येसर्वत्रपुरुदंश शब्द तालव्यान्तोदृश्यते॥ (२) स्त्रीप्रत्ययस्येति पाठान्तरम्॥

क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः । क्रोष्टोः । क्रोष्टरि । क्रोष्टौ । क्रोष्ट्रोः । क्रोष्ट्वोः । तृतीयादिष्विति किम् ? क्रोष्टून् । अचीति किम् ? क्रोष्टुभ्याम् । क्रोष्टुभिः ॥ ॐनुम्चिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ॐ नुमनुटौ भवतः ॐ । प्रियक्रोष्टुनेऽरण्याय । हितक्रोष्टुने वृषलकुलाय । नुट्-क्रोष्टूनाम् ॥

## चतुरनडुहोरामुदात्तः ॥ ९८ ॥

चतुर् अनडुह् इत्येतयोः सर्वनामस्थाने परत आमागमो भवति, स चोदात्तः । चत्वारः । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् । तदन्तविधिरत्रेष्यते । प्रियचत्वा । प्रियचत्वारौ । प्रियचत्वारः । प्रियानड्वान् । प्रियानड्वाहौ । प्रियानड्वाहः ॥ ॐअनडुहः स्त्रियां वेति वक्तव्यम् ॐ । अनडुही । अनड्वाही । गौरादिपाठात्सिद्धम् ॥

## अम् सम्बुद्धौ ॥ ९९ ॥

सम्बुद्धौ परतश्चतुरनडुहोरमागमो भवति । पूर्वस्यायमपवादः । हे प्रियचत्वः । हे प्रियानड्वन् ॥

## ॠत इद्धातोः ॥ १०० ॥

ॠकारान्तस्य धातोरङ्गस्य इकारादेशो भवति । किरति । गिरति । आस्तीर्णम् । विस्तीर्णम् । धातोरिति किम् ? पितॄणाम् । मातॄणाम् ॥ लाक्षणिकस्याप्यत्र ग्रहणमिष्यते । किरतेर्गिरतेरपि यथा स्यादिति तपरकरणं क्रियते(१) ॥

## उपधायाश्च ॥ १०१ ॥

उपधायाश्च ॠकारस्य इकारादेशो भवति । कीर्तयति । कीर्तयतः । कीर्तयन्ति ॥

## उदोष्ठ्यपूर्वस्य ॥ १०२ ॥

ओष्ठ्यः पूर्वो यस्माद् ॠकारादसावोष्ठ्यपूर्वस्तदन्तस्य धातोरङ्गस्य उकारादेशो भवति । पूर्ताः पिण्डाः । पुपूर्षति । मुमूर्षति । दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीत्यस्यापि भवति-वुवूर्षति ऋत्विजम् । प्रावुवूर्षति कम्बलम् । ओष्ठ्योऽत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन इह न भवति-समीर्णमिति भवति(२) । ॐइत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनॐ । आस्तरणम् । आस्तारकः । निपरणम् । निपारकः । निगरणम् । निगारकः ॥

## बहुलं छन्दसि ॥ १०३ ॥

छन्दसि विषये ॠकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति । ओष्ठ्यपूर्वस्येत्युक्तमनोष्ठ्यपूर्वस्यापि भवति-मित्रावरुणौ ततुरिः । दूरे ह्यध्वा जगुरिः । ओष्ठ्यपूर्वस्यापि न भवति-पप्रितमम् । क्वचिद् भवति-पपुरिः ॥

इति काशिकायां वृत्तौ सप्तमाध्यायस्य प्रथमः पादः ॥ ७ ॥ १ ॥

---

( १ ) तपरकरणमसन्देहार्थमित्यधिकं पुस्तकान्तरे ॥ ( २ ) क्वचिदयं पाठ उपलभ्यते-सचायम् "तेनेह न भवति-समीर्णमिति । ऋच्छतावितस्य सम्पूर्वस्य, यद्यपि समीमकार ओष्ठ्यःपूर्वोऽस्ति तथाप्यङ्गावयवो न भवतीति समीर्णमित्यत्र न भवति" इति ।

## ॥ अथ सप्तमाध्यायस्य द्वितीयः पादः ॥

### सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥

परस्मैपदे परे सिचि परतः इगन्तस्याङ्गस्य वृद्धिर्भवति। अचैषीत्। अनैषीत्। अलावीत्। अपावीत्। अकार्षीत्। अहार्षीत्। अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद् बाधते। न्यनुवीद्, न्यधुवीद् इत्यत्र कुटादित्वाद् ङित्त्वे सति प्रतिषिद्धायां वृद्धावुवङादेशः क्रियते। परस्मैपदेष्विति किम्? अच्योष्ट। अप्लोष्ट॥

### अतो ल्रान्तस्य ॥ २ ॥

रेफलकारौ यावतः समीपौ तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिर्भवति परस्मैपदपरे सिचि। क्षर—अक्षारीत्। त्सर—अत्सारीत्। ज्वल—अज्वालीत्। ह्मल—अह्मालीत्। अतो हलादेर्लघोरिति विकल्पस्यायमपवादः। अत इति किम्? न्यखोरीत्। न्यमीलीत्। ल्रान्तस्येति किम्? मा भवानशीत्। मा भवानटीत्। अन्तग्रहणं किम्? अवभ्रीत्। अश्वल्लीत्। अत्र यौ रेफलकारावङ्गस्यान्तौ न तावतः समीपौ॥

### वदव्रजहलन्तस्याचः ॥ ३ ॥

वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः। अवादीत्। अव्राजीत्। विकल्पबाधनार्थं वदिव्रजिग्रहणम्। हलन्तानाम्—अपाक्षीत्। अभैत्सीत्। अच्छैत्सीत्। अरौत्सीत्। अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिद्ध्यति। कथम्? वदिव्रजोरित्यत्र प्रथमयोगे अत इति स्थानी अनुवर्तते। ततो वदव्रज- इति सूत्रं तत्राङ्गेनाचो विशेष्यते। अङ्गस्याचः सिचि परतो वृद्धिर्भवति। तदेतद्धल्ग्रहणं हल्समुदायपरिग्रहार्थम्। इहापि स्यात्—अराङ्क्षीत् अभाङ्क्षीत्। अन्यथा हि, येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधाने स्यादनेकेन हला न स्यात्। उदवोढामुदवोढमित्यत्र, वहेः सिचि ढत्वसलोपादीनां पूर्वत्रासिद्धमित्यसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद्, ढलोपनिमित्तमोत्वम्। तत्र कृते पुनर्वृद्धिर्न भवति, कृतत्वात्। यत्र त्वकृता वृद्धिरोकारस्यैव तत्र भवति—सोदामित्रस्यापत्यं सौदामित्रिरिति॥

### नेटि ॥ ४ ॥

इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न भवति। अदेवीत्। असेवीत्। अकोषीत्। अमोषीत्। हलन्तस्येत्येव। अलावीत्। ननु च एतदप्यन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तं भवति। नैतदेवम्। अन्तरङ्गमपि गुणं वचनारम्भसामर्थ्याद् सिचि वृद्धिर्बाधते इत्युक्तम्॥

### ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ५ ॥

हकारान्तानां मकारान्तानां यकारान्तानामङ्गानां क्षण श्वस जागृ णि श्वि इत्येते-

ग्रामेदितां च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति। ग्रह-अग्रहीत्। स्यम—अस्यमीत्। व्यय-अव्ययीत्। टुवम-अवमीत्। क्षण-अक्षणीत्। श्वस्-अश्वसीत्। जागृ-अजागरीत्। णि-औनयीत्। ऐलयीत्। श्वि-अश्वयीत्। एदिताम्-रगे, अरगीत्। कखे-अकखीत्। ह्यन्तक्षणश्वसामेदितां च, अतो हलादेर्लघोरिति, विकल्पे प्राप्ते, प्रतिषेधः। जागृणिश्वीनां तु सिचि वृद्धिः प्राप्ता, सा च, नेटीति न प्रतिषिद्ध्यते। न चान्तरङ्गत्वादत्र पूर्वं गुणो भवति। सिचि वृद्धेरनवकाशत्वात्। यदि पूर्वं गुणः स्यादिह णिश्विग्रहणमनर्थकं स्यात्। गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात्। तस्मादिदमेव णिश्विग्रहणं ज्ञापकं न सिच्यन्तरङ्गमस्तीति। अथ जागृग्रहणं किमर्थम्? जाग्रोऽविचिण्णल्ङित्सु इति जागर्तेर्गुणो वृद्धेरपवादो विधीयते। स यथा, अचो ञ्णितीति वृद्धिं बाधते, तथा सिचि वृद्धिमपि बाधिष्यते? नैतदस्ति कृते गुणेऽतो ल्रान्तस्येति या वृद्धिः प्राप्नोति सा प्रतिषिद्ध्यते। अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते। यथा जागरयतीत्यत्रात उपधाया इत्यपि वृद्धिर्न भवति। तथा चिण्णलोः प्रतिषेधोऽर्थवान् भवति इति शक्यमिह जागृग्रहणमकर्तुम्। क्रियते विस्पष्टार्थम्॥

ऊर्णोतेर्विभाषा॥ ६॥

ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति। प्रौर्णवीत्। प्रौर्णावीत्। विभाषोर्णोरिति ङित्त्वपक्षे वृद्धिविकल्पोऽयम्। ङित्त्वपक्षे तु गुणवृद्ध्योरभावे उवङ् भवति—प्रौर्णुवीत्॥

अतो हलादेर्लघोः॥ ७॥

हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति। अकणीत्। अकाणीत्। अरणीत्। अराणीत्। अत इति किम्? अदेवीत्। असेवीत्। न्यकुटीत्, न्यपुटीत्, इत्यत्रात इत्यस्मिन्नसति स्थानिनिर्देशार्थमथ इत्येतदनुवर्तयितव्यम्। तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवतीति क्ङिति चेति प्रतिषेधो न स्यात्। हलादेरिति किम्? मा भवानशीत्। मा भवानटीत्। लघोरिति किम्? अतक्षीत्। अरक्षीत्। अथेह कस्मान्न भवति अचकासीदिति? येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति हला व्यवधानमाश्रितं, न पुनरचापि व्यवधानमिति वृद्धिर्न भवति। अथ पुनरेकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनेति कल्पने शक्यमकर्तुं लघोरिति, अतक्षीदित्यत्रानेकेन व्यवधानमिति न भविष्यति, तत् क्रियते विस्पष्टार्थम्। इटीत्येव। अपाक्षीत्॥

नेड्वशि कृति॥ ८॥

वशादौ कृति प्रत्यये परत इडागमो न भवति। वरतमनादौ प्रयोजनम्। ईशिता। ईशितुम्—ईश्वरः। दीपिता। दीपितुम्—दीप्रः। भसिता। भसितुम्—

भस्म । याचिता । याचितुम्—याच्ञा । वररमनादावित्युदाहरणप्रदर्शनार्थं, न परिगणनम् । तेन अमन्ताद्व इत्येवमादावपि हि प्रतिषेधो भवति । अथ तत्रोणादयो बहुलमिति समाधीयते सम्भवोदाहरणप्रदर्शनमेतत् । कृतीति किम् ? रुरुदिव । रुरुदिम(१) ॥

## तितुत्रतथसिसुसरकसेषु च ॥ ९ ॥

ति तु त्र त थ सि सु सर क स इत्येतेषु कृत्सु इडागमो न भवति । तीति क्तिन्क्तिचो॰ सामान्यग्रहणम् । क्तिच्—तनिता । तनितुम्—तन्तिः । क्तिन्—दीपिता । दीपितुम्—दीप्तिः । तु—"सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्" ॥ सचिता । सचितुम्—सक्तुः । त्र—दाम्नीशसयुयुजेति ष्ट्रन् । पतिता । पतितुम्—पत्त्र वाहनम् । उणादिष्वपि सर्वधातुभ्यः ष्ट्रन् । तनिता । तनितुम्—तन्त्रम् । त-हसिमृग्रिण्वमिदमिलूपूधुर्विभ्यस्तन् ॥ हसिता । हसितुम्—हस्तः । लविता । लवितुम्—लोतः । पविता । पवितुम्—पोतः । धूर्विता । धूर्वितुम्—धूर्त्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते न पुनः क्तस्य ॥ हसितमित्येव हि तत्र भवति । थ—हनिकुषिनीरमिकाशिभ्यः क्थन् । कोषिता । कोषितुम्—कुष्ठम् । काशिता । काशितुम्—काष्ठम् । सि—प्लुषिकुषिशुषिभ्यः क्सिः । कोषिता । कोषितुम्—कुक्षिः ॥ सुक् च इषेः ॥ एषिता । एषितुम्—इक्षुः । सर—अशेः क्सरन् ॥ अशिता । अशितुम्—अक्षरम् । क—इणभीकापाशल्यतिमर्चिभ्यः कन् ॥ शल्किता । शल्कितुम्—शल्कः । स—वृतॄवदिहनिकमिकषिभ्यः सः ॥ वदिता । वदितुम्—वत्सः ॥ तितुत्रेष्वग्रहादीनामिति वक्तव्यम् ॥ ग्रहादयो ग्रह्प्रकाराः । येषामिट् क्तिनि दृश्यते—निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः । कृतीत्येव । रोदिति । स्वपिति ॥

## एकाच उपदेशेऽनुदात्तात् ॥ १० ॥

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति । अकृत्स्वाश्रयोऽयं प्रतिषेधः । के पुनरुपदेशेऽनुदात्ताः, ये तथा पठ्यन्ते एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते ॥

> अनिट्स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः ।
> अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥
> गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः ।
> इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत ॥

इय एव धातवः स्वरान्ता व्यञ्जनान्ताश्च, तत्र सर्वे स्वरान्ता एकाचोऽनुदात्ता अदन्तादीन् वर्जयित्वा । दाता । नेता । चेता । स्तोता । कर्त्ता । हर्त्ता । अदन्तादय

---

(१) वस्तुतस्तु रुदिव, रुदिम, इत्येव युक्तः पाठः, उक्तप्रत्युदाहरणे तु लिटि क्रादिनियमादेवेटः सिद्धत्वादिति पदमञ्जरी ।

उदात्ता—अवधिष्ट । ऋदन्तम्–तरिता । तरीता । स्तृता च वृङ्वृञौ-निर्वरिता । निर्वरीता । प्रवरिता । प्रवरीता । श्विडीङिवर्णान्तय श्रोङश्रिञावपि-श्वयिता । उड्डयिता । शयिता । श्रयिता । गणस्थमूदन्तम्–लविता । पविता । उता च रुस्नुवौ क्षुवन्तयोर्णोतिमयो युयुक्ष्मव —रविता । प्रस्नविता । क्षविता । प्रोर्णविता । वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धि प्रयोजनमित्यतिदेशादेकाच्त्वमूर्णोतेरस्तीति उदात्त उपदिश्यते । यविता । नविता । क्ष्णविता ॥

इति स्वरान्ता निपुण समुच्चितास्ततो हलन्तानपि सन्निबोधत ।
शक्लिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसि प्रसारणी ॥

घसि प्रकृत्यन्तरमस्ति-घस्ता । वसि प्रसारणी–वस्ता । प्रसारणीति किम्? वसिता वस्त्राणाम् । वस निवास इत्यस्य यजादित्वात् सम्प्रसारणं विहितं, न तु वस आच्छादन इत्यस्य ॥

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ।

आरब्धा । यब्धा । लब्धा ॥

यमिर्नमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनि ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठ प्रतिषेधवाचिनाम् ॥

यन्ता । रन्ता । मन्ता । श्यनीति किम्? मनुतेर्मनितैव भवति । नन्ता । हन्ता । गन्ता ॥

दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहि ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ता प्रविभज्य कीर्तिता ॥

देग्धा । दोग्धा । मेढा । रोढा । वोढा । नद्धा । दग्धा । लेढा । मुक्तसंशया इति किम्? तन्त्रान्तरे चत्वारोऽपरे पठ्यन्ते–सहिमुहिरिहिलुहय । तत्र सहेरिड्विकल्पस्य तकारादौ । मुहेरपि रधादौ । तेन तौ ससंशयौ सविकल्पौ । इतरौ तु धातुपाठे न पठ्यते । कैश्चिदभ्युपगम्येते इति स्वरूपेणैव ससंशयौ ॥

दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टम विशिम् ।
लिशिं च शान्ताननिट पुराणगा पठन्ति पाठेषु दशैव नेतरान् ॥

देष्टा । द्रष्टा । दंष्टा । आम्रष्टा । आमर्ष्टा । स्प्रष्टा । स्पर्ष्टा । अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् (६।१।५९) इति विकल्प । रेष्टा । रोष्टा । क्रोष्टा । प्रवेष्टा । लेष्टा ।

रुधिं सराधिं युधिबन्धिसाधय क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिम् ।
इमे तु धान्ता दश येऽनिटो मतास्तत पर सिध्यतिरेव नेतरे ॥

रोद्धा । राद्धा । योद्धा । बद्धा । साद्धा । क्रोद्धा । क्षोद्धा । शोद्धा । बोद्धा । व्यद्धा सेद्धा । बुध्यतिसिध्यत्यो श्यना निर्देशादन्यविकरणयोर्बुधिसिध्योरिड् भवत्येव, बोधिता । सेधिता । निष्ठायामपि प्रतिषेधाभावाद्, बुधित सिधितमित्येव भवति

शिपि पिपि शुष्यतिपुष्यती त्विपि विपि श्लिपि तुष्यतिदुष्यती द्विपिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥

शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा । द्वेष्टा । आक्रष्टा । आकर्ष्टा । कृषेस्तौदादिकस्य भौवादिकस्य च कृषिकर्षती इति निर्देशः ।

तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥

तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव । इट् च तयोरधात्विपाठाद्विकल्पेन भवति । त्रप्ता । तर्प्ता । तर्पिता । द्रप्ता । दर्प्ता । दर्पिता । तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव । स्रप्ता । सर्प्ता । शप्ता । छोप्ता । क्षेप्ता ॥

अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः ॥

अत्ता । हत्ता । स्कन्ता । भेत्ता । छेत्ता । क्षोत्ता । शत्ता । सत्ता । स्वेत्ता । स्विद्यतीति श्यना निर्देशो ञिष्विदा इत्यस्य निवृत्त्यर्थः । उदात्त एवायम् । पत्ता । खेत्ता । तोत्ता । नोत्ता । वेत्ता । विद्यति विन्त इत्यपि श्यना श्नमा च निर्देशोऽन्यविकरणनिवृत्त्यर्थः । वेत्तिविन्दत्यौ उदात्तावेव । वेदिता विद्यानाम् । वेदिता धनस्य ॥

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् निजिं सिचिं मुचिभजिभञ्जिभ्रस्जतीन् ।
त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥

पक्ता । वक्ता । विवेक्ता । रेक्ता । रङ्क्ता । प्रष्टा । निर्णेक्ता । सेक्ता । मोक्ता । भक्ता । भङ्क्ता । भ्रष्टा । भर्ष्टा । त्यक्ता । यष्टा । योक्ता । रोक्ता । सङ्क्ता । मङ्क्ता । भोक्ता । परिष्वक्ता । स्रष्टा । मार्ष्टा । मृजिरयमूदित् पठ्यते । ततोऽस्य विकल्पेनेटा भवितव्यम् । मार्ष्टा, मार्जिता इति । अमागमोऽप्यस्य न दृश्यते । तदस्य पाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विजिं पठन्ति । सृजिं विजिं विद्ध्यनिट्स्वरानिति । निजादिषु यो विजिरसाविनिडिष्यते । तथा च ग्रन्थान्तरे (१) निजिविजिष्वञ्जिवर्जमित्युक्तम् । एकाच इति किम् ? अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते । उपदेशग्रहणं किम् ? इह हि यथा स्यात्—लविष्यति । पविष्यति । इह मा भूत्—कर्त्ता स्तान् । कर्त्तुमिति ॥

श्र्युकः किति ॥ ११ ॥

श्रि इत्येतस्योगन्तानां च किति प्रत्यये परत इडागमो न भवति । श्रित्वा । श्रितः । श्रितवान् । उगन्तानां च—युत्वा । युतः । युतवान् । लूत्वा । लूनः । लूनवान् । वृत्वा । वृतः । वृतवान् । तीर्त्वा । तीर्णः । तीर्णवान् । श्र्युक इति किम् ?

(१) ग्रन्थान्तरे पा० ॥

विदितः । किताति किम् ? श्रयिता । श्रयितुम् । श्रयितव्यम् । केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति । भूष्णुरित्येवं यथा स्यात् । सौत्रत्वाच्च निर्देशस्य ग्स्नुकः कितीत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतं, विसर्जनीयश्च कृत इति । ग्लाजिस्थश्च ग्स्नुरित्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वाच्च विचिदेतत् । उपदेश इत्येव । तीर्णं इत्यत्रापि यथा स्यात् । इत्वे हि कृते रपरत्वे च न स्यात् । माभूदेवम् । इट् सनि वेति विकल्पे विहिते यस्य विभाषेति निष्ठायां प्रतिषेधो भविष्यति । कस्य पुनः सा विभाषा, ऋतः । यद्यवमिन्वे कृते नाय ऋकारान्तो भविष्यति । स्थानिवद्भावाद्भविष्यति । अनल्विधौ स्थानिवद्भावः । अल्विधिश्चायम् । तस्मादनुवर्तयितव्यमुपदेश इति । तथा च सति जागरितः, जागरितवानित्यत्रापि प्राप्नोति, तदर्थमेकाच इत्यनुवर्तयितव्यम् । ऊर्णोतेस्तु ।

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

प्रोर्णुतः । प्रोर्णुतवान् ॥

## सनि ग्रहगुहोश्च ॥ १२ ॥

ग्रह गुह इत्येतयोरुगन्तानां च सनि प्रत्यये परत इडागमो न भवति । जिघृक्षति । जुघुक्षति । उगन्तानां च–रुरूषति । लुलूषति । सनिवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनामिति विकल्पविधानात् श्रयतिरत्र नानुकृष्यते । ग्रहेर्नित्य प्राप्तः । गुहेरुदित्त्वाद्विकल्पः ॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां लिटि प्रत्यय इडागमो न भवति । कृ–चकृव । चकृम । सृ–ससृव । ससृम । भृ–बभृव । बभृम । वृञ्–ववृव । ववृम । वृङ्–ववृवहे । ववृमहे । स्तु–तुष्टुव । तुष्टुम । द्रु–दुद्रुव । दुद्रुम । स्रु–सुस्रुव । सुस्रुम । श्रु–शुश्रुव । शुश्रुम । सिद्धे सत्यारम्भो नियमार्थः–क्रादय एव लिट्यनिटस्ततोऽन्ये सेट इति । बिभिदिव । बिभिदिम । लुलुविव । लुलुविम । अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः । वृञ्वृङोस्तु प्रत्ययाश्रयस्तदुभयस्याप्यय नियमः । वृञो हि थलि, बभर्थेति निपातनाद् व्यवस्था । स्तुद्रुस्रुश्रुवां तु, ऋतो भारद्वाजस्येत्यस्मादपि नियमाद् य इट् प्राप्नोति सोऽपि नेष्यते । तुष्टोथ । दुद्रोथ । सुस्रोथ । शुश्रोथ । *कृञोऽसुट् इति वक्तव्यम्* । *ससुट्कस्य इडागमो यथा स्यात् । संचस्करिव । संचस्करिम । ऋतो भारद्वाजस्येत्येतदप्यसुट एवेष्यते । संचस्करिथ ॥

## श्वीदितो निष्ठायाम् ॥ १४ ॥

श्वयतेरीदितश्च निष्ठायामिडागमो न भवति । शूनः । शूनवान् । ईदितः–ओलस्जी–लग्नः । लग्नवान् । ओविजी–उद्विग्नः । उद्विग्नवान् । ओदितश्चेति निष्ठा-

तकारस्य नकारः। दीपी—दीनः। दीनवान्। डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य। स हि नत्वार्थो, नत्वं च निष्ठातोऽनन्तरस्य विधीयते। उड्डीनः। उड्डीनवान्। निष्ठायामित्यधिकार आर्द्धधातुकस्येड्वलादेरिति यावत्॥

यस्य विभाषा ॥ १५ ॥

यस्य धातोर्विभाषा क्वचिदिडुक्तस्तस्य निष्ठायां परत इडागमो न भवति। वक्ष्यति—स्वरतिसूतिसूयतिधूञूदितो वा। विधूतः। विधूतवान्। गुहू—गूढः। गूढवान्। उदितो वा। वृद्धः। वृद्धवान्। तनिपतिदरिद्राणामुपसंख्यानमिति पतेर्विभाषितेट्कस्यापि, द्वितीयाश्रितातीतपतितेति निपातनादिडागमः॥

आदितश्च ॥ १६ ॥

आदितश्च धातोर्निष्ठायामिडागमो न भवति। ञिमिदा—मिन्नः। मिन्नवान्। ञिक्ष्विदा—क्ष्विण्णः। क्ष्विण्णवान्। ञिष्विदा—स्विन्नः। स्विन्नवान्। चकारोऽनुक्तसमुच्चयार्थः। आश्वस्तः। वान्तः। योगविभागकरणं किमर्थम्? आदितश्च, विभाषा भावादिकर्म्मणोरित्येवं पठितव्यम्। अन्यत्र हि भावादिकर्म्मभ्यां, यस्य विभाषेति प्रतिषेधो भविष्यति। ज्ञापनार्थमेतत्। ज्ञापयति—यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति, तेन विभाषा गमहनविदविशामित्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञानार्थस्य प्रतिषेधो न भवति—विदितः। विदितवान्॥

विभाषा भावादिकर्म्मणोः ॥ १७ ॥

भावे आदिकर्म्मणि च आदितो धातोर्विभाषा निष्ठायामिडागमो न भवति। मिन्नमनेन। मेदितमनेन। प्रमिन्नः। प्रमेदितः। सौनागाः कर्म्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन। शकितो घटः कर्त्तुम्। शक्तो घटः कर्तुम्। भावे न भवत्येव—शक्तमनेन। अस्यतेर्भावे—असितमनेन। आदिकर्म्मणि च न भवत्येव—अस्तः काण्डः॥

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १८ ॥

क्षुब्ध स्वान्त ध्वान्त लग्न म्लिष्ट विरिब्ध फाण्ट बाढ इत्येते निपात्यन्ते यथासंख्यं मन्थ मनः तमः सक्त अविस्पष्ट स्वर अनायास भृश इत्येतेष्वर्थेषु। क्षुब्ध इति भवन्ति मन्थाभिधानं चेत्। क्षुब्धो मन्थः। क्षुभितमन्यत्। क्षुभितं मन्थेन। क्षुब्धो गिरिः, नदीत्येवमादावुपमानाद्भविष्यति। स्वान्तमिति मनोऽभिधानं चेत्। स्वनितमन्यत्, स्वनितो मृदङ्गः। स्वनितं मनसा। ध्वान्तमिति भवति तमोऽभिधानं चेत्। ध्वनितमन्यत्। ध्वनितो मृदङ्गः। ध्वनितं मनसा। लग्नमिति भवति सक्तं चेत्। लगितमन्यत्। म्लिष्टमिति भवति, अविस्पष्टं चेत्। म्लेच्छितमन्यत्। इत्वमप्येकारस्य निपातनादेव। विरिब्धमिति स्वरश्चेत्। विरेभितमन्यत्। रेभृ शब्द इत्यस्यैत-

न्निपातनम् । अन्ये विरिभितमन्यदिति पठन्ति । रभिं सौत्रं धातुं पठन्ति ते विरिभितमिति प्रत्युदाहरन्ति । फाण्टमिति भवत्यनायासश्चेत् । फणितमन्यत् । यदशृतमपिष्टं च कषायमुदकसम्पर्कमात्राद् विभक्तरसमीषदुष्णं तत्फाण्टम् । तदल्पप्रयत्नसाध्यत्वाद् अनायासेन लभ्यते । बाढमिति भवति भृशं चेत् । बाहितमन्यत् । बाहृ प्रयत्ने इत्यस्य धातोरेतन्निपातनम् । अतिशयश्च भृशमिहोच्यते ॥

## धृषिशसी वैयात्ये ॥ १९ ॥

वियातस्य भावो वैयात्यम् । प्रागल्भ्यमविनीतता । तत्र धृष् शस् इत्येतयोर्निष्ठायामिडागमो न भवति । धृष्टोऽयम् । विशस्तोऽयम् । धृषेरादितश्चेति प्रतिषेधः सिद्ध एव, शसेरप्युदितो वा, यस्य विभाषेति नियमार्थं वचनम्—धृषिशस्योर्वैयात्ये एवेड् न भवति, भावादिकर्मणोरपि वैयात्यं धृषिर्नास्ति । धृष्टः । विशस्तः । वैयात्य इति किम् ? धर्षितः । विशसितः ॥

## दृढः स्थूलबलयोः ॥ २० ॥

दृढ इति निपात्यते स्थूले बलवति चार्थे । दृढः स्थूलः । दृढो बलवान् । किमत्र निपात्यते ? दृहेः क्तप्रत्यये इडभावः । हकारनकारयोर्लोपः । परस्य ढत्वम् । अथ, दृहिः प्रकृत्यन्तरमस्ति, तत्राप्येतदेव सर्वं नलोपवर्जम्, नकारस्याभावात् । हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम् । ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वाद् द्रढिमा, द्रढीयान्, द्रढयतीत्यत्र र ऋतो हलादेर्लघोरिति न स्यात् । इह च परिदृढय्य गत इति, ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात् । इह च परिदृढस्यापत्यं पारिदृढी कन्येति गुरूपोत्तमलक्षण ष्यङ् च प्रसज्येत । स्थूलबलयोरिति किम् ? दृहितम् । दृंहितम् ॥

## प्रभौ परिवृढः ॥ २१ ॥

परिवृढ इति निपात्यते प्रभुश्चेद्भवति । परिवृढः कुटुम्बी । पूर्वेण तुल्यमेतत् । वृहेर्निपातनम् । वृहिश्च यदि प्रकृत्यन्तरमस्ति तस्यापि तदेव सर्वं, हलोपनिपातनस्य च तदेव प्रयोजनम् । परिव्रढयति । परिव्रढय्य गतः । पारिवृढी कन्येति । परिवृढमाचष्टे इति विगृह्य वृढशब्दादेव णिजुत्पद्यते । संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिरिष्यते, नान्यस्मादिति । तथा सति परिव्रढयतीति तिङन्तमिष्ट इति नियातः । परिव्रढय्येत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति । प्रभाविति किम् ? परिवृहितम् । परिवृंहितम् ॥

## कृच्छ्रगहनयोः कषः ॥ २२ ॥

कृच्छ्र गहन इत्येतयोरर्थयोः कषेर्धातोर्निष्ठायामिडागमो न भवति । कष्टोऽग्निः । कष्टं व्याकरणम् । ततोऽपि कष्टतराणि सामानि । कृच्छ्रं दुःखं तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते । गहने—कष्टानि वनानि । कष्टाः पर्वताः । कृच्छ्रगहनयोरिति किम् ? कषितं सुवर्णम् ॥

घुषिरविशब्दने ॥ २३ ॥

घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति। घुष्टा रज्जुः। घुष्टौ पादौ। अविशब्दन इति किम्? अवघुषितं वाक्यमाह। विशब्दनं प्रतिज्ञानम्। घुषिर् शब्दार्थ इति भ्वादिषु पठ्यते। घुषिर् विशब्दन इति चुरादिषु, तयोरिह सामान्येन ग्रहणम्। विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिचो विशब्दनार्थस्यानित्य इति। तेनायमपि प्रयोग उपपन्नो भवति—महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवा इति। स्वाभिप्राय शब्देनाविष्कृतवन्त इत्यर्थः॥

अर्द्देः संनिविभ्यः ॥ २४ ॥

स नि वि इत्येतेभ्य उत्तरस्यार्द्देर्निष्ठायामिडागमो न भवति। समर्णः। न्यर्णः। व्यर्णः। अर्द्देरिति किम्? समेधितः। सनिविभ्य इति किम्? अर्द्दितः॥

अभेश्चाविदूर्ये ॥ २५ ॥

अभिशब्दादुत्तरस्यार्द्देराविदूर्येऽर्थे निष्ठायामिडागमो न भवति। अभ्यर्णा सेना। अभ्यर्णा शरत्। आविदूर्य इति किम्? अभ्यर्द्दितो वृषलः। शीतेन पीडित इत्यर्थः॥ विदूरं विप्रकृष्टं ततोऽन्यदविदूरं, तस्य भाव आविदूर्यम्। एतस्मादेव निपातनात् नञ्पूर्वात्तत्पुरुषादित्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति॥

णेरध्ययने वृत्तम् ॥ २६ ॥

ण्यन्तस्य वृत्तेर्निष्ठायामध्ययनार्थे वृत्तमितीडभावो णिलुक्च निपात्यते। वृत्तो गुणो देवदत्तेन। वृत्तं पारायणं देवदत्तेन। अध्ययन इति किम्? वर्त्तितमन्यत्। वृत्तिरयमकर्म्मकः, स ण्यर्थे वर्त्तमानः सकर्म्मको भवति। तेन, निवृत्त इति हि प्रकृतेरेव कर्म्मणि क्तप्रत्ययो दृश्यते। तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेर्वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनमनर्थकम्? तक्रियते यदापि णिचैव ण्यर्थोऽभिधीयते तदा वर्त्तितमित्यध्ययने मा भूदिति केचित्। अपरे तु वर्त्तितो गुणो देवदत्तेनेत्यपीच्छन्ति॥

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥

णेरित्यनुवर्त्तते। दम् शम् पूरी दस् स्पश् छद् ज्ञप् इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते (१)। दान्तः। दमितः। शान्तः। शमितः। पूर्णः। पूरितः। दस्तः। दासितः। स्पष्टः। स्पाशितः। छन्नः। छादितः। ज्ञप्तः। ज्ञपितः। इट्प्रतिषेधो णिलुक्च निपात्यते। ज्ञपेस्तु मारणतोषणनिशामनेषु ज्ञेति चुरादिषु पाठात्? ज्ञपि विकल्पविधानाद्, यस्य विभाषेति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम्॥

रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥

(१) "दान्त। शान्त। पूर्ण। दस्त। स्पष्ट। छन्न। ज्ञप्त। इत्येतानि निपात्यन्ते। दम्यादीनां धातूनां ण्यन्ते वा इडागमो निपात्यते" इति क्वचित्पाठ उपलभ्यते।

वेति वर्त्तते । हृषि अम त्वर संघुष आस्वन इत्येतेषां निष्ठायां वा इडागमो न भवति । हृष्टः । हृषितः । तीषसहलुभरुषरिष इति विकल्पविधानाद्, यस्य विभाषेति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् । अम-अभ्यान्तः । अभ्यमितः । त्वर-तूर्णः । त्वरितः । आदितश्चेति प्रतिषेधे प्राप्ते वचनम् । संघुष-संघुष्टौ पादौ । संघुषितौ पादौ । संघुष्टं वाक्यमाह । संघुषितं वाक्यमाह । संघुष्टौ दम्यौ । संघुषितौ दम्यौ । संपूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति । आस्वन्-आस्वान्तो देवदत्तः । आस्वनितो देवदत्तः । आस्वान्तं मनः । आस्वनितं मनः । आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽपि परत्वादयं विकल्पः, क्षुब्धस्वान्तेति निपातनं बाधते ॥

हृषेर्लोमसु ॥ २९ ॥

लोमसु वर्त्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति । हृष्टानि लोमानि । हृषितानि लोमानि । हृष्टं लोमभिः । हृषितं लोमभिः । हृष्टाः केशाः । हृषिताः केशाः । हृष्टं केशैः । हृषितं केशैः । हृषु अलीक इत्युदित्वान्निष्ठायामनिट् । हृष तुष्टावित्यय सेट् । तयोरुभयोरिह ग्रहणमित्युभयत्र विभाषेयम् । लोमानि मूर्द्धजानि अङ्गजानि च सामान्येन गृह्यन्ते । यथा लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यमिति । तद्विषये च हृषे वर्त्तमानो लोमसु वर्त्तत इत्युच्यते । लोमस्विति किम् ? हृष्टो देवदत्त इत्यनीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य ॥ ॐविस्मितप्रतिघातयोश्चेति वक्तव्यम्ॐ । हृष्टो देवदत्तः । हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ताः । हृषिता दन्ताः प्रतिहता इत्यर्थः ॥

अपचितश्च ॥ ३० ॥

अपचित इति वा निपात्यते । अपपूर्वस्य चायतेर्निष्ठायामनिट्त्वं चि भावश्च निपात्यते । अपचितोऽनेन गुरुः । अपचायितोऽनेन गुरुः ॥ ॐक्तिनि नित्यमितिवक्तव्यम्ॐ । नित्यं चिभावो निपात्यते, अपचितिः ॥

ह्रु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वरतेर्ह्वातोर्निष्ठायां छन्दसि ह्रु इत्ययमादेशो भवति । ह्रुतस्य चाहुतस्य च । अह्रुतमसि हविर्धानम् । छन्दसीति किम् ? ह्वृतम् ॥

अपरिह्वृताश्च ॥ ३२ ॥

अपरिह्वृता इति निपात्यते छन्दसि विषये । ह्रु इत्येतस्यादेशस्याभावो निपात्यते । अपरिह्वृताः सनुयाम वाजम् ॥

सोमे ह्वरितः ॥ ३३ ॥

ह्वरित इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद्भवति । मा नः सोमो ह्वरितो, विह्वरितस्त्वम् ॥

ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरु-तृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ३४ ॥

ग्रसित स्कभित स्तभित उत्तभित चत्त विकस्त विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः उज्ज्वलिति क्षरिति क्षमिति वमित्यमिति इत्येतानि छन्दसि निपात्यन्ते । तत्र ग्रसितस्कभितस्तभितोत्तभितेति ग्रसु स्कम्भु स्तम्भु इत्येतेषामुदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडागमो निपात्यते । ग्रसितं वा एतत्सोमस्य । ग्रस्तमिति भाषायाम् । स्कभित—विष्कभिते अजरे । विष्कब्ध इति भाषायाम् । स्तभित—येन स्वः स्तभितम् । स्तब्धमिति भाषायाम् । उत्तभित—सत्येनोत्तभिता भूमिः । उत्तब्धेति भाषायाम् । उत्तभितेति उत्पूर्वस्य निपातनसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति । चत्त विकस्तेति चतेः कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते—चत्ता वर्षेण विद्युत् । चतितेति भाषायाम् । विकस्त—उत्तानाया हृदयं यद् विकस्तम् । विकसितमिति भाषायाम् । निपातनबहुत्वापेक्षे विकस्ता इति बहुवचनं कृतम् । अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः । विशस्तृ शंस्तृ शास्त्रिति शसेर्विपूर्वस्य शंसेः शासेश्च तृचि इडभावो निपात्यते । विशस्तृ—एकस्त्वष्टुरश्वस्या विशस्ता । विशसितेति भाषायाम् । शंस्तृ—उत शंस्ता सुविप्रः । शंसितेति भाषायाम् । शास्तृ—प्रशास्ता । प्रशासितेति भाषायाम् । तरुतृतरूतृवरुतृवरूतृवरूत्रीरिति तरतेर्वृङ्वृञोश्च तृचि उट् ऊट् इत्येतावागमौ निपात्येते । तरुतारं रथानाम् । तरूतारम् । तरितारं तरीतारमिति भाषायाम् । वरुतारं रथानाम् । वरूतारं रथानाम् । वरितारं, वरीतारमिति भाषायाम् । वरूत्रीभिः देवीर्विश्वदेव्यावतीः । असि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम् । अतन्त्रं चैतत्, इयमपि हि भवति अहोरात्राणि वै वरूत्रय इति । छान्दसिकमत्र ह्रस्वत्वम् । प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम् । वरूतृशब्दो हि निपातितस्तत एव ङीपि सति सिद्धो वरूत्रीशब्दः । उज्ज्वलिति क्षरिति क्षमिति वमित्यमितीति च ज्वलतेरुत्पूर्वस्य क्षर क्षम वम अम इत्येतेषां च तिपि शप इकारादेशो निपात्यते । शपो लुग्वा इडागमः । अग्निरुज्ज्वलिति । उज्ज्वलतीति भाषायाम् । क्षरिति—स्तोकं क्षरिति । क्षरतीति भाषायाम् । क्षमिति—स्तोमं क्षमिति । क्षमतीति भाषायाम् । वमिति—यः सोमं वमिति । वमतीति भाषायाम् । अमिति—अभ्यमिति वरुणः । अभ्यमतीति भाषायाम् । इतिकरणः प्रदर्शनार्थस्तेन क्वचिदीकारो भवति—रथिमभ्यमीति वरुण इत्यपि हि वेदे पठ्यते ॥

आर्धधातुकस्येड् वलादेः ॥ ३५ ॥

छन्दसीति निवृत्तम् । आर्धधातुकस्य वलादेरिडागमो भवति । लविता । लवितुम् । लवितव्यम् । पविता । पवितुम् । पवितव्यम् । आर्धधातुकस्येति किम् ?

आस्ते । वस्ते । रुदादिभ्यः सार्वधातुके इत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवतीति आर्द्धधातुकग्रहणं क्रियते । वलादेरिति किम् ? लव्यम् । पव्यम् । लवनीयम् । पवनीयम् । इडितिवर्त्तमाने पुनरिड्ग्रहण प्रतिषेधनिवृत्त्यर्थम् ॥

स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥

नियमार्थमिदम् । स्नुक्रमोरार्द्धधातुकस्य वलादेरिडागमो भवति, न चेत्स्नुक्रमौ आत्मनेपदस्य निमित्तं भवतः । क च तावात्मनेपदस्य निमित्तम् ? यत्रात्मनेपदं तदाश्रयं भवति–भावकर्मकर्मकर्तृकर्मव्यतिहाराः । क्रमेर्वृत्त्यादयश्च । तेनाय सत्यात्मनेपदे प्रतिषेधो भवतीति । प्रतिषेधफल चेद सूत्रम् । स्नुक्रमोरुदात्तत्वादिट् सिद्ध एव—प्रस्नविता । प्रस्नवितुम् । प्रस्नवितव्यम् । प्रक्रमिता । प्रक्रमितुम् । प्रक्रमितव्यम् । अनात्मनेपदनिमित्ते इति किम् ? प्रस्नोषीष्ट । प्रक्रंसीष्ट । प्रस्नोष्यते । प्रक्रंस्यते । प्रसुस्नूषिष्यते । प्रचिक्रंसिष्यते । सर्वत्रैवात्र स्नौतिः क्रमिश्चात्मनेपदस्य निमित्तम् । सन्नन्तादपि हि पूर्ववत्सन इत्यात्मनेपद विधीयते । निमित्तग्रहण किम् ? सीयुडादेस्तत्परपरस्य च प्रतिषेधार्थम् । इह प्रस्नवितेवाचरतीति प्रस्नवित्रीयत इति क्यङन्तमात्मनेपदस्य निमित्त न स्नौतिः ॥ क्रमेरतु कर्त्तर्यात्मनेपदविषयादसत्यात्मनेपदे इति प्रतिषेधो वक्तव्यः ॥ प्रक्रन्ता । उपक्रन्ता । कर्त्तरीति किम् ? प्रक्रमितव्यम् । उपक्रमितव्यम् । आत्मनेपदविषयादिति किम् ? निष्क्रमिता । स्नौतेः सनि किति च प्रत्यये सति ग्रहगुहोश्च, श्र्युक. किति, इत्येव प्रतिषेधो भवति–प्रसुस्नूषति । प्रस्नुतः । प्रस्नुतवान् ॥

ग्रहोऽलिटि दीर्घः ॥ ३७ ॥

ग्रह उत्तरस्य इटः अलिटि दीर्घो भवति । ग्रहीता । ग्रहीतुम् । ग्रहीतव्यम् । अलिटीति किम् ? जगृहिव । जगृहिम । ग्रहुतस्येटो दीर्घत्वमिव्‌ चिण्वदिटो न भवति–ग्राहिता । ग्राहिष्यते ॥

वृतो वा ॥ ३८ ॥

वृ इति वृङ्वृञोः सामान्येन ग्रहण तस्मादुत्तरस्य ॠकारान्तेभ्यश्चेटो वा दीर्घो भवति । वरिता । वरीता । प्रावरिता । प्रावरीता । ॠकारान्तेभ्यः–तरिता । तरीता । आस्तरिता । आस्तरीता । वृत इति किम् ? करिष्यति । हरिष्यति । अलिटीत्येव, ववरिथ । तेरिथ ॥

न लिङि ॥ ३९ ॥

वृत उत्तरस्य इटो लिङि दीर्घो न भवति । विवरिषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट । विस्तरिषीष्ट ॥

सिचि च परस्मैपदेषु ॥ ४० ॥

परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घो न भवति । प्रावारिष्टाम् । प्रावा-

रिषुः । अतारिष्टाम् । आस्तारिष्टाम् । आस्तारिषु (१) । परस्मैपदेष्विति किम् ? प्रावरिष्ट । प्रावरीष्ट ॥

## इट् सनि वा ॥ ४१ ॥

वृतः सनो वा इडागमो भवति । वुवूर्षति । विवरिषते । विवरीषते । प्रावुवूर्षति । प्राविवरिषति । प्राविवरीषति । ऋकारान्तेभ्य –तितीर्षति । तितरिषति । तितरीषति । आतितीर्षति । आतितरिषति । आतितरीषति । सनि ग्रहगुहोश्चेति इट्प्रतिषेधे प्राप्ते पक्षे इडागमो विधीयते । इटश्च वृतो वेति पक्षे दीर्घः । चिकीर्षति । जिहीर्षति इत्यत्रोपदेशाधिकारात्तथाणित्त्वाच्च इडागमो न भवति ॥

## लिङ्सिचोरात्मनेपदेषु ॥ ४२ ॥

वृतो लिङि सिचि च आत्मनेपदे परे वा इडागमो भवति । वृषीष्ट । वरिषीष्ट । प्रावृषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट । आस्तीर्षीष्ट । सीचि खल्वपि–अवृत । अवरिष्ट । अवरीष्ट । प्रावृत । प्रावरिष्ट । प्रावरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । आस्तरीष्ट । आत्मनेपदेष्विति किम् ? प्रावारिष्टाम् । प्रावारिषुः । लिङः प्रत्युदाहरणं न दर्शितमसम्भवाद् यासुटोऽवलादित्वादिति ॥

## ऋतश्च संयोगादेः ॥ ४३ ॥

ऋदन्ताद्धातोः संयोगादेरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति । ध्वृषीष्ट । ध्वरिषीष्ट । स्मृषीष्ट । स्मरिषीष्ट । अध्वृषाताम् । अध्वरिषाताम् । अस्मृषाताम् । अस्मरिषाताम् । ऋत इति किम् ? च्योषीष्ट । प्लोषीष्ट । अच्योष्ट । अप्लोष्ट । संयोगादेरिति किम् ? कृषीष्ट । हृषीष्ट । अकृत । अहृत । आत्मनेपदेष्वित्येव । अस्वार्षीत् । अस्मार्षीत् । संस्कृषीष्ट, समस्कृतेत्यत्रोपदेशाधिकारादभक्तत्वाच्च सुट इडागमो न भवति ॥

## स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४४ ॥

स्वरति सूति सूयति धूञ् इत्येतेभ्य ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । स्वर्ता । स्वरिता । सूति–प्रसोता । प्रसविता । सूयति–सोता । सविता । धूञ्–धोता । धविता । ऊदिद्भ्यः खल्वपि–गाहू–विगाढा । विगाहिता । गुपू–गोप्ता । गोपिता । वेति वर्त्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम् । सूतिसूयत्योर्विकरणनिर्देशः षू प्रेरण इत्यस्य निवृत्त्यर्थं । धूञिति सानुबन्धकस्य निर्देशो धू विधूनन इत्यस्य निवृत्त्यर्थः । सविता धवितेत्येव नित्यमेतयोर्भवति । स्वरतेरेतस्माद्विकल्पाद्, ऋद्धनोः स्य इत्येतद्भवति विप्रतिषेधेन–स्वरिष्यति । क्तिति तु प्रत्यये, श्र्युकः क्तितीति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन । स्वृत्वा । सूत्वा । धूत्वा ॥

---

(१) अयष्टारिष्टाम्, अयष्टारिषु इत्यधिक पुस्तकान्तरे ।

रधादिभ्यश्च ॥ ४५ ॥

रध हिंसासंसिद्धयोरित्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। रद्धा। रधिता। नष्टा। नशिता। त्रप्ता। तर्प्ता। तर्पिता। द्रप्ता। दर्प्ता। दर्पिता। द्रोग्धा। द्रोढा। द्रोहिता। मोग्धा। मोढा। मोहिता। स्नोग्धा। स्नोढा। स्नोहिता। स्नेग्धा। स्नेढा। स्नेहिता। क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्प केचिदिच्छन्ति। अपरे पुनराहु–पूर्वविधेरिडनिषेधविधानसामर्थ्याद्वलीयस्त्वं प्रति षेधनियमस्येति नित्यमिडा भवितव्यम्–ररन्धिव, ररन्धिमेति भवति ॥

निर कुष. ॥ ४६ ॥

निर् इत्येवपूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। निष्कोष्टा। निष्कोषिता। निष्कोष्टुम्। निष्कोषितुम्। निष्कोष्टव्यम्। निष्कोषितव्यम्। निर इति किम्? कोषिता। कोषितुम्। कोषितव्यम्। निस इति वक्तव्ये निर इति निर्देशेन रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते। तस्य हि निरयणनिर्युपसर्गे स्यायतादिविलत्व भवति। निसो हि रुत्वस्यासिद्धत्वाल्लत्व न स्यात् ॥

इण्निष्ठायाम् ॥ ४७ ॥

निरः कुषो निष्ठायामिडागमो भवति। निष्कुषितः। निष्कुषितवान्। इडग्रहणं नित्यार्थम्। आरम्भो हि यस्य विभाषा इत्यस्य बाधकोऽन्यथा हि विकल्पार्थ एव स्यात्। अत्रैव नित्यमिडागम, उत्तरत्र विकल्प एवेति ॥

तीषसहलुभरुषरिषः ॥ ४८ ॥

सकारादावार्धधातुके इषु सह लुभ रुष रिष् इत्येतेभ्यो वा इडागमो भवति। इषु–एष्टा। एषिता ॥ इषु इच्छायामित्यस्याय विकल्प इष्यते ॥ यस्तु इष गताविति दैवादिकस्तस्य प्रेषिता प्रेषितु प्रेषितव्यमिति नित्य भवति। योऽपि, इष आभीक्ष्ण्य इति क्र्यादौ पठ्यते तस्याप्येवमेव। तदर्थमेव, तीषसहेति सूत्रे केचिदुदितमिष पठन्ति। सह–सोढा। सहिता। लुभ–लोभिता। लोब्धा। रुष–रोष्टा। रोषिता। रिष्–रेष्टा। रेषिता। तीति किम्? एषिष्यति ॥

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ४९ ॥

इवन्तानाम् धातूना ऋधु भ्रस्ज् दम्भु श्रि स्वृ यु ऊर्णु भर ज्ञपि सन् इत्येतेषां च सनि वा इडागमो भवति। इवन्तानाम्–दिदेविषति। दुद्यूषति। सिसेविषति। सुस्यूषति। ऋधु–अर्दिधिषति। ईर्त्सति। भ्रस्ज–बिभ्रज्जिषति। बिभ्रक्षति। बिभर्जिषति। बिभर्क्षति। दम्भु–दिदम्भिषति। धिप्सति। धीप्सति। श्रि–उच्छिश्रयिषति। उच्छिश्रीषति। स्वृ–सिस्वरिषति। सुस्वूर्षति। यु–यियविषति। युयूषति। ऊर्णु–प्रोर्णुनविषति। प्रोर्णुनुविषति। प्रोर्णुनूषति। भर इति भृञित्येतस्य भौवादिकस्य ग्रहण, शपा निर्देशात्। बिभरिषति। बुभूर्षति। ज्ञपि–जिज्ञपयिषति। ज्ञीप्सति।

सन्-सिसनिषति। सिपासति। केचिदत्र भरज्ञपिसनितनिपतिदरिद्राणामिति पठन्ति। तितनिषति। तितंसति। तितांसति। पिपतिषति। पित्सति। दिदरिद्रिषति। दिदरिद्रासति। सनीति किम्? देविता। भ्रष्टा॥

क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥

क्लिशः क्त्वानिष्ठयोर्वा इडागमो भवति। क्लिष्ट्वा। क्लिशित्वा। क्लिष्टः। क्लिष्टवान्। क्लिशितः। क्लिशितवान्। क्लिश् विबाधन इत्यस्य क्त्वायां विकल्पः सिद्ध एव निष्ठायां तु, यस्य विभाषेति प्रतिषेधः प्राप्नोति। क्लिश उपतापे इत्येतस्य तु क्त्वायां निष्ठायां च नित्यमिडागमः प्राप्नोति। तदर्थं क्त्वाग्रहणं क्रियते॥

पूङश्च ॥ ५१ ॥

पूङश्च क्त्वानिष्ठयोर्वा इडागमो भवति। पूत्वा। पवित्वा। सोमोऽतिपूतः। सोमोऽतिपवितः। पूतवान्। पवितवान्। श्र्युकः कितीति प्रतिषेधे प्राप्ते विकल्पो विधीयते॥

वसतिक्षुधोरिट् ॥ ५२ ॥

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति। उषित्वा। उषितः। उषितवान्। क्षुधित्वा। क्षुधितः। क्षुधितवान्। वसतीति विकरणो निर्देशार्थ एव। वस्तेस्तूदात्तत्वादेव भवितव्यमिटा। पुनरिड्ग्रहणं नित्यार्थम्॥

अञ्चेः पूजायाम् ॥ ५३ ॥

अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति। अञ्चित्वा जानु जुहोति। अञ्चिता अस्य गुरवः। उदितो वेति क्त्वाप्रत्यये विकल्पः प्राप्तः निष्ठायां, यस्य विभाषेति प्रतिषेधः प्राप्तस्तदर्थमिदमारब्धम्। पूजायामिति किम्? उदक्तमुदकं कूपात्। उद्धृतमित्यर्थः।

लुभो विमोहने ॥ ५४ ॥

लुभो विमोहनेऽर्थे वर्त्तमानात् क्त्वानिष्ठयोरिडागमो भवति। लुभित्वा। लोभित्वा। विलुभिताः केशाः। विलुभितः सीमन्तः। विलुभितानि पदानि। विमोहनमाकुलीकरणम्। तत्र क्त्वायां, तीषसहलुभेति विकल्पो, निष्ठायां यस्य विभाषेति प्रतिषेधः प्राप्तः। विमोहन इति किम्? लुब्धो वृषलः। शीतेन पीडित इत्यर्थः। लुब्ध्वा। लुभित्वा। लोभित्वा। गार्ध्ये, यथाप्राप्तमेव भवति।

जॄव्रश्च्योः क्त्वि ॥ ५५ ॥

जॄ व्रश्चि इत्येतयोः क्त्वाप्रत्यये इडागमो भवति। जरित्वा। जरीत्वा। व्रश्चित्वा। जॄ इत्येतस्य, श्र्युकः कितीति प्रतिषेधः प्राप्तो व्रश्चेरूदित्वाद्विकल्पः। क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम्॥

उदितो वा ॥ ५६ ॥

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति। शमु–शमित्वा । शान्त्वा । तमु–तान्त्वा । तमित्वा । दमु–दान्त्वा । दमित्वा ॥

सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ५७ ॥

सकारादावसिच्यार्द्धधातुके कृत चृत छृद तृद नृत इत्येतेभ्यो धातुभ्यो वा इडागमो भवति । कृत्–कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्तिषति । चृत–चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति । छृद–छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्दिष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति । तृद–तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति । नृत्–नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिष्यति । अनर्तिष्यत् । निनर्तिषति । स इति किम् ? कर्तिता । असिचीति किम् ? अकर्तीत् ॥

गमेरिट् परस्मैपदेषु ॥ ५८ ॥

गमेर्धातोः सकारादेरार्द्धधातुकस्य परस्मैपदेष्विडागमो भवति । गमिष्यति । अगमिष्यत् । जिगमिषति । गमेरिति किम् ? चेष्यति । इड्ग्रहणं नियमार्थम् । परस्मैपदेष्विति किम् ? सगसीष्ट । सगसीष्ट । सगस्यते । सञ्जिगसते । सञ्जिगसिष्यते । अधिजिगासते । अधिजिगासिष्यते । गमेरिडादेशस्याज्झनगमां सनीति दीर्घत्वम् । स इत्येव, गन्तास्मि । गन्तास्व । गन्तास्म ॥ आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते ॥ अन्यत्र सर्वत्रैवेष्यते । कृत्यपि भवति, परस्मैपदलुकि च–सञ्जिगमिषिता । अधिजिगमिषिता व्याकरणस्य । जिगमिष त्वमिति । (१)पदशेषकारस्य पुनरिदं दर्शनं गम्युपलक्षणार्थं परस्मैपदग्रहणम् । परस्मैपदेषु यो गमिरपरस्थित स्तस्मात्सकारादेरार्द्धधातुकस्येड्भवति । तन्मतेन सञ्जिगसिता, अधिजिगसिता व्याकरणस्य इत्येव भवितव्यम् ॥

न वृद्भ्यश्चतुर्भ्यः ॥ ५९ ॥

वृतादिभ्यश्चतुर्भ्य उत्तरस्य सकारादेरार्द्धधातुकस्य परस्मैपदेषु इडागमो न भवति । वृत–वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । वृधु–वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । शृधु–शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । स्यन्दू–स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति । चतुर्भ्य इति न वक्तव्यम् । वृद्ग्रहणं हि तत्र वृतादिपरिसमाप्त्यर्थं क्रियते कृपू सामर्थ्ये वृदिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते न किंचिदनिष्टं प्राप्नोति, तत्क्रियते, स्यन्देरूदिल्लक्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो यथा बाधेतेति । चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः सन्निधापितो भवति । परस्मैपदे[illegible] । वर्त्स्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते । अथात्रात्मनेपदेन समा-

(१) 'पदशेषो'ग्रन्थविशेष इति पदमञ्जरी ॥

नपदस्थेभ्यो वृतादिभ्य इडागम इष्यते। अन्यत्र सर्वत्र प्रतिषेध। कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति-विवृत्सिता(१)। विवृत्स त्वमिति॥

तासि च क्लृपः॥ ६०॥

कृप उत्तरस्य तासे सकारादेश्चार्द्धधातुकस्य परस्मैपदेषु इडागमो न भवति। श्व कल्प्ता। कल्प्स्यति। अकल्प्स्यत्। चिक्लृप्सति। परस्मैपदेष्वित्येव। कल्पितासे। कल्पिष्यते। कल्पिषीष्ट। अकल्पिष्यत। चिकल्पिषते। क्लृपेरथात्मनेपदेन समानपदस्थस्य इडागम इष्यते। अन्यत्र प्रतिषेधः। कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति चिक्लृप्सिता। चिक्लृप्स त्वमिति॥

अचस्तास्वत्थल्यनिटो नित्यम्॥ ६१॥

तासौ ये नित्यानिटो धातवोऽजन्तास्तेभ्यस्तासाविव थलीडागमो न भवति। याता-ययाथ। चेता-चिचेथ। नेता-निनेथ। होता-जुहोथ। अच इति किम्? भेत्ता-बिभेदिथ। तास्वदिति किम्? लूवा-लुलविथ। थलीति किम्? याता-ययिव। ययिम। अनिड्ग्रहणं नियमितस्यानेन विशेषणार्थम्। नित्यग्रहणं किम्? विधोता। विधविता-विदुधविथ। तासि विभाषितेट्त्थलि नियमिडागमो भवति। तास्वदिति वतिनिर्देशः किमर्थः? तासौ सतस्थलि प्रतिषेधार्थः। यो हि तासावसन्नसदावनित्यानिट् तस्य थलि प्रतिषेधो न भवति-जघसिथ। उवयिथ। उत्तरसूत्रेऽपि तास्वदिति वर्तते, अदादेशो हि घसिर्वेञादेशश्च वयिस्तासौ नास्ति॥

उपदेशेऽत्वतः॥ ६२॥

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविव थलीडागमो न भवति। पक्ता-पपक्थ। यष्टा-इयष्ठ। शक्ता-शशक्थ। उपदेश इति किम्? कर्ष्टा-चकर्षिथ। अत्वत इति किम्? भेत्ता-बिभेदिथ। तपरकरणं किम्? राद्धा-रराधिथ। तास्वदित्येव। जिघ्रहति-जग्रहिथ। नित्यमनिडित्येव। अञ्क्ता। अञ्जिता-आनञ्जिथ॥

ऋतो भारद्वाजस्य॥ ६३॥

ऋकारान्ताद्धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति। स्मर्त्ता-सस्मर्थ। ध्वर्त्ता-दध्वर्थ(२)। सिद्धे सत्यारम्भो नियमार्थः। ऋत एव भारद्वाजस्य, नान्येषां धातूनाम्-ययिथ। वविथ। पेचिथ। शेकिथ। तदयमर्थात् पूर्वयोर्योगयोर्विकल्पः। तपरकरणमॄकारान्तस्य निवृत्त्यर्थम्। तथा हि सति विध्यर्थमेतत् स्यात्॥

बभूथाततन्थजगृभ्मववर्थेति निगमे॥ ६४॥

बभूथ आततन्थ जगृभ्म ववर्थ इत्येतानि निपात्यन्ते निगमविषये। निगमे

(१) विवृत्सितुम्, विवृत्सितव्यम्, इत्यधिकं पुस्तकान्तरे॥ (२) कर्त्ता-चकर्थेति पुस्तकान्तरेऽधिकम्॥

वेदः। बभूथ—त्वं हि होता प्रथमो बभूथ। बभूविथेति भाषायाम्। आततन्थ—येनान्तरिक्षमुर्वाततन्थ। आतेनिथेति भाषायाम्। जगृभ्म—जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। जगृहिमेति भाषायाम्। ववर्थ—ववर्थ त्वं हि ज्योतिषा। ववरिथेति भाषायाम्। क्रादिसूत्रादेवास्य प्रतिषेधे सिद्धे नियमार्थं वचनम्—निगम एव, न भाषायामिति॥

विभाषा सृजिदृशोः॥ ६५॥

सृजि दृशि इत्येतयोस्थलि विभाषा इडागमो न भवति। सस्रष्ठ। ससर्जिथ। दद्रष्ठ। ददर्शिथ॥

इडत्त्यर्तिव्ययतीनाम्॥ ६६॥

अत्ति अर्ति व्ययति इत्येतेषां थलीडागमो भवति। आदिथ। आरिथ। संविव्ययिथ। व्येञो, न व्यो लिटीत्यात्वप्रतिषेधः। अत्तिव्ययत्योरन्तो भारद्वाजस्येति नियमाद्विकल्पः प्राप्तः। अर्तेरपि नित्यः प्रतिषेधः। अत्रेड्ग्रहणं विस्पष्टार्थम्। विकल्पविधाने हि सति अत्तिव्ययतिग्रहणमनर्थकं, प्रतिषेधविधाने चार्तिग्रहणमिति नित्योऽयं विधिरिड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम्॥

वस्वेकाजाद्घसाम्॥ ६७॥

कृतद्विर्वचनानामेकाचां धातूनाम्, आकारान्तानां, घसेश्च वसाविडागमो भवति। आशिवान्। पेचिवान्। शेकिवान्। धात्वभ्यासयोरेकादेशे कृते, एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति। आत्—ययिवान्। तस्थिवान्। घस्—जक्षिवान्। सिद्धे सत्यारम्भो नियमार्थः—एकाजाद्घसामेव वसाविडागमो भवति नान्येषाम्। बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। क्रादिनियमात् प्रतिषेधाभावाच्च य इट् प्रसक्तः स नियम्यते। आद्ग्रहणमनेकाजर्थम्। द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यं, दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्याम् भवितव्यम्—दरिद्राञ्चकार। अथाप्याम् क्रियते तथापि च दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतमिति न इडागमो भवति। ददरिद्वानिति भवितव्यम्। घसेरपि यदि ग्रहणमिह न क्रियते तदा द्विर्वचनात् परत्वाद्, घसिभसोर्हलि चेति उपधालोपे कृते द्विर्वचनमेव न स्यादनच्कत्वाद्, इह तु घसिग्रहणाद् उपधालोपमपि परत्वादिडागमो बाधते। तत्र कृते गमहनजनखनघसामित्युपधालोपः। स च द्विर्वचनेऽचीति द्विर्वचने कर्त्तव्ये स्थानिवद्भवति, तेन जक्षिवानिति सिद्ध्यति॥

विभाषा गमहनविदविशाम्॥ ६८॥

गम हन विद विश इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति। गम—जग्मिवान्। जगन्वान्। मो नो धातोरिति नकारः। हन—जघ्निवान्। जघन्वान्।

विद्-विविदिवान्। विविद्वान्। विश्-विविशिवान्। विविश्वान्। विशिना साहचर्या-दिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम्। ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति। ॐदृशेश्चेति वक्तव्यम्ॐ। ददृशिवान्। ददृश्वान्॥

सनिससनिवांसम्॥ ६९॥

सनोतेः सनतेर्वा धातोः सनिससनिवांसमिति निपात्यते(१)। अग्निवाग्ने सनिंससनिवांसम्। इडागम एत्वाभ्यासलोपाभावश्च निपात्यते। सनिड्पूर्वाद-न्यत्र सेनिवांसमित्येव भवति। छन्दसीद निपातनं विज्ञायते(२)। भाषायां सेनि-वांसमिति भवति॥

ऋद्धनोः स्ये॥ ७०॥

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति। करिष्यति। हरिष्यति। हनिष्यति। स्वरतेर्वेट्त्वादृद्धनोः स्य इत्येतद्भवति विप्रतिषेधेन-स्वरिष्यति। तपर-करणं विस्पष्टार्थम्॥

अञ्जेः सिचि॥ ७१॥

अञ्जेः सिचि इडागमो भवति। आञ्जीत्। आञ्जिष्टाम्। आञ्जिषुः। सिचीति किम्? अङ्क्ता। अञ्जिता। उदित्वात् विभाषा भवति॥

स्तुसुधूञ्भ्यः परस्मैपदेषु॥ ७२॥

स्तु सु धूञ् इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति। अस्तावीत्। असावीत्। अधावीत्। परस्मैपदेष्विति किम्? अस्तोष्ट। असोष्ट। अधोष्ट। अधविष्ट

यमरमनमातां सक् च॥ ७३॥

यम रम नम इत्येतेषामङ्गानामाकारान्तानां च सगागमो भवति परस्मैपदे सिचि इडागमश्च। यम्-अयंसीत्। अयंसिष्टाम्। अयंसिषुः। रम्-व्यरंसीत्। व्यरंसि-ष्टाम्। व्यरंसिषुः। नम्-अनंसीत्। अनंसिष्टाम्। अनंसिषुः। आकारान्तानाम्-अयासीत्। अयासिष्टाम्। अयासिषुः। यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता सा, नेटीति प्रतिषिध्यते। परस्मैपदेष्वित्येव। अयंस्त। अरंस्त। अनंस्त॥

स्मिपूङ्रञ्ज्वशां सनि॥ ७४॥

स्मिङ् पूङ् ऋ अञ्जू अशू इत्येतेषां धातूनां सनीडागमो भवति। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते। ङकारग्रहणं पूञो मा भूत्-पुपूषति इत्येव तस्य भवति। अशोरुदितो ग्रहणादश्नातेर्नित्यमिडागमोऽस्त्येव॥

किरश्च पञ्चभ्यः॥ ७५॥

किरादिभ्यः पञ्चभ्यः सनि इडागमो भवति। कॄ-चिकरिषति। गॄ-जिगरिषति।

(१) "सनिपूर्वस्य सनोतेः सनतेर्वा सनिससनिवांसमिति निपात्यते" इति क्वचित्पाठ उपलभ्यते। (२) इद चानुपूर्वी छन्दस्येव निवर्तेति छन्दस्येव निपातनं विज्ञायते इति दा०॥

दृङ्-दिदरिषते । धृङ्-दिधरिषते । प्रच्छ पिपृच्छिषति । पञ्चभ्य इति किम् ? सिस्मयिषते । किरतिगिरत्योरिट् सनि वेति विकल्पः प्राप्तः । वृतो वेति चास्येटो दीर्घत्वं नेच्छन्ति ॥

रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद्-रोदिति । स्वप-स्वपिति । श्वस-श्वसिति । अन्-प्राणिति । जक्ष्-जक्षिति । पञ्चभ्य इत्येव । जागर्ति । सार्वधातुक इति किम् ? स्वप्ता । वलादेरित्येव । रुदन्ति ॥

ईश से ॥ ७७ ॥

ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । ईशिष्व ॥

ईडजनोर्ध्वे च ॥ ७८ ॥

ईड जन इत्येताभ्यामुत्तरस्य ध्वे इत्येतस्य से इत्येतस्य च सार्वधातुकस्य इडागमो भवति । ईडिध्वे । ईडिध्वम् । ईडिषे । ईडिष्व । जनिध्वे । जनिध्वम् । जनिषे । जनिष्व । जनी प्रादुर्भावे इत्यस्य छान्दसत्वात्, श्यनो लुक् उपधालोपाभावश्च । जन जनने इत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते ॥ तस्य कर्मव्यतिहारे व्यतिजज्ञिषे । व्यतिजज्ञिष्व । व्यतिजज्ञिध्वे । व्यतिजज्ञिध्वम् इति च भवति । सेशब्दे ईशेरपि इडागम इष्यते । ईशिध्वे । ईशिध्वमिति, तदर्थं केचिदीडजनो ध्वे चेति सूत्रं १ पठन्ति । तत्र सकारादेः सेशब्दस्य सूत्रे एवोपादानाच्चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते । ईडीशिजना सेध्वयोरित्येकमेव सूत्रं न पठितं, विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति । ध्वे इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिडा । लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिडा ॥

लिङः सलोपोऽनन्त्यस्य ॥ ७९ ॥

(१) सार्वधातुक इति वर्तते । सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति । क्व पुनरसावनन्त्यो लिङः सकारः ? यो यासुट्सुट्सीयुटाम् । कुर्यात् । कुर्याताम् । कुर्युः । कुर्वीत । कुर्वीयाताम् । कुर्वीरन् । अनन्त्यस्येति किम् ? कुर्युः । कुर्याः । सार्वधातुक इत्येव । क्रियास्ताम् । क्रियासुः । कृषीष्ट । कृषीयास्ताम् । कृषीरन् ॥

अतो येयः ॥ ८० ॥

१ अकारान्तादङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इय इत्ययमादेशो भवति । पचेत् । पचेताम् । पचेयुः । इयत्रोस्यपदान्तादिति पररूपं बाधितम् । अत इति किम् ? चिनुयात् । सुनुयात् । तपरकरणं किम् ? यायात् । सार्वधातुक इत्येव, चिकीर्ष्यात् । ननु चातो लोपेनात्र भवितव्यम् । पचेदित्यत्रापि हि तर्हि, अतो दीर्घो यञीति दीर्घत्वेन भवितव्यम् । तदनेनावश्यं विध्यन्तरं बाधितव्यम् । स यथैव दीर्घस्य बाधकः

---

१ सार्वधातुक इति वर्तते इति एकस्मिन् पुस्तके नास्ति ।

एवमतोलोपस्यापि बाधकः स्यात्। स्यादेतदेवं यदि दीर्घः सार्वधातुके विधीयते। अथ [illegible] तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधकः स्यान्न पुनरतोलोपस्य। येय इत्यविभक्तिको निर्देशः। य इतिवा षष्ठीनिर्देशे यलोपस्यासिद्धत्वमनाश्रित्यादगुणः कृतः, सौत्रत्वान्निर्देशस्येति। केचिद् अत्रातो यासिय इति सूत्रं पठन्ति। तेषा सकारान्तः स्थानी षष्ठीसमासश्च।

## आतो ङितः ॥ ८१ ॥

आकारस्य ङिदवयवस्य अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य इय् इत्ययमादेशो भवति। पचेते। पचेथे। पचेताम्। पचेथाम्। यजेते। यजेथे। यजेताम्। यजेथाम्। सार्वधातुकमपिदित्यत्र न ङितीव ङिद्वदित्येवमङ्गीक्रियतेऽपितु ङित इव ङिद्वदिति। पूर्वसूत्र एव उच्चुकुटिषतीतिप्रसिद्धये तथाङ्गीकरणम्। यदि गाङ्कुटादिसूत्रे ङित इव ङिद्वद्भवतीत्येवमङ्गीक्रियते तदा, अनुदात्तङित आत्मनेपदमिति आत्मनेपदं प्राप्नोतीति। आत इति किम्? पचन्ति। यजन्ति। पचन्ते। यजन्ते ङित इति किम्? पचावहे। पचामहे। अत इत्येव। चिन्वाते। सुन्वाते। तपरकरण किम्? मिमाते, मिमाथे॥

## आने मुक् ॥ ८२ ॥

आने परतोऽङ्गस्यातो मुगागमो भवति। पचमानो, यजमानः। अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यत इति अदुपदेशादिति लसार्वधातुकानुदात्तत्वं भवति। यद्येवमातो ङित इत्ययमपि विधिः प्राप्नोति? तपरनिर्देशान्न भविष्यति। मुकि सत्यदर्न्तमाङ्गो भवति। लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति? नैष दोषः। उपदेशग्रहण तत्र क्रियते। तेन उपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम्। तथाच पचावः पचाम इत्यत्रापि भवति॥

## ईदासः ॥ ८३ ॥

आस उत्तरस्यानस्य ईकारादेशो भवति। आसीनो यजते। अत्र पञ्चम्याः परस्य षष्ठी कल्प्यते॥

## अष्टन आ विभक्तौ ॥ ८४ ॥

अष्टनो विभक्तौ परत आकारादेशो भवति। अष्टाभिः। अष्टाभ्यः। अष्टानाम्। अष्टासु। विभक्ताविति किम्? अष्टत्वम्। अष्टता। आ इति व्यक्तिनिर्देशोऽयमाकृतिनिर्देशे तु नकारस्यानेऽनुनासिकाकारः स्यात्। विकल्पेनायमाकारो भवत्येतज्ज्ञापितमष्टनो दीर्घादिति दीर्घग्रहणाद्। अष्टाभ्य औशिति च कृतात्वस्य निर्देशात्तेनाष्टभिरष्टभ्य इत्यपि भवति। तदन्तविधिश्चात्रेष्यते–प्रिया अष्टौ येषां ते प्रियाष्टानः। प्रियाष्टौ॥

## रायो हलि ॥ ८५ ॥

रै इत्येतस्य हलादौ विभक्तौ परत आकारादेशो भवति। राभ्याम्। राभिः।

हलीति किम् ? रायौ। रायः। विभक्ताविति किम् ? रैत्वम्। रैता। मृजेर्वृद्धिरित्यतः प्राग्विभक्त्यधिकारः॥

युष्मदस्मदोरनादेशे ॥ ८६ ॥

युष्मदस्मदित्येतयोरनादेशे विभक्तौ परत आकारादेशो भवति। युष्माभिः। अस्माभिः। युष्मासु। अस्मासु। अनादेश इति किम् ? युष्मत्। अस्मत्। हलीत्यधिकारादप्यत्र न स्यात्। उत्तरत्र त्वनादेशग्रहणेन प्रयोजनं योऽचीति। तदिहैव क्रियते॥

द्वितीयायां च ॥ ८७ ॥

द्वितीयायां च परतो युष्मदस्मदोराकारादेशो भवति। त्वाम्। माम्। युवाम्। आवाम्। युष्मान्। अस्मान्। आदेशार्थं वचनम्॥

प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोराकारादेशो भवति युवाम्। आवाम्। प्रथमाया इति किम् ? युवयोः। आवयोः। द्विवचन इति किम् ? त्वम्, अहं, यूयं, वयम्। भाषायामिति किम् ? युवं वस्त्राणि पीवसा वसाथे॥

योऽचि ॥ ८९ ॥

अजादौ विभक्तावनादेशे युष्मदस्मदोर्यकारादेशो भवति। त्वया। मया। त्वयि। मयि। युवयोः। आवयोः। अचीति किम् ? युवाभ्याम्, आवाभ्याम्। युष्मदस्मदोरनादेश इत्यत्र यदि हलीत्यनुवर्तते शक्यमकर्तुमचीत्येतत्। तत्क्रियते विस्पष्टार्थम्। अनादेश इत्येव। त्वद्गच्छति। मद्गच्छति॥

शेषे लोपः ॥ ९० ॥

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति। कश्च शेषः, यत्राकारो यकारश्च न विहितः,

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि।
यान्यद्विवचनान्यत्र तेषु(१) लोपो विधीयते॥

त्वम्। अहम्। यूयम्। वयम्। तुभ्यम्। मह्यम्। युष्मभ्यम्। अस्मभ्यम्। त्वत्। मत्। युष्मत्। अस्मत्। तव। मम। युष्माकम्। अस्माकम्। शेषग्रहणं विस्पष्टार्थम्। शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवति, त्वं ब्राह्मणी, अहं ब्राह्मणी सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य। अलिङ्गे वा युष्मदस्मदी इति। केचित् शेषे लोपं टिलोपमिच्छन्ति। कथम्? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य विधीयन्ते। तेन मपर्यन्ताद्योऽन्यः स शेष इति। तत्राय लोप इति टिलोपो भवति।

मपर्यन्तस्य ॥ ९१ ॥

मपर्यन्तस्येत्ययमधिकारो, यदित ऊर्ध्वमनुक्रमिष्यामो मपर्यन्तस्येत्येवं तद्वेदितव्यम्। वक्ष्यति-युवावौ द्विवचने। युवाम्। आवाम्। मपर्यन्तस्येति किम् ? युः

१. शेषे इति बहुपुस्तकेषु पाठः।

कामावकामिति साकच्कस्य मा भूत्। त्वमावेकवचने-त्वया । मया । मपर्यन्तस्येति किम् ? सर्वस्य मा भूत् । तथा च सति त्वमयोरकारस्य, योऽचीति यकारे कृतेऽनिष्ट रूपं स्यात् । मान्तस्येत्येव सिद्धेऽस्मिन् यत्पर्यग्रहणं कृतमवधिद्योतनार्थं तन्मान्ते मा भूत्, कदा ? (१) यदा ण्यन्तयोः क्विपि मान्ताच्च विद्यते युष्मदस्मदोः, स्थानिवत्त्व च णेरत्र कौ लुप्तत्वाच्च विद्यते ॥

## युवावौ द्विवचने ॥ ९२ ॥

द्विवचन इत्यर्थग्रहणम् । द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः । यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्यान्यसंख्यत्वादेकवचनं बहुवचनं वा भवति तदापि द्व्यर्थयोर्युष्मदस्मदोर्युवावौ भवतः, यदि त्वाहौ सौ इत्येवमादिना आदेशान्तरेण न बाध्येते । अतिक्रान्त युवामतियुवाम् । अत्यावाम् । अतिक्रान्तान् युवामतियुवान् । अत्यावान् । अतिक्रान्तेन युवामतियुवया । अत्यावया । अतिक्रान्तैर्युवामतियुवाभिरत्यावाभिः । अतिक्रान्तेभ्यो युवामतियुवभ्यमत्यावभ्यम् । अतिक्रान्ताद् युवामतियुवत् । अत्यावत् । अतिक्रान्तेभ्यो युवामतियुवत् । अत्यावत् । अतिक्रान्तानां युवामतियुवाकम् । अत्यावाकम् । अतिक्रान्ते युवामतियुवयि । अत्यावयि । अतिक्रान्तेषु युवामतियुवासु अत्यावासु । त्वाहादीनां विषये तु परत्वात्त एव भवन्ति । अतिक्रान्तो युवामतित्वम् । अत्यहम् । अतिक्रान्ता युवाम्, अतियूयम् । अतिवयम् । अतिक्रान्ताय युवाम्, अतितुभ्यम् । अतिमह्यम् । अतिक्रान्तस्य युवामतितव । अतिमम । यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः । अतिक्रान्तौ त्वाम्, अतित्वाम् । अतिमाम् । अतिक्रान्तौ युष्मान्, अतियुष्मानत्यस्मान् । एवं सर्वत्र ज्ञेयम् ॥

## यूयवयौ जसि ॥ ९३ ॥

युष्मदस्मदोर्मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । तदन्तविधिरत्र भवति । अङ्गाधिकारे तस्य च ग्रहणं भवति(२) तदुत्तरपदस्य चेति ।

## त्वाहौ सौ ॥ ९४ ॥

युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व अह इत्येतावादेशौ भवतः । त्वम् । अहम् । परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ॥

---

(२) माभूत् यदा तदेति परमज्ञरोपूतः पाठः । (३) अङ्गाधिकारे तस्यतदुत्तरपदस्य 'यदि वहुषु पुस्तकेषु नास्ति तदेव तु शुद्धम्, परमत्रर्थादर्शनात् ।

## तुभ्यमह्यौ ङयि ॥ ९५ ॥

युष्मदस्मदोर्मपर्यन्तस्य तुभ्य मह्य इत्येतावादेशौ भवतो ङयि परतः। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥

## तवममौ ङसि ॥ ९६ ॥

युष्मदस्मदोर्मपर्यन्तस्य तव मम इत्येतावादेशौ भवतो ङसि परतः। तव। मम। परमतव। परममम। अतितव। अतिमम।

## त्वमावेकवचने ॥ ९७ ॥

एकवचन इत्यर्थनिर्देशः। एकवचने ये युष्मदस्मदी एकार्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व म इत्येतावादेशौ भवतः। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि। यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वाद् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः। आदेशान्तराणां तु त्वाहौ सावित्येवमादीनां विषये पूर्वविप्रतिषेधेन त एवेष्यन्ते। अतिक्रान्तस्त्वामतित्वम्। अत्यहम्। अतिक्रान्तौ त्वामतित्वाम्। अतिमाम्। अतिक्रान्तान् त्वामतित्वान् अतिमान्। अतिक्रान्ताभ्यां त्वामतित्वाभ्याम्। अतिमाभ्याम्। अतिक्रान्तैस्त्वामतित्वाभिः। अतिमाभिः। इत्येवमाद्युदाहार्यम्।

## प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

एकवचन इत्यनुवर्तते। प्रत्यये उत्तरपदे च परतः एकत्वे वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः। तवायं, त्वदीयः। मदीयः। अतिशयेन त्वं, त्वत्तरः। मत्तरः। त्वामिच्छति, त्वद्यति। मद्यति। त्वमिवाचरति, त्वद्यते। मद्यते। उत्तरपदे–तव पुत्रस्त्वत्पुत्रः। मत्पुत्रः। त्वं नाथोऽस्य, त्वन्नाथो, मन्नाथः। एकवचन इत्येव। युष्माकमिदं युष्मदीयम्। अस्मदीयम्। युष्माकं पुत्रोऽस्माकं पुत्रो युष्मत्पुत्रोऽस्मत्पुत्रः। विभक्तावित्यधिकारात् पूर्वयोगो विभक्तावेव। ततोऽन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यादित्ययमारम्भः। ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ भविष्यतः? नैव शक्यं, लुका तस्या भवितव्यम्। बहिरङ्गो लुक्, अन्तरङ्गावादेशौ प्रथमं तौ भविष्यतः। एतदेव तर्ह्यादेशवचनं ज्ञापकमन्तरङ्गानपि विधीन् बहिरङ्गोऽपि लुक् बाधते इति। तेन गोमान् प्रियोऽस्य गोमत्प्रिय इत्येवमादौ नुमादि लुका बाध्यते। एवं च सति त्वाहौ सावित्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति। त्वं प्रधानमेषां त्वत्प्रधानाः। मत्प्रधानाः। यूयं पुत्रा अस्य युष्मत्पुत्रोऽस्मत्पुत्रः। तुभ्यं हितं त्वद्धितं, मद्धितम्। तव पुत्रास्त्वत्पुत्रो, मत्पुत्रः। अथ किमर्थमेषां त्वदादीनां बाधनार्थमेतत् विज्ञायते? कथ्यस्वित्यपेक्ष्य। ज्ञापकार्थे ह्यनस्मिन् बहुतरमिष्टं संगृह्यते॥

त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥

त्रि चतुर् इत्येतयोः स्त्रियां वर्तमानयोस्तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ परतः। तिस्रः। चतस्रः। तिसृभिः। चतसृभिः। स्त्रियामिति किम्? त्रयः। चत्वारः। त्रीणि। चत्वारि। स्त्रियामिति चैतत् त्रिचतुरोरेव विशेषणं नाङ्गस्य। तेन यदा त्रिचतुःशब्दौ स्त्रियामङ्गं तु लिङ्गान्तरे तदाप्यादेशौ भवत एव—प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मण इति। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिसृ ब्राह्मणकुलम्। प्रियतिसृणी। प्रियतिसृणि। प्रियचतसा। प्रियचतस्रौ। प्रियचतस्रः। प्रियचतसृ। प्रियचतसृणी। प्रियचतसृणि। नद्यृतश्चेति समासान्तो न भवति। विभक्त्याश्रयत्वेन तिस्रभावस्य बहिरङ्गलक्षणत्वात् (१)। यदा तु त्रिचतुःशब्दौ लिङ्गान्तरे स्त्रियामङ्गं तदा आदेशौ न भवतः—प्रियास्त्रयोऽस्याः, प्रियाणि त्रीणि वा अस्या ब्राह्मण्याः सा प्रियत्रिः। प्रियत्री। प्रियत्रयः। प्रियचत्वाः। प्रियचत्वारौ। प्रियचत्वारः। *तिसृभावे संज्ञायां कन्युपसङ्ख्यानं कर्त्तव्यम्*। तिसृका नाम ग्रामः। *चतसर्याद्युदात्तनिपातनं कर्त्तव्यम्*। चतस्रः पश्येत्यत्र, चतुरः शसीत्येष स्वरो मा भूत्। चतसृणामित्यत्र तु षट्त्रिचतुर्भ्यो हलादिरित्येव स्वरो भवति। हलादिग्रहणसामर्थ्यान्निपातनस्वरो बाध्यते।

अचि र ऋतः ॥ १०० ॥

तिसृ चतसृ इत्येतयोर्ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः। तिस्रस्तिष्ठन्ति। तिस्रः पश्य। चतस्रस्तिष्ठन्ति। चतस्रः पश्य। प्रियतिस्र आनय। प्रियचतस्र आनय। प्रियतिस्रः स्वम्। प्रियचतस्रः स्वम्। प्रियतिस्रि निधेहि प्रियचतस्रि निधेहि। पूर्वसवर्णोत्वविसर्जनीयस्थानगुणानामपवादः। परमपि विसर्जनीयस्थानगुणं पूर्वविप्रतिषेधेन बाधते। अचीति किम्? तिसृभिः। चतसृभिः। ऋत इति तिसृचतस्रोः प्रतिपत्त्यर्थमन्यथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत॥

जराया जरसन्यतरस्याम् ॥ १०१ ॥

जरा इत्येतस्य जरसित्ययमादेशो भवति, अन्यतरस्यामजादौ विभक्तौ परतः। जरसा दन्ताः शीर्यन्ते। जरया दन्ताः शीर्यन्ते। जरसे त्वा परिदद्युः। जरायै त्वा परिदद्युः। अचीत्येव। जराभ्याम्। जराभिः। लुमो जरसादेशो विप्रतिषेधेन। अतिजरांसि ब्राह्मणकुलानि। इहातिजरसं ब्राह्मणकुलं पश्येति लुम् भवति, आनुपूर्व्यात् सिद्धत्वात्। अतिजर अमिति स्थिते लुगम्भावो जरस्भाव इति त्रीणि कार्याणि युगपत् प्राप्नुवन्ति। तत्र लुक् तावदपवादत्वादम्भावेन बाध्यते। अम्भावोऽपि परत्वाज्जरसादेशेन, न च पुनर्लुक्शास्त्रं प्रवर्त्तते अष्टावसरत्वात् इत्येवमेव भवति—अतिजरसं ब्राह्मणकुलं पश्येति। प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति,

(१) बहिरङ्गलक्षणत्वासिद्धत्वादिति पुस्तकान्तरे पाठः॥

अतिजरैरिति च भवितव्यमिति गोनर्दीयमतम् । किं कारणम् ? सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । अन्ये त्वनित्यत्वादस्याः परिभाषाया अतिजरसं ब्राह्मणकुलं तिष्ठति अतिजरसैरित्येव भवितव्यमिति मन्यन्ते ॥

त्यदादीनामः ॥ १०२ ॥

त्यदित्येवमादीनामकारादेशो भवति विभक्तौ परतः । त्यद्-स्यः । त्यौ । त्ये । तद्-सः । तौ । ते । यद्-यः । यौ । ये । एतद्-एषः । एतौ । एते । इदम्-अयम् । इमौ । इमे । अदस्-असौ । अमू । अमी । द्वि-द्वौ । द्वाभ्याम् ॥ द्विपर्यन्तानां त्यदादीनामत्वमिष्यते ॥ इह न भवति-भवत्-भवान् । संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ता इतीह न भवति-त्यद् । त्यदौ । त्यदः । अतित्यद् । अतित्यदौ । अतित्यदः । त्यदादिप्रधाने तु शब्दे भवत्येव-परमसः । परमतौ । परमते ॥

किमः कः ॥ १०३ ॥

किम् इत्येतस्य क इत्ययमादेशो भवति विभक्तौ परतः । कः । कौ । के । साकच्कस्याप्ययमादेशो भवति, तेनाकार एव इमो न विधीयते, इमोदिति ॥

कु तिहोः ॥ १०४ ॥

सकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य कु इत्ययमादेशो भवति । कुतः । कुत्र । कुह । तिहोरितीकार उच्चारणार्थः ॥

क्वाति ॥ १०५ ॥

अतीत्येतस्यां विभक्तौ परतः किमित्येतस्य क्व इत्ययमादेशो भवति । क्व गमिष्यसि । क्व भोक्ष्यते । आदेशान्तरवचनमोर्गुणनिवृत्त्यर्थम् । किमोद्वविति च प्रत्ययान्तरं न विधीयते साकच्कार्थम् ॥

तदोः सः सावनन्त्ययोः ॥ १०६ ॥

त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः । त्यद्-स्यः । तद्-सः । एतद्-एषः । अदस्-असौ । अनन्त्ययोरिति किम् ? हे स । सा ॥

अदस औ सुलोपश्च ॥ १०७ ॥

अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति । असौ । ❀औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च❀ । यदा चौत्वप्रतिषेधस्तदा सकारादुत्तरस्य उत्वं भवति । असुकः । असकौ । ❀उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः❀ । परमाहम् । परमायम् । परमानेन ॥

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ॥
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्त्तनात् ।
प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥

इदमो मः ॥ १०८ ॥

इदम- सौ परतो मकारोऽन्तादेशो भवति । इयम् । अयम् । इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ॥

दश्च ॥ १०९ ॥

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः। इमौ । इमे । इमम् । इमौ । इमान्(१) ॥

यः सौ ॥ ११० ॥

इदमो मकारस्य यकारादेशो भवति सौ परतः । इयम् । उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः ॥

इदोऽय् पुंसि ॥ १११ ॥

इदम इद्रूपस्य पुंसि सौ परतोऽय् इत्ययमादेशो भवति । अयं ब्राह्मणः । पुंसीति किम् ? इयं ब्राह्मणी ॥

अनाप्यकः ॥ ११२ ॥

इदमोऽककारस्य इद्रूपस्य स्थाने अन इत्ययमादेशो भवति आपि विभक्तौ परतः। अनेन । अनयोः । अक इति किम् ? इमकेन । इमकयोः । आपीति प्रत्याहारस्तृतीयैकवचनात् प्रभृति सुपः पकारेण ॥

हलि लोपः ॥ ११३ ॥

हलादौ विभक्तौ परत इदमोऽककारस्य इद्रूपस्य लोपो भवति । आभ्याम् । एभिः । एभ्यः । एषाम् । एषु । नानर्थकेऽलोन्त्यविधिरिति सर्वस्यापमिद्रूपस्य लोपः । अथवा नायमिल्लोपः । अनाप्यक इति अन्ग्रहणमनुवर्त्तते(२) ॥

मृजेर्वृद्धिः ॥ ११४ ॥

विभक्ताविति निवृत्तम् । मृजेरङ्गस्य इको वृद्धिर्भवति । मार्ष्टा । मार्ष्टुम् । मार्ष्टव्यम् । मृजेरिति धातुग्रहणमिदं, धातोश्च कार्यमुच्यमान धातुप्रत्यय एव वेदितव्यम्, तेन कंसपरिमृड्भ्यां, कंसपरिमृड्भिरित्यत्र न भवति ॥

अचो ञ्णिति ॥ ११५ ॥

अजन्तस्याङ्गस्य ञिति णिति च वृद्धिर्भवति । ञिति-एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । कारः । हारः । णिति-गौः । गावौ । गावः । सखायौ । सखायः। जैत्रम् । यौत्रम् । च्यौत्नः । जयतेर्यौतेश्च, उणादयो बहुलमिति ष्ट्रन् प्रत्ययः। च्यवतेरपि त्नण् ॥

(१) कचित्पुस्तकान्तरे पाठोऽयम्—"इदमो विभक्ताविति न सम्बध्यते उत्तरसूत्रे सावितिवचनात्" इति। (२) अथवाऽयमनोऽकोन्त्यलोप इति पा० ॥

अत उपधायाः ॥ ११६ ॥

अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति । पाकः । त्यागः । यागः । पाचयति । पाचकः । पाठयति । पाठकः । अत इति किम् ? भेदयति, भेदकः । उपधाया इति किम् ? चकासयति, तक्षकः ॥

तद्धितेष्वचामादेः ॥ ११७ ॥

तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति । गार्ग्यः । वात्स्यः । दाक्षिः । प्लाक्षिः । णिति–औपगवः । कापटवः । वाभ्रो नागत इत्यत्राचामादिवृद्धिरन्त्योपधालक्षणा वृद्धिं बाधते ॥

किति च ॥ ११८ ॥

किति च तद्धिते परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति । नडादिभ्यः फक्–नाडायनः । चारायणः । प्राग्वहतेष्ठक्–आक्षिकः । शालाकिकः ॥

इति काशिकायां वृत्तौ सप्तमाध्यायस्य द्वितीयः पादः ॥ ७ ॥ २ ॥

---

## अथ सप्तमाध्यायस्य तृतीयः पादः ॥

देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ १ ॥

देविका शिंशपा दित्यवाट् दीर्घसत्र श्रेयस इत्येतेषामङ्गानामचामादेरचः स्थाने वृद्धिप्रसङ्गे आकारो भवति ञिति णिति किति तद्धिते परतः । देविकायां भवमुदकं दाविकमुदकम् । दविकाकूले भवाः शालयः, दाविकाकूलाः शालयः । पूर्वदेविका नाम प्राचां ग्रामः । तत्र भवः पूर्वदाविकः । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धि साप्याकार एव भवति । शिंशपा–शिंशपाया विकारश्चमसः, शांशपश्चमसः । पलाशादिरयम् । तेन पक्षे अण्, अनुदात्तादिलक्षणो वा अञ् । शिंशपास्थले भवाः, शांशपास्थलाः । पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः । दित्यवाट्–दित्यौहि इदं दात्यौहम् । दीर्घसत्र–दीर्घसत्रे भवं दार्घसत्रम् । श्रेयस–श्रेयसि भवं, श्रायसम् । *वहीनरस्येद्वचनम्* । *वृद्धिविषयेऽचामादेरचः स्थाने वहीनरस्य इकारादेशो भवति । वहीनरस्यापत्यं, वैहीनरिः । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ॥

केकयमित्त्रयुप्रलयानां यादेरियः ॥ २ ॥

केकय मित्त्रयु प्रलय इत्येतेषां यकारादेरिय इत्ययमादेशो भवति तद्धिते ञिति णिति किति च परतः । केकयस्यापत्यं कैकेयः । जनपदशब्दात् क्षत्रियादञित्यञ् प्रत्ययः । मित्त्रयुभावेन श्लाघते, मैत्त्रेयिकया श्लाघते । गोत्रचरणाच्छ्लाघायाका

रतदवेतेष्विति वुञ्। लौकिकं हि तत्र गोत्रं गृह्यते। लोके अपिशब्दो गत्रमित्यभिधीयते। प्रलय-प्रलयादागतं, प्रालेयमुदकम् ॥

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच ॥ ३ ॥

यकारवकाराभ्यामुत्तरस्य अचामादेरचः स्थाने वृद्धिर्न भवति ताभ्यां तु यकारवकाराभ्यां पूर्वमैजागमौ भवतो ञिति णिति किति च तद्धिते परतः। यकारादैकारः। वकारादौकारः। व्यसने भवं, वैयसनम्। व्याकरणमधीते, वैयाकरणः। स्वश्वस्यापत्यं, सौवश्वः। य्वाभ्यामिति किम्? अर्थस्यापत्यं आर्थिः। पदान्ताभ्यामिति किम्? यष्टिः प्रहरणमस्य याष्टीकः। यतश्च्याना यातः। प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थमिह मा भूद्याष्टिः। माध्वर्धिरिति। नह्यत्र य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति। वृद्धेरभावात्प्रतिषेधोऽपि नास्तीत्यप्रसङ्गः॥ उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते॥ पूर्वेन्वलिन्दे भवः पूर्वैयलिन्दः। यत्र तूत्तरपदसंबन्धी यण् न भवति तत्र नेष्यते प्रतिषेध-द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः॥

द्वारादीनां च ॥ ४ ॥

द्वार इत्येवमादीनां य्वाभ्याम् उत्तरपदस्याचामादेरचः स्थाने वृद्धिर्न भवति पूर्वौ तु ताभ्यामैजागमौ भवतः। द्वारे नियुक्तः, दौवारिकः। द्वारपालस्येदं, दौवारपालम्। तदादिविधिश्चात्र भवति। स्वर-स्वरमधिकृत्य कृतो ग्रन्थः, सौवरः। सौवरोऽध्यायः। सौवर्यः सहस्य इति। व्यल्कश-व्यल्कशे भव, वैयल्कशः। स्वस्ति-स्वस्तीत्याह, सौवस्तिकः। स्वर्-स्वर्भवः, सौवः। अव्ययानां भमात्रे टिलोपः। स्वर्गमनमाह, सौवर्गमिकः। स्वाध्याय इति केचित् पठन्ति, तदनर्थकम्। शोभनोऽध्याय, इत्येतस्यां व्युत्पत्तौ पूर्वेणैव सिद्धम्। अथाप्येवं व्युत्पत्तिः क्रियते-स्वोध्यायः स्वाध्याय इति। एवमप्यनेनैव स्वशब्दस्यैव पाठात्सिद्धम्। तदादावपि हि वृद्धिरियं भवत्येव। स्वयकृत-स्वयकृतस्यापत्यं, स्वैयकृतः। स्वादुमृदु-स्वादुमृदुन इदं, सौवादुमृदवम्। श्वन्-शुन इदं, शौवनम्। अवणि इति प्रकृतिभावः। शुनो विकारो मांसं, शौवम्। प्राणिरजतादिभ्योऽञित्यञ्। श्वादंष्ट्रायां भवः, शौवादंष्ट्रो मणिः। स्वस्येदं, सौवम्। स्वग्रामे भवः, सौवग्रामिकः। अध्यात्मादित्वाट्ठञ्। अपदान्तार्थोऽयमारम्भः। द्वार। स्वर। स्वाध्याय। व्यल्कश। स्वस्ति। स्वर्। स्वयकृत। स्वादुमृदु। श्वन्। स्व। द्वारादिः॥

न्यग्रोधस्य च केवलस्य ॥ ५ ॥

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति तस्माच्च पूर्वमैकार आगमो भवति। न्यग्रोधस्य विकारः, नैयग्रोधश्चमसः। केवलस्येति किम्? न्यग्रोधमूले भवाः शालयः, न्याग्रोधमूलाः शालयः। न्यग्रोहयतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थमव्युत्पत्तिपक्षे विध्यर्थम् ॥

## न कर्मव्यतिहारे॥ ६ ॥

कर्मव्यतिहारे यदुक्तं तन्न भवति। प्रतिषेधागमयोरयं प्रतिषेधः। व्यावक्रोशी व्यावलेखी। व्यावर्त्ती। व्यावहासी वर्त्तते। कर्मव्यतिहारे णच् स्त्रियामिति णच प्रत्ययस्तदन्तात्स्वार्थेऽण्(१)॥

## स्वागतादीनां च ॥ ७ ॥

स्वागत इत्येवमादीनां यदुक्तं तन्न भवति। स्वागतमित्याह, स्वागतिकः। स्वध्वरेण चरति, स्वाध्वरिकः। स्वङ्गस्यापत्य, स्वाङ्गिः। व्यङ्गस्यापत्यं, व्याङ्गिः। व्यडस्यापत्य, व्याडिः। व्यवहारेण चरति, व्यावहारिकः। व्यवहारशब्दोऽत्र लौकिके वृत्ते वर्त्तते न तु कर्मव्यतिहारे। स्वपतौ साधु, स्वापतेय। द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः। स्वागत। स्वध्वर। स्वङ्ग। व्यङ्ग। व्यड। व्यवहार। स्वपति। स्वागतादिः॥

## श्वादेरिञि ॥ ८ ॥

श्वादेरङ्गस्य इञि परतो यदुक्तं तन्न भवति। श्वभस्त्रस्यापत्य, श्वाभस्त्रिः। श्वादंष्ट्रिः। श्वन्शब्दो द्वारादिषु पठ्यते, तत्र तदादिविधिर्भवतीत्येतदेव वचन ज्ञापकम्। ॐइकारादिग्रहण कर्त्तव्य, श्वागणिकाद्यर्थम्ॐ। श्वगणेन चरति, श्वागणिकः। श्वापूर्षिकः॥ तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते॥ आभस्त्रेरिद श्वाभस्त्रम्॥

## पदान्तस्यान्यतरस्याम् ॥ ६ ॥

श्वादेरङ्गस्य पदशब्दान्तस्यान्यतरस्या यदुक्तं तन्न भवति। श्वापदस्येद, श्वापदम्। शौवापदम्॥

## उत्तरपदस्य ॥ १० ॥

उत्तरपदस्येत्ययमधिकारः, हनस्तो चिण्णलोरिति प्रागेतस्मात्, यदित ऊर्ध्वमनुक्रमिष्याम उत्तरपदस्येत्येव तद्वेदितव्यम्। अवयवाद्दृतोः। पूर्ववार्षिकम्। अपरवार्षिकम्। पूर्वहैमनम्। अपरहैमनम्। यत्र पञ्चमीनिर्द्देशो नास्ति, जे प्रोष्ठपदानामित्येवमादौ तदर्थमुत्तरपदाधिकारः। पञ्चमीनिर्द्देशेऽपि विस्पष्टार्थं वृद्धेश्च व्यपदेशार्थम्। उत्तरपदवृद्धौ सर्वं चेत्युत्तरपदाधिकारे या वृद्धिरित्येव विज्ञायते॥

## अवयवादृतोः ॥ ११ ॥

अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम्। पूर्वं वर्षाणामपरं वर्षाणामित्येकदेशिसमासः। तत्र भव इत्येतस्मिन्नर्थे, वर्षाभ्यष्ठक्, हेमन्ताच्च, सर्वत्राण् च तलोपश्च इत्यण् प्रत्ययः। तत्र ऋतोर्वृद्धिमद्विधा-

(१) तदन्तात् "टिड्ढाणञ्" इति ङीप् इत्यधिकमेकस्मिन्पुस्तके॥

वयवादिति(१) तदन्तविधिः। अवयवादिति किम्? पूर्वासु वर्षासु भवं पौर्ववर्षिकम्। कालाट्ठञ् इति ठञ्। अवयवपूर्वस्यैव तदन्तविधिर्नान्यस्य ॥

## सुसर्वार्द्धाज्जनपदस्य ॥ १२ ॥

सु सर्व अर्द्ध इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्द्धपाञ्चालकः। जनपदतदवध्योश्च, अवृद्धादपि बहुवचनविषयादिति वुञ्। सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः ॥

## दिशोऽमद्राणाम् ॥ १३ ॥

दिग्वाचिन उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचोवृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। पूर्वपाञ्चालकः। अपरपाञ्चालकः। दक्षिणपाञ्चालकः। पूर्ववत्तदन्तविधिः प्रत्ययश्च। दिश इति किम्? पूर्वः पञ्चालानां, पूर्वपञ्चालाः। तत्र भवः, पौर्वपञ्चालकः। आपरपञ्चालकः। अमद्राणामिति किम्? पौर्वमद्रः। आपरमद्रः। मद्रेभ्योऽञित्यञ्प्रत्ययः ॥

## प्राचां ग्रामनगराणाम् ॥ १४ ॥

प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। ग्रामाणाम्—पूर्वेषुकामशम्यां भवः, पूर्वेषुकामशमः। अपरैषुकामशमः। (२)पूर्वकार्ष्णमृत्तिकः। अपरकार्ष्णमृत्तिकः। नगराणाम्—पूर्वस्मिन् पाटलिपुत्रे भवः, पूर्वपाटलिपुत्रकः। अपरपाटलिपुत्रकः। पूर्वकान्यकुब्जः। अपरकान्यकुब्जः। ग्रामत्वादेव नगराणामपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत्सम्बन्धभेदप्रतिपत्त्यर्थं दिक्पूर्वपदो हि समुदायः पूर्वेषुकामशम्यादि ग्रामनामधेयम्। पाटलिपुत्रादिः पुनरुत्तरपदमेव नगरमाह ॥ तत्र ग्रामवाचिनामद्रानामवयवस्य दिक्शब्दादुत्तरस्य नगरवाचिनामुत्तरपदानामवयवस्य च वृद्धिर्भवतीत्येवमभिसम्बन्धः क्रियते। इतरत्र तु दिश उत्तरेषां नगराणामित्येव। पूर्वेषुकामशम इत्येवमादिषु इतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितं, नेन्द्रस्य परस्येति प्रतिषेधेन ॥

## संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥

संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः। द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा, द्विसांवत्सरिकः। संख्यायाः—द्वे षष्टी अधीष्टो भृतो भूतो भावी वा, द्विषाष्टिकः। द्विसाप्ततिकः। द्विषष्ट्यादि शब्दो वर्षेषु संख्येयेषु वर्त्तमानः कालाधिकारविहितं प्रत्य-

(१) क्वचित् अवयवानामिति षष्ठीबहुवचनान्तः पाठः। सोऽयुक्तः। अर्थासङ्गतेरिति-पदमञ्जरी (२) पूर्वकार्णमृत्तिकः। अपरकार्णमृत्तिकः इति पाठभेदः पण्डितपत्रे ॥

यमुत्पादयति परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिकः। त्रैसमिक इत्युत्तरपदवृद्धिर्न भवति, द्विवर्षा, त्रिवर्षा, माणविकेति, अपरिमाणबिस्ताचितेति पर्युदासो न भवति ॥

## वर्षस्याभविष्यति ॥ १६ ॥

सङ्ख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः स चेत्तद्धितो भविष्यत्यर्थे न भवति । द्वे वर्षे अधीष्टो भृतो भूतो वा, द्विवार्षिकः । त्रिवार्षिकः । अभविष्यतीति किम् ? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये अधिकं वापि विद्येत स सोमं पातुमर्हति । त्रीणि वर्षाणि भावीति त्रैवर्षिकम् । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति । गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति, द्विवार्षिको मनुष्यः ॥

## परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥

परिमाणान्तस्याङ्गस्य सङ्ख्यायाः परं यदुत्तरपदं तस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः, संज्ञायां विषये शाणे चोत्तरपदे न भवति । द्वौ कुडवौ प्रयोजनमस्य, द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । विभाषा कार्षापणसहस्राभ्यामित्यत्र सुवर्णशतमानयोरुपसङ्ख्यानमिति लुको विकल्पः । द्वाभ्यां निष्काभ्यां क्रीतं, द्वित्रिपूर्वान्निष्कात्, द्विनैष्किकम् । असंज्ञाशाणयोरिति किम् ? पाञ्चलोहितिकम् । पाञ्चकपालिकम् । पञ्च लोहित्यः परिमाणमस्य, पञ्च कपालानि परिमाणमस्येति विगृह्य तदस्य परिमाणमिति योगविभागात्प्रत्ययस्तद्धितान्तश्चाय समुदायः संज्ञा । द्वाभ्यां शाणाभ्यां क्रीतं, द्वैशाणम् । त्रैशाणम् । शाणाद्वा, द्वित्रिपूर्वादण्वेत्यण् प्रत्ययः । असंज्ञाशाणकुलिजानामिति केचित्पठन्ति । द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः ॥

## जे प्रोष्ठपदानाम् ॥ १८ ॥

*ज इति जातार्थो निर्दिश्यते । तत्र यस्तद्धितो विहितस्तस्मिन् ञिति णिति किति* च परतः प्रोष्ठपदानामुत्तरस्याचामादेरचो वृद्धिर्भवति । प्रोष्ठपदा नाम नक्षत्रं ताभिर्युक्तः काल इत्यण् । तस्य लुबविशेष इति लुप् । प्रोष्ठपदासु जातः ऋतुनक्षत्रेभ्योऽणित्यण् । प्रोष्ठपादो माणवकः । ज इति किम् ? यदा प्रौष्ठपदो मेघो धरणीमभिवर्षति । प्रोष्ठपदासु भवः प्रौष्ठपदः । प्रोष्ठपदानामिति बहुवचननिर्देशात् पर्यायोऽपि गृह्यते—भद्रपाद इति ॥

## हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १९ ॥

हृद् भग सिन्धु इत्येवमन्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । सुहृदयस्येदं, सौहार्दम् । सुहृदयस्य भावः, सौहार्द्यम् । सुभगस्य भावः, सौभाग्यम् । दौर्भाग्यम् । सुभगाया अपत्यं, सौभा-

गिनेयः । दौर्भागिनेयः । कल्याण्यादिषु सुभगदुर्भगेति पठ्यते । सुभग मन्त्रे इत्य
द्गात्रादिषु पठ्यते । तत्रोत्तरपदवृद्धिर्निष्यते । महते सौभगाय । छन्दसि सर्वविधीन
विकल्पितत्वात् । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः, साक्त
सैन्धवः । पानसैन्धवः । सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरिष्यत
इत्यण्प्रत्ययः ॥

### अनुशतिकादीनां च ॥ २० ॥

अनुशतिक इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्था
वृद्धिर्भवति तद्धिते ञिति णिति किति वा परतः । अनुशतिकस्येदम्, आनुशातिकम्
अनुहोडेन चरति, आनुहौडिकः । अनुसवरणे दीयते, आनुसांवरणम् । अनुसंवत्स
रेण दीयते, आनुसांवत्सरिकः । अङ्गारवेणुर्नाम कश्चित्तस्यापत्यम्, आङ्गारवैणवः
असिहत्य-तत्र भवम्, आसिहात्यम् । अस्यहत्य इति केचित्पठन्ति ततोऽपि विप्रुक्ता
दिवादन् । अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति, आस्यहात्यः । अस्यहेतिरित्येवमपि
पठन्ति । अस्यहेति प्रयोजनमस्य, आस्यहैतिकः । अत एव वचनादस्य समुदायस्य
प्रातिपदिकत्वं विभक्तेश्चालुक् । वध्योग इति विग्रहोऽयं, तस्यापत्यं वाध्यौगः
पुष्करसद्, अनुहरत्, एतौ बाह्वादिषु पठ्येते—पौष्करसादिः । आनुहारतिः । कुरुकत
गर्गादि, कौरुकात्यः । कुरुपञ्चाल-कुरुपञ्चालेषु भवः, कौरुपाञ्चालः । जनपदसमुदायो
जनपदग्रहणेन न गृह्यते इति वुञ् न भवति । उदकशुद्धस्यापत्यम्, औदकशौद्धिः
इहलोक । परलोक-तत्र भवः, ऐहलौकिकः । पारलौकिकः । लोकोत्तरपदस्येति ठञ्
सर्वलोक-तत्र विदितः, सार्वलौकिकः । सर्वपुरुषस्येदं, सार्वपौरुषम् । सर्वभूमेर्निमित्त
संयोग उत्पातो वा सार्वभौमः । प्रयोग-तत्र भवः, प्रायौगिकः । परस्त्री-पारस्त्रैणेयः
कुल्टाया वेतीनङ् (१) ॥ राजपुरुषात् ष्यञि ॥ राजपौरुष्यम् । ष्यञीति किम्
राजपुरुषस्यापत्यं राजपुरुषायणिः । उदीचां वृद्धादगोत्रादिति फिञ् । शतकुम्भसुख
शयनादयः-शातकुम्भे भवः, शातकौम्भः । सौखशायनिकः । पारदारिकः (२) सूत्रन
डस्यापत्यं सौत्रनाडिः । आकृतिगणश्चायमिष्यते । तेनेदमपि सिद्धं भवति-अभिगम
मर्हति, आभिगामिकः । अधिदेवे भवमाधिदैविकम् । आधिभौतिकम् । चतस्र एव
विद्याः, चातुर्वैद्यम् । स्वार्थे ष्यञ् । अनुशतिक । अनुहोड । अनुसवरण । अनुसंवत्सर
अङ्गारवेणु । असिहत्य । वध्योग । पुष्करसद् । अनुहरत् । कुरुकत । कुरुपञ्चाल । उद
कशुद्ध । इहलोक । परलोक । सर्वलोक । सर्वपुरुष । सर्वभूमि । प्रयोग । परस्त्री ।
राजपुरुषात् ष्यञि ॥ सूत्रनड । अनुशतिकादिः ॥

---

(१) अपपाठोऽयं-तत्र हि स्वरूपग्रहणं कल्याण्यादिषु परस्त्रीशब्दः पठ्यते, तस्मात् कल्याण्यादीनामिनङ् इति पाठ इति पदमञ्जरी । (२) क्वचित् "शतकुम्भ इत्यादितः" "पारदारिक." इत्यन्तः पाठो नास्ति ।

देवताद्वन्द्वे च ॥ २१ ॥

देवताद्वन्द्वे च पूर्वपदस्योत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति णिति किति वा परतः । आग्निमारुतीमनड्वाहीमालभेत । आग्निमारुतं कर्म्म । यो देवताद्वन्द्वः सूक्तहविःसम्बन्धी तत्रायं विधिः । इह [illegible] न भवति-स्कन्दविशाखौ देवते अस्य, स्कान्दविशाखः । ब्रह्मप्रजापती-ब्राह्मप्रजापत्यम् ॥

नेन्द्रस्य परस्य ॥ २२ ॥

इन्द्रशब्दस्य परस्य यदुक्तं तन्न भवति । सौमेन्द्रः । आग्नेन्द्रः । परस्येति किम्? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत् । इन्द्रशब्दे द्वावचौ तत्र तद्धिते एकस्य यस्येति लोपोऽपरस्य पूर्वेण सहैकादेश इत्यप्राप्तिरेव वृद्धेः, तदेद प्रतिषेधवचनं ज्ञापकम्-बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति पश्चादेकादेश इति, तेन पूर्वैषुकामशम इत्यादि सिद्धं भवति ॥

दीर्घाच्च वरुणस्य ॥ २३ ॥

दीर्घादुत्तरस्य वरुणस्य यदुक्तं तन्न भवति । ऐन्द्रावरुणम् । मैत्रावरुणम् । दीर्घादिति किम्? आग्निवारुणीमनड्वाहीमालभेत । अग्नेरीदग्नेः सोमवरुणयोरित्यस्यानवकाशत्वात्, इद्वृद्धाविति प्रतिषेधो विधीयते । तेन दीर्घात् परो न भवति ॥

प्राचां नगरान्ते ॥ २४ ॥

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति णिति किति च परतः । सुह्मनगरे भवः, सौह्मनागरः । पौण्ड्रनागरः । प्राचामिति किम्? मद्रनगरमुदक्षु, तत्र भवः-माद्रनगरः ॥

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ २५ ॥

जङ्गल धेनु वलज इत्येवमन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिर्भवति विभाषितमुत्तरमुत्तरपदस्य विभाषितं तद्धिते ञिति णिति किति वा परतः । कुरुजङ्गलेषु भव, कौरुजङ्गलम् । कौरुजाङ्गलम् । वैश्वधेनवम् । वैश्वधैनवम् । सौवर्णवलजः । सौवर्णवालजः ॥

अर्द्धात् परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥

अर्द्धशब्दात् परस्य परिमाणवाचिन उत्तरस्याचामादेरचः स्थाने वृद्धिर्भवति पूर्वस्य तु वा भवति तद्धिते ञिति णिति किति वा परतः । अर्द्धद्रोणेन क्रीतमर्द्धद्रौणिकम् । आर्द्धद्रौणिकम् । अर्द्धकौडविकमार्द्धकौडविकम् । परिमाणस्येति किम्? अर्द्धक्रोशः प्रयोजनमस्यार्द्धक्रोशिकम्(१) ॥

नातः परस्य ॥ २७ ॥

अर्द्धात् परस्य परिमाणाकारस्य वृद्धिर्न भवति पूर्वस्य तु वा भवति तद्धिते ञिति

(१) परिमाणस्येति किम्? अर्द्धक्रोशः प्रयोजनमस्य आर्द्धक्रोशिकमिति बहुषु पुस्तकेषु नास्ति ॥

णिति किति वा परतः। अर्द्धप्रस्थिकः। आर्द्धप्रस्थिकः। अर्द्धकंसिकः। आर्द्धकंसिकः। अत इति किम्? आर्द्धकौडविकः। तपरकरणं किम्? इह मा भूत्-अर्द्धखार्यां भवा अर्द्धखारी, किं च स्यात्? अर्द्धखारी भार्या यस्य अर्द्धखारीभार्यः। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकार इति पुंवद्भावप्रतिषेधो न स्यात्, यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते स वृद्धिनिमित्तं न भवतीति पुंवद्भावो न प्रतिषिध्यते। यथा-वैयाकरणी भार्या यस्य, स वैयाकरणभार्य इति॥

प्रवाहणस्य ढे॥ २८॥

प्रवाहणस्य ढे परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति। प्रवाहणस्यापत्यं, प्रावाहणेयः। प्रवाहणेयः। शुभ्रादिभ्यश्चेति ढक् प्रत्ययः॥

तत्प्रत्ययस्य च॥ २९॥

ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति पूर्वस्य तु वा। प्रवाहणेयस्यापत्यं, प्रावाहणेयिः। प्रवाहणेयिः। प्रावाहणेयकम्। प्रवाहणेयकम्। बाह्यतद्धितनिमित्ता वृद्धिर्नान्तर्येण विकल्पेन बाधितुमशक्येति सूत्रारम्भः॥

नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्॥ ३०॥

नञ उत्तरेषां शुचि ईश्वर क्षेत्रज्ञ कुशल निपुण इत्येतेषामचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति, तद्धिते ञिति णिति किति वा परतः। शुचि-आशौचम्। अशौचम्। ईश्वर-आनैश्वर्यमनैश्वर्यम्। क्षेत्रज्ञ-आक्षैत्रज्ञम्। अक्षैत्रज्ञम्। कुशल-आकौशलम्। अकौशलम्। निपुण-आनैपुणमनैपुणम्। अत्र केचिदाहुरियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते। न नञ्पूर्वात्तत्पुरुषादित्युत्तरो भावप्रत्ययः प्रतिषिद्ध्यते। तत्र शुच्यादिभ्य एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनाद्भवतीति। तदपरे न मृष्यन्ते। भाववचनादन्योऽपि हि तद्धितो वृद्धिनिमित्तमपत्यादिविषयेषु नञ्समासादेव विद्यते। बहुव्रीहेश्च नञ्समासाद्भाववचनोऽप्यस्ति। तत्राप्राधिकारोपमर्दनं न युज्यत इति। अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्राह्मणादिषु पठ्येते। तत्स्ताभ्यां भावे ष्यञ् भवति॥

यथातथयथापुरयोः पर्यायेण॥ ३१॥

यथातथ यथापुर इत्येतयोर्नञ उत्तरयोः पर्यायेणाचामादेरचोवृद्धिर्भवति तद्धिते ञिति णिति किति वा परतः। आयथातथ्यम्। अयाथातथ्यम्। आयथापुर्यम्। अयाथापुर्यम्। अयथातथ, अयथापुरेति ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्यौ। सूत्रे यथातथयथापुरशब्दौ तु यथाऽसादृश्य इति अव्ययीभावसमासौ, तथा नपुंसकाश्रयं ह्रस्वत्वं कृतम्। भाष्ये तु यथा दर्शितम् अयथातथाभाव इति तथा सुप्सुपेति समासो लभ्यते। अस्मिंस्तु पक्षे सौत्रत्वाद्दीर्घस्य स्थाने ह्रस्वः॥

हनस्तोऽचिण्णलोः ॥ ३२ ॥

तद्धितेष्विति निवृत्तम्। तत्सन्नद्धं क्रितीत्यपि। ञ्णितीति वर्त्तते। हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः, चिण्णलौ वर्जयित्वा। घातयति। घातकः। साधुघाती। घातंघातम्। धातो वर्त्तते। अचिण्णलोरिति किम्? अघानि। जघान। धातोः कार्यमुच्यमानं धातोः प्रत्यये विज्ञायते। इह न भवति-वार्त्रघ्नमितरदिति ॥

आतो युक्चिण्कृतोः ॥ ३३ ॥

आकारान्तस्याङ्गस्य चिणि कृति ञ्णिति युगागमो भवति। अदायि। अधायि। कृति-दायो, दायकः। धायो, धायकः। चिण्कृतोरिति किम्? ददौ। दधौ। चौडिः, बालाकिः। बाह्वादित्वादिञ्। डा देवता अस्य डः ॥

नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ३४ ॥

उदात्तोपदेशस्य मान्तस्याङ्गस्याचमिवर्जितस्य चिणि कृति च ञ्णिति यदुक्तं तन्न भवति। किं चोक्तम्? अत उपधाया इति वृद्धिः। अशमि। अतमि। अदमि। कृति खल्वपि-शमकः। तमकः। दमकः। शमस्तमो, दमः। उदात्तोपदेशस्येति किम्? यामको, रामकः। कथमुद्यमोपरमौ? यद उद्यमे, यम उपरमे इति निपातनादनुगन्तव्यौ। उपदेशग्रहणं किम्? शमी दमी तमीत्यत्र यथा स्यादिह मा भूत्—यामकः, रामक इति। मान्तस्येति किम्? चारकः। पाठकः। अनाचमेरिति किम्? आचामकः। *अनाचमिकमिवमीनामिति वक्तव्यम्*। वामः। कामः। आचामः। आम इति चौरादिकस्य णिचि वृद्धौ सत्यां भवति। तत्र हि मित्त्वं नास्ति-नान्ये मितोऽहेतावितिति। सूर्यविश्रामा भूमिरित्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते। चिण्कृतोरित्येव। शशाम। तताम ॥

जनिवध्योश्च ॥ ३५ ॥

जनि वधि इत्येतयोश्चिणि कृति च ञ्णिति यदुक्तं तन्न भवति। अजनि। जनकः। प्रजनः। अवधि। वधकः। वधः। वधि. प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति, तस्यायं प्रतिषेधो विधीयते। भवकश्चेत् विधेत वधकोऽपि न विद्यते इति हि प्रयोगो दृश्यते। वधादेशस्यादन्तत्वादेव वृद्धेरभावः। चिण्कृतोरित्येव। जजान गर्भं महिमानमिन्द्रम्॥

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ॥ ३६ ॥

सर्वं निवृत्तमङ्गस्येति वर्त्तते। अर्ति ह्री व्ली री क्नूयी क्ष्मायी इत्येतेषामङ्गानामाकारान्तानां च पुगागमो भवति णौ परतः। अर्ति-अर्पयति। ह्री-ह्रेपयति। व्ली-व्लेपयति। री-रेपयति। क्नूयी-क्नोपयति। क्ष्मायी-क्ष्मापयति। आकारान्तानाम्-दापयति। धापयति। अर्तीति, ऋ गतिप्रापणयोः, ऋ गताविति द्वयोरपि धात्वोर्ग्रहणम्। रीत्यपि, रीगतिरेषणयोरीङ् श्रवण इति। पुकः पूर्वान्तकरणमदीदपदित्यत्रोपधाह्रस्वो यथा स्यादिति ॥

शाच्छासाह्वाव्यावेपां युक् ॥ ३७ ॥

शा छा सा ह्वा व्या वे पा इत्येतेषामङ्गानां युगागमो भवति णौ परतः। शा-निशाययति। छा-अवच्छाययति। सा-अवसाययति। ह्वा-ह्वाययति। व्या-संव्याययति। वे-वाययति। पा-पाययति। पाग्रहणे, पै ओवै शोषण इत्यस्यापीह ग्रहणमिच्छन्ति। पा रक्षण इत्यस्य लुग्विकरणत्वान्न भवति। ॐलुगागमस्तु तस्य वक्तव्यः॥। पालयति। ॐधुञ्प्रीञोर्नुग्वक्तव्यः॥ धूनयति। प्रीणयति। एते पूर्वान्ता एव क्रियन्ते। तेन न्यशीशयत्। अपीपलत्। अदूधुनत्। अपिप्रिणत्, इत्युपधाह्रस्वत्वं भवति। शाच्छासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाश्रयातुम्। किमेतस्याख्याने प्रयोजनम्? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीत्युपदिश्यते। तेनाप्यापयति जापयतीत्येवमादि सिद्धं भवति॥

धो विधूनने जुक् ॥ ३८ ॥

धा इत्येतस्य विधूननेऽर्थे वर्तमानस्य जुगागमो भवति णौ परतः। पक्षेणोपवाजयति। विधूनन इति किम्? आधापयति केशान्। किमर्थं सूत्रं, वज गतौ विति ण्यन्तस्य सिद्धत्वात् हलेत्युत्तर आद्विवेयमर्थम्। वै ओवै शोषणे इत्यस्यैतद्रूपम्॥

लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ ३९ ॥

ली ला इत्येतयोरङ्गयोरन्यतरस्यां नुग् लुक् इत्येतावागमौ भवतो णौ परतः स्नेहविपातनेऽर्थे। घृतं विलाययति। विलीनयति घृतं, विलालयति। विलापयति। ली ई इतीकारः प्रश्लिष्यते, तत ईकारान्तस्यैव नुग्भवति, न तु कृतात्वस्य विभाषा लीयतेरिति। स्नेहविपातन इति किम्? जतु विलापयति। जटाभिरालापयते। ली इति लीलीङोर्ग्रहणम्। ला इति लाते', कृतात्वस्य च लीयतेः॥

भियो हेतुभये षुक् ॥ ४० ॥

भी इत्येतस्य हेतुभयेऽर्थे षुगागमो भवति णौ परतः। मुण्डो भीषयते। जटिलो भीषयते। अत्रापि भी ई इतीकारप्रश्लेषः कृतात्वस्य षुग्निवृत्त्यर्थः। मुण्डो भापयते इत्येवं हि तत्र भवति। हेतुभय इति किम्? कुञ्चिकयैनं भाययति। नात्र हेतुः प्रयोजको भयकारणं, किं तर्हि? कुञ्चिका॥

स्फायो वः ॥ ४१ ॥

स्फाय् इत्येतस्याङ्गस्य वकारादेशो भवति णौ परतः। स्फावयति॥

शदेरगतौ तः ॥ ४२ ॥

शदेरङ्गस्यागतावर्थे वर्तमानस्य तकारादेशो भवति णौ परतः। पुष्पाणि शातयति(१)। अगताविति किम्? गा शादयति गोपालकः॥

(१) फलानि शातयति इति पुस्तकान्तरेऽधिकम्॥

रुहः पोऽन्यतरस्याम् ॥ ४३ ॥

रुहेरङ्गस्यान्यतरस्यां पकारादेशो भवति णौ परतः। व्रीहीन् रोपयति। व्रीहीन् रोहयति ॥

प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ॥ ४४ ॥

प्रत्ययस्थात् ककारात् पूर्वस्याकारस्य इकारादेशो भवति आपि परतः, स चेदाप्सुपः परो न भवति। जटिलिका। मुण्डिका। कारिका। हारिका। एतिकाश्चरन्ति। प्रत्ययग्रहणं किम्? शक्नोतीति शका। स्थग्रहणं विस्पष्टार्थम्। ककारमात्रं प्रत्ययो नाऽस्तीति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणं शक्यते विज्ञातुम्। कादिति किम्? नन्दना। रमणा। पूर्वस्येति किम्? (१) पटुका। मृदुका। अत इति किम्? गोका। नौका। तपरकरणं किम्? राका। धाका। आपीति किम्? कारकः, धारकः। अथापीत्यनेन किं विशिष्यते? ककारः। यद्येवं, कारिकेत्यत्रापि न प्राप्नोति अकारेण व्यवहितत्वात्। एकादेशे कृते नास्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव। वचनात् व्यवधानमीदृशं यस्यानिवद्भावकृतमेकेन वर्णेन तदाश्रीयते। रथकट्यादिषु तु श्रुतिकृतमनेकेन वर्णेन व्यवधानमिति इत्वं न भवति। असुप इति किम्? बहवः परिव्राजका अस्यां मथुरायां बहुपरिव्राजका मथुरा। सुबन्तादयं बहुपरिव्राजकशब्दात्परं आविति प्रतिषेधो भवति। प्रसज्यप्रतिषेधश्चायं न पर्युदासः। पर्युदासे हि सति समुदायादसुबन्तात् परं आविर्तीत्वमत्र स्यादेव। अविद्यमानः सुप् अस्मिन् सोऽयमसुबित्येवमपि नाश्रीयते। तथा हि सति बहुचर्मिकेत्यत्रापि न स्यात्। ॐमामकनरकयोरुपसंख्यानं कर्त्तव्यमप्रत्ययस्थत्वात्ॐ। मम इयं मामिका। नरिका। अणि ममकादेशः। केवलमामकेति नियमात् संज्ञाछन्दसोरीकारो नास्त्यत्र तेनाणप्रत्ययान्तादपि टाप् भवति। नरान् कायतीति नरिका। आतोऽनुपसर्गे क इति कः प्रत्ययः। ॐप्रत्ययनिषेधे त्यक्त्यपोश्चोपसंख्यानम्ॐ। उदीचामातः स्थाने यकपूर्वाया इति विकल्पो मा भूदिति, दाक्षिणात्यिका। इहत्यिका॥

न यासयोः ॥ ४५ ॥

या सा इत्येतयोरिकारादेशो न भवति। यका। सका। या सा इति निर्देशो न तन्त्रं, यत्तदोरुपलक्षणमेतत्। इहापि प्रतिषेध इष्यते—यकांयकामधीमहे। तकांतकां पचामह इति। यत्तदोः प्रतिषेधे त्यकन उपसंख्यानम्ॐ। उपत्यका। अधित्यका। ॐपावकादीनां छन्दस्युपसंख्यानम्ॐ। हिरण्यवर्णाः शुचयः पावकाः। यासु अलोमकाः। छन्दसीति किम्? पाविका। ॐआशिषि चोपसंख्यानम्ॐ। जीवतात्—जीवका। नन्दतात्—नन्दका। भवतात्—भवका। उत्तरपदलोपे चोपसंख्यानम्ॐ।

(१) परस्य माभूत् इत्यधिकं पुस्तकान्तरे ॥

देवदत्तिका । देवका । यज्ञदत्तिका । यज्ञका । ॐक्षिपकादीनां चोपसंख्यानम्ॐ । क्षिपका । ध्रुवका । ॐतारका ज्योतिष्युपसंख्यानम्ॐ । तारका । ज्योतिषीति किम् ? तारिका दासी । ॐवर्णका तान्तव उपसंख्यानम्ॐ । वर्णका प्रावरणभेदः । तान्तव इति किम् ? वर्णिका भागुरी लोकायते । ॐवर्तका शकुनौ प्राचामुपसंख्यानम्ॐ । वर्तका शकुनिः । प्राचामन्यत्र उदीचां तु वर्तिका । शकुनाविति किम् ? वर्तिका भागुरी लोकायतस्य । ॐअष्टका पितृदैवत्येॐ । अष्टका । पितृदैवत्य इति किम् ? अष्टिका खारी । ॐवा सूतकापुत्रकावृन्दारकाणामुपसंख्यानम्ॐ । सूतिका । सूतका । पुत्रिका । पुत्रका । वृन्दारिका । वृन्दारका ॥

## उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥

उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्चातः स्थाने योऽकारस्तस्यातः स्थाने इकारादेशो भवति । उदीचां ग्रहणं विकल्पार्थम् । इभ्यका । इभ्यिका । क्षत्रियका । क्षत्रियिका । ककारपूर्वायाः—चटकका । चटकिका । मूषिकका । मूषिकिका । आत इति किम् ? सांकाश्ये भवा सांकाश्यिका । स्थानग्रहणमनुबादेऽपि स्थानसम्बन्धप्रतिपादनार्थम् । आत इत्यनेन स्थान इति विशिष्यते । यकपूर्वायाः इति किम् ? अश्वा, अश्विका । यकपूर्वाया इति स्त्रीलिङ्गनिर्देश, आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम् । इह न भवति–शुभं यातीति शुभयाः–शुभंयिका । ॐयकपूर्वत्वे धात्वन्तप्रतिषेधःॐ । धात्वन्तयोर्यकारककारयोरस्य प्रतिषेधस्य प्रतिषेधो वक्तव्य. । सुनयिका । सुशयिका । सुपाकिका । सुशोकिका ॥

## भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ॥ ४७ ॥

एषामातः स्थाने योऽकारस्तस्य इत्व न भवति उदीचामाचार्याणां मतेन । भस्त्रा–भस्त्रिका । भस्त्रका । अभस्त्रका । अभस्त्रिका । एषका । एषिका । अजका । अजिका । अनजिका । अनजका । ज्ञका । ज्ञिका । अज्ञका । अज्ञिका । द्वके । द्विके । स्वका । स्विका । अस्विका । अस्वका । एषाद्वे नञ्पूर्वे न प्रयोजयतः । किं कारणम् ? तत्र हि सति यदि साकच्काभ्यां नञ्समासः, अथापि कृते नञ्समासे पश्चादकच , उभयथापि समासाद् या विभक्तिरुत्पद्यते तस्यां त्यदाद्यत्वे सति टापा भवितव्यं, सोऽन्तर्वर्तिन्या विभक्त्या सुबन्तात्पर इति इत्वस्य प्राप्तिरेव नास्ति । तेन, अनेषका, अद्वके इत्येव नित्य भवितव्यम् । स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वोऽपि प्रयोजयति । भस्त्रेत्ययमभाषितपुंस्कस्तस्याभाषितपुस्काच्चेत्येव सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम्—अविद्यमाना भस्त्रा यस्या अभस्त्रा । साल्पा, अभस्त्रका । अभस्त्रिका । अत्रोपसर्जनह्रस्वत्वे कृते पुनर्बहुव्रीहौ कृते भाषितपुंस्काद्यष्टाबुत्पद्यते तस्य केऽण इति यो ह्रस्वो नासावभाषितपुस्काद्विहितस्यातः स्थाने भवति । नञ्पूर्वाणामपीत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयमिष्यते । निर्भस्त्रका । निर्भस्त्रिका । बहुभ-

स्वका। बहुभस्त्रिका—इत्येवमनयोरपीष्यते तत्र नञ्पूर्वाणामिति वचनमनुवाद एव मन्दबुद्धिप्रतिपत्त्यर्थम् ॥

अभाषितपुंस्काच्च ॥ ४८ ॥

अभाषितपुंस्काद्विहितस्यातः स्थाने योऽकारस्तस्योदीचामाचार्याणां मतेन इकारादेशो न भवति। खट्विका। खट्वका। अखट्विका। अखट्वका। परमखट्विका। परमखट्वका। बहुव्रीहौ यदा कपि ह्रस्वः क्रियते तदा भवितव्यमनेन विधिना। तत्राप्यभाषितपुंस्काद्विहितस्यातः स्थाने भवत्यकार इति। यदा तु अविद्यमाना खट्वा अस्या. अखट्वा। अल्पा अखट्वा, अखट्विकेति तदा न भवति। तथा अतिक्रान्ता खट्वामतिखट्वा, अल्पा अतिखट्वा, अतिखट्विका ॥

आदाचार्याणाम् ॥ ४९ ॥

अभाषितपुंस्कादातः स्थाने योऽकारस्तस्याचार्याणामाकारादेशो भवति। खट्वाका। अखट्वाका। परमखट्वाका ॥

ठस्येकः ॥ ५० ॥

अङ्गस्य निमित्तं यष्ठ, कथमङ्गस्य निमित्तं? प्रत्ययस्तस्य प्रत्ययठस्य इक इत्ययमादेशो भवति। माञ्चहतेष्ठक्—आक्षिकः। शालाकिकः। लवणाट्ठञ्—लावणिकः। ठगादिषु यद्यि वर्णमात्रं प्रत्ययः उच्चारणार्थोऽकारस्तदा इहाप्यकार उच्चारणार्थः। वर्णमात्र [illegible] स्थानित्वेनोपादीयते। सघाते तु प्रत्ययेऽन्नापि सघातग्रहणमेव। तत्र कणेठः, कण्ठ इत्येवमादीनामुणादीनामुणादयो बहुलमिति न भवति। मथितं पण्यमस्य माथितिक इत्यत्र तु यस्येति लोपे कृते, इसुसुक्तान्तात्क इति स्थानिवद्भावादिकस्य कादेशः प्राप्नोति, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति। यस्येत्यकारलोपस्य स्थानिवद्भावाद्वा पूर्वस्मादपि हि विधौ स्थानिवद्भावः ॥

इसुसुक्तान्तात् कः ॥ ५१ ॥

इस् उस् इत्येवमन्तानामुगन्तानां तान्तानां चाङ्गानामुत्तरस्य ठस्य क इत्ययमादेशो भवति। इस्–सार्पिष्कः। उस्–धानुष्कः। याजुष्कः। उक्–नैषादकर्षुकः। शाबरजम्बुकः। मातृकम्। पैतृकम्। तान्तात्–औदश्वित्कः। शाकृत्कः। याकृत्कः। इसुसोः प्रतिपदोक्तयोर्ग्रहणादिह न भवति–आशिषा चरति–आशिषिकः। उषा चरति औषिकः॥ दोष उपसङ्ख्यानम्। दौष्क ॥

चजोः कु घिण्ण्यतोः ॥ ५२ ॥

चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः। घिति–पाकः त्यागः। रागः। ण्यति(१) पाक्यम्। वाक्यम्। रेक्यम् ॥

(१) याम्यमितिपाठान्तरं पण्डितपत्रे ॥

न्यङ्क्वादीनां च ॥ ५३ ॥

न्यङ्कु इत्येवमादीनां कवर्गादेशो भवति। न्यङ्कुः। नावञ्चतेरिति उप्रत्ययः। मद्गुः। मिमस्जिभ्य उरिति मस्जेरुप्रत्ययः। भृगुः। प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्चेत्यु प्रत्यय। दूरेपाकः। फलेपाकः। दूरे पच्यते स्वयमेव। फले पच्यते स्वयमेव। पचाद्यच् निपातनाद्वृद्धिः। तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्। क्षणेपाक(१) इत्यपि हि केचित् पठन्ति। दूरेपाका, फलेपाका इति टाबन्तमपरेऽधीयते। उकारान्तावपरे— दूरेपाकुः, फलेपाकुरिति। तेषामुप्रत्ययो निपातनादेव। तक्रं, वक्रमिति—तञ्चतेर्वञ्चतेश्च स्फायितञ्चिवञ्च्यादिना सूत्रेण रक्। व्यतिषङ्गः। व्यतिषजतीति पचाद्यच्। अनुषङ्गः। अवसर्गः। उपसर्गः। मेघः। श्वपाकः। मांसपाकः। कपोतपाकः। उलूकपाक इति कर्मोपपदादण्प्रत्ययः। सञ्ज्ञायामर्घः। अवदाघः। निदाघः। अर्हतेर्घञ्–अर्घः। अवपूर्वस्य निपूर्वस्य च दहेरवदाघः। निदाघः। सञ्ज्ञायां अन्यत्र अर्हः। अवदाहः। निदाहः। न्यग्रोधः, वीरुदित्यत्र न्यवपूर्वस्य रुहेः पचाद्यचि, विपूर्वस्य क्विपि धकारो विधीयते। न्यग्रोहतीति न्यग्रोधः। विरोहतीति वीरुत् ॥

हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

हन्तेर्हकारस्य कवर्गादेशो भवति ञिति णिति प्रत्यये परतो नकारे च। घातयति। घातकः। साधुघाती। घातघातम्। घातो वर्त्तते। नकारे–घ्नन्ति। घ्नन्तु। अघ्नन्। ह इति किम्? नकारस्य माभूत्। हन्तेरिति किम्? प्रहारः। प्रहारकः। ञ्णित्प्रत्ययो हन्तेर्विशेषणम्। नकारो हकारस्य। नकारे अनन्तरस्य हन्तिहकारस्येति। तच्चानन्तर्यं श्रुतिकृतं सन्निपातकृतमाश्रीयते। स्थानिवद्भावश्चाकृत तु यदनानन्तर्यं तदविघातक वचनसामर्थ्यात्। यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते तथापि येन नाव्यवधान तेन व्यवहितेऽपि वचनप्रामाण्यादिति ञ्णिति धात्ववयवेन व्यवहितेऽपि सति भवति। इह तु न भवति–हननमिच्छति हननीयति हननीयतेर्ण्वुल्, हननीयक इति ॥

अभ्यासाच्च ॥ ५५ ॥

अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति। जिघांसति। जङ्घन्यते। अहं जघन। अभ्यासनिमित्ते हन्तेरङ्गस्य योऽभ्यासस्तस्मादेवैतत्कुत्वम्। इह न भवति–हननीयितुमिच्छति, जिहननीयिषति ॥

हेरचङि ॥ ५६ ॥

हिनोतेर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि। प्रजिघीषति। प्रजेघीयते। प्रजिघाय। अचङीति किम्? प्राजीहयद् दूतम्। अचङीति शक्यमकर्त्तुं, कथम्? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति। तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्येति

(१) क्षणेपाक इति पाठान्तरम् पण्डितपत्रे।

विज्ञायमाने प्राप्तिरेव नास्ति । तर्हि तज्ज्ञापकार्थम् । एतज्ज्ञाप्यते-हेरचङीति चङोऽन्यत्र हेर्ण्यधिकस्यापि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धं भवति ॥

सन्लिटोर्जेः ॥ ५७ ॥

सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशो भवति । जिगीषति । जिगाय । सन्लिटोरिति किम् ? जेजीयते । जिनातेः संप्रसारणे कृतेऽपि जिर्भवति तथापि-लाक्षणिकत्वात्तस्य ग्रहणं न भवति-जिज्यतुः । जिज्युः, इत्येव भवति ॥

विभाषा चेः ॥ ५८ ॥

चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति । चिचीषति । चिकीषति । चिकाय । चिचाय । सन्लिटोरित्येव । चेचीयते ॥

न क्वादेः ॥ ५९ ॥

कवर्गादेर्धातोश्चजोः कवर्गादेशो न भवति । कूजो वर्त्तने । खर्ज । गर्ज । कूज्य भवता । खर्ज्यं, गर्ज्यं, भवता ॥

अजिव्रज्योश्च ॥ ६० ॥

अजि व्रजि इत्येतयोश्च कवर्गादेशो न भवति । समाजः । उदाजः । व्रजि-परिव्राजः । परिव्राज्यम् । अजेस्तु अजेर्व्यघञपोरिति वीभावस्य विधानाण्ण्यति नास्त्युदाहरणम् ॥

भुजन्युब्जौ पाण्युपतापयोः ॥ ६१ ॥

भुज न्युब्ज इत्येतौ शब्दौ निपात्येते पाणावुपतापे च । भुज्यतेनेनेति भुजः पाणिः । हलश्चेति घञ् । तत्र कुत्वाभावो गुणाभावश्च निपात्यते । उब्ज आर्जवे, न्युब्जिताः शेरतेस्मिन्निति न्युब्जः । उपतापो रोगस्तत्रैव घञि कुत्वाभावो निपात्यते । पाण्युपतापयोरिति किम् ? भोगः । समुद्गः ॥

प्रयाजानुयाजौ यज्ञाङ्गे ॥ ६२ ॥

प्रयाज अनुयाज इत्येतौ निपात्येते यज्ञाङ्गे । पञ्च प्रयाजाः । पञ्चानुयाजा (१) स्त्वमग्ने प्रयाजाना पश्चात् त्वं पुरस्तात् । यज्ञाङ्ग इति किम् ? प्रयागः । अनुयागः । प्रयाजानुयाजग्रहणं प्रदर्शनार्थमन्यत्राप्येवंप्रकारे कुत्वं न भवति-एकादशोपयाजाः । उपांशुयाजमन्तरायजति । अष्टौ पत्नीसंयाजा भवन्ति । ऋतुयाजैश्चरन्ति-इत्येवमादि सिद्धं भवति ॥

वञ्चेर्गतौ ॥ ६३ ॥

वञ्चेरङ्गस्य गतौ वर्त्तमानस्य कवर्गादेशो न भवति । वञ्च्यं वञ्चन्ति वणिजः । गताविति किम् ? वङ्क्यं काष्ठम् । कुटिलमित्यर्थः ॥

(१) त्रयोऽनुयाजा इति पदमञ्जरीसम्मतः पाठः ।

### ओक उच के ॥ ६४ ॥

उचेर्धातो के प्रत्यये ओक इति निपात्यते। किं पुनरत्र निपात्यते ? कुत्व गुणश्च। न्योक शकुन्त। न्योको वृक्ष। कर्तरि इगुपधलक्षण क प्रत्यय। अधिकरणादौ तु कारकान्तरे घञर्थे कविधानमिति। किमर्थं पुनरय घञ्येव न व्युत्पाद्यते ? स्वरार्थं मन्तोदात्तोऽयमिष्यते घञि सत्याद्युदात्त स्यात्। दिवौकस। जलौकस इत्येवमादावप्यसुनि प्रत्यये उणादयो बहुलमिति कुत्व द्रष्टव्यम् ॥

### ण्य आवश्यके ॥ ६५ ॥

ण्ये परत आवश्यकेऽर्थे कवर्गो न भवति। अवश्यपाच्यम्। अवश्यवाच्यम्। अवश्यरेच्यम्। आवश्यक इति किम् ? पाक्यम्। वाक्यम्। रेक्यम् ॥

### यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥

यज याच रुच प्रवच ऋच इत्येतेषा ण्ये परत कवर्गादेशो न भवति। यज-याज्यम्। याच-याच्यम्। रुच-रोच्यम्। प्रवच-प्रवाच्यम्। ऋच-अर्च्यम्। ऋदुप-धादपि ऋचेरत एव निपातनाण्ण्यद्भवति। प्रवचग्रहण शब्दसज्ञार्थम्-प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति। अपरे पुनराहुरुपसर्गपूर्वस्य नियमार्थम्। प्रपूर्वस्यैव वचरशब्दसज्ञाया कुत्वप्रतिषेधो यथा स्यात्। अन्योपसर्गपूर्वस्य मा भूदिति। अधि-वाक्यमहरिति पठन्ति। एतत्तु विशेष एवेष्यते-द्वादशाहस्य यदहस्तमह। अन्यत्रा-धिवाच्यमेव भवति।

⊛ ण्यति प्रतिषेधे त्यजेरुपसख्यानम् ⊛। त्याज्यम् ॥

### वचोऽशब्दसज्ञायाम् ॥ ६७ ॥

वचोऽशब्दसज्ञाया ण्यति परत कवर्गो न भवति। वाच्यमाह। अवाच्यमाह। अशब्दसज्ञायामिति किम् ? अवघुषित वाक्यमाह ॥

### प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥

प्रयोज्य नियोज्य इत्येतौ शब्दौ शक्यार्थे निपात्यते। शक्य प्रयोक्तु प्रयोज्य। शक्यो नियोक्तु नियोज्य। शक्यार्थ इति किम् ? प्रयोग्यो, नियोग्य ॥

### भोज्य भक्ष्ये ॥ ६९ ॥

भोज्य निपात्यते भक्ष्येऽभिधेये। भोज्य ओदन। भोज्या यवागू। इह भक्ष्य मभ्यवहार्यमात्रम्। भक्ष्य इति किम् ? भोग्य कम्बल ॥

### घोर्लोपो लेटि वा ॥ ७० ॥

घुसज्ञकाना लेटि परतो वा लोपो भवति। दधद्रत्नानि दाशुषे। सोमो ददद्गन्धर्वाय। न च भवति-यदग्निरग्नये ददात्। आडागमे सति लोपेऽपि ददादिति सिद्ध भवति, तत्र वा वचन विस्पष्टार्थम्। एषा हि कस्य चिदाशङ्का स्याद्ददादित्येव नित्ये प्राप्ते लोप आरभ्यमाणो बाधत एवैतद्रूपमिति ॥

### ओतः श्यनि ॥ ७१ ॥

ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति। शो–निश्यति। छो–अवच्छ्यति। दो–अवद्यति। सो–अवस्यति।

### क्सस्याचि ॥ ७२ ॥

क्सस्याजादौ प्रत्यये लोपो भवति। अधुक्षाताम्। अधुक्षाथाम्। अधुक्षि। अचीति किम्? अधुक्षत्। अधुक्षताम्। ककारवत उपादानं किम्? [illegible] मा भूत्–उत्सौ। उत्साः। वत्सौ। वत्साः।

### लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥

दुह दिह लिह गुह इत्येतेषामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग्भवति अदुग्ध। अधुक्षत। अदुग्धाः। अधुक्षथाः। अधुग्ध्वम्। अधुक्षध्वम्। अदुह्वहि। अधुक्षावहि। दिह–अदिग्ध। अधिक्षत। लिह–अलीढ। अलिक्षत। गुह–न्यगूढ। न्यघुक्षत। दुहादीनामिति किम्? व्यत्यरुक्षत। आत्मनेपद इति किम्? अधुक्षत्। दन्त्य इति किम्? अधुक्षामहि। लोप इति वर्त्तमाने लुग्ग्रहणं सर्वादेशार्थं, तच्च वह्यर्थम्। अन्यत्र ह्यन्त्यस्यैव लोपे कृते झलो झलीति सकारलोपेन सिध्यति। स्थानिवद्भावोऽपि अकारलोपस्य नास्ति। पूर्वत्रासिद्धे न स्थानिवदिति। दन्त्यो-ष्ठ्योऽपि वकारो दन्त्य इति गृह्यते। यदि स न गृह्येत तवर्गग्रहणमेवात्र कृतं स्यात्।

### शमामष्टानां दीर्घः श्यनि ॥ ७४ ॥

शमामष्टानां दीर्घो भवति श्यनि परतः। शम्–शाम्यति। तम्–ताम्यति। दम्–दाम्यति। श्रम्–श्राम्यति। भ्रम्–भ्राम्यति। क्षम्–क्षाम्यति। मदी–माद्यति। अष्टानामिति किम्? असति। श्यनीति किम्? भ्रमति। बभ्राम। वा भ्राशेति श्यनो विकल्पः।

### ष्ठिवुक्लम्याचमां शिति ॥ ७५ ॥

ष्ठिवु क्लमु आचम् इत्येतेषां दीर्घो भवति शिति परतः। ष्ठीवति। क्लमु–क्लामति। आचमु–आचामति। क्लमिग्रहणं शबर्थम्। चमेराङ्पूर्वस्य ग्रहणम्। इह मा भूत्–चमति। विचमति।

### क्रमः परस्मैपदेषु ॥ ७६ ॥

क्रमः परस्मैपदपरे शिति परतो दीर्घो भवति। क्रामति। क्रामतः। क्रामन्ति। परस्मैपदेष्विति किम्? आक्रमते आदित्यः। इह उत्क्राम सङ्क्रामेति हेर्लुकि कृते, न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद्दीर्घो न प्राप्नोति। नैष दोषः, लुमता शब्देन लुप्ते यदङ्गं तस्य कार्ये प्रतिषेधः। न च हौ क्रमिरङ्गं, किं तर्हि? शपि

### इषुगमियमां छः ॥ ७७ ॥

इषु गमि यम इत्येतेषां शिति परतश्छकारादेशो भवति। इच्छति। गच्छति।

यच्छति । इषेरिदितो ग्रहणम् । इह मा भूत्-इष्यति । इष्णातीति । ये इषिमुदितं नाधीयते तेऽचीत्यनुवर्त्तयन्ति । तत्र प्रधानमञ्ग्रहणं शितीत्यनेन विशेष्यत इति वर्णयन्ति । तथाच सति तदादिविधिर्न भवति । यस्मिन् विधिस्तदादावल्ग्रहण इत्येतदपि विशेषणेनैवेष्यते । तेन, इषाणेत्यत्र छत्वं न भवति । नह्ययमजेव शिदिति ॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥

पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्त्ति सर्त्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशा भवन्ति शिति परतः । पा-पिबति । घ्रा-जिघ्रति । ध्मा-धमति । स्था-तिष्ठति । म्ना-मनति । दाण्-यच्छति । दृशि पश्यति । अर्त्ति-ऋच्छति । सर्त्ति-धावति । शद-शीयते । सद-सीदति । पिबतेर्लघूपधगुणः प्राप्नोति, सोऽङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति न भवति । अथवा अकारान्तोऽयमादेश आद्युदात्तो निपात्यते । सर्त्तेर्वेगितायां गतौ धावादेशमिच्छन्ति । अन्यत्र सरति, अनुसरतीत्येव भवति ॥

ज्ञाजनोर्जा ॥ ७९ ॥

ज्ञा जन इत्येतयोर्जादेशो भवति शिति परतः । जानाति । जायते । जनेर्दैवादिकस्य ग्रहणम् ॥

प्वादीनां ह्रस्वः ॥ ८० ॥

पू इत्येवमादीनां ह्रस्वो भवति शिति परतः । प्वादयः क्र्यादिषु पठ्यन्ते । पूञ् पवने इत्यतः प्रभृति, व्ली गतौ वृदिति यावत्केचिदिच्छन्ति । वृत्करणमेतत्ल्वादीनां प्वादीनां च परिसमाप्त्यर्थमिति । अपरे तु ल्वादीनामेव परिसमाप्त्यर्थं वृत्करणमेतदिच्छन्ति । आगणान्ताः प्वादय इति । पूञ्-पुनाति । लूञ्-लुनाति । स्तॄञ्-स्तृणाति । येषामागणान्ताः प्वादयस्तेषां जानातीत्यत्रापि ह्रस्वः प्राप्नोति । ज्ञाजनोर्जा इति दीर्घकरणसामर्थ्यान्न भवति । जनेरपि हि जआदेशे सति अतो दीर्घो यञीति दीर्घत्वेन जायत इति सिद्धयति ॥

मीनातेर्निगमे ॥ ८१ ॥

मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति निगमविषये । प्रमिणन्ति व्रतानि । हिनुमीनेति णत्वम्(१) निगम इति किम् ? प्रमीणाति ॥

मिदेर्गुणः ॥ ८२ ॥

मिदेरङ्गस्येको गुणो भवति शिति प्रत्यये परतः । मेद्यति । मेद्यतः । मेद्यन्ति । शितीत्येव । मिद्यते ॥

(१) 'हिनुमीनेतिणत्वम्' अयं पाठः पण्डितपत्रेनास्ति ॥

### जुसि च ॥ ८३ ॥

जुसि च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति। अजुहवुः। अबिभयुः। अबिभरुः। अथ चिनुयुः सुनुयुरित्यत्र कस्मान्न भवति? अत्र द्वे ङित्त्वे सार्वधातुकाश्रयं यासुडाश्रयं च। तत्र प्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि गुण आरभ्यमाणस्तमेव बाधते। यासुडाश्रयङित्त्वनिमित्तं तु न बाधते। तत्र हि प्राप्ते चाप्राप्ते चारभ्यत इति॥

### सार्वधातुकार्धधातुकयोः ॥ ८४ ॥

सार्वधातुके आर्द्धधातुके च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति। तरति। नयति। भवति। आर्द्धधातुके—कर्ता। चेता। स्तोता। सार्वधातुकार्धधातुकयोरिति किम्? अग्नित्वम्। अग्निकाम्यति। यदि हि प्रत्यये सतीति चोच्यते, इहापि स्यात्॥

### जाग्रोऽविचिण्णल्ङित्सु ॥ ८५ ॥

जागृ इत्येतस्याङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतः। जागरयति। जागरकः। साधुजागरी। जागरंजागरम्। जागरो वर्तते। जागरितः। जागरितवान्। वृद्धिविषये प्रतिषेधविषये च यथा स्यादिति जाग्रोऽयं गुण आरभ्यते। तस्मिन् कृते याऽत उपधाया वृद्धिः प्राप्नोति सा न भवति। यदि हि स्यादनर्थक एव गुणः स्याच्चिण्णलोश्च प्रतिषेधवचनमनर्थकम्। अविचिण्णल्ङित्स्विति किम्? जॄशॄस्तृजागृभ्यः क्विन्—जागृविः। चिण्—अजागारि। णल्—जजागार। ङित्—जागृतः। जागृथः। वीति केचिदिकारमुच्चारणार्थं वर्णयन्ति क्वसावपि वकारादौ गुणो न भवति—जजागृवान्। अथ अजागरुः, अहं जजागर इत्यत्र प्रतिषेधः प्राप्नोति? नाप्रतिषेधात्। अविचिण्णल्ङित्स्विति पर्युदासोऽयम्। अथवा, जाग्र इति शासितसामर्थ्याद् विचिण्णल्ङित्सु प्रतिषिध्यते। सा तु जुसि च सार्वधातुकार्द्धधातुकयोरिति च प्राप्तिः सा न प्रतिषिध्यते॥

### पुगन्तलघूपधस्य च ॥ ८६ ॥

पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्द्धधातुकयोर्गुणो भवति। पुगन्तस्य—ब्लेपयति। ह्रेपयति। क्नोपयति। लघूपधस्य—भेदनम्। छेदनम्। भेत्ता। छेत्ता। प्रत्ययादेरङ्गावयवस्य च हलोऽनन्तरस्य सति लघूपधगुणो न प्रवर्तते इति ज्ञापितमेतत् वृतुसनोः कित्करणेन। त्रसिगृधिधृषिक्षिपेः क्नुः। हलन्ताच्चेति।

संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिद्ध्यति।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति॥
धातोर्नुमं कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात्।
अनङ्लोपश्च दीर्घत्वे विध्यपेक्षे न सिद्ध्यतः॥

अभ्यस्तस्य यदाहाचि लध्वर्थं तत्कृत भवेत् ।
नुसनोर्यत्कृत कित्व ज्ञापक स्याल्लघोर्गुणे ॥

उपधात्र इत्येव गृह्यते । ततो भिनत्तीति गुणो न भवति । अपरे पुकि अन्तः पुगन्त । लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधमिति सूत्रार्थं वर्णयन्ति ॥

नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ८७ ॥

अभ्यस्तसञ्ज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके गुणो न भवति । नेनिजानि । अनेनिजम् । परिवेविषाणि । पर्यवेविषम् । अभ्यस्तस्येति किम् ? वेदानि । अचीति किम् ? नेनेक्ति । पिद्ग्रहणमुत्तरार्थम् । सार्वधातुक इति किम् ? निनेज । लघूपधस्येत्येव । जुहवानि । अजुहवम् । ॐबहुल छन्दसीति वक्तव्यम्ॐ । जुजोषदिति यथा स्यात् । परस्पशाते । चाकशीति । वावशीति । यङ्लुकि छान्दसमुपधाह्रस्वत्व द्रष्टव्यम् । परस्पशातेर्ह्रस्वत्वमभ्यासह्रस्वत्व च । प्रकृत्यन्तराणा वा स्पशि कशिवशीनामेतानि रूपाणि ॥

भूसुवोस्तिङि ॥ ८८ ॥

भू सू इत्येतयोस्तिङि सार्वधातुके गुणो न भवति । अभूत् । अभूः । अभूवम् । सुवै । सुवावहै । सुवामहै । सूतेर्लुग्विकरणस्येद ग्रहणम् । सुवतिसूयत्योर्विकरणेन तिङो व्यवधानम् । विकरणस्यैव ङित्वाद् गुणाभाव सिद्ध । तिङीति किम् ? भवति । सार्वधातुक इत्येव । व्यतिभविषीष्ट । अथ बोभवीति यङ्लुकि गुणप्रतिषेधः कस्मान्न भवति ? ज्ञापकात् । यदय, बोभूत्विति गुणाभावार्थं निपातन करोति ॥

उतो वृद्धिर्लुकि हलि ॥ ८९ ॥

सार्वधातुके पितीति वर्त्तते । उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके । यौति । यौषि । यौमि । नौति । नौषि । नौमि । स्तौति । स्तौषि । स्तौमि । उत इति किम् ? एति । एषि । एमि । लुकीति किम् ? सुनोति । सुनोषि । सुनोमि । हलीति किम् ? यवानि । रवाणि । पितीत्येव । युतः । रुतः । अपि स्तुयाद्राजानमित्यत्र हि ङिच्च पिन्न भवतीति पित्त्वप्रतिषेधाद् वृद्धेरभाव । नाऽभ्यस्तस्येत्येतदिहानुवर्त्तते । योयोति, नोनोति इत्येवमाद्यर्थम् ॥

ऊर्णोतेर्विभाषा ॥ ९० ॥

ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके । प्रोर्णौति । प्रोर्णोति । प्रोर्णौषि । प्रोर्णोषि । प्रोर्णौमि । प्रोर्णोमि । हलीत्येव । प्रोर्णवानि ॥

गुणोऽपृक्ते ॥ ९१ ॥

ऊर्णोतेर्धातोरपृक्ते हलि पिति सार्वधातुके गुणो भवति । प्रौर्णोत् । प्रौर्णोः । हलीति वर्त्तमाने यदपृक्तग्रहण क्रियते तेनैव ज्ञाप्यते, भवत्येषा परिभाषा यस्मिन् विधिस्तदादावल्ग्रहणे इति ॥

तृणह इम् ॥ ९२ ॥

'तृणह इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके । तृणेढि । तृणेत्ति । तृणेह्मि । अतृणेट । वर्णाश्रयेप्यत्र प्रत्ययलक्षणमिष्यते । हलीति किम् ? तृणहानि । पितीत्येव । तृण्ढ(१) । तृणह इत्यागतश्नम्को गृह्यते । श्नमि कृते इमागमो यथा स्यादिति ॥

ब्रुव ईट् ॥ ९३ ॥

ब्रू इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति । ब्रवीति । ब्रवीषि । ब्रवीमि । अब्रवीत् । हलीत्येव । ब्रवाणि । पितीत्येव । ब्रूतः ॥

यङो वा ॥ ९४ ॥

यङ उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति वा । शाकुनिको लालपीति । दुन्दुभिर्वावदीति । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश । न च भवति वर्वर्त्ति चक्रम् । वर्वर्मि । हलादेः पितः सार्वधातुकस्य यङन्तादमात्र इति यङ्लुगन्तस्योदाहरणम् ॥

तुरुस्तुशम्यमः सार्वधातुके ॥ ९५ ॥

तु इति सौत्रोऽयं धातुः । रु शब्दे । ष्टुञ् स्तुतौ । शम उपशमे । अम गत्यादिषु । इत्येतेभ्यः परस्य सार्वधातुकस्य हलादेर्वा ईडागमो भवति । उत्तौति । उत्तवीति । उपरौति । उपरवीति । उपस्तौति । उपस्तवीति । शाम्यध्वम् । शमीध्वम् । अभ्यमति । अभ्यमीति । शम्यमोर्बहुलं छन्दसीति विकरणलुकि सति हलादिसार्वधातुकमनन्तरं सम्भवति । आपिशलास्तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसीति पठन्ति । तत्र सर्वेषामेव छन्दसि विषये विधिरयं भवति । सार्वधातुक इति वर्त्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम्—स्तुवीत, शमीध्वमित्यत्रापि यथा स्यादिति ॥

अस्तिसिचोऽपृक्ते ॥ ९६ ॥

अस्तेरङ्गात् सिजन्ताच्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमो भवति । अस्ते—आसीत् । आसीः । सिजन्तात्—अकार्षीत् । असावीत्(२) । अपृक्त इति किम् ? अस्ति । अकार्षम् । आडिमुषोरीडि प्रतिषेध इति स्थानिवद्भावप्रतिषेधादिह न भवति—आत्थ, अमूदिति ॥

बहुलं छन्दसि ॥ ९७ ॥

अस्तिसिचोरपृक्तस्य सार्वधातुकस्य ईडागमो भवति बहुलं छन्दसि विषये । आप एवेदं सलिलं सर्वमाः । आसीदिति स्थाने आः क्रियापदम् । अहरेवासीन्न रात्रिः । सिचः खल्वपि—गोभिरक्षाः प्रत्यञ्चमत्साः । अभैषीर्मा पुत्रकेति च भवति, छान्दसत्वात् माङ्योगेऽप्यडागमो भवति । अथा, अत्सा इति सिच इडभावः' ॥

---

(१) तृण्ढ इति युक्तं पद० दर्शनात् ।

(२) अपावीत्, अलावीत् इत्यधिकं क्वचित् ।

रुदश्च पञ्चभ्यः ॥ ९८ ॥

रुदादिभ्यः परस्य सार्वधातुकस्य हलादेरपृक्तस्य ईडागमो भवति । अरोदीत् । अरोदीः । अस्वपीत् । अस्वपीः । अश्वसीत् । अश्वसीः । प्राणीत् । प्राणीः । अजक्षीत् । अजक्षीः । पञ्चभ्य इति किम् ? अजागर्भवान् । अपृक्तस्येत्येव । रोदिति ॥

अड्गार्ग्यगालवयोः ॥ ९९ ॥

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्याडागमो भवति गार्ग्यगालवयोर्मतेन । अरोदत् । अरोदः । अस्वपत् । अस्वपः । अश्वसत् । अश्वसः । प्राणत् । प्राणः । अजक्षत् । अजक्षः । गार्ग्यगालवयोर्ग्रहणं पूजार्थम् ॥

अदः सर्वेषाम् ॥ १०० ॥

अद भक्षणे अस्मादुत्तरस्यापृक्तस्य सार्वधातुकस्याडागमो भवति सर्वेषामाचार्याणां मतेन । आदत् । आदः । अपृक्तस्येत्येव । अत्ति । अत्सि ॥

अतो दीर्घो यञि ॥ १०१ ॥

अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः । पचामि । पचावः । पचामः । पठामि । पठावः । पठामः । अत इति किम् ? चिनुवः । चिनुमः । यञीति किम् ? पचतः । पचथः । सार्वधातुक इत्येव । अङ्क्वा, केतव । केचिदत्र तिङीत्यनुवर्तयन्ति, तेषां भववानिति कवो सार्वधातुकदीर्घो न भवति ॥

सुपि च ॥ १०२ ॥

अतो दीर्घो यञीत्यनुवर्तते । सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति । वृक्षाय । प्लक्षाय । वृक्षाभ्याम् । प्लक्षाभ्याम् । अत इत्येव । अग्निभ्याम्(१) । यञीत्येव । वृक्षस्य । प्लक्षस्य ॥

बहुवचने झल्येत् ॥ १०३ ॥

बहुवचने झलादौ सुपि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षेभ्यः । प्लक्षेभ्यः । वृक्षेषु । प्लक्षेषु । बहुवचन इति किम् ? वृक्षाभ्याम् । प्लक्षाभ्याम् । झलीति किम् ? वृक्षाणाम् । सुपीत्येव । यजध्वम् । पचध्वम् ॥

ओसि च ॥ १०४ ॥

ओसि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति । वृक्षयोः स्वम् । प्लक्षयोः स्वम् । वृक्षयोर्निधेहि । प्लक्षयोर्निधेहि ॥

आङि चापः ॥ १०५ ॥

आङिति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते । तस्मिन्नाऽऽङि परतश्चकारादोसि च आबन्तस्याङ्गस्यैकारादेशो भवति । खट्वया । मालया । खट्वयोः । माल·

(१) वायुभ्यामित्यधिकं पुस्तकान्तरे ॥

योः । बहुराजया । कारीषगन्ध्यया । बहुराजयोः । कारीषगन्ध्ययोः । आप इति पितो ग्रहणं किम् ? कीलालपा ब्राह्मणेन । कीलालपोर्ब्राह्मणकुलयोः । ङ्याब्ग्रहणेऽदीर्घग्रहणमिति वचनादिह न भवति—अतिखट्वेन ब्राह्मणकुलेन ॥

संबुद्धौ च ॥ १०६ ॥

आप इति वर्त्तते । संबुद्धौ च परत आबन्तस्याङ्गस्य एत्वं भवति । हे खट्वे । हे बहुराजे । हे कारीषगन्ध्ये ॥

अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥

संबुद्धाविति वर्त्तते । अम्बार्थानामङ्गानां नद्यन्तानां ह्रस्वो भवति संबुद्धौ परतः । हे अम्ब । हे अक्क । हे अल्ल । नद्याः खल्वपि-हे कुमारि । हे शार्ङ्गरवि । हे ब्रह्मबन्धु । हे वीरबन्धु । *डलकवतीनां प्रतिषेधो वक्तव्यः* । हे अम्बाडे । हे अम्बाले । हे अम्बिके । *छन्दसि वेति वक्तव्यम्* । हे अम्बाडे । हे अम्बाडे । हे अम्बाल । हे अम्बाले । हे अम्बिक । हे अम्बिके । सलो ह्रस्वो वा डित्संबुद्ध्योरिति वक्तव्यम् । देवते भक्तिः । देवतायां भक्तिः । हे देवत । हे देवते ॥ छन्दस्येव ह्रस्वत्वमिष्यते । *मातॄणां मातच् पुत्रार्थमर्हते* । मातॄणां मातजादेशो वक्तव्यः संबुद्धौ, पुत्रार्थ पुत्रमभिधातु, कीदृशाय, अर्हते । आत्माम्यपत्राणि श्लाघनीयत्वात् पुत्रस्तदर्हम् । हे गार्गीमात । मातृशब्देति समासान्तापवादो मातजादेशः । चित्करणमन्तोदात्तार्थम् ॥

ह्रस्वस्य गुणः ॥ १०८ ॥

संबुद्धाविति वर्त्तते । ह्रस्वान्तस्याङ्गस्य गुणो भवति संबुद्धौ परतः । हे अग्ने । हे वायो । हे पटो (१) । हे कुमारि, हे ब्रह्मबन्धु, इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति । यदि गुण इष्टः स्यात्, अम्बार्थानां ह्रस्व इत्युक्त्वा नदीह्रस्वयोर्गुण इत्येवं ब्रूयात् ॥

जसि च ॥ १०९ ॥

जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति । अग्नयः । वायवः । पटवः । धेनवः । बुद्धयः । *जसादिषु छन्दसि वावचनं प्राक्, णौ चङ्युपधाया ह्रस्व इत्येतस्मादितः प्रकरणात् प्रभृति छन्दसि वेति वक्तव्यम्* । किं प्रयोजनम् ? अम्बे दर्वि शतक्रत्वः पशवे नृत्यः किंकिदीव्या । अम्बे । अम्ब । पूर्णा दर्वि । पूर्णा दर्वी । अधाशतक्रत्वः । शतक्रतवः । पशवे नृत्यः । पशवे नृत्यः । किंकिदीव्या । किंकिदीविना ॥

ऋतो ङिसर्वनामस्थानयोः ॥ ११०

गुण इति वर्त्तते । ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति । ङौ-मातरि । पितरि । भ्रातरि । कर्त्तरि । सर्वनामस्थाने-कर्त्तारौ । कर्त्तारः । मातरौ । पितरौ । भ्रातरौ (२) ॥

(१) हे पटो इति पाठान्तरं पदमञ्जर्याम् ॥ (२) नप्तरकरणं मु[illegible]म् इति पुस्तकान्तरेऽधिकम् ॥

घेर्ङिति ॥ १११ ॥

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति । अग्नये । वायवे । अग्नेराग च्छति । वायोरागच्छति । अग्ने स्वम् । वायो स्वम् । घेरिति किम् ? पदे । ङितीति किम् ? अग्निभ्याम् । सुधीभ्येच । पट्वी । कुरुत ॥

आण् नद्याः ॥ ११२ ॥

नद्यन्तादङ्गादुत्तरस्य ङित प्रत्ययस्याडागमो भवति । कुमार्यै । ब्रह्मबन्ध्वै । कुमार्या । ब्रह्मबन्ध्वा ॥

याडापः ॥ ११३ ॥

आबन्तादङ्गादुत्तरस्य ङित प्रत्ययस्य याडागमो भवति । खट्वायै । बहुराजायै । कारीषगन्ध्यायै । खट्वायाः । बहुराजायाः । कारीषगन्ध्यायाः । अतिखट्वायेत्यत्राकृते दीर्घे ङयाप्ग्रहणेऽदीर्घ इति वचनाद्याडागमो न भवति । कृतेतुल्लाक्षणिकत्वात् ॥

सर्वनाम्नः स्याड् ढ्रस्वश्च ॥ ११४ ॥

सर्वनाम्न आबन्तादङ्गादुत्तरस्य ङित प्रत्ययस्य स्याडागमो ह्रस्वश्च भवति । सर्वस्यै । विश्वस्यै । यस्यै । तस्यै । कस्यै । अन्यस्यै । सर्वस्याः । विश्वस्याः । यस्याः । तस्याः । कस्याः । अन्यस्याः । आप इत्येव । भवते । भवति ॥

विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥

द्वितीया तृतीया इत्येताभ्यामुत्तरस्य ङित प्रत्ययस्य विभाषा स्याडागमो भवति द्वितीयातृतीययोश्च ह्रस्वो भवति । द्वितीयस्यै । द्वितीयायै । तृतीयस्यै । तृतीयायै ॥

ङेराम्नद्याम्नीभ्यः ॥ ११६ ॥

नद्यन्तादाबन्तान्नीत्येतस्माच्चोत्तरस्य ङेरामित्ययमादेशो भवति । कुमार्याम् । गौर्याम् । ब्रह्मबन्ध्वाम् । धीबन्ध्वाम् । आप -खट्वायाम् । बहुराजायाम् । कारीषगन्ध्यायाम् । नी-राजन्याम् । सेनान्याम् (१) ॥

इदुद्भ्याम् ॥ ११७ ॥

इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति । कृत्याम् । धेन्वाम् ॥

औत् ॥ ११८ ॥

इदुद्भ्यामुत्तरस्य ङेरौकारादेशो भवति । यच्च नदीसंज्ञं नापि घिसंज्ञमिकारान्तं तदिहोदाहरणम् । सख्यौ । पत्यौ ॥

अच्च घेः ॥ ११९ ॥

औदिति वर्त्तते । घिसंज्ञकादुत्तरस्य ङेरौकारादेशो भवति तस्य च घेरकारादेशो

(१) ग्रामण्यामिति पुस्तकान्तरेऽधिकम् ॥

भवति। अग्नी। वायौ। कृतौ। धेनौ। पटौ। अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम्। औदच्च घेरिति येषामेकमेवेदं सूत्रं ते प्रधानशिष्टमिदुद्भ्यामौत्त्वं वर्णयन्ति। अन्वाचयशिष्टं घेरकारमिति॥

आङो नाऽस्त्रियाम् ॥ १२० ॥

घेरुत्तरस्याङो नाभावो भवति अस्त्रियाम्। अग्निना। वायुना। पटुना। पुंसि इति नोक्तममुना ब्राह्मणकुलेन। अस्त्रियामिति किम्? कृत्या। धेन्वा॥

इति काशिकायां वृत्तौ सप्तमाध्यायस्य तृतीयः पादः॥

॥ अथ सप्तमाध्यायस्य चतुर्थः पादः॥

णौ चङ्युपधाया ह्रस्वः ॥ १ ॥

अङ्गस्येति वर्त्तते। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति। अचीकरत्। अजीहरत्। अलीलवत्। अपीपठत्। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वं, तत्र कृते द्विर्वचनम्। इह तु, मा भवानटिटदिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति। तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं विहतमिति ह्रस्वो न स्यात्। नैष दोषः। ओणेर्ऋदित्करणं ज्ञापकं, नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति। णाविति किम्? चङ्युपधाया ह्रस्व इत्युच्यमानेऽलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिमादेशं च बाधित्वा ह्रस्वः स्यात्। अवीवपदित्यत्र ह्रस्वत्वेन पुको बाधः स्यात्। अपीपचदित्येवमादौ तु नैव स्यात्। चङीति किम्? कारयति। हारयति। उपधाया इति किम्? अचकाङ्क्षत्। अववाञ्छत्। तदेतदुपधाग्रहणमुत्तरार्थमवश्यं कर्त्तव्यं तदिहापि ह्रस्वत्वं निवर्त्तयतीत्येवमर्थं, येन नाव्यवधानमित्येतदाश्रयितव्यमिति। ॥उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम्॥ (१)। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन। योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावेनाजादेशत्वादङ्गस्य ह्रस्वो न प्राप्नोति। व्याकृतिनिर्देशात् सिद्धम्॥

नाग्लोपिशास्वृदिताम् ॥ २ ॥

अग्लोपिनामङ्गानां शासेर्ऋदितां च णौ चङ्युपधाया ह्रस्वो न भवति। अग्लोपिनां तावत्—मालामाख्यत्, अममालत्। मातरमाख्यत्, अममातत्। राजानमतिक्रान्तवान्, अत्यरराजत्। लोमान्यनुमृष्टवान्, अन्वलुलोमत्। अत्रैव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम्। हल्चोरादेशे तु न सिद्ध्यतीति तदर्थमेतद्वचनम्। शासेः—अशशासत्। ऋदिताम्—बाधृ—अबबाधत्। याचृ—अययाचत्। ढौकृ—अडुढौकत्॥

---

(१) णौ णिच्युपसंख्यानमितिपाठान्तरम्। णे परतोऽयोणिस्तस्मिन् ह्रस्वः॥

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥

भ्राज भास भाष दीप जीव मील पीड इत्येतेषामङ्गानां णौ चङ्युपधाया ह्रस्वो भवत्यन्यतरस्याम्। भ्राज-अबिभ्रजत्। अबभ्राजत्। भास-अबीभसत्। अबभासत्। भाष-अबीभषत्। अबभाषत्। दीप-अदीदिपत्। अदिदीपत्। जीव-अजीजिवत्। अजिजीवत्। मील-अमीमिलत्। अमिमीलत्। पीड-अपीपिडत्। अपिपीडत्। भ्राजभासोरुपादानमपाणिनीयम्। काण्यादीनां चेति वक्तव्यम्॥। अचीकणत्। अचकाणत्। अचीरणत् अचराणत्।

लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥

पिबतेरङ्गस्य णौ चङ्युपधाया लोपो भवति अभ्यासस्येकारादेशो भवति। अपीप्यत्। अपीप्यताम्। अपीप्यन्। उपधालोपे कृते, णौ पुयण्ज्यवचनं ज्ञापकं णौ स्थानिवद्भावस्येति स्थानिवद्भावाद् द्विर्वचनम्॥

तिष्ठतेरित् ॥ ५ ॥

तिष्ठतेरङ्गस्य णौ चङ्युपधाया इकारादेशो भवति। अतिष्ठिपत्। अतिष्ठिपताम्। अतिष्ठिपन्॥

जिघ्रतेर्वा ॥ ६ ॥

जिघ्रतेरङ्गस्य णौ चङ्युपधाया इकारादेशो वा भवति। अजिघ्रिपत्। अजिघ्रिपताम्। अजिघ्रिपन्। अजिघ्रपत्। अजिघ्रपताम्। अजिघ्रपन्॥

उर्ऋत् ॥ ७ ॥

णौ चङ्युपधाया ऋवर्णस्य स्थाने वा ऋकारादेशो भवति। इररारामपवादः। इर-अचिकीर्त्तत्। अचीकृतत्। अर-अववर्त्तत्। अवीवृतत्। आर-अममार्जत्। अमीमृजत्। वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते। तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात् अचीकृतदिति। न चायं भाव्यमानः, किन्तु आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते॥

नित्यं छन्दसि ॥ ८ ॥

छन्दसि विषये णौ चङ्युपधाया ऋवर्णस्य स्थाने ऋकारादेशो भवति नित्यम्। अवीवृधत् पुरोडाशेन। अवीवृधताम्। अवीवृधन्॥

दयतेर्दिगि लिटि ॥ ९ ॥

दयतेरङ्गस्य लिटि परतो दिगि इत्ययमादेशो भवति। अवदिग्ये। अवदिग्याते। अवदिग्यिरे। दयतेरिति दीङो ग्रहणं, न तु दय दान इत्यस्य। तस्य हि लिट्याम् विहित॥ दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते॥

ऋतश्च संयोगादेर्गुणः ॥ १० ॥

ऋकारान्तस्याङ्गस्य संयोगादेर्गुणो भवति लिटि परतः। स्तृ-सस्तरतुः। सस्वरुः।

ध्वृ-दध्वरतुः । दध्वरुः । स्मृ-सस्मरतुः । सस्मरुः । ऋत इति किम् ? चिक्षियतुः । चिक्षियुः । संयोगादेरिति किम् ? चक्रतुः । चक्रुः । प्रतिषेधविषयेऽपि गुणो यथा स्यादित्ययमारम्भः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरिष्यते । सस्वार । सस्मार । लिटीत्येव । स्मृतः । स्मृतवान् । संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्त्तव्यम् । संचस्करतुः, संचस्करुः, इत्यत्र हि पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यत्र दर्शने लिटि कृते तदाश्रये च द्विर्वचने पश्चादुपसर्गयोगे सत्यडभ्यासव्यवायेऽपीति सुट् क्रियते । एवञ्च कृत्वा संस्कृषीष्ट, उपस्कृषीष्टेत्यत्र सुटो बहिरङ्गलक्षणस्यासिद्धत्वादृतश्च संयोगादेरिति इडागमो न भवति ॥

ऋच्छत्यॄताम् ॥ ११ ॥

ऋच्छतेरङ्गस्य ऋ इत्येतस्य ॠकारान्तानां च लिटि परतो गुणो भवति । ऋच्छ-आनर्च्छ । आनर्च्छतुः । आनर्च्छुः । ऋ-आरतुः । आरुः । ॠकारान्तानाम्-निचकरतुः । निचकरुः । निजगरतुः । निजगरुः । ऋच्छतेरगुपधत्वादप्राप्तो गुणो विधीयते । ऋतां तु प्रतिषिद्धः । वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरिष्यते-निचकार । निजगार ॥

शॄदॄपॄां ह्रस्वो वा ॥ १२ ॥

शॄ दॄ पॄ इत्येतेषामङ्गानां लिटि परतो वा ह्रस्वो भवति । विशश्रतुः । विशश्रुः । विशशरतुः । विशशरुः । विदद्रतुः । विदद्रुः । विददरतुः । विददरुः । निपप्रतुः । निपप्रुः । निपपरतुः । निपपरुः । ह्रस्ववचनमित्वोत्वनिवृत्त्यर्थम् । केचिदेतत् सूत्रं प्रत्याचक्षते । श्रा पाके, द्रा कुत्सायाम्, प्रा पूरणे इत्येतेषामनेकार्था धातव इति कृत्वा शॄदॄपॄणामर्थे वर्तमानानां, विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः, निपप्रुः, इत्येतानि रूपाणि साधयन्ति । तथा च सति एभ्यो विशश्राणेत्येतद्रूपं न स्यात् ॥

केऽणः ॥ १३ ॥

के प्रत्यये परतोऽणो ह्रस्वो भवति । ज्ञका । कुमारिका । किशोरिका । अण इति किम् ? गोका । नौका । राका धाकेत्यत्र उणादयो बहुलमिति ह्रस्वो न भवति । न कपीति प्रतिषेधसामर्थ्यात् कनोऽपि सानुबन्धकस्य ग्रहणमिह भवति ॥

न कपि ॥ १४ ॥

कपि प्रत्यये परतोऽणो ह्रस्वो न भवति । बहुकुमारीकः । बहुवधूकः । बहुलक्ष्मीकः । गोस्त्रियोरुपसर्जनस्येत्ययमपि ह्रस्वः कपि न भवति । समासार्थे ह्युत्तरपदे कपि कृते पश्चात् समासेन भवितव्यमिति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति ॥

आपोऽन्यतरस्याम् ॥ १५ ॥

आबन्तस्याङ्गस्य कपि ह्रस्वो न भवत्यन्यतरस्याम् । बहुखट्वकः । बहुखट्वाकः । बहुमालकः । बहुमालाकः ॥

ऋदृशोऽङि गुणः ॥ १६ ॥

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । शकलाङ्गुष्ठकोऽकरत् । अहं [तेभ्योऽकरं नमः । असरत् । आरत् । जरा । दृशेः—अदर्शत् । अदर्शताम् । अदर्शन् ॥

अस्यतेस्थुक् ॥ १७ ॥

अस्यतेरङ्गस्य थुगागमो भवत्यङि परतः । आस्थत् । आस्थताम् । आस्थन् ॥

श्वयतेरः ॥ १८ ॥

श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः । अश्वत् । अश्वताम् । अश्वन् ॥

पतः पुम् ॥ १९ ॥

पतेरङ्गस्य पुमागमो भवत्यङि परतः । अपप्तत् । अपप्तताम् । अपप्तन् ॥

वच उम् ॥ २० ॥

वचेरङ्गस्य अङि परत उमागमो भवति । अवोचत् । अवोचताम् । अवोचन् ॥

शीङः सार्वधातुके गुणः ॥ २१ ॥

शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति । शेते । शयाते । शेरते । सार्वधातुक इति किम् ? शिश्ये ॥

अयङ् यि क्ङिति ॥ २२ ॥

यकारादौ क्ङिति प्रत्यये परतः शीङोऽङ्गस्यायङित्ययमादेशो भवति । शय्यते । शाशय्यते । प्रशय्य । उपशय्य । यीति किम् ? शिश्ये । क्ङितीति किम् ? शेयम् ॥

उपसर्गाद्ध्रस्व ऊहतेः ॥ २३

उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः । समुह्यते । समुह्य गतः । अभ्युह्यते । अभ्युह्य गतः । उपसर्गादिति किम् ? ऊह्यते । ऊहतेरिति किम् ? समीह्यते । यीत्येव । समूहितम् । क्ङितीत्येव । अभ्यूह्योऽयमर्थः । अण इत्येव । आ ऊह्यते ओह्यते । समोह्यते ॥

एतेर्लिङि ॥ २४ ॥

एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति । उदियात् । समियात् । अन्वियात् । आशिषि लिङि अकृत्सार्वधातुकयोरिति दीर्घत्वे कृते ह्रस्वोऽनेन भवति । उपसर्गादित्येव, ईयात् । अण इत्येव, आ ईयात्—एयात् । समेयात् ॥

अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति । भृशायते । सुखायते । दुःखायते । चीयते । चेचीयते । स्तूयते । तोष्टूयते । चीयात् । स्तूयात् । अकृदिति किम् ? प्रकृत्य । प्रहृत्य । परत्वाद्दीर्घत्वेन तुको बाधः स्यात् । असार्वधातुक इति किम् ? चिनुयात् । सुनुयात् । क्ङितीत्येव । उरुया । धृष्णुया ॥

च्वौ च ॥ २६ ॥

च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति । शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरोति । पटूभवति । पटूस्यात् ।

रीङ् ऋतः ॥ २७ ॥

ऋकारान्तस्याङ्गस्य अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परतो रीङित्ययमादेशो भवति । मात्रीयति । मात्रीयते । पित्रीयति । पित्रीयते । चेक्रीयते । मात्रीभूतः । रिङ्शयग्लिङ्क्ष्वित्यत्र निवृत्त, तेनेहापि भवति-पितुरागतं पित्र्यम् । ऋत इति तपरकरणं किम् ? चेकीर्यते । निजेगिल्यते ॥

रिङ् शयग्लिङ्क्षु ॥ २८ ॥

ऋकारान्तस्याङ्गस्य श यक् इत्येतेषु लिङि च यकारादौ असार्वधातुके रिङित्ययमादेशो भवति । श-आद्रियते । आध्रियते । यक्-क्रियते । ह्रियते । क्रियात् । ह्रियात् । असार्वधातुक इत्येव । बिभृयात् । सीत्येव । कृषीष्ट । हृषीष्ट ॥

गुणोऽर्तिसंयोगाद्योः ॥ २९ ॥

ऋतो यकि लिङि इति वर्तते । श इत्यत्रासंभवान्नानुवर्तते । गुणो भवत्यर्त्तेः संयोगादीनामृकारान्तानां यकि परतो लिङि च यकारादावसार्वधातुके । अर्यते अर्यात् । स्मर्यते । स्मर्यात् । इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वादभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणो न प्रवर्तते । यीत्येव स्तृषीष्ट । ध्वृषीष्ट । असार्वधातुक इत्येव । इयृयात् ॥

यङि च ॥ ३० ॥

यङि च परतः, अर्त्तेः संयोगादेश्च ऋतो गुणो भवति । अरार्यते । सास्वर्यते दाध्वर्यते, सास्मर्यते । अर्त्तेरव्यर्त्यूर्णोतीनामुपसंख्यानमिति यङ् ॥ नन्द्राः संयोगादय इति द्विर्वचनप्रतिषेधो यकारपरस्य नेष्यते ॥ हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः ॥ । जेघ्नीयते । हिंसायामिति किम् ? जङ्घन्यते ॥

ई घ्राध्मोः ॥ ३१ ॥

घ्रा ध्मा इत्येतयोर्यङि परत ईकारादेशो भवति । जेघ्रीयते । देध्मीयते ॥

अस्य च्वौ ॥ ३२ ॥

ई इति वर्त्तते । अवर्णान्तस्याङ्गस्य च्वौ परत ईकारादेशो भवति । शुक्लीभवति शुक्लीस्यात् । खट्वीकरोति । खट्वीस्यात् ॥

क्यचि च । ३३ ॥

अस्येति वर्त्तते । क्यचि परतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति । पुत्रीयति घटीयति । खट्वीयति । मालीयति । अकृत्सार्वधातुकयोर्दीर्घ इत्यस्यापवादः । पृथग्योगकरणमुत्तरार्थम् ॥

अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ॥ ३४ ॥

अशनाय उदन्य धनाय इत्येतानि निपात्यन्ते बुभुक्षा पिपासा गर्द्ध इत्येतेष्वर्थेषु। अशनायेत्यशनशब्दस्यात्वं क्यचि। अशनायतीति भवति बुभुक्षा चेत्। अशनीयतीत्येवान्यत्र। उदन्येति उदकशब्दस्य उदन्नादेशो निपात्यते। उदन्यतीति भवति पिपासा चेत्। उदकीयतीत्येवान्यत्र। धनायेति धनशब्दस्यात्वं निपात्यते। धनायतीति भवति गर्द्धश्चेत्। धनीयतीत्येवान्यत्र ॥

न च्छन्दस्यपुत्रस्य ॥ ३५ ॥

छन्दसि विषये पुत्रवर्जितस्यावर्णान्तस्याङ्गस्य क्यचि यदुक्तं तन्न भवति। किं चोक्तम्, दीर्घत्वमीत्वं च। मित्रयुः। (१)सस्वेदयुः। देवाञ्जिगाति सुम्नयुः। अपुत्रस्येति किम्? पुत्रीयन्तः सुदानवः। *अपुत्रादीनामिति वक्तव्यम्*। जनीयन्तोऽन्ववः ॥

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ३६ ॥

दुरस्युः द्रविणस्युः वृषण्यति रिषण्यति एतानि छन्दसि निपात्यन्ते। दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते। अवियेना दुरस्युः। दुष्टीयतीति प्राप्ते। द्रविणशब्दस्य द्रविणस्भावो निपात्यते। द्रविणस्युर्विपन्यया। द्रविणीयतीति प्राप्ते। वृषशब्दस्य वृषण्भावो निपात्यते। वृषण्यति। वृषीयतीति प्राप्ते। रिष्टशब्दस्य रिषण्भावो निपात्यते। रिषण्यति। रिष्टीयतीति प्राप्ते ॥

अश्वाघस्यात् ॥ ३७ ॥

अश्व अघ इत्येतयोः क्यचि परतश्छन्दसि विषये आकारादेशो भवति। अश्वायन्तो मघवन्। मा त्वा वृका अघायवो विदन्। एतदेवात्वचनं ज्ञापकं, न च्छन्दस्यपुत्रस्येति दीर्घप्रतिषेधो भवतीति ॥

देवसुम्नयोर्यजुषि काठके ॥ ३८ ॥

देव सुम्न इत्येतयोः क्यचि परत आकारादेशो भवति यजुषि काठके। देवायन्तो यजमानाय। सुम्नायन्तो हवामहे। यजुषीति किम्? देवाञ्जिगाय सुम्नयुः। काठक इति किम्? सुम्नयुरिदमासीत् ॥

कव्यध्वरपृतनस्यर्चि लोपः ॥ ३९ ॥

कवि अध्वर पृतना इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये। कव्यन्तः सुमनसः। अध्वर-अध्वर्यन्तः। पृतना-पृतन्यन्तस्तिष्ठन्ति ॥

द्यतिस्यतिमास्थामित्ति किति ॥ ४० ॥

द्यति स्यति मा स्था इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये

(१) पुत्रयु°, इति पण्डितपत्रे पाठः। स च चिन्त्यः, सूत्रे तस्य वर्जितत्वात् ॥

परत । द्यति–निर्दित । निर्दितवान् । स्यति–अवसित । अवसितवान् । मा–मित । मितवान् । स्था–स्थित । स्थितवान् । तीति किम् ? अवदाय । क्तिनीति किम् ? अवदाता ॥

शाच्छोरन्यतरस्याम् ॥ ४१ ॥

शा छा इत्येतयोरन्यतरस्यामिकारादेशो भवति तकारादौ किति । शा निशितम् । निशातम् । निशितवान् । निशातवान् । छा–अवच्छितम् । अवच्छातम् । अवच्छितवान् । अवच्छातवान् । श्यतेरित्वं व्रते नित्यमिति वक्तव्यम् । संशितो ब्राह्मण । संशितव्रत इत्यर्थ । व्यवस्थितविभाषाविज्ञानात् सिद्धम् ।

देवत्रातो गलो ग्राह इतियोगे च सद्विधि । मिथस्ते न विभाष्यन्ते गवाक्ष संशितव्रत ॥

दधातेर्हि ॥ ४२ ॥

दधातेरङ्गस्य हीत्ययमादेशो भवति तकारादौ किति प्रत्यये परत । हित । हितवान् । हित्वा ॥

जहातेश्च क्त्वि ॥ ४३ ॥

जहातेरङ्गस्य हीत्ययमादेशो भवति क्त्वाप्रत्यये परत । हित्वा राज्यं वनं गत । हित्वा गच्छति । जहातेर्निर्देशाज्जिहातेर्न भवति–हात्वा ॥

विभाषा छन्दसि ॥ ४४ ॥

जहातेरङ्गस्य विभाषा हीत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परत । हित्वा शरीरं यातव्यम् । हात्वा(१) ॥

सुधितवसुधितनेमधितधिष्वधिषीय च ॥ ४५ ॥

सुधित वसुधित नेमधित धिष्व धिषीय इत्येतानि छन्दसि विषये निपात्यन्ते । तत्र सुधित वसुधित नेमधित इति सुवसुनेमपूर्वस्य दधाते क्तप्रत्यये इत्वमिडागमो वा प्रत्ययस्य निपात्यते । गर्भं माता सुधितम् । सुहितमिति प्राप्ते । वसुधितमग्नौ जुहोति । वसुहितमिति प्राप्ते । नेमधिता बाधन्ते । नेमहिता इति प्राप्ते । धिष्वेति लोण्मध्यमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते । धिष्व सोमम् । धत्स्वेति प्राप्ते । धिषीयेति आशीर्लिङ्यात्मनेपदोत्तमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य निपात्यते । धिषीयेति । धासीयेति प्राप्ते ।

दो दद् घो ॥ ४६ ॥

दा इत्येतस्य घुसंज्ञकस्य ददित्ययमादेशो भवति तकारादौ किति प्रत्यये परत । दत्त । दत्तवान् । दत्ति । द इति किम् ? धीत । धीतवान् । धेट एतद्रूपम् । घोरिति किम् ? दाप् लवने–दात बर्हि । दैप् शोधने–अवदात मुखम् ॥ अयमादेश स्थान्त इष्यते ॥ एवं ह्युक्तम्–

(१) हा इत्यत्रापीत्वाभाव इति पदमञ्जरी

सान्ते दोषो दीर्घत्वं स्याद्धान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो घत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तम् ॥

यदि तु दस्तीति तकारादौ दीर्घत्वं तदा तान्तेऽप्यदोषः । दान्तधान्तयोरपि सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति नत्वघत्वे न भविष्यत इति न दोषः ॥

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

अच उपसर्गात्त इति प्राप्ते निपात्यन्ते । अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः ॥

अच उपसर्गात्तः ॥ ४७ ॥

अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययमादेशो भवति तकारादौ किति । प्रत्तमवत्तं, नीत्तं परीत्तम् । अच इति किम् ? निर्दत्तम् । दुर्दत्तम् । उपसर्गादिति किम् ? दधि दत्तम् । मधु दत्तम् । घोरित्येव । अवदातं मुखम् । उपसर्गादिति पञ्चमीनिर्देशादादेरलः प्राप्नोति । तत्र समाधिमाहुः-अच इत्येतदावर्त्यते । तत्रैकं पञ्चम्यन्तमुपसर्गविशेषणार्थम्, अपरमपि पञ्चम्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने तकारो भवति । द्वितकारो वा संयोगोऽयमादिश्यते । सोऽनेकाल्त्वात् सर्वस्य भविष्यति । अपो भीत्यत्र पञ्चम्यन्तमच इत्यनुवर्त्तते । तेन पकारमात्रस्य भविष्यति । ॐद्यतेरित्वात्तस्त इत्येतद्भवति विप्रतिषेधेनॐ । अवत्तम् । प्रत्तं जुहोति ॥

अपो भि ॥ ४८ ॥

अप इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतस्त इत्ययमादेशो भवति । अद्भिः । अद्भ्यः । भीति किम् ? अप्सु ॥ स्वतः स्वतवसोर्मास उपसश्च तकारादेश इष्यते छन्दसि भकारादौ ॥ स्ववद्भिः । स्वतवद्भिः । माद्भिष्ट इन्द्रो वृत्रहा । समुषद्भिरजायथाः ॥

सः स्यार्द्धधातुके ॥ ४९ ॥

सकारान्तस्याङ्गस्य सकारादावार्द्धधातुके परतस्तकारादेशो भवति । वत्स्यति । अवत्स्यत् । विवत्सति । जिघत्सति । स इति किम् ? वक्ष्यति । सीति किम् ? घासः । वासः । आर्द्धधातुक इति किम् ? आस्से । वस्से ॥

तासस्त्योर्लोपः ॥ ५० ॥

तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये लोपो भवति । तासेः-कर्त्तासि । कर्त्तासे । अस्तेः-त्वमसि । व्यतिसे । अस्तेरकारसकारयोर्लुप्तयोः से इति प्रत्ययमात्रमेतत्पदम् । तेन सात्पदाद्योरिति षत्वं न भवति ॥

रि च ॥ ५१ ॥

रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति । कर्त्तारौ । कर्त्तारः । अध्येतारौ । अध्येतारः । अस्तेर्लिटि-व्यतिरे ॥

ह एति ॥ ५२ ॥

तासस्त्योः सकारस्य हकारादेशो भवति एति परतः । कर्ताहे । अस्ते--व्यतिहे ।

यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥

यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति । यकारादौ—आदीध्य गतः । आवेव्य गतः । आदीध्यते । आवेव्यते । इवर्णादौ—आदीधिता । आवेविता । लिङि । आदीधीत । आवेवीत । यीवर्णयोरिति किम् ? आदीध्यनम् । आवेव्यनम् ॥

सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥

सनि प्रत्यये सकारादौ परतो मी मा घु रभ लभ शक पत पद इत्येतेषामङ्गाना-मचः स्थाने इसित्ययमादेशो भवति । मी इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमि-ष्यते । मित्सति । प्रमित्सति । मा इति गामादाग्रहणेष्वविशेष —मित्सते । अपमि-त्सते । घु—दित्सति । धित्सति । रभ—आरिप्सते । लभ—आलिप्सते । शक—शिक्षति । पत—पित्सति । पद—प्रपित्सते । सनीति किम् ? दास्यति । सीत्येव । पिपतिषति । तनिपतिदरिद्राणामुपसंख्यानमिति पतेरिडागमविकल्पः । ॐराति, राधोहिंसायामच इस्वक्तव्य ॐ । प्रतिरित्सति । हिंसायामिति किम् ? आरिरात्सति ।

आप्ज्ञप्यृधामीत् ॥ ५५ ॥

आप् ज्ञपि ऋध् इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः । आप्—ईप्सति । ज्ञपि—ज्ञीप्सति । ऋध्—ईर्त्सति । ज्ञपेर्द्वावचौ तत्र णे पूर्वविप्रति-षेधेन लोप इतरस्य त्वीत्वम् । सनीत्येव । प्राप्स्यति । सीत्येव । जिज्ञपयिषति । अर्दिधिषति । सनीवन्तर्द्धेति ज्ञपेरृधेश्चेटो विकल्पः ॥

दम्भ इच्च ॥ ५६ ॥

दम्भेरच इकारादेशो भवति चकारादीच्च सनि सकारादौ परतः । धीप्सति । धिप्सति । सीत्येव ॥ दिदम्भिषति ॥

मुचोऽकर्मकस्य गुणो वा ॥ ५७॥

मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः । हलन्ताच्चेति कित्वप्र-तिषेधो विकल्प्यते । मोक्षते वत्सः स्वयमेव । मुमुक्षते वत्सः स्वयमेव । अकर्मक-स्येति किम् ? मुमुक्षति वत्सं देवदत्तः । कर्मकर्तरि मुचिरकर्मको भवति कर्मविशे-षस्याऽविवक्षितत्वाद्वा ॥

अत्र लोपोऽभ्यासस्य ॥ ५८ ॥

यदेतत्प्रक्रान्तं सनि मीमेत्यादि मुचोऽकर्मकस्येति यावत्, अत्राभ्यासलोपो भवति । तथैवोदाहृतम् । अभ्यासस्येत्येतच्चाधिकृतं वेदितव्यमाध्यायपरिसमाप्तेः । इत उत्तरं यद्वक्ष्यामोऽभ्यासस्येत्येवं तद्वेदितव्यम् । वक्ष्यति—ह्रस्वः । बुभूषति । चुचैक्षिपते । सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्चेत्येवं सिद्धे यदत्र

ग्रहणमिह क्रियते तद्विषयावधारणार्थमत्राभ्यासलोपो भवति, सन्वद्भावविषये न भवति— अमीमपत्। अदीदपत्। सन्वल्लघुनि चङ्परे इति सन्वद्भावः प्राप्नोति। सर्वस्याभ्यासस्यायं लोप इष्यते तदर्थमत्र केचिदत्रग्रहणं वर्णयन्ति। नानर्थकेऽलोन्त्यविधिरित्यपरे सर्वस्य कुर्वन्ति॥

ह्रस्वः ॥ ५९ ॥

ह्रस्वो भवत्यभ्यासस्य। डुढौकिषते। तुत्रौकिषते। डुढौके। तुत्रौके। अडुढौकत्। अतुत्रौकत्। *अभ्यासस्यानचि*। अभ्यासस्य यदुच्यते अनचि तद्भवतीति वक्तव्यम्। चराचरः। चलाचलः। पतापतः। वदावदः। हलादिः शेषो न भवति॥

हलादिः शेषः ॥ ६० ॥

अभ्यासस्य हलादिः शिष्यते अनादिर्लुप्यते। जग्लौ। मम्लौ। पपाच। पपाठ। आट। आटतुः। आटुः। आदिःशेषनिमित्तोऽयमनादेर्लोपो विधीयते। तत्राभ्यासजातेराश्रयणात् क्वचिदपि वर्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति। अपरे पुनःशेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह। तदवस्थानमुक्तितो यद्यपि प्रधानमविधेयत्वात्तु तदप्रधानम्। निवृत्तिरेव तु विधेयत्वात् प्रधानम्। तत्रायमर्थोऽस्य जायते— अभ्यासस्यानादेर्हलो निवृत्तिर्भवतीति। सा निमित्ताद्विधेया सतीमनिवृत्तिमपेक्षिष्यत इति॥

शर्पूर्वाः खयः ॥ ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते। चुश्च्योतिषति। तिष्ठासति। पिस्पन्दिषते। शर्पूर्वा इति किम्? पपाच। खय इति किम्? सस्नौ॥ *खर्पूर्वाः खय इति वक्तव्यम्*। उचिच्छिषतीत्यत्र उच्छेरन्त्यत्वात्तुकि कृते द्विर्वचने तत्र हलादिःशेषे सत्यभ्यासे तकारः श्रूयेत॥

कुहोश्चुः ॥ ६२ ॥

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशो भवति। चकार। चखान। जगाम। जघान। हकारस्य— जहार। जिहीर्षति। जहौ॥

न कवतेर्यङि ॥ ६३ ॥

कवतेरभ्यासस्य यङि परतश्चुर्न भवति। कोकूयते उष्ट्रः। कोकूयते खरः। कवतेरिति विकरणनिर्देशः कौतेः कुवतेश्च निवृत्त्यर्थम्। तयोश्चुत्वमेव भवति— चोकूयते। यङीति किम्? चुकुवे॥

कृषेश्छन्दसि ॥ ६४ ॥

कृषेश्छन्दसि विषये यङि परतोऽभ्यासस्य चुर्न भवति। करीकृष्यते यज्ञकुणपः। छन्दसीति किम्? चरीकृष्यते कृषीवलः॥

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते अलर्षि आपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतः दविद्युतत् तरित्रतः सरीसृपतम् वरीवृजत् मर्मृज्य आगनीगन्ति इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते। दाधर्ति दर्धर्ति दर्धर्षीति धारयतेर्धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च। दाधर्ति। एवं दर्धर्ति। श्लौ रुगभ्यासस्य निपात्यते। तथा दर्धर्षीति। अत्र च यङ्लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्, बोभूत्विति। भवतेर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। नैतदस्ति प्रयोजनम्। अत्र भूसुवोस्तिङीति गुणाभावः सिद्धः। ज्ञापनार्थं तर्हि निपातनमेतत्। ज्ञापयति–अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति–बोभोति। बोभवीति। तेतिक्ते। तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। यङो ङित्त्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धमेव। ज्ञापनार्थं त्वात्मनेपदनिपातनमन्यत्र यङ्लुगन्तादात्मनेपदं न भवति। अलर्षीति। इयर्तेः सिपि अभ्यासस्य हलादिःशेषापवादो रेफस्य लत्वं निपात्यते। सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते–अलर्ति दक्ष। आपनीफणदिति। फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतर्यभ्यासस्य नीगागमो निपात्यते। संसनिष्यददिति। स्यन्देः संपूर्वस्य यङ्लुकि शतर्यभ्यासस्य निक् धातुसकारस्य षत्वं निपात्यते। न चास्य सम्पूर्वता तन्त्रम्, अन्यत्रापि हि दृश्यते–आसनिष्यदन्निति। करिक्रदिति करोतेर्यङ्लुगन्तस्य शतरि चुत्वाभावोऽभ्यासस्य रिगागमो निपात्यते। कनिक्रददिति। क्रन्देर्लुङि च्लेरङादेशो द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते। तथा चास्य विवरणं कृतम्–अक्रन्दीदिति भाषायाम्। भरिभ्रदिति बिभर्तेर्यङ्लुगन्तस्य शतरि भृञामिदिति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमो निपात्यते। दविध्वत इति ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपमेतत्। अत्राभ्यासस्य विगागम ऋकारलोपश्च निपात्यते। दविध्वतो रश्मयः सूर्यस्य। दविद्युतदिति द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावः, अत्व विगागमश्च निपात्यते। तरित्रत इति तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमो निपात्यते। सरीसृपतमिति सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रीगागमो निपात्यते। वरीवृजदिति वृजेः शतरि श्लौ, रीगागमो निपात्यतेऽभ्यासस्य। मर्मृज्येति मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते। ततो मृजेर्वृद्धिर्न भवत्यलघूपधत्वात्। लघूपधगुणे प्राप्ते वृद्धिरारभ्यते। आगनीगन्तीति आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते। कृदयन्ती चेद्गा आगनीगन्ति कर्णम्, इतिकरणमेवंविधानामन्येषामप्युपसंग्रहार्थम् ॥

उरत्॥ ६६॥

ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति। ववृते। ववृधे। नर्नर्ति। नरिनर्त्ति। नरीनर्त्ति, इत्येवमादौ अभ्यासविकारेषु अपवादो नोत्सर्गान् विधीन् बाधत इत्युरत्त्वे कृते रुगादय आगमाः क्रियन्ते॥

द्युतिस्वाप्योः संप्रसारणम्॥ ६७॥

द्युति स्वापि इत्येतयोरभ्यासस्य संप्रसारणं भवति। विदिद्युते। व्यदिद्युतत्। विदिद्योतिषते। विदिद्युतिषते। विदेद्युत्यते। स्वापे-सुष्वापयिषति। स्वापिर्ण्यन्तो गृह्यते तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते। इह न भवति-स्वापयतेर्ण्वुल्-स्वापकः। तस्मात्क्यचि स्वापकीयति। स्वापकीयतेः सन्-सिष्वापकीयिषति॥

व्यथो लिटि॥ ६८॥

व्यथेर्लिटि परतोऽभ्यासस्य संप्रसारणं भवति। विव्यथे। विव्यथाते। विव्यथिरे। हलादिः शेषेण यकारस्य निवृत्तौ प्राप्तायां संप्रसारणं क्रियते। वकारस्य, न संप्रसारणे संप्रसारणमिति प्रतिषिध्यते। लिटीति किम्? वाव्यथ्यते॥

दीर्घ इणः किति॥ ६९॥

इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः। ईयतुः। ईयुः। इणो यणिति यणादेशो कृते स्थानिवद्भावात् द्विर्वचनम्। कितीति किम्? इयाय। इययिथ॥

अत आदेः॥ ७०॥

अभ्यासादेरकारस्य दीर्घो भवति लिटि परतः। अतो गुणे पररूपत्वस्यापवादः। आट। आटतुः। आटुः। आदेरिति किम्? पपाच। पपाठ॥

तस्मान्नुड् द्विहलः॥ ७१॥

तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति। आनङ्ग। आनङ्गतुः। आनङ्गुः। आनञ्ज। आनञ्जतुः। आनञ्जुः। द्विहल इति किम्? आट आटतुः। आटुः। ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते। तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति-आनृधतुः। आनृधुः॥

अश्नोतेश्च॥ ७२॥

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति। व्यानशे। व्यानशाते। व्यानशिरे। अश्नोतेरिति विकरणनिर्देशो अश्नातेर्मा भूदिति-आश। आशतुः। आशुः॥

भवतेरः॥ ७३॥

भवतेरभ्यासस्याकारादेशो भवति लिटि परतः। बभूव। बभूवतुः। बभूवुः।

भवतेरिति धातुनिर्देशादिहापि भवति–अनुबभूवे कम्बलो देवदत्तेन । बभूवे । लिटीत्येव । बुभूषति । बोभूयते ॥

ससूवेति निगमे ॥ ७४ ॥

ससूव इति निपात्यते । सुतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते । ससूव स्थविरं विपश्चिताम् । सुषुवे इति भाषायाम् ॥

निजां त्रयाणां गुणः श्लौ ॥ ७५ ॥

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति । निजिर्–नेनेक्ति । विजिर्–वेवेक्ति । विष्लृ–वेवेष्टि । त्रिग्रहणमुत्तरार्थम् । एषां हि वृत्करणं समाप्त्यर्थं पठ्यत एवेति । श्लाविति किम् ? निनेज ॥

भृञामित् ॥ ७६ ॥

भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति । भृञ्–बिभर्त्ति । माङ्–मिमीते । ओहाङ्–जिहीते । त्रयाणामित्येव । जहाति । श्लावित्येव । बभार ॥

अर्त्तिपिपर्त्योश्च ॥ ७७ ॥

अर्त्ति पिपर्त्ति इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ । इयर्त्ति धूमम् । पिपर्त्ति सोमम् ॥

बहुलं छन्दसि ॥ ७८ ॥

छन्दसि विषयेऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति । पूर्णां विवष्टि । वशेरेतद्रूपम् । तथा वचेः–जनिमा विवक्ति । सचेः–वत्स न माता (१) सिषक्ति । जिघर्त्ति सोमम् । न च भवति–ददातीत्येवं ब्रूयात् । जजनमिन्द्र माता यद्वीरं दधनद्धनिष्ठा ॥

सन्यतः ॥ ७९ ॥

सनि परतोऽकारान्ताभ्यासस्येकारादेशो भवति । पिपक्षति । यियक्षति । तिष्ठासति । पिपासति । सनीति किम् ? पपाच । अत इति किम् ? लुलूषति । तपरकरणं किम् ? पापचिषते ॥

ओः पुयण्ज्यपरे ॥ ८० ॥

सनीति वर्त्तते इदिति च । उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परत इकारादेशो भवति सनि प्रत्यये परतः । पवर्गेऽपरे–पिपविषते । पिपावयिषति । बिभावयिषति । यण्यपरे–यियविषति । यियावयिषति । रिरावयिषति । लिलावयिषति । ज्यपरे–जु इति सौत्रोऽयं धातुः–जिजावयिषति । एतदेव पुयण्ज्यपर इति वचनं ज्ञापकमद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवतीति । ओरिति किम् ? पापच्यतेः सन्–पापचिषते । पुयण्जीति किम् ? बुनुनावयिषति । जुहावयिषति । अपर इति किम् ? बुभूषति ॥

(१) मातर इति पाठः क्वचित् ।

सरतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥

सरति शृणोति द्रवति प्रवति प्लवति च्यवति इत्येतेषामभ्यासस्य ओरवर्णपरे यणि वा इकारादेशो भवति सनि परतः। सिस्रावयिषति। सुस्रावयिषति। शृणोति-शिश्रावयिषति। शुश्रावयिषति। द्रवति-दिद्रावयिषति। दुद्रावयिषति। प्रवति-पिप्रावयिषति। पुप्रावयिषति। प्लवति-पिप्लावयिषति। पुप्लावयिषति। च्यवति-चिच्यावयिषति। चुच्यावयिषति। वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते। पूर्वसूत्रे त्वनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम्। अपर इत्येव-सुस्रूषति। शुश्रूषते ॥

गुणो यङ्लुकोः ॥ ८२ ॥

यङि यङ्लुकि च इगन्तस्याभ्यासस्य गुणो भवति। चेचीयते। लोलूयते। यङ्लुकि-जोहवीति। चर्करीतमदादौ पठ्यते। चोक्रुशीति ॥

दीर्घोऽकितः ॥ ८३ ॥

अकितोऽभ्यासस्य दीर्घो भवति यङि यङ्लुकि च। पापच्यते। पापचीति। याय ज्यते। यायजीति। अकित इति किम्? यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। ननु चापवादापवाद्ययोर्यङ्लुकि एतेऽभ्यासस्यानजन्तत्वादेव दीर्घो न भविष्यति? एवं तर्हि अकित इत्यनेनैतज्ज्ञाप्यते-अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्त इति। किमेतस्य ज्ञापने प्रयोजनम्? डोढौक्यत इत्यत्र दीर्घोऽकित इत्यनेन सन्यतरह्स्वो न बाध्यते। अचीकरदित्यत्र दीर्घो लघोरित्यनेन सन्वदिवं न बाध्यते। मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते-मीमांसते। ई च गण इतीत्वेन हलादिः शेषो न बाध्यते-अजीगणत् ॥

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ ८४ ॥

वञ्चु स्रंसु ध्वंसु भ्रंसु कस पत पद स्कन्द इत्येतेषामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च। वञ्चु-वनीवच्यते। वनीवञ्चीति। स्रंसु-सनीस्रस्यते। सनीस्रंसीति। ध्वंसु-दनीध्वस्यते। दनीध्वंसीति। भ्रंसु-बनीभ्रस्यते। बनीभ्रंसीति। कस-चनीकस्यते। चनीकसीति। पत-पनीपत्यते। पनीपतीति। पद-पनीपद्यते। पनीपदीति। स्कन्द-चनीस्कद्यते। चनीस्कन्दीति ॥

नुगतोऽनुनासिकान्तस्य ॥ ८५ ॥

अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्याकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः। तंतन्यते। तंतनीति। जंगम्यते। जंगमीति। यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। नुगित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम्। स्थानिना ह्यादेशो लक्ष्यते। तेन यंयम्यत इत्येवमादावझल्परत्वेऽप्यनुस्वारो भवति ॥ *पदान्तवच्चेति वक्तव्यम् ॥* ॥ वा पदान्तस्येति परसवर्णविकल्पो यथा स्यादिति। अत इति

किम् ? तेतिम्यते । तपरकरणं तु भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम् । वाभाम्यते । अनुनासिकान्तस्येति किम् ? पापच्यते ॥

जपजभदहदशभञ्जपशां च ॥ ८६ ॥

जप जभ दह दश भञ्ज पश इत्येतेषामभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः । जञ्जप्यते । जञ्जपीति । जभ-जञ्जभ्यते । जञ्जभीति । दह-दन्दह्यते । दन्दहीति । दश-दन्दश्यते । दन्दशीति । दश इति दंशेरयं नकारलोपार्थमेव निर्देशः । तेन यङ्लुक्यपि नकारलोपो भवति । भञ्ज-बम्भज्यते । बम्भञ्जीति । पश इति सौत्रो धातुः । पम्पश्यते । पम्पशीति ॥

चरफलोश्च ॥ ८७ ॥

चर फल इत्येतयोरभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः । चञ्चूर्यते । चञ्चुरीति । पम्फुल्यते । पम्फुलीति ॥

उत्परस्यातः ॥ ८८ ॥

चरफलोरभ्यासात्परस्यात उकारादेशो भवति यङ्यङ्लुकोः परतः । चञ्चूर्यते । चञ्चुरीति । पम्फुल्यते । पम्फुलीति । परस्येति किम् ? अभ्यासस्य मा भूत् । अत इति किम् ? अलोऽन्त्यस्य मा भूत् । उदिति तपरकरणं-चञ्चूर्ति, पम्फुलीति, इत्यत्र लघूपधगुणनिवृत्त्यर्थम् । दीर्घस्यासिद्धत्वादिह लघुत्वं न निवर्त्तते ॥

ति च ॥ ८९ ॥

तकारादौ प्रत्यये परतश्चरफलोरकारस्य उकारादेशो भवति । चरणं चूर्त्तिः । प्रफुल्तिः । प्रफुल्ताः सुमनसः । यङ्यङ्लुकोरभ्यासस्येति चानुवर्त्तमानमपि वचनसामर्थ्यादिह नाभिसम्बध्यते ॥

रीगृदुपधस्य च ॥ ९० ॥

ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रीगागमो भवति यङ्यङ्लुकोः परतः । वरीवृत्यते । वरीवृध्यते । वरीवृतीति । वरीवृधीति । नरीनृत्यते । नरीनृतीति । रीगृत्वत इति वक्तव्यम् ॥ । इहापि यथा स्यात्-वरीवृश्च्यते । परीपृच्छ्यते ॥

रुग्रिकौ च लुकि ॥ ९१ ॥

यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतश्चकाराद्रीक्च । नर्नर्त्ति । नरिनर्त्ति । नरीनर्त्ति । वर्वर्त्ति । वरिवर्त्ति । वरीवर्त्ति । उकार उच्चारणार्थः । मर्मृज्यते मर्मृज्यमानास इत्युपसंख्यानम् ॥ । मर्मृज्यते । मर्मृज्यमानासः ॥

ऋतश्च ॥ ९२ ॥

ऋकारान्तस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतो रीक्च यङ्लुकि । चर्कर्त्ति । चरिकर्त्ति । चरीकर्त्ति । जर्हर्त्ति । जरिहर्त्ति । जरीहर्त्ति । तपरकरणं किम् ? किरतेश्चाकर्त्ति ॥

किरति चर्करीतान्तं पचतीत्यत्र यो नयेत्। प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः (१)॥

तत्रैव प्राप्तिस्तत्प्रकरणसामर्थ्यादिङ्विशेषणभूत इत्येतत्तथा च भाति किरतेरगादीनामिति॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ९३ ॥

लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे। सन्यतः इत्युक्तं चङ्परेऽपि तथा—अचीकरत्। अपीपचत्। ओः पुयण्ज्यपरे इत्युक्तं चङ्परेऽपि तथा—अपीपवत्। अलीलवत्। अजीजवत्। स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वेत्युक्तं चङ्परेऽपि तथा—असिस्रवत्। असुस्रवत्। अशिश्रवत्। अशुश्रवत्। अदिद्रवत्। अदुद्रवत्। अपिप्रवत्। अपुप्रवत्। अपिप्लवत्। अपुप्लवत्। अचिच्यवत्। अचुच्यवत्। लघुनीति किम्? अततक्षत्। अररक्षत्। जागरयतेः—अजजागरत्। अत्र केचिद् गकारं लघुमाश्रित्य सन्वद्भावमिच्छन्ति सर्वत्रैव लघोरानन्तर्यमभ्यासेन नास्तीति व्यवधानेऽपि वचनप्रामाण्याद्भवितव्यम्। तदसत्। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति एकेन व्यवधानमाश्रीयते न पुनरनेकेन। यद्येवं, कथमचिकीर्षदिति? आचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामिति, यदयं तत्साधनार्थं स्मरत्यादीनामत्वं विदधाति। चङ्पर इति किम्? अहं पपच। परग्रहणं किम्? चङ्येव केवले मा भूत्—अचकमत। अनग्लोप इति इति किम्? अचकथत्। इदमाख्यातवान् अददपत्। वादितवन्तं प्रयोजितवान् अवीवददित्यत्र योऽसौ णौ णेर्लोपो नासावग्लोप इत्याश्रीयते। किं कारणम्? चङ्परइति, णिजातेर्निमित्तं येनाक्षेपात्ततोऽन्यस्याको लोपः परिगृह्यते। मीमादीनामत्र ग्रहणात् सन्वद्भावनाभ्यासलोपो न भवतीत्युक्तम्। किञ्च सन्वदिति सनाश्रयं कार्यमतिदिश्यते। न च लोपः सनमपेक्षते किं तर्हि? इस्भावमपि। तदभावादमीमपदित्यादावभ्यासलोपो न भविष्यति॥

## दीर्घो लघोः ॥ ९४ ॥

दीर्घो भवति लघोरभ्यासस्य लघुनि णौ चङ्परेऽनग्लोपे। अचीकरत्। अजीहरत्। अलीलवत्। अपीपचत्। लघोरिति किम्? अचिभ्रजत्। लघुनीत्येव। अततक्षत्। अररक्षत्। चङीत्येव। अहं पपच। पर इत्येव। अचकमत। अनग्लोप इत्येव। अचकथत्॥

## अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ ९५ ॥

स्मृ दृ त्वर प्रथ म्रद स्तॄ स्पश इत्येतेषामभ्यासस्यादित्ययमादेशो भवति चङ्परे

---

(१) किरतीमिति ऋकारान्तोपलक्षणं, चर्करीतमिति यङ्लुक् पूर्वाचार्यसंज्ञा पचतीति च्यन्तोपलक्षणम्। तेन चाकर्तीत्यादीनि रूपाणि किरतेर्णौ नेयेदित्यर्थः। प्राप्तिज्ञं रूपाणां विभक्तिविभागेन या प्राप्तिस्तज्ज्ञम्, संग्रहः साधुशब्दसंग्रहः। इति पदमञ्जरी॥

णौ परत । स्मृ–असस्मरत् । दृ–अददरत् । त्वर–अतत्वरत् । प्रथ–अपप्रथत् । म्रद–अमम्रदत् । स्तॄ–अतस्तरत् । स्पश–अपस्पशत् । सन्वद्भावादित्त्व प्राप्तमनेन बाध्यते । तपरकरणसामर्थ्यादिति कृते दीर्घो लघोरित्येतदपि न भवति–अददरत् ॥

विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥

वेष्टि चेष्टि इत्येतयोरभ्यासस्य विभाषा अत्त्वमादेशो भवति चङ्परे णौ परत । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् । अभ्यासह्रस्वत्वे कृते अत्र पक्षे भवति ॥

ई च गणः ॥ ९७ ॥

गणेरभ्यासस्य ईकारादेशो भवति चङ्परे णौ परत, चकारादत्व । अजीगणत् अजगणत् ॥

इति वामनाचार्यविरचितायां काशिकायां वृत्तौ सप्तमस्याध्यायस्य चतुर्थं पादः ॥ ७ ॥ ४ ॥ समाप्तोऽध्यायश्च सप्तम ॥ ७ ॥

---

## ॥ अथ अष्टमाध्यायस्य प्रथमः पादः ॥

### सर्वस्य द्वे ॥ १ ॥

सर्वस्येति च द्वे इति चैतदधिकृत वेदितव्यम् । इत उत्तर यदनुक्रमिष्याम पदस्येत्यतः प्राक् सर्वस्य द्वे भवत इत्येवं तद्वेदितव्यम् । वक्ष्यति–नित्यवीप्सयोरिति । तत्र सर्वस्य स्थाने द्वे भवतः । के द्वे भवत ? ये शब्दतश्चार्थतश्चोभयथान्तरतमे, एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ भवत । पचति २ । ग्रामो २ रमणीय । यदा तु द्वेःप्रयोगो द्विर्वचन तदा स एव पचतिशब्दो द्विरावर्त्तते, तस्य द्वे आवृत्ती भवत । सर्वस्येति किम् ? विस्पष्टार्थम् । अथ पदस्येत्येव कस्मान्नोच्यते ? नैव शक्यमिह हि न स्यात् प्रपचति प्रपचतीति(१) । इह द्रोग्धा(२) द्रोढा इति घत्वढत्वयोरसिद्धत्वाद् हकारयोरेव तयोर्द्विर्वचन प्राप्नोति, तत्र पश्चाद्विकल्पे सत्यनिष्टमपि स्यात्–द्रोग्धा द्रोढा । द्रोढा द्रोग्धेति । तस्माद्वक्तव्यमेतत् पूर्वत्रासिद्धीयमद्विर्वचन इति । सर्वस्येत्येतदेव वा कृतसर्वकार्यप्रतिपत्त्यर्थं(३) द्रष्टव्यम् ॥

### तस्य परमाम्रेडितम् ॥ २ ॥

तस्य द्विरुक्तस्य यत्परं शब्दरूप तदाम्रेडितसञ्ज्ञ भवति । चौर चौर २ । वृषल

(१) 'प्रपचतीति' वाक्यमेतद्, पदसमुदायात्मकत्वात् ॥ (२) द्रोग्धेति–द्रोग्धा द्रोढा, द्रोढा द्रोग्धा, एतद्द्वयमप्यनिष्ट रूपम् । द्रोढा द्रोढा, द्रोग्धा द्रोग्धा इति त्विष्टं रूपम् । (३) 'कृतेति'–कृतं सर्वं दत्वादिकार्यं यस्य तस्य प्रतिपत्तिः प्रतीतिर्यथास्यादित्येवमर्थम् । कुत सर्वेति –प्रलपाठस्तसाधुरेव ॥

वृषल ३ । दस्यो दस्यो ३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा । आम्रेडितप्रदेशा, आम्रेडित भर्त्सने इत्येवमादयः ॥

अनुदात्तं च ॥ ३ ॥

अनुदात्तं च तद्भवति यदाम्रेडितसंज्ञम् । भुङ्क्ते २ । पशून् २ ॥

नित्यवीप्सयोः ॥ ४ ॥

नित्ये चार्थे वीप्सायां च यद्वर्तते तस्य द्वे भवतः । केषु नित्यता ? तिङ्षु अव्ययकृत्सु(१) च । कुत एतत् ? आभीक्ष्ण्यमिह(२) नित्यता । आभीक्ष्ण्यं च क्रियाधर्मः । यां क्रियां कर्त्ता प्राधान्येनानुपरमन् करोति तन्नित्यम् । पचति २ । जल्पति २ । भुक्त्वा २ व्रजति । भोजं २ व्रजति । लुनीहिलुनीहीत्येवायं लुनाति । कयाणमुलो-र्लोटश्च द्विर्वचनापेक्षायामेव पौनः पुन्यप्रकाशने शक्तिः । यङ् तु तन्निरपेक्षः प्रकाशयति-पुनः २ पचति ,पापच्यत(३) इति । यदा तु तत्र द्विर्वचनं तदा क्रियासमभिहारे पौन पुन्य द्रष्टव्ये पापच्यते पापच्यत इति । अथ केषु वीप्सा ? सुप्सु वीप्सा । का पुनः सा ? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा । का पुनरसौ ? नानावाचिनामधिकरणानां(४) क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा । नानाभूतार्थवाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत्प्रयोक्तुमिच्छा वीप्सा । ग्रामो २ रमणीयः । जनपदो २ रमणीयः । पुरुषः पुरुषो(५) निधनमुपैति । यत्तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते । पचति २ तरामिति । इह तु आढ्यतरमाढ्यतरमानयेति प्रकर्षयुक्तस्य वीप्सायोग इष्यते ॥

परेर्वर्जने ॥ ५ ॥

परीत्येतस्य वर्जनेऽर्थे द्वे भवतः । परि २ त्रिगर्तेभ्यो वृष्टो देवः । परि २ सौवीरेभ्यः । परि २ सर्वसेनेभ्यः । वर्जनं परिहारः । वर्जन इति किम् ? ओदनं परिषिञ्चति । *परेर्वर्जनेऽसमासे वेति वक्तव्यम्* । परि २ त्रिगर्तेभ्यो वृष्टो देवः । परि त्रिगर्तेभ्यः । समासे तु तेनैवोक्तत्वाद्वर्जनस्य नैव भवति-परित्रिगर्तं वृष्टो देव इति ॥

प्रसमुपोदः पादपूरणे ॥ ६ ॥

प्र सम् उप उद् इत्येतेषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत्पादः पूर्यते । प्रप्राय-

(१) 'अव्ययकृत्सु' अव्ययानि च तानि कृन्ति चेति कर्मधारय । अव्ययेकृत्सु इति मूल मुद्रितपाठोऽपपाठः (२) आभीक्ष्ण्यम्—पुनः पुनः प्रवृत्तिः । (३) पापच्यते—सकला अवयवक्रियाः स्वयमेव सम्पादयन् पुनः पुनः पचतीत्यर्थः (४) नानावाचिनामित्यादि पूर्ववृत्तिषु वीप्सालक्षण तस्यैव व्याख्यानम् 'नानाभूतेत्यादि ।' "अधिकरणानि"—वाच्यानि । (५) "पुरुष" इति—निधनं मरणं, जातस्य हि ध्रुवो मृत्युरित्यर्थः, यद्वा, निधनं साध्यसङ्क्रिविशेष, उत्कर्ष अर्जितो निधनमुपयन्तीत्यर्थः ॥

मग्निर्भरतस्य शृण्वे। संसमिद्युवसे वृषन्। उपोप मे परामृश। किं नोदुदु हर्षसे दातवा उ। (१)पादपूरण इति किम्? प्रदेवं देव्या धिया। सामर्थ्याच्छन्दस्येवैतद्विधानम्। भाषायामनर्थकं स्यात् प्रयोगाभावात्॥

उपर्यध्यधसः सामीप्ये ॥ ७ ॥

उपरि अधि अधस् इत्येतेषां द्वे भवतः सामीप्ये विवक्षिते। सामीप्यं(२) प्रत्यासत्तिः, कालकृता देशकृता च। (३)उपर्युपरि दुःखम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधोधो नगरम्। सामीप्य इति किम्? उपरि चन्द्रमाः। इह कस्मान्न भवति-उपरि शिरसो घटं धारयति? औत्तराधर्यमेव विवक्षितं न सामीप्यमिति द्विर्वचनं न भवति॥

वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥ ८ ॥

एकार्थः(४) पदसमूहो वाक्यम्। वाक्यादेरामन्त्रितस्य द्वे भवतः, असूया संमति कोप कुत्सन भर्त्सन इत्येतेषु यदि तद्वाक्यं भवति। तत्र परगुणानामसहनमसूया। पूजा संमतिः। कोपः क्रोधः। निन्दनं कुत्सनम्। अपकारशब्दैर्भयोत्पादनं भर्त्सनम्। एते च प्रयोक्तृधर्मा नाभिधेयधर्माः। असूयायां तावत्-माणवक ३ माणवक अभिरूपक ३ अभिरूपक रिक्तं ते आभिरूप्यम्। संमतौ-माणवक ३ माणवक अभिरूपक ३ अभिरूपक शोभनः खल्वसि। कोपे-माणवक ३ माणवक अविनीतक ३ अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने-शक्तिके ३ शक्तिके यष्टिके ३ यष्टिके 'रिक्ता ते शक्तिः'। भर्त्सने-चौर चौर ३ वृषल वृषल ३ घातयिष्यामि त्वा बन्धयिष्यामि त्वा। असूयादिषु स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेष्विति पूर्वपदस्य प्लुतः। भर्त्सने इत्याम्रेडितस्यैव प्लुतः। वाक्यादेरिति किम्? अन्त्यस्य मध्यस्य च मा भूत्। शोभनः खल्वसि माणवक। आमन्त्रितस्येति किम्? उदारो देवदत्तः। असूयादिष्विति किम्? देवदत्त गामभ्याज शुक्लाम्॥

एकं बहुव्रीहिवत् ॥ ९ ॥

एकमित्येतच्छब्दरूपं द्विरुक्तं बहुव्रीहिवद्भवति। बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ। एकैकमक्षरं पठति। एकैकयाहुत्या जुहोति। सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते, तेनातिदेशिके बहुव्रीहौ

---

(१) पादपूरण इति भावलक्षणे सप्तमीति पुस्तकान्तरेऽधिकम्। (२) न्यासपदमञ्जर्योर्दर्शनादयं मूलपाठो न प्रतिभाति। (३) "अध्यधिग्रामम्"—अधिरुपरिभावे "उपर्युपरि ग्रामम्"—ग्रामस्य समीप इत्यर्थः। 'उपर्युपरि दुःखम्'—समीपे यद्दुःखमचिरकालातिक्रान्तमचिरकालभावि वा तदेवमुच्यते। (४) "एकार्थः" इति—"आख्यातं साव्ययकारकविशेषणं वाक्यमिति" न्यासे वाक्यलक्षणदर्शनात् इदं वाक्यलक्षणं मौलं, पदमञ्जर्यां नैतद् दृश्यते। इत्यादि कश्चिन्नास्त्येव पाठ इत्युक्तम्॥

नभवन्ति। एकैकस्मै। न बहुव्रीहाविति प्रतिषेधो न भवति। बहुव्रीहिरेव यो बहुव्रीहिरिति विज्ञानात्। नन। सुसु। नञ्सुभ्यामित्यन्तोदात्तत्व न भवति। ऋक ऋक्। पू पू। ऋक्पूरिति समासान्तो न भवति॥

आबाधे च॥ १०॥

आबाधनमाबाध पीडा, प्रयोक्तृधर्मः(१)। तत्र वर्त्तमानस्य द्वे भवत बहुव्रीहि वच्चास्य कार्यं भवति। गतगत। नष्टनष्ट। पतितपतित। गतगता। नष्टनष्टा। पतितपतिता। प्रियस्य चिरगमनादिना पीड्यमान कश्चिदेव प्रयुङ्क्ते प्रयोक्ता॥

कर्मधारयवदुत्तरेषु॥ ११॥

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यं भवतीत्येतद्वेदितव्यम्। कर्मधारयत्वे प्रयोजन सुब्लोपपुंवद्भावान्तोदात्तत्वानि। सुब्लोप -पटुपटु। मृदुमृदु। पण्डितप ण्डित। पुंवद्भाव-पटुपट्वी। मृदुमृद्वी। कालककालिका। कोपधाया अपि हि कर्मधारयवद्भावात् "पुंवत्कर्मधारयेति" पुंवद्भावो भवति। अन्तोदात्तत्वम्-पटुपटु पटुपट्वी। समासान्तोदात्तत्वमनेनैव विधीयत इति परस्याम्रेडितानुदात्तत्व बा ध्यते। अधिकारेणैव सिद्ध यदुत्तरेष्विति वचन तद्विस्पष्टार्थम्॥

प्रकारे गुणवचनस्य॥ १२॥

प्रकारो भेद सादृश्य च। तदिह सादृश्य प्रकारो गृह्यते। प्रकारे वर्त्तमानस्य गुणवचनस्य द्वे भवत। पटु २। मृदु २। पण्डित २। अपरिपूर्णगुण इत्यर्थ। परिपूर्ण-गुणेन न्यूनगुणस्योपमाने सत्येव प्रयुज्यते। ॐजातीयरोऽनेन द्विर्वचनेन बाधन नेष्यतेॐ पटुजातीय। मृदुजातीय, इत्यपि हि भवति। त्कथम्? वक्ष्यमाणमन्य तरस्याग्रहणमुभयो शेषो विज्ञायते। प्रकार इति किम्? पटुर्देवदत्त। गुणवचन स्येति किम्? अग्निर्माणवक। गौर्वाहीक। यद्यप्यत्राग्निशब्दो गोशब्दश्च मुख्यार्थ सम्बन्धादवद्युतभेद(२) तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुणविशेषमेव प्रतिपादयितु प्रवृ त्तस्तथापि सर्वदा गुणवचनो न भवतीति न द्विरुच्यते। ॐआनुपूर्व्ये द्वे भवत इति वक्तव्यम्ॐ। मूले २ स्थूला। अग्रे २ सूक्ष्मा। ज्येष्ठ २ प्रवेशय। ॐस्वार्थे अव धार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम्ॐ। अस्मात् कार्षापणादिह भवद्भ्या माष २ देहि। स्वार्थे एतद्द्विर्वचन न वीप्सायाम्। अत्र हि द्वावेव माषौ दीयेते न सर्वे कार्षापणसबन्धिनो माषा, तेन वीप्सा न विद्यते। अवधार्यमाण इति किम्? अस्मात् कार्षापणादिह भवद्भ्या माषमेक देहि। द्वौ माषौ देहि। त्रीन् वा माषान् देहि। अनेकस्मिन्निति किम्? अस्मात् कार्षापणादिह भवद्भ्या माषमेक देहि। ॐचापले द्वे भवत इति वक्तव्यम्ॐ सम्भ्रमेण प्रवृत्तिश्चापलम्। अहिरहि, बुध्यस्व २।

(१) अस्याग्रे "नार्थभेदकम्" इति क्वचिदधिकपाठ॥ (२) अवद्युतभेदम्— निश्चितभेदम्।

नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ किं तर्हि? यावद्भिः शब्दैः सोऽर्थोऽवगम्यते तावन्तः प्रयोक्तव्याः । अहिः २ । बुध्यस्व २ इति । *क्रियासमभिहारे द्वे भवत इति वक्तव्यम्* । स भवान् लुनीहिलुनीहीत्येवायं लुनाति । *आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्* । भुक्त्वा भुक्त्वा व्रजति । भोजंभोजंव्रजति । नित्यइत्येव सिद्धमिति तत्रोक्तम् ॥ *डाचि द्वे भवत इति वक्तव्यम्* । पटपटा करोति । पटपटायते ॥ अव्यक्तानुकरण-डाजन्तस्य द्विर्वचनमिष्यते । इह न भवति—द्वितीया करोति, तृतीया करोति । तदर्थं केचिड्डाचि बहुलमिति पठन्ति ॥ *पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम्* । पूर्वं २ पुष्यन्ति । प्रथम २ पच्यन्ते । आतिशायिकोऽपि दृश्यते—पूर्वतरं पुष्यन्ति । प्रथमतरं पच्यन्त इति ॥ *डतरडतमयोः(१) समसंप्रधारणयोः स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम्* । उभाविमावाढ्यौ, कतरा कतरा अनयोराढ्यता । सर्वं इमे आढ्याः, कतमा कतमा एषामाढ्यता । डतरडतमाभ्यामन्यत्रापि हि दृश्यते—उभाविमावाढ्यौ, कीदृशी २ अनयोराढ्यता । तथा स्त्रीनिगदाद्भावादन्यत्रापि हि दृश्यते—उभाविमावाढ्यौ, कतरः कतरोऽनयोर्विभव इति ॥ *कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम्* । समासवच्च बहुलम् । यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य । अन्यमन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यमिमे ब्राह्मणा भोजयन्ति । अन्योन्यस्य ब्राह्मणा भोजयन्ति । इतरेतरान् भोजयन्ति ॥ *स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः* । अन्योन्यामिमे ब्राह्मण्यौ भोजयतः । अन्योन्यं भोजयतः । इतरेतरां भोजयतः । इतरेतरं भोजयतः । अन्योन्यामिमे ब्राह्मणकुले भोजयतः । इतरेतरामिमे ब्राह्मणकुले भोजयतः । इतरेतरमिमे ब्राह्मणकुले भोजयतः ॥

### अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥

प्रिय सुख इत्येतयोरन्यतरस्यां द्वे भवतः अकृच्छ्रे द्योत्ये । कृच्छ्रं दुःखं, तदभावोऽकृच्छ्रम् । प्रियप्रियेण ददाति(२) । सुखसुखेन ददाति । प्रियेण ददाति । सुखेन ददाति । अखिद्यमानो ददातीत्यर्थः । अकृच्छ्र इति किम्? प्रियः पुत्रः । सुखो रथः ॥

### यथास्वे यथायथम् ॥ १४ ॥

यो य आत्मा यच्चदात्मीयं तत्तद्यथास्वं तस्मिन् यथायथमिति निपात्यते । यथा शब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते । ज्ञाताः सर्वे पदार्था यथायथम् यथास्वभावमित्यर्थः । सर्वेषां तु यथायथं यथात्मीयमित्यर्थः(३) ॥

---

(१) "संप्रधारणा":—समेन गुणेनाढ्यत्वादिना निरूपणा योभाविमावाढ्यावित्येवमादिप्रकारा सा । "स्त्रीनिगद" इत्यादि—भावो भूति- सम्पत्, आढ्यता, निगद्यत इति निगदः, स्त्रीशब्देन स्त्रीलिङ्गः शब्दोऽभिधीयते, स्त्रीलिङ्गाभिधेयाया भूत्यादौ वर्तमानस्येत्यर्थः ॥ (२) 'प्रियप्रियेण ददाति'—अत्यन्तदयितमपि वस्त्वनायासेन ददातीत्यर्थः । (३) यद्यदात्मीयमित्यर्थः ।

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥१५॥

द्वन्द्वमिति द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावः अत्वं चोत्तरपदस्य निपात्यते रहस्य मर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेषु अर्थेषु। तत्र रहस्य द्वन्द्वशब्दवाच्यमितरे विषयीभूताः। द्वन्द्वं मन्त्रयन्ते(१)। मर्यादावचने-मर्यादा स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते। माता पुत्रेण मिथुनं गच्छति, पौत्रेण तत्पुत्रेणापीति मर्यादार्थः। व्युत्क्रमणे-द्वन्द्वं व्युत्क्रान्ताः। व्युत्क्रमणं भेदः पृथगवस्थानम्। द्विवर्गसम्बन्धेन पृथगवस्थिता द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते। यज्ञपात्रप्रयोगे-द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः। अभिव्यक्तौ-द्वन्द्वं नारदपर्वतौ। द्वन्द्वं सङ्कर्षणवासुदेवौ। द्वावप्यभिव्यक्तौ साहचर्येणेत्यर्थः। अन्यत्रापि द्वन्द्वमित्येतद् दृश्यते, तदर्थं योगविभागः कर्तव्यः। द्वन्द्वं युद्धं वर्तते। द्वन्द्वानि सहते धीरः। चार्थे द्वन्द्व इति॥

पदस्य ॥ १६ ॥

पदस्येत्ययमधिकारः प्रागपदान्ताधिकारात्। यदित ऊर्ध्वमनुक्रमिष्यामः पदस्येत्येवं तद्वेदितव्यम्। वक्ष्यति-संयोगान्तस्य लोपः। पचन्। यजन्। पदस्येति किम्? पचन्तौ यजन्तौ। वक्ष्यमाणवाक्यापेक्षया पदस्याधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या-क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी॥

पदात् ॥ १७ ॥

पदादित्ययमधिकारः "प्राक्कुत्सने च सुप्यगोत्रादौ" इत्येतस्माद्यदित ऊर्ध्वमनुक्रमिष्यामः पदादित्येवं तद्वेदितव्यम्। वक्ष्यति-"आमन्त्रितस्य"। आमन्त्रितस्य पदात्परस्यानुदात्तादेशो भवतीति। पचसि देवदत्त। पदादिति किम्? देवदत्त पचसि॥

अनुदात्तं सर्वमपादादौ ॥ १८ ॥

अनुदात्तमिति च, सर्वमिति च, अपादादाविति च एतत् त्रयमधिकृतं वेदितव्यमापादपरिसमाप्तेः। इत उत्तरं यद्वक्ष्यामः, अनुदात्तं सर्वमपादादावित्येवं तद्वेदितव्यम्। वक्ष्यति-"आमन्त्रितस्य च"इति। पचसि देवदत्त। अपादादाविति किम्? यत्ते नियत रजस मृत्यो अनवधर्ष्यम्। "बहुवचनस्य वस्नसौ"। ग्रामो वः स्वं, जनपदो नः स्वम्। अपादादाविति किम्?

---

(१) 'द्वन्द्वं मन्त्रयन्ते' इति—द्वौ द्वौ भूत्वा मन्त्रयन्त इत्यर्थः। 'द्वन्द्वं व्युत्क्रान्ता इति'—द्वौ द्वौ भूत्वा पृथगवस्थिता इत्यर्थः। 'द्वन्द्वं न्यञ्चीति'—द्वन्द्वं न्यञ्चि-पात्राणि प्रयुनक्ति, सादयति, न्यञ्चि न्यग्भूतानि अवाग्बिलानि द्वन्द्वं स्फ्यश्च कपालानि चेति द्वे द्वे इत्यर्थः। मुद्रितमूलपुस्तकेषु 'न्यञ्चीति' नोपलभ्यते, पदमञ्जर्यां [illegible] व्याख्यातम्। 'द्वन्द्वानि सहते' इति—शीतमुष्णं चेत्येकं, सुखदुःखे चापरं, क्षुत्पिपासे चापरं द्वन्द्वम्॥

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं शत्रुमर्दनः ॥

पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यते । सर्वग्रहणं सर्वमनूद्यमानं विधीयमानं चानुदात्तं यथा स्यादिति । तेन युष्मदादेशानामपि वाक्यभेदेनानुदात्तत्वं विधीयते । युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्युः । यत्रापि स्वादिषु(१) पदसंज्ञा भवति—ग्रामो वा दीयते । जनपदो नौ दीयते ॥

आमन्त्रितस्य च ॥ १९ ॥

आमन्त्रितस्य पदस्य पदात् परस्यापादादौ वर्तमानस्य सर्वस्यानुदात्तो भवति । पचसि देवदत्त । पचसि यज्ञदत्त । आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम् । ॐसमानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ॐ । इह मा भूवन्—अयं दण्डो हरानेन(२) ओदनं पच तव भविष्यति । ओदनं पच मम भविष्यति । इह च यथा स्यात्—इह देवदत्त माता ते कथयति । नद्यास्तिष्ठति कूले । शालीनां त ओदनं दास्यामि इति । आमन्त्रितान्तं तिङन्तं युष्मदस्मदादेशाश्च यस्मात् पराणि न तेषां सामर्थ्यमिति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः, समर्थः पदविधिरिति वचनात् ॥

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ २० ॥

युष्मदस्मद् इत्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वान्नावौ इत्येतावादेशौ भवतस्तौ चानुदात्तौ । पदस्य, पदात्, अनुदात्तं सर्वमपादादाविति सर्वमिह संबध्यते । ग्रामो वां स्वम् । जनपदो नौ स्वम् । ग्रामो वां दीयते । जनपदो नौ दीयते । ग्रामो वां पश्यति । जनपदो नौ पश्यति । एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोरेतावादेशौ विज्ञायते । षष्ठीचतुर्थीद्वितीयास्थयोरिति किम् ? ग्रामं युवाभ्यां कृतम् । स्थग्रहणं श्रूयमाणविभक्त्यर्थम् । इह मा भूत्—(३) इति युष्मत्पुत्र(४) इति ॥

बहुवचनस्य वस्नसौ ॥ २१ ॥

बहुवचनान्तयोर्युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्यथासंख्यं वस् नस् इत्येतावादेशौ भवतः । ग्रामो वः स्वम् । जनपदो नः स्वम् । ग्रामो वो दीयते । जनपदो नो दीयते । ग्रामो वः पश्यति । जनपदो नः पश्यति ॥

तेमयावेकवचनस्य ॥ २२ ॥

युष्मदस्मदोरेकवचनान्तयोः षष्ठीचतुर्थीस्थयोर्यथासंख्यं ते मे इत्येतावादेशौ भवतः । ग्रामस्ते स्वम् । ग्रामो मे स्वम् । ग्रामस्ते दीयते । ग्रामो मे दीयते । द्वितीयान्तस्यादेशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्योरेवायं योगः ॥

---

(१) स्वादि पदमिति पाठान्तरम् । (२) भवतीह विष्णुमित्रो देवदत्तात् इति पुस्तकान्तरेऽधिकम् । (३) "अयमिति" पा० धा० । (४) अत्रोऽत्र "ऽयमस्मत्पुत्र इति" न्यासेऽधिकम् ।

## त्वामौ द्वितीयायाः ॥ २३ ॥

एकवचनस्येति वर्त्तते। द्वितीयाया यदेकवचनं तदन्तयोर्युष्मदस्मदोर्यथासंख्यं त्वा मा इत्येतावादेशौ भवतः। ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति ॥

## न चवाहाहैवयुक्ते(१) ॥ २४ ॥

च वा ह अह एव एभिर्योगे युष्मदस्मदोर्वाम्नावादयो न भवन्ति। पूर्वेण प्रकारेण प्राप्ताः प्रतिषिध्यन्ते। ग्रामस्तव च स्वम्। ग्रामो मम च स्वम्। युवयोश्च स्वम्। आवयोश्च स्वम्। युष्माकं च स्वम्। अस्माकं च स्वम्। ग्रामस्तुभ्यं च दीयते। ग्रामो मह्यं च दीयते। युवाभ्यां च दीयते। आवाभ्यां च दीयते। युष्मभ्यं च दीयते। अस्मभ्यं च दीयते। ग्रामस्त्वां च पश्यति। ग्रामो मां च पश्यति। युवां च पश्यति। आवां च पश्यति, युष्मांश्च पश्यति। अस्मांश्च पश्यति। वा–ग्रामस्तव वा स्वम्। ग्रामो मम वा स्वम्। युवयोर्वा स्वम्। आवयोर्वा स्वम्। युष्माकं वा स्वम्। अस्माकं वा स्वम्। ग्रामस्तुभ्यं वा दीयते। ग्रामो मह्यं वा दीयते। युवाभ्यां वा दीयते। आवाभ्यां वा दीयते। युष्मभ्यं वा दीयते। अस्मभ्यं वा दीयते। ग्रामस्त्वां वा पश्यति। ग्रामो मां वा पश्यति। युवां वा पश्यति। आवां वा पश्यति। युष्मान् वा पश्यति। अस्मान्वा पश्यति। ह–ग्रामस्तव ह स्वम्। ग्रामो मम ह स्वम्। युवयोर्ह स्वम्। आवयोर्ह स्वम्। युष्माकं ह स्वम्। अस्माकं ह स्वम्। ग्रामस्तुभ्यं ह दीयते। ग्रामो मह्यं ह दीयते। युवाभ्यां ह दीयते। आवाभ्यां ह दीयते। युष्मभ्यं ह–दीयते। अस्मभ्यं ह दीयते। ग्रामस्त्वां ह पश्यति। ग्रामो मां ह पश्यति। युवां ह पश्यति। आवां ह पश्यति। युष्मान् ह पश्यति। अस्मान् ह पश्यति। अह–ग्रामस्तवाह स्वम्। ग्रामो ममाह स्वम्। युवयोरह स्वम्। आवयोरह स्वम्। युष्माकमह स्वम्। अस्माकमह स्वम्। ग्रामस्तुभ्यमह दीयते। ग्रामोमह्यमह दीयते। युवाभ्यामह दीयते। आवाभ्यामह दीयते। युष्मभ्यमह दीयते। अस्मभ्यमह दीयते। ग्रामस्त्वामह पश्यति। ग्रामो मामह पश्यति। युवामह पश्यति। आवामह पश्यति। युष्मानह पश्यति। अस्मानह पश्यति। एव–ग्रामस्तवैव स्वम्। ग्रामो ममैव स्वम्। युवयोरेव स्वम्। आवयोरेव स्वम्। युष्माकमेव स्वम्। अस्माकमेव स्वम्। ग्रामस्तुभ्यमेव दीयते। ग्रामो मह्यमेव दीयते। युवाभ्यामेव दीयते। आवाभ्यामेव दीयते। युष्मभ्यमेव दीयते। अस्मभ्यमेव दीयते। ग्रामस्त्वामेव पश्यति। ग्रामो मामेव पश्यति। युवामेव पश्यति। आवामेव पश्यति। युष्मानेव पश्यति। अस्मानेव पश्यति। युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम्, (२) युक्तयुक्ते प्रतिषेधो न भवति–ग्रामश्च ते स्वम्। नगरं च मे स्वम् ॥

---

(१) 'चः'—समुच्चये, 'वा' विकल्पे, 'ह' 'अहे' त्यद्भुते, 'ह' खेदे च, 'एवोऽवधारणे'।

(२) "युक्तग्रहणं साक्षादि"ति—यदा युष्मदस्मदर्थगतान्समुच्चयादीश्चादयोद्योतयन्ति तदा तयोः साक्षाद्योगः। प्रत्युदाहरणे ग्रामशब्दोनगरशब्दश्च चशब्देन युक्तः। तदर्थगतस्य

(१)पश्यार्थैश्चानालोचने ॥ २५ ॥

पश्यार्था दर्शनार्थाः । दर्शनं ज्ञानम् । आलोचनं चक्षुर्विज्ञानम् । तैः पश्यार्थैरनालोचने वर्त्तमानैर्युक्ते युष्मदस्मदोर्वांनावादयो न भवन्ति । ग्रामस्तव स्वं मम (२) । ग्रामो मम स्वं समीक्ष्यागतः । ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः । मह्यं दीयमानं समीक्ष्यागतः । ग्रामस्त्वां समीक्ष्यागतः । ग्रामो मां समीक्ष्यागतः अनालोचन इति किम् ? ग्रामस्त्वा पश्यति । ग्रामो मा पश्यति ॥ पश्यार्थैर्युक्तयुक्तेऽपि च प्रतिषेध इष्यते । तथा चैवोदाहृतम् ॥

सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥

विद्यमानपूर्वात् प्रथमान्तात् पदादुत्तरयोर्युष्मदस्मदोर्विभाषा वांनावादयो न भवन्ति । ग्रामे कम्बलस्ते स्वम् । ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलो मे स्वम् ग्रामे कम्बलो मम स्वम् । ग्रामे कम्बलस्ते दीयते । ग्रामे कम्बलस्तुभ्यं दीयते । ग्रा॰ कम्बलो मे दीयते । ग्रामे कम्बलो मह्यं दीयते । ग्रामे छात्रास्त्वा पश्यन्ति । ग्रामे छात्रास्त्वां पश्यन्ति । ग्रामे छात्रा मा पश्यन्ति ग्रामे छात्रा मां पश्यन्ति । सपूर्वाया इति किम् ? कम्बलस्ते स्वम् । कम्बलो मे स्वम् । प्रथमाया इति किम् ? कम्बलो ग्रामे ते स्वम् । कम्बलो ग्रामे मे स्वम् । *युष्मदस्मदोर्विभाषा अनन्वादेश इति वक्तव्यम्* ॥ इह मा भूत्-अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलो मे स्वम् । अपर आह-सर्व एव वांनावादयोऽनन्वादेशे विभाषा वक्तव्या * । कम्बलस्ते स्वम् । कम्बलस्तव स्वम् । कम्बलो मे स्वम् । कम्बलो मम स्वम् । अनन्वादेश इति किम् ? अथो कम्बलस्ते स्वम् । अथो कम्बलो मे स्वम् । न तर्हीदानीमिदं वक्तव्यं, सपूर्वायाः प्रथमाया विभाषेति ? वक्तव्यं च । किं प्रयोजनम् ? अन्वादेशार्थम् । अन्वादेशे हि विभाषा यथा स्यात् । अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलस्तव स्वम् । अथो ग्रामे कम्बलो मे स्वम् । अथो ग्रामे कम्बलो मम स्वम् ॥

तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥

तिङन्तात् पदात् पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे वर्त्तमानानि अनुदात्तानि भवन्ति । पचति गोत्रम्(३) । जल्पति गोत्रम् । आभीक्ष्ण्ये-पचति पचति गोत्रम्(४) । जल्पति २ गोत्रम् । ब्रुव-पचति ब्रुवम् । जल्पति ब्रुवम् । पचति २ ब्रुवम् । जल्पति २ ब्रुवम् । ब्रुव इति ब्रुवः कन्निपातनाद् वच्यादेशाभावश्च । गोत्र

समुच्चयस्य तेन द्योतनात् । युष्मदस्मदौ तु ग्रामनगराभ्यां युक्तौ । तयोरन्यतरस्य विकल्पनमन्यतरार्थस्येद समस्तात् ॥ (१)—दर्शनं पश्य , अस्मादेव निपातनात् भावे च प्रत्यय , 'पाघ्रादि' सूत्रेण च पश्यादेश , पश्योऽर्थो येषां ते पश्यार्थाः । ( २ ) 'समीक्ष्यागत.'—मनसालोच्यागत इत्यर्थं ॥ (३) "पचति गोत्रमिति"—भोजनार्थं गोत्रं ख्यापयतीत्यर्थ (४) "पचति पचति गोत्रमिति"—विवादादिविषये पुनः पुनर्गोत्रख्यापयतीत्यर्थ. ।

चुद। प्रवचन। प्रसहन। प्रकथन। प्रयजन। प्रचक्षण। प्राय। विचक्षण। अवचक्षण। स्वाध्याय। भूयिष्ठ॥ नाम वा(१)॥ नामेत्येतद्वा निहन्यते। पक्षे आद्युदात्तमेव भवति-पचति नाम। पठति नाम। गोत्रादि। तिङ इति किम्? कुत्सितं गोत्रम्। गोत्रादीनीति किम्? पचति पापम्। कुत्सनाभीक्ष्ण्ययोरिति किम्? खनति गोत्रमेव कूपम्(२)। कुत्सनाभीक्ष्ण्ययोरिति पाठविशेषण द्रष्टव्यम्। तेनान्यत्रापि गोत्रादिग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति॥

तिङ्ङतिङः ॥ २८ ॥

तिङन्तं पदमतिङन्तात् पदात् परमनुदात्तं भवति। देवदत्तः पचति। यज्ञदत्तः पचति। तिङिति किम्? नीलमुत्पलम्। शुक्लं वस्त्रम्। अतिङ इति किम्? भवति पचति (३)॥

न लुट् ॥ २९ ॥

पूर्वेणातिप्रसक्ते प्रतिषेध आरभ्यते। लुडन्तं नानुदात्तं भवति। श्वः कर्ता। श्वः कर्तारौ। श्वः कर्तारः। तासेः परस्य लसार्वधातुकस्यानुदात्तत्वे सति सर्वत्रासिद्धे वोदात्तः। यत्र तु टिलोपस्तत्रोदात्तनिवृत्तिस्वरो भवति॥

(४) निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥

नेति वर्तते। यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र इत्येतैर्निपातैर्युक्तं तिङन्तं नानुदात्तं भवति। यत्करोति। यत्पचति। यदि-यदि करोति। यदि पचति। हन्त-हन्त करोति। हन्त पचति। कुवित्-कुविन्करोति। कुवित्पचति। नेत्-नेज्जिह्मायन्तो नरकं पताम। चेत्-स चेद्भुङ्क्ते। चेदधीते। चण् णित्त्वात् शिष्टोऽयं चेदर्थे वर्तते। अयं च मरिष्यति। अयं चेन्मरिष्यतीत्यर्थः। समुच्चयादिषु तु चशब्दस्तेन योगेन विधिरयं न भवति। कच्चित्-कच्चिद्भुङ्क्ते। कच्चिदधीते। यत्र-यत्र भुङ्क्ते। यत्राधीते। निपातैरिति किम्? यद्कूजति शकटम्। गच्छत् कूजति शकटमित्यर्थः। इण शतरि रूपमेतत्। युक्तमिति किम्? यत्र क्व च ते मनो दक्षं दधस उत्तरम्॥

---

(१) प्रदर्शन। प्रयजन। न्याय। प्रपञ्च इत्येते पुस्तकान्तरेऽत्र गणेऽधिकाः। (२) खनति-गोत्रमिति"—गोत्रं कुलं समुदितं भूत्वा कूपं खनतीत्यर्थः। (३) 'भवतिपचतीति'—पचतौ भवतिः पाकक्रिया भवतीत्यर्थः। तत्र साध्यसाधनभावेन द्वयोः क्रिययोर्यद्यपि सामर्थ्यं यथोक्त पच्यादिक्रिया भवतिक्रियायाः कर्त्री भवतीति, तत्र पाकस्य स्वसाधनानि प्रति साध्यस्यापि भवनं प्रति सिद्धत्वम्॥ (४) 'निपातैरिति'—यत्पदार्थे च हेतौ च विचारे यदि चेच्चण। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः॥ कच्चित्प्रश्ने नेन्निषेधे प्रशंसायां कुवित्स्मृतम्॥

नह प्रत्यारम्भे ॥ ३१ ॥

नह इत्येतेन युक्ते प्रत्यारम्भे तिङन्तं नानुदात्तं भवति। (१) चोदितस्याव-धीरणे उपलिप्सया प्रतिषेधयुक्तः प्रत्यारम्भः क्रियते। नह भोक्ष्यसे। नहाध्येष्यसे। प्रत्यारम्भ इति किम्? नह वै तस्मिंश्च लोके दक्षिणामिच्छन्ति ॥

सत्यं प्रश्ने ॥ ३२ ॥

सत्यमित्यनेन युक्तं तिङन्तं नानुदात्तं भवति प्रश्ने। सत्यं भोक्ष्यसे। सत्यमध्ये-ष्यसे। प्रश्न इति किम्? सत्यं वक्ष्यामि नानृतम् ॥

अङ्गाप्रातिलोम्ये ॥ ३३ ॥

अङ्ग इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये गम्यमाने नानुदात्तं भवति। अङ्ग कुरु। अङ्ग पच। अङ्ग पठ। अप्रातिलोम्य इति किम्? अङ्ग कूज वृषल इदानीं ज्ञास्यसि जाल्म। कूजनमनभिमतमसौ कुर्वन् प्रतिलोमो भवति ॥

हि च ॥ ३४ ॥

हि इत्यनेन युक्तं तिङन्तमप्रातिलोम्ये नानुदात्तं भवति। स हि कुरु। स हि पच। स हि पठ। अप्रातिलोम्य इत्येव। स हि कूज वृषल इदानीं ज्ञास्यसि जाल्म ॥

छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥

हि चेति वर्तते। छन्दसि विषये हियुक्तं तिङन्तं साकाङ्क्षमनेकमपि नानुदात्तं भवति एकमपि। कदाचिदेकं कदाचिदनेकमित्यर्थः। तत्रानेकं तावत्—अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति। तिङन्तद्वयमप्येतन्न निहन्यते। एकं खल्वपि—अग्निर्हि अग्ने उदजयत्। तिङन्तद्वयमपि हिशब्दयुक्तमेतत्। तत्रैकमुदजयदित्या-द्युदात्तम्। अजा ह्यग्नेरजनिष्ट गर्भम्। सा वा अपश्यज्जनितारमग्ने। अजनिष्टे-त्याद्युदात्तमपश्यदित्यनुदात्तम् ॥

यावद्यथाभ्याम् ॥ ३६ ॥

यावद्यथा इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति। यावद्भुङ्क्ते। यथा भुङ्क्ते। यावदधीते। यथाधीते। देवदत्तः पचति यावत्। देवदत्तः पचति यथा। परेणापि योगे भवति प्रतिषेधः ॥

पूजायां नानन्तरम् ॥ ३७ ॥

यावद्यथा इत्येताभ्यां युक्तमनन्तरं तिङन्तं पूजायां विषये नानुदात्तं न भवति। किं तर्हि? अनुदात्तमेव। यावत्पचति शोभनम्। यथा पचति शोभनम्। यावत् करोति चारु। यथा करोति चारु। पूजायामिति किम्? यावद्भुङ्क्ते। यथाभुङ्क्ते

(१) चोदितस्येत्यादि—कर्तव्यत्वोपन्यस्तस्य भोजनादेरवधीरणेऽवज्ञाने सति तस्यावधीर-यितुरुपलिप्सया उपालम्भेच्छया तस्यैव भोजनादेः प्रतिषेधेन सम्बन्धः प्रत्यारम्भः, पुनरु-पन्यासः क्रियते इति ॥

अनन्तरमिति किम् ? यावद्देवदत्तः पचति शोभनम् । यथा देवदत्तः करोति चारु ।
पूर्वेणात्र निघातः प्रतिषिध्यते ॥

उपसर्गव्यपेतं च ॥ ३८ ॥

यावद्यथाभ्यां युक्तमुपसर्गव्यपेतं च पूजायां विषये नानुदात्तं न भवति, किं तर्हि अनुदात्तमेव भवति । पूर्वमनन्तरमित्युक्तमुपसर्गव्यवधानार्थोयमारम्भः । यावत्प्रपचति शोभनम् । यथा प्रपचति शोभनम् । यावत्प्रकरोति चारु । यथा प्रकरोति चारु । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् । यथा विष्णुमित्रः प्रकरोति चारु ॥

तुपश्यपश्यताहैः पूजायाम् ॥ ३९ ॥

तु पश्य पश्यत अह इत्येतैर्युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये । तु माणवकस्तु भुङ्क्ते शोभनम् । पश्य-पश्य माणवको भुङ्क्ते शोभनम् । पश्यत-पश्यत माणवको भुङ्क्ते शोभनम् । अह-अह माणवको भुङ्क्ते शोभनम् । पूजायामिति किम् ? पश्य मृगो धावति । पूजायामिति वर्त्तमाने पुनः पूजायामित्युच्यते निघातप्रतिषेधार्थम् । तद्धि प्रतिषेधस्य प्रतिषेधेन सवद्धमिति ॥

अहो च ॥ ४० ॥

अहो इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये । अहो देवदत्त पचति शोभनम् । अहो विष्णुमित्रः करोति चारु । पृथग्योगकरणमुत्तरार्थम् ॥

शेषे विभाषा ॥ ४१ ॥

अहो इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति । कश्च शेषः ? यदन्यत्पूजायाः । कटमहो करिष्यसि । मम गेहमेष्यसि । असूयावचनमेतत् । पूजायामित्यस्य पूर्वत्र चानुकृष्टत्वादनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम् ॥

पुरा च परीप्सायाम् ॥ ४२ ॥

पुरा इत्यनेन युक्तं तिङन्तं परीप्सायामर्थे विभाषा नानुदात्तं भवति । परीप्सा त्वरा । अधीष्व माणवक पुरा विद्योतते विद्युत् । पुरा स्तनयति स्तनयित्नुः । पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयति । परीप्सायामिति किम् ? न तेन स्म पुराधीयते । अत्र भूतकालविप्रकर्षं पुराशब्दो द्योतयति । ऊर्ण्या स्म पुराधीयते ॥

नन्वित्यनुज्ञैषणायाम् ॥ ४३ ॥

ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति अनुज्ञैषणायां विषये । अनुज्ञाया एषणा प्रार्थना, अनुज्ञैषणा । (१) अनुज्ञाप्रार्थनेत्यर्थः । ननु करोमि भोः । अनुजानीष्व मां, करण प्रतीत्यर्थः । अनुज्ञैषणायामिति किम् ? अकार्षीः कटं देवदत्त । ननु करोमि भोः । पृष्टप्रतिवचनमेतन्नानुज्ञैषणा ॥

(१) "अनुज्ञे" ति—किंचित्कर्तुं स्वयमेवोद्यतस्यैव क्रियतामित्येवंरूपोऽभ्युपगमोऽनुज्ञा ॥

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥

किमित्येतत्क्रियाप्रश्ने यदा वर्तते तदानेन युक्तं तिङन्तमनुपसर्गमप्रतिषिद्धं नानुदात्त भवति । किं देवदत्तः पचति, आहोस्विद्भुङ्क्ते ? किं देवदत्त', शेते आहो स्विदधीते । अत्र केचिदाहु –पूर्वं किंयुक्तमिति तन्न निहन्यते । उत्तरं ॥ म किंयुक्त मिति तन्निहन्यत एवेति । अपरे त्वाहु –यद्यप्येकस्याख्यातस्य समीपे किंशब्दः श्रूयते तथापि सर्वस्य संशयविषयस्य तेन योग इति उभयत्र प्रतिषेधेन भवितव्य मिति । क्रियाग्रहणं किम् ? साधनप्रश्ने माभूत्–किं देवदत्त ओदन पचति आहो स्विच्छाकमिति । प्रश्न इति किम् ? किमधीते देवदत्तः । क्षेपे किंशब्दोऽय न प्रश्ने । अनुपसर्गमिति किम् ? किं देवदत्तः प्रपचति आहोस्वित्प्रकरोति । अप्रतिषिद्धमिति किम् ? कि देवदत्तो न पठति आहोस्विन्न करोति ॥

## लोपे विभाषा ॥ ४५ ॥

किमो लोपे क्रियाप्रश्ने तिङन्तमनुपसर्गमप्रतिषिद्ध विभाषा नानुदात्त भवति । क चास्य लोप ? यत्र गम्यते चार्थो न च प्रयुज्यते किं शब्द । देवदत्त पचति आहोस्वित्पठति । विनैव किमा प्रश्नोऽवगम्यते । प्राप्तविभाषेय किमर्थेन योगात् । पूर्ववद् प्रत्युदाहरणानि (१) ॥

## एहिमन्ये प्रहासे लृट् ॥ ४६ ॥

एहिमन्ये इत्यनेन युक्त लृडन्त नानुदात्त भवति प्रहासे । प्रकृष्टो हासः प्रहास, क्रीडा । एहि मन्ये ओदन भोक्ष्यसे नहि भोक्ष्यसे भुक्तः सोऽतिथिभि । एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्तेन पिता । प्रहास इति किम् ? एहि मन्यसे ओदन भोक्ष्ये इति । सुष्ठु च मन्यसे । साधु च मन्यसे । सत्यर्थलोटा लृडित्येव सिद्धे सत्यारम्भो नियमार्थ –एहिमन्येयुक्त प्रहास एव यथा स्यात्, अन्यत्र मा भूदिति– एहि मन्यसे ओदन भोक्ष्य इति । एहिमन्य इत्युत्तमोपादानमतन्त्रम् । प्रहास एव हि मन्यतेरुत्तमो विहितस्ततोऽन्यत्र मध्यम एव भवति । तत्रानेन नियमेन निवृत्ति. क्रियते । एहि मन्यसे ओदन भोक्ष्य इति ॥

## जात्वपूर्वम् ॥ ४७ ॥

जातु इत्येतदविद्यमानपूर्वं तेन युक्त तिङन्त नानुदात्त भवति । जातु भोक्ष्यसे । जातु करिष्यामि । अपूर्वमिति किम् ? कटं जातु करिष्यति ॥

## किंवृत्तं च चिदुत्तरम् ॥ ४८ ॥

किमो वृत्त किंवृत्त, किंवृत्तग्रहणेन तद्विभक्त्यन्त प्रतीयाडतरडतमौ च प्रत्ययौ, तत्किंवृत्त चिदुत्तरमविद्यमानपूर्वं यत्तेन युक्तं तिङन्त नानुदात्त भवति । कश्चिद्भु-ङ्क्ते । कश्चिद्भोजयति । कश्चिदधीते । केन चित्करोति । कस्मै चिद्ददाति । कतरश्चि-

(१) 'पूर्ववत्प्रत्युदाहरणानीति''—तान्येवकिंशब्दरहितानात्यर्थ- ॥

स्करोति। कतमश्चिदमुह्क्ते। चिदुत्तरमिति किम्? को भुङ्क्ते। अपूर्वमित्येव। देवदत्त किंचित्पठति॥

आहो उताहो चानन्तरम् ॥ ४९ ॥

निघातप्रतिषेधोऽनुवर्त्तते, अपूर्वमिति च। आहो उताहो इत्येताभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तं भवति। आहो भुङ्क्ते। उताहो भुङ्क्ते। आहो पठति। उताहो (२) पठति। अनन्तरमिति किम्? शेषे विभाषां वक्ष्यति। अपूर्वमित्येव। देवदत्त आहो भुङ्क्ते। देवदत्त उताहो भुङ्क्ते॥

शेषे विभाषा ॥ ५० ॥

आहो उताहो इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं शेषे विभाषा भवति। क्व शेषे? यदन्यदनन्तरात्। आहो देवदत्तः पचति २। उताहो देवदत्तः पचति २। आहो देवदत्तः पठति २। उताहो देवदत्तः पठति २॥

गत्यर्थलोटा लृण्नचेत्कारकं सर्वान्यत् ॥ ५१ ॥

गमिना समानार्थो गत्यर्थाः, (१) गत्यर्थानां लोट् गत्यर्थलोट्, तेन गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं भवति न चेत्कारकं सर्वान्यद्भवति। यत्रैव कारके कर्त्तरि कर्म्मणि वा लोट् तत्रैव यदि लृडपि भवतीत्यर्थः। कर्तृकर्मणी एवात्र तिङन्त वाच्ये कारकग्रहणेन गृह्येते। न करणादि कारकान्तरम्। आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम्। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः, तेनैव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते। गत्यर्थग्रहणं किम्? पच देवदत्तौदनं भोक्ष्यसे एनम्। लोटेति किम्? आगच्छेर्देवदत्त ग्रामं द्रक्ष्यस्येनम्। लृडिति किम्? आगच्छ देवदत्त ग्रामं पश्यस्येनम्। न चेत्कारकं सर्वान्यदिति किम्? आगच्छ देवदत्त ग्रामं पिता ते ओदनं भोक्ष्यते। उह्यन्तां देवदत्तेन शालयः सक्तवस्तेन पास्यन्ते। सर्वग्रहणं किम्? आगच्छ देवदत्त ग्रामं त्वं चाहं च द्रक्ष्याव एनमित्यत्रापि निघातप्रतिषेधो यथा स्यात्। लृडन्तवाच्ये हि सर्वस्मिन् कारकेऽन्यस्मिन्न भवितव्यम्। इह तु यल्लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेनोच्यते इति॥

लोट् च ॥ ५२ ॥

लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत्कारकं सर्वान्यद्भवति। लोडन्तयोरेकं कारकं यदि भवतीत्यर्थः। आगच्छ देवदत्त ग्रामं पश्य। आव्रज विष्णुमित्र ग्रामं शाधि। आगम्यतां देवदत्तेन ग्रामो दृश्यतां यज्ञदत्तेन। गत्यर्थानामित्येव-पच देवदत्तौदनं भुङ्क्ष्वैनम्। लोटेत्येव-आगच्छेर्देवदत्त ग्रामं पश्यैनम्। न चेत्कारकं सर्वान्यदित्येव। आगच्छ देवदत्त ग्रामं पश्यत्वेनं यज्ञदत्तः। सर्वग्रहणानुवृत्तेस्त्विह

(२) आहोऽधीते इत्यधिकमेकस्मिन् पुस्तके।

(१) अर्थप्रदर्शनमेतत्। विग्रहस्तु गतिरर्थो येषामिति बोध्यः॥

भवत्येव। आगच्छ देवदत्त ग्रामं च याहि च पश्याव। पृथग्योगकरणमुत्तरार्थम्॥

## विभाषित सोपसर्गमनुत्तमम्॥ ४३॥

सर्वं पूर्वमनुवर्तते। प्रासविभाषेय, लोडन्त सोपसर्गमुत्तमवर्जितं गत्यर्थलोटा युक्तं तिङन्त विभाषित नानुदात्तं भवति, न चेत्कारक सर्वान्यद्भवति। आगच्छ देवदत्त ग्राम प्रविश २। आगच्छ देवदत्त ग्राम प्रशाधि २। सोपसर्गमिति किम्? आगच्छ देवदत्त ग्राम पश्य। अनुत्तममिति किम्? आगच्छानि देवदत्त ग्राम प्रविशानि॥

## हन्त च॥ ४४॥

पूर्वं सर्वमनुवर्तते गत्यर्थलोटं वर्जयित्वा। हन्त इत्यनेन युक्त लोडन्त सोपसर्गमुत्तमवर्जित विभाषित नानुदात्त भवति। हन्त प्रविश २। हन्त प्रशाधि २। सोपसर्गमित्येव, हन्त कुरु। निपातैर्यद्यदिहन्तेति नियमात निघातप्रतिषेधो भवति। अनुत्तममित्येव, हन्त प्रभुञ्जावहै। हन्त प्रभुञ्जामहै॥

## आम एकान्तरमामन्त्रितमनन्तिके॥ ४५॥

आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके नानुदात्त भवति। आम् पचसि देवदत्त३। आम् भो देवदत्त ३। भो इत्यामन्त्रितान्तमपि, नामन्त्रिते समानाधिकरणे सामान्यवचनमिति नाविद्यमानवद्भवति। आम इति किम्? शाक पचसि देवदत्त ३। एकान्तरमिति किम्। आम प्रपचसि देवदत्त ३। आमन्त्रितमिति किम्? आम्पचति देवदत्त। अनन्तिक इति किम्? आम् देवदत्त॥ आम एकान्तरमामन्त्रितं यत्तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते॥ तदुभयमनेन क्रियत इति केचिदाहु। प्लुतोदात्त पुनरसिद्धत्वान्न प्रतिषिध्यते। अपरेषां दर्शनमनन्तिक इत्यनेन यद दूर न सन्निकृष्ट तत्परिगृह्यते। तेनास्मिन्नेकश्रुत प्राप्तिरेव नास्ति। प्लुतोदात्तोऽपि नोदाहर्तव्य इति॥

## यद्धितुपरं छन्दसि॥ ४६॥

आमन्त्रितमित्येतदत्रवरिन्नाद्यानुवर्तते। तिङिति वर्तत एव। यपर हिपर तुपर च तिङन्त छन्दसि नानुदात्त भवति। यपर तावत्-गवा गोत्रमुदसृजो यद ङ्गिर। हिपरम्-इन्द्रवो वामुशन्ति हि। तुपरम्-आख्यास्यामि तु ते। निपातैर्यद्यदिहन्तेति हि चेति तुपश्यपश्यताहैरिति च निघातप्रतिषेधे सिद्धे वचनमिद नियमार्थम्—एभिरेव परैर्योगे प्रतिषेधो भवति, नान्यैरिति। इह न भवति-जाये स्त्रोरोहावेहि। एहीत्यनेन गत्यर्थलोटा युक्तस्य रोहावेति यस्य लोडन्तस्य निघातो भवत्येव॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगते॥ ४७॥

चन चिद् इव गोत्रादि तद्धित आम्रेडित इत्येतेषु परत अगतेरुत्तर तिङन्त नानुदात्त भवति। चन-देवदत्त पचति चन। चित्-देवदत्त पचति चिद्। इव-

देवदत्तः पचतीव। गोत्रादि-देवदत्तः पचति गोत्रम्। देवदत्तः पचति ब्रुवम्। देवदत्तः पचति प्रवचनम्। इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्ते। तद्धित-देवदत्तः पचतिकल्पम्। देवदत्तः पचतिरूपम्। अनुदात्तस्तद्धित इह उदाहरणम-न्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यते-पचतिदेश्यः। आम्रेडित-देवदत्तः पचति २। अगतेरिति किम्? देवदत्तः प्रपचति च न। अत्रागतिग्रहणे सगतिरपि तिङित्यत्र च उपसर्गग्रहणं द्रष्टव्यम्। इह मा भूत्-शुक्लीकरोति चन। यत्काष्ठं शुक्लीकरोति यत्काष्ठं कृष्णीकरोति॥

चादिषु ॥ ५८ ॥

चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति। चादयो नचवाहाहैव-युक्ते इत्यत्र ये निर्दिष्टाः त इह परिगृह्यन्ते। चशब्दे तावत्-देवदत्त पचति च खादति च। वा-देवदत्तः पचति वा खादति वा। ह-देवदत्तः पचति ह खादति ह। अह-देवदत्तः पचत्यह खादत्यह। एव-देवदत्तः पचत्येव खादत्येव। अगतेरित्येव। देवदत्तः प्रपचति च प्रखादति च। प्रथमस्यात्र तिङन्तस्य चवायोगे प्रथमेति निघातः प्रतिषिध्यते, एवपरं तु निहन्यते॥

चवायोगे प्रथमा ॥ ५९ ॥

अगतेरिति पूर्वसूत्रे चानुकृष्टमित्यत्र नानुवर्तते। च वा इत्येताभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति। गर्द्दभांश्च कालयति। वीणां च वादयति। गर्द्दभान् वा कालयति, वीणां वा वादयति। योगग्रहणं पूर्वाभ्यामपि योगे निघात-प्रतिषेधो यथा स्यादिति। प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूदिति। चवायोगो हि द्विसमुच्चये विकल्पे च सति भवति। स चानेकस्य धर्म इति॥

हेति क्षियायाम् ॥ ६० ॥

ह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति क्षियायां गम्यमाना-याम्। क्षिया धर्मव्यतिक्रमः, आचारभेदः। स्वयं ह रथेन याति ३ उपाध्यायं पदातिं गमयति। स्वयं हौदनं भुङ्क्ते ३ उपाध्यायं सक्तून् पाययति। प्रथमस्य तिङन्त-स्यात्र निघातः प्रतिषिध्यते। क्षियाशीःप्रैषेषु तिङाकाङ्क्षमिति च प्लुतो भवति।

अहेति विनियोगे च ॥ ६१ ॥

अह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विनियोगे गम्यमाने चशब्दात् क्षियायां च। नानाप्रयोजनो नियोगो विनियोगः। त्वमह ग्रामं गच्छ। त्वमहारण्यं गच्छ। क्षियायाम्-स्वयमह रथेन याति ३ उपाध्यायं पदातिं गमयति। स्वयमहौदनं भुङ्क्ते ३ उपाध्याय सक्तून्पाययति। पूर्ववन्निघातप्रतिषेधः प्लुतश्च॥

चाहलोप एवेत्यवधारणम् ॥ ६२ ॥

चलोपे अहलोपे च प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति। एवेत्येतच्चेदवधारणार्थं

प्रयुज्यते। क्व चास्य लोप? यत्र गम्यते चाऽर्थो, न च प्रयुज्यते, तत्र लोप। तत्र चशब्द समुच्चयार्थ, अहशब्द केवलार्थ इति समानकर्तृके चलोप, नानाकर्तृके अहलोप। चलोपे-देवदत्त एव ग्राम गच्छतु देवदत्त एवारण्य गच्छतु। ग्राम चारण्य च गच्छत्वित्यर्थ। अहलोपे-देवदत्त एव ग्राम गच्छतु यज्ञदत्त एवारण्य गच्छतु। ग्राम केवलमरण्य केवलमित्यर्थ। अवधारणमिति किम्? देवदत्त क्षेत्र मोदयते। अनवक्लृप्तावयमेवशब्द। न क्वचिन्नोच्यत इत्यर्थ। एवे चानियोग इति पररूपम्॥

## चादिलोपे विभाषा ॥ ६३ ॥

चादयो गच्चाहाहैवयुक्त इति सूत्रनिर्दिष्टा गृह्यन्ते, तेषा लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति विभाषा। चलोपे-शुक्ला व्रीहयो भवन्ति २ श्वेता गा आज्याय दुहन्ति। भवन्तीत्येतद्विकल्पेन न निहन्यते। वालोपे व्रीहिभिर्यजेत २ यवैर्यजेत। एव शेषेष्वपि यथादर्शनमुदाहार्यम्॥

## वैवावेति च च्छन्दसि ॥ ६४ ॥

वै वाव इत्येताभ्या युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये। अहर्वै देवानामासीत् २ रात्रीरसुराणामासीत्। बृहस्पतिर्वै देवाना पुरोहित आसीत् २ शण्डामर्कावसुराणाम्। वाव-अय वाव हस्त आसीत् २ नेतर आसीत्॥

## एकान्याभ्या समर्थाभ्याम् ॥ ६५ ॥

एक अन्य इत्येताभ्या समर्थाभ्या युक्ता प्रथमा तिङ्विभक्तिर्विभाषा नानुदात्ता भवति छन्दसि विषये। प्रजामेका जिन्वति २ ऊर्जमेका रक्षति। जिन्वतीत्येतत्पक्षे न निहन्यते। तयोरन्य पिप्पल स्वाद्वत्ति २ अनश्नन्नन्यो अभिचाकशीति। अत्तीत्येतत् पक्षे न निहन्यते। समर्थाभ्यामिति किम्? एको देवानुपातिष्ठत्। एक इति सख्यापदमेतद् अन्यार्थं न वर्तते। एकशब्दस्य व्यवस्थार्थ च समर्थग्रहण, व्यभिचारित्वात्तस्य॥

## यद्वृत्तान्नित्यम् ॥ ६६ ॥

प्रथमा छन्दसीति निवृत्त, निघातप्रतिषेध इत्येव। यदो वृत्त यद्वृत्त। यत्र पदे यद्वर्तते तत्सर्वं यद्वृत्तम्। इह वृत्तग्रहणेन तद्विभक्त्यन्त प्रतीयात्। डतरडतमौ च प्रत्ययौ इत्येतदाश्रीयते। तस्माद्यद्वृत्तादुत्तर तिङन्त नानुदात्त भवति नित्यम्। यो भुङ्क्ते। य भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत्कामास्ते जुहुम। यद्यङ् वायुर्वाति। यद्वायु पवते॥ पञ्चमीनिर्देशेऽप्यत्र व्यवहितेऽपि कार्यमिष्यते। *यथाकाम्ये वेति वक्तव्यम्*(१)। यत्र क्वचन यजन्ते॥

(१) एतदिष्टिमन्तरेण पुस्तके यथाकाम्ये इत्यस्य यत्र-वे इत्यन्त नास्ति॥

## पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ॥ ६७ ॥

पूजनेभ्यः काष्ठादिभ्य उत्तरपदं पूजितमनुदात्तं भवति। काष्ठ—काष्ठाध्यापकः। काष्ठाभिरूपकः। दारुण—दारुणाध्यापकः। दारुणाभिरूपकः। अमातापुत्र—अमातापुत्राध्यापकः। अयुत—अयुताभिरूपकः। अयुताध्यापकः। अद्भुत—अद्भुताध्यापकः। अनुक्त—अनुक्ताध्यापकः। भृश—भृशाध्यापकः। घोर—घोराध्यापकः। परम—परमाध्यापकः। सु—स्वध्यापकः। अति—अत्यध्यापकः। (१)। ॥मलोपश्च॥। इति वार्तिककारमतम् ॥ मयूरव्यंसकादित्वात्समासः। समासे चैतदनुदात्तत्वम्। समासान्तोदात्तत्वापवाद इष्यते ॥ दारुणमध्यापक इत्येवमादिषु न भवति। मलोपश्चेत्यनेनाप्ययमेव विषय आख्यायते। यत्र विभक्तेरभावात् मकारो न श्रूयते तत्रानुदात्तत्वमिति। असमासे हि मलोपो नैवेष्यते। दारुणमधीते दारुणमध्यापक इति। पूजनादित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणमनन्तरपूजितप्रतिपत्त्यर्थम्। एतदेव ज्ञापकमिह प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते इति। तथा च यद्वृत्तान्नित्यमित्यत्रोदाहृतम्। अनुदात्तमिति वर्तमाने पुनरनुदात्तग्रहणं प्रतिषेधनिवृत्त्यर्थम् ॥ ॥

## सगतिरपि तिङ् ॥ ६८ ॥

सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्यः परं पूजितं तिङन्तमनुदात्तं भवति। यत्काष्ठं पचति। यत्काष्ठं प्रपचति। यद्दारुणं पचति। यद्दारुणं प्रपचति। तिङ्ङतिङ इति निघातस्य, निपातैर्यद्यदिहन्तेति प्रतिषेधे प्राप्ते पुनर्विधानम्। सगतिग्रहणाच्च गतिरपि निहन्यते ॥ गतिग्रहणे चात्र उपसर्गग्रहणमिष्यते ॥ इह न भवति—यत्काष्ठं शुक्लीकरोति। यत्काष्ठं कृष्णीकरोति ॥

## कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥

पदादिति निवृत्तम्। सगतिरपि तिङिति वर्तते। कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङ् अगतिरप्यनुदात्तो भवति। पचति पूति। प्रपचति पूति। पचति मिथ्या। प्रपचति मिथ्या। कुत्सन इति किम्? पचति शोभनम्। सुपीति किम्? पचति क्लिश्नाति। अगोत्रादाविति किम्? पचति गोत्रम्। पचति ब्रुवम्। पचति प्रवचनम्। ॥क्रियाकुत्सन इति वक्तव्यम्॥। कर्तुः कुत्सने मा भूत्—पचति पूतिर्देवदत्तः। प्रपचति पूतिः। ॥पूतिश्च चानुबन्धो भवतीति वक्तव्यम्॥। तेनायं चकारानुबन्धकत्वात् अन्तोदात्तो भवति। ॥विभाषितं चापि बह्वर्थमनुदात्तं भवतीति वक्तव्यम्॥। पचन्ति पूति २। प्रपचन्ति पूति २॥

सुपि कुत्सने क्रियाया मलोप इष्टोऽतिङीति चोक्तार्थे।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम्

(१) "अनुज्ञात। अनुज्ञाताध्यापक। कल्याण। कल्याणाध्यापकः। वेश। वेशाध्यापक" इत्यधिकं क्वचिद्ग्रन्थान्तर उपलभ्यते।

### गतिर्गतौ ॥ ७० ॥

गतिर्गतौ परतोऽनुदात्तो भवति। अभ्युद्धरति। समुदानयति। अभिसंपर्याहरति। गतिरिति किम्? देवदत्त प्रपचति। गताविति किम्? आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः॥ याहीत्येतत् प्रति क्रियायोगादाङित्येष गतिः तस्य गतावित्यतस्मिन्नसति गतिरित्यनाश्रितपरनिमित्तकमनुदात्तत्वं स्यात्॥

### तिङि चोदात्तवति ॥ ७१ ॥

गतिरिति वर्तते। तिङन्ते उदात्तवति परतो गतिरनुदात्तो भवति। यत्प्रपचति। यत्करोति। तिङ्ग्रहणमुदात्तवत परिमाणार्थम्। अन्यथा हि य प्रति गतिस्तत्रानुदात्तो भवतीति, धातावेवोदात्तवति स्यात्, प्रत्यये न स्यात्—यत्प्रकरोतीति। यत्क्रियायुक्ताः प्रादयस्तेषां तं प्रति गत्युपसर्गसंज्ञे भवत इति तिङन्ते धातुमेवप्रति गतिसंज्ञा। आमन्ते तर्हि न प्राप्नोति—प्रपचतितराम्। प्रपचतितमामिति? अत्र केचिदामन्तेन गते समासं कुर्वन्ति। तेषामव्ययपूर्वपदप्रकृतिस्वरत्वे सत्यक्रियमाणेऽपि तिङ्ग्रहणे परमनुदात्तवद्भवतीति गतिनिघातो नैव सिद्ध्यति। अथ तरबन्तस्य गतिसमास एवमपि सति शिष्टस्वादाम एव स्वरे सति गतेरनुदात्तं पदमेकवर्जमित्येवानुदात्तत्वं सिद्धम्। येषां गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेरित्यनेन वचनेन कृदन्तेनैव प्राक्सुबुत्पत्तेः समासो भवति नान्येनेति दर्शनम्, तेषामेवंविधे विषये समासेन नैव भवितव्यमिति। पृथक् स्वरप्रवृत्तौ सत्यामनेन प्रयोजनमस्ति। तदर्थं यत्नः कर्तव्यः। उदात्तवतीति किम्? प्रपचति। प्रकरोति॥

### आमन्त्रितं पूर्वमविद्यमानवत् ॥ ७२ ॥

आमन्त्रितं पूर्वमविद्यमानवद्भवति तस्मिन् सति यत्कार्यं तन्न भवति। असति यत्तद्भवति। कानि पुनरविद्यमानवत्त्वे प्रयोजनानि? आमन्त्रिततिङ्निघातयुष्मदस्मदादेशाभावाः। देवदत्त यज्ञदत्तेत्यत्रामन्त्रितस्य पदात्परस्येति निघातो न भवति। षाष्ठिकामन्त्रिताद्युदात्तत्वं भवति। देवदत्त पचसीत्यत्र तिङ्ङतिङ इति निघातो न भवति। देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वमित्येवमादिषु युष्मदस्मदादेशा न भवन्ति। पूजायामनन्तरप्रतिषेध प्रयोजनम्। यावद्देवदत्त पचसि यत्रापि पूजायां नानन्तरमित्येव प्रतिषेधो भवति। जात्वपूर्वमित्येतद्—देवदत्त जातु पचसीत्यत्रापि भवति। आहो उताहो चानन्तरमिति—आहो देवदत्त पचसि, उताहो देवदत्त पचसीत्यत्रापि भवति। आम एकान्तरमामन्त्रितमनन्तिक इति—आम् भो पचसि देवदत्त इत्यत्रापि भवति। आमन्त्रितमिति किम्? देवदत्तः पचति। पूर्वमिति किम्? देवदत्त इत्येतस्यामन्त्रिताद्युदात्तत्वे कर्तव्ये नाविद्यमानवद्भवति। पूर्वं च परापेक्षं भवतीति परस्यैव कार्ये स्वनिमित्तेऽन्यनिमित्ते वा तदविद्यमानवद्भवति, न तु स्वकार्ये। देवदत्त पचसीत्यत्रापि ह्यामन्त्रिताद्युदात्तत्वं भवत्येव। इह

इमं मे गङ्गे यमुने इति गङ्गेशब्दः पूर्वमामन्त्रितं ततः परस्य यमुने शब्दस्यानुदात्तत्वे कर्त्तव्ये स्वयमविद्यमानवत्त्वान्निमित्तं न भवति। मेदन्दस्य निमित्तभाव न प्रतिबध्नाति ॥

## नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥ ७३ ॥

अविद्यमानवत्वस्य प्रतिषेधः। आमन्त्रितान्ते समानाधिकरणे परतः पूर्वमामन्त्रितान्तं सामान्यवचनं नाविद्यमानवद्भवति। किं तर्हि ? विद्यमानवदेव। अग्ने गृहपते माणवक जटिलकाध्यापक। पूर्वस्य विद्यमानवत्वात्परमनुदात्तमेव भवति। आमन्त्रित इति किम् ? देवदत्त पचसि। समानाधिकरण इति किम् ? देवदत्त पण्डित यज्ञदत्त। अत्र यज्ञदत्तविशेषणं पण्डितशब्दः न पूर्वेण समानाधिकरणः। सामान्यवचनमिति किम् ? पर्यायेषु मा भूत्—अघ्न्ये देवि सरस्वति ईडे काव्ये विहव्ये पर्यायशब्दा एते। एवं युक्तमेतानि ह्यन्येनामानीति ॥

## विभाषितं विशेषवचने बहुवचनम् ॥ ७४ ॥

पूर्वेणाविद्यमानत्वे प्रतिषिद्धे विकल्प उच्यते। विशेषवचने समानाधिकरणे आमन्त्रितान्ते परतः पूर्वमामन्त्रितं बहुवचनान्तं विभाषितमविद्यमानवद्भवति। देवाः शरण्याः २। ब्राह्मणा वैयाकरणाः २ सामान्यवचनाधिकारादेव विशेषवचन इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम्। बहुवचनमिति किम् ? माणवक जटिलक। नित्यमेतद्विद्यमानवदेव ॥

इति श्रीकाशिकायां वृत्तावष्टमस्याध्यायस्य प्रथमः पादः ॥

---

# ॥ अथ अष्टमस्याध्यायस्य द्वितीयः पादः ॥

## पूर्वत्रासिद्धम् ॥ १ ॥

पूर्वत्रासिद्धमित्यधिकार आ अध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामः पूर्वत्रासिद्धमित्येवं तद्वेदितव्यम्। तत्र येयं सपादसप्ताध्यायनुक्रान्ता एतस्यामय पादोनोऽध्यायोऽसिद्धो भवति। इत उत्तरं चोत्तरोत्तरो योगः पूर्वत्रपूर्वत्रासिद्धो भवति। असिद्धवद्भवति(१)। सिद्धकार्यं न करोतीत्यर्थः। तदेतदसिद्धत्ववचनमादेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च। अमा उद्धर। द्वाभ्र। द्रूं आनय। असा आदित्यः, इत्यत्र यलोपस्यासिद्धत्वात्, आद्गुण इत्यकः सवर्णे दीर्घ इति च न भवति। अमुष्मै। अमुष्मात्। अमुष्मिन् इति उत्वस्यासिद्धत्वात् स्मायादयो भवन्ति ॥

---

१. असिद्धवद्भवतीति पाठः पुस्तकान्तरे नास्ति।

शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा ।
मतोर्वत्वे झलां जश्त्वे गुडलिण्मान्निदर्शनम् ॥

शुष्किकेत्यत्र शुषः क इत्यस्यासिद्धत्वाद् उदीचामातः स्थाने यकपूर्वाया इति भवति । शुष्कजङ्घा इति न कोपधाया इति पुंवद्भावप्रतिषेधो न भवति । क्षामिमानिति क्षामस्यापत्यं क्षामिः, क्षामो वा अस्यास्तीति क्षामी । क्षामिः क्षामी वा यस्य अस्तीति क्षामिमान् । क्षायो म इत्यस्यासिद्धत्वान्मादुपधायाश्चेति वत्वं न भवति । औजढदिति वहेर्निष्ठायामूढस्तमाख्यदिति णिच् तदन्ताल्लुङ् । चङीति कर्त्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वाण्णौ च षट्टिलोपस्तस्य स्थानिवद्भावाद् ढस्यैव द्विरुच्यते । अनग्लोप इति प्रतिषेधात्सन्वदित्वं नास्ति । [illegible] भवति । औजिढदित्येतत्तु क्विन्नन्तस्य उढिशब्दस्य भवति । गुडलिण्मानिति गुडलिहोऽस्य सन्ति इति मतुप् । तत्र ढत्वजश्त्वयोरसिद्धत्वाद्, झय इति वत्वं न भवति । येऽत्र षष्ठीनिर्देशाः सप्तमीनिर्देशाः पञ्चमीनिर्देशाश्च तेषां, षष्ठी स्थानेयोगा, तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्येति च कर्त्तव्ये नासिद्धत्वं भवति । [illegible] हि संज्ञापरिभाषमिति पूर्वत्रमासां परिभाषाणां नास्तीति । विप्रतिषेधे तु परिभाषा येन पूर्वेण लक्षणेन सह स्पर्द्धते परं लक्षणं तत्प्रति [illegible] न प्रवर्त्तते । तथाच सति, विस्फोर्यमवगोर्यमिति गुणः परेण हलि चेति दीर्घत्वेन बाध्यते । अपवादस्य तु परस्यापि उत्सर्गे कर्त्तव्ये वचनप्रामाण्यादसिद्धत्वं न भवति । तेन [illegible] इति न भवति ॥

[illegible] २ ॥

[illegible] सुब्विधौ च इति

विधिशब्दोऽयं प्रत्येकमभिसम्बध्यमानः स्वरसंज्ञातुकां विधेयत्वात्तैः कर्मषष्ठ्युक्तैर्भावसाधनोऽभिसम्बध्यते । सुपा तु सम्बन्धसामान्यवचनषष्ठ्यन्तेन कर्मसाधनः । तेन सुपः स्थाने यो विधिः सुपि च परभूते, सर्वोऽसौ सुब्विधिरिति सर्वत्रासिद्धत्वं भवति । सुब्विधौ तावत्-राजभिः, तक्षभिरित्यत्र नलोपस्यासिद्धत्वादतो भिस ऐस् न भवति । राजभ्याम्, तक्षभ्याम्, राजसु, तक्षस्विति, सुपि चेति, बहुवचने झल्येदिति दीर्घत्वमेत्वं च न भवति । स्वरविधौ-राजवतीत्यत्र [illegible]ादन्तोवत्या इति न भवति । पञ्चार्मं, दशार्ममिति । अत्र नलोपस्यासिद्धत्वाद् [illegible]वर्णं द्व्यजिति पूर्वपदस्याद्युदात्तत्वं न भवति । पञ्चवीमीत्यत्र नलोपस्यासिद्धत्वादिगन्ते द्विगाविति पूर्वपदप्रकृतिस्वरो न भवति । संज्ञाविधौ-पञ्च ब्राह्मण्यो, दश ब्राह्मण्य इति नलोपस्यासिद्धत्वाद् ष्णान्ता षडिति षट्संज्ञा भवति । ततश्च, न षट्स्वस्रादिभ्य इति टापः प्रतिषेधो भवति । तदेतत्कथं प्रयोजनं भवति, यदि प्रतिकार्यं संज्ञाप्रवृत्तिरित्येतद्दर्शनम् । या हि जश्शसोर्लुगर्था षट्संज्ञा प्रवृत्ता तया स्त्रीप्रत्ययप्रतिषेध न क्रियत इति सा पुनः प्रवर्त्तयितव्येति । तुग्विधौ-वृत्रहभ्याम् । वृत्रहभिरि

नलोपस्यासिद्धत्वाद्ध्रस्वस्य पिति कृति तुगिति तुग्न भवति। अत्र केचित् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति तुकं प्रति नलोपस्यानिमित्तत्वाद् बहिरङ्गलक्षणेन वाऽसिद्धत्वात्तुग्विधिग्रहणमनर्थकमिति प्रतिपन्नाः, तत्तु क्रियते परिभाषाद्वयस्यानित्यत्वं ज्ञापयितुम्। कृतीति किम्? वृत्रहच्छत्रम्। वृत्रहच्छाया। छे चेति तुग्भवति। अत्र सिद्धे सत्यारम्भो नियमार्थः। एतेष्वेव नलोपोऽसिद्धो भवति, नान्यत्र। तेन राजीयति, राजायते, राजाश्व इति ईत्वं दीर्घत्वमेकादेशश्च सिद्धो भवति॥

न मु ने॥ ३॥

मुभावो नाभावे कर्त्तव्ये नासिद्धो भवति। किं तर्हि सिद्ध एव। अमुना। मुभावस्यासिद्धत्वाद् घिलक्षणो नाभावो न स्यात्। कृते तु नाभावे मुभावस्यासिद्धत्वात्, सुपि चेति दीर्घत्वं प्राप्नोति तत्सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति। अथवा योगद्वयमिदमुभयार्थं तन्त्रेणोच्चारितम्। अथवा ने परतो यत्प्राप्नोति तस्मिन् कर्त्तव्ये मुभावो नासिद्ध इत्येष एवात्र सूत्रार्थः। ने तु कर्त्तव्ये मुभावस्य यत्सिद्धत्वं तदर्थतो गृहीतम्। तेनात्र मुभावस्य सिद्धत्वान्नाभावश्च भवति। दीर्घत्वं च न भवति॥ एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः। किं प्रयोजनम्? यणयावेकादेशशतृस्वरैकानुदात्तसर्वानुदात्तार्थम्। वृक्ष इद, प्लक्ष इदम्। अत्र प्रातिपदिकान्तसकारस्यैकवचनयोरुदात्तानुदात्तयोरेकादेशः। स एकादेश उदात्तेनोदात्त इत्युदात्तः। तस्य सिद्धत्वं वक्तव्यम्। आन्तर्यतः, यणादेश उदात्तो यथा स्यात्। आप्-कुमार्या इदम्। कथमिदमुदाहरणम्? यदि उदात्तयणो हल्पूर्वादित्युदात्तत्वे कृते विभक्तेराटश्चैकादेशस्तदा भवतीदमुदाहरणम्। अथ कृते एकादेश उदात्तयणो हल्पूर्वादिति स्वरस्तदा नैतदस्य प्रयोजनं भवति। आय्-वृक्षाविद, प्लक्षाविदम्। एकादेशस्वरः-गाङ्गेऽनूप इति गाङ्गे शब्दे एकार एकादेश उदात्तेनोदात्त इत्युदात्तः। तस्य सिद्धत्वाद् यः पुनरेङः पदान्तादतीति एकादेशः स एकादेश उदात्तेनोदात्त इति, स्वरितो वाऽनुदात्ते पदादाविति, एतद्भवति। शतृस्वरः-तुदती। तुदते। अदुपदेशादिति लसार्वधातुकानुदात्तत्वे कृते एकादेशः, तदुदात्तस्य सिद्धत्वात्, शतुरनुमो नद्यजादी, अन्तोदात्तादिति, एष स्वरो भवति। अनुम इति प्रतिषेधो ज्ञापकः-एकादेशस्वरः शतृस्वरे सिद्ध इति। न हि सनुकं शत्रन्तं किंचिदेकादेशस्वरमन्तरेणान्तोदात्तमस्ति। एकानुदात्तः-तुदन्ति। लिखन्ति। एकादेशस्वरस्य सिद्धत्वाद् अनुदात्तं पदमेकवर्जमिति वर्ज्यमानता भवति। सर्वानुदात्तः-ब्राह्मणास्तुदन्ति। ब्राह्मणा लिखन्ति। एकादेशस्वरस्य सिद्धत्वाद् कृते तस्मिंस्तिङ्ङतिङ इति निघातो भवति। अन्तरङ्ग इति वचनाद् बहिरङ्गस्यासिद्धत्वमेव-पचतीति। पचतीति। ॐसंयोगान्तस्य लोपो रोरुत्वे सिद्धो वक्तव्यः॥। किं प्रयोजनम्? हरिवो मेदिनं त्वा। हरिव इति मतुबन्तमेतत्। तत्र, छन्दसीर इति वत्वं संयोगान्तस्य

लोपे च कृते, मतुवसो रु संबुद्धौ छन्दसीति रुत्वम्। तस्य संयोगान्तस्य लोपस्यासिद्धत्वाद्धशि चेत्युत्वं न प्राप्नोति ॐसिज्लोप एकादेशे सिद्धो वक्तव्यःॐ। अलावीत्। अपावीत्। इट ईटीति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घत्वं भवति। ॐनिष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यःॐ। वृक्णः। वृक्णवान्। निष्ठादेशस्य सिद्धत्वात् झलीति षत्वं न भवति। कुत्वं प्रत्यसिद्ध एवेति तद्भवति। स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियते। तत्र च निपातनमनेकधा समाश्रीयते। यदा क्षीबेर्निष्ठायामिटि कृते इत् शब्दलोपो निपात्यते तदा क्षीब इति संज्ञायामित्शब्दलोपस्याऽसिद्धत्वान्निष्ठा च द्व्यजनादिरित्येष स्वरो न प्राप्नोति। क्षीबेन तरति क्षीबिक इति द्व्यच्लक्षणष्ठन्न प्राप्नोति। यदा ■ तकारलोपो निपात्यते तदा तस्यासिद्धत्वादिडागमः प्राप्नोति। ॐप्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यःॐ। अग्ना३इच्छत्रम्। पटा३उच्छत्रम्। प्लुतविकारस्यासिद्धत्वाच्छे चेति ह्रस्वलक्षणस्तुग्नित्यो न प्राप्नोति। ॐश्चुत्वं धुटि सिद्धं वक्तव्यम्ॐ। श्च्युतिर् क्षरणे इत्ययं धातुः सकारादिः पठ्यते। तस्य श्चुत्वस्यासिद्धत्वाद् अट् श्च्योतति, रट् श्च्योतति इति ङः सि धुट् [illegible] प्राप्नोति। अटतीत्यट्। रटतीति रट्। क्विबन्तोऽयम्। किमर्थं पुनः सकारादि [illegible] इह मधु श्च्योततीति मधुश्च्युत्। क्विबन्तः। मधुश्च्युतमाचष्टे इति णिच्। मधुश्च्ययति। मधुश्च्ययतेः पुनः क्विपि कृते संयोगादित्वात् सलोपः [illegible] यलोपः चकारस्य कुत्वं मधुगिति सिद्धम्। शकारादौ पुनरेतस्मिन् संयोगान्तलोपे न, यकारचकारयो र्लुप्तयोः शकारस्य षत्वे सति मधुडिति स्यात्। अभ्यासजश्त्वचर्त्वे एत्त्वतुकोः सिद्धे वक्तव्येॐ। बभणतुः। बभणुः। अभ्यासजश्त्वस्यासिद्धत्वादनादेशादेरित्येत्वं प्राप्नोति,(१)। छिदेः, चिच्छित्सति, उच्छेः [illegible] [illegible] चर्त्वस्यासिद्धत्वात्, छे चेति तुक् न प्राप्नोति। ॐ द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्ॐ। सय्यँन्ता, सव्वँत्सरः, यल्ँल्लोकम्, तल्ँल्लोकमिति। [illegible] त्वात् यर इति द्विर्वचनं न स्यात्। ॐपदाधिकारश्चेल्लत्वषत्वजश्त्वनत्वरुत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानिॐ। लत्वम्-गलो गलः। गरो गरः। षत्वं-द्रोग्धा २ ढत्व-द्रोढा २। नत्व-नुन्नो नुन्नः। नुत्तो नुत्तः। रुत्वम्-अभिनो भिनः, अभिनद्भिनद्। षत्वम्-मातुः ष्वसा २। मातुःस्वसा २। णत्व-माषवापाणि २। माषवापानि २ अनुनासिक-वाङ्नयनम् २। वाग्नयनम् २। छत्व-वाक्च्छयनम् २। वाक्शयनम् २ लत्वादीनां विकल्पितानामसिद्धत्वात् कृते द्विर्वचने सत्युपरिष्टाद्विकल्पे सति गरोगल गलोगरः इत्येवं रूपमपि द्विरुक्तं स्यात्। तदेतत् सर्वं, न मु ने इति योगविभागेन साध्यते। न इत्येतावद्निर्दिष्टे विषये पूर्वत्रासिद्धस्य प्रतिषेधार्थम्। ततो मु ने इति नेत्येतदनुवर्त्तते॥

(१) अनादेशादेः। अभ्यासादेशस्यासिद्धत्वादेत्वं प्राप्नोतीति मार्यसंमत. पाठः।

## उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ४ ॥

उदात्तयणः स्वरितयणश्च परस्यानुदात्तस्य स्वरित आदेशो भवति । उदात्तयणः—कुमार्यौ । कुमार्यः । उदात्तनिवृत्तिस्वरेणायमीकार उदात्तः, तस्य स्थाने यणादेशः स उदात्तयण्, तस्मात् परस्यानुदात्तस्य स्वरित आदेशो भवति । स्वरितयणः—सकृल्ल्व्याशा । खलप्व्याशा । सकृल्लूः, खलपूरिति कृत्स्वरेणान्तोदात्तौ तयोरोःसुपीति यणादेश स उदात्तयण् । ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य यणादेशः स्वरितयण्, तस्मात् स्वरितयणः परस्याशाशब्दाकारस्यानुदात्तस्य स्वरितो भवति । ननु च सप्तम्येकवचनस्य यदुदात्तयण इति स्वरितत्वं तदसिद्धं यणादेशे । तत्कथमयं स्वरितयण् भवति ? आश्रयात् सिद्धत्वं भविष्यति । यदि एवमुदात्तादनुदात्तस्य स्वरित इति, एतस्याप्याश्रयात् सिद्धत्वं प्राप्नोति । ततश्च दध्याशेत्यत्रापि स्वरितः स्यात् । तस्मादयमेव यणस्वरो यणादेशे सिद्धो वक्तव्यः । केचित्तु ब्रुवते, उदात्ताच्च स्वरितयणोऽपि परस्यानुदात्तस्य स्वरितत्वं दृश्यते । तथाच तैत्तिरीयके शाखान्तरे पठ्यते—वास्ते विश्वाः समिधः सन्त्वग्ने इति । अग्ने इत्ययमकारः स्वरितः पठ्यते । तथा ब्राह्मणेऽपि—दध्याशयतीत्याकारः स्वरितः पठ्यते इति । यथा तु वार्त्तिकं भाष्यं च तथा, उदात्ताद् स्वरितयणः परस्यानुदात्तस्यानेन स्वरितत्वं न भवतीति स्थितम् । तथाच भाष्ये स्वरितयण्ग्रहणमिदं प्रत्याख्यायते । सकृल्ल्व्याशेत्युदात्तयण इत्येव स्वरितस्य सिद्धत्वात् । स्वरितयण्व्यवधानमव्यवधानमेव । स्वरविधौ व्यञ्जनमविद्यमानवदिति । तत्तु क्रियते, पूर्वस्मादपि विधौ स्थानिवद्भावाद् व्यवधानमस्ति । स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यते इति । उदात्तस्वरितयोरिति किम् ? वैदी आशा, वैद्याशा । शार्ङ्गरव्याशा । अनुदात्तयणादेशोऽयम् । अनुदात्तस्येति किम् ? कुमार्यत्र । किशोर्यत्र । अत्रैवयमाद्युदात्तो ञित्स्वरेण ॥

## एकादेश उदात्तेनोदात्तः ॥ ५ ॥

उदात्तेन सहानुदात्तस्य य एकादेशः स उदात्तो भवति । अनुदात्तस्येति वर्त्तते । अग्नी । वायू । वृक्षैः । प्लक्षैः । उदात्तेनेति किम् ? पचन्ति । यजन्ति । लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोरयमेकादेशः । पररूपे कर्त्तव्ये स्वरितस्यासिद्धत्वात् ॥

## स्वरितो वाऽनुदात्ते पदादौ ॥ ६ ॥

अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा भवत्युदात्तो वा । सूत्थितः—सुत्थितः । वि ईक्षते—वीक्षते । वसुकः असि—वसुकोऽसि । सूत्थित इति सुशब्दः सुः पूजायामिति कर्मप्रवचनीयः तस्य प्रादित्वात् समासे सति अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तः, शेषमनुदात्तमिति चानुदात्ते पदादावेकादेशो भवति । वीक्षते । वसुकोऽसीति । अत्रापि तिङ्ङतिङ इति निघाते कृतेऽनुदात्ते पदादावेकादेशः । स्वरितग्रहणं विस्पष्टार्थम् । उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यत एव

स्वरितो भविष्यतीति । अनुदात्त इति किम् ? देवदत्तोऽत्र । पदादाविति किम् घृत्तौ । वृत्ताः ॥

नलोपः प्रातिपदिकान्तस्य ॥ ७ ॥

पदस्येति वर्त्तते । प्रातिपदिकस्य पदस्य योऽन्त्यो नकारस्तस्य लोपो भवति राजा । राजभ्याम् । राजभिः । राजता । राजतरः । राजतमः । किम् ? अहन्नहिम् । अन्तग्रहणं किम् ? राजानौ । राजानः । स्तमेव सुपां सुलुगिति षष्ठ्या लुका निर्दिष्टम् ॥ *अह्नो नलोपप्रतिषेधो वक्तव्यः* अहः । अहोभ्याम् । अहोभिः । रोऽसुपि, अहन्निति रेफरुत्वयोरसिद्धत्वाद् प्राप्नोति । सावकाशं तदुभय सम्बुद्धौ-हेऽहः । हे दीर्घाहो निदाघेति । तत्र समा माहुः-अहन्निति रुविधौ यदुपादीयते प्रथमैकवचनान्तमकृतनलोप तदावर्त्यते, न कयाऽऽवृत्त्या तदेवं रूपं नलोपाभावार्थमन्वाख्यायते, द्वितीययापि तस्य रुर्विधीयते

न ङिसम्बुद्ध्योः ॥ ८ ॥

ङौ परतः संबुद्धौ च नकारस्लोपो न भवति । आर्द्रे चर्म्मन् । लोहिते चर्मन् सुलुगिति ङेर्लुक् । सम्बुद्धौ-हे राजन् । हे तक्षन् । अस्मादेव प्रत्यय इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिद्ध्यते इति ज्ञाप्यते । च न भवतीति । तथा हि राज्ञः पुरुषो राजपुरुष इति । अत्र नलोपश्च भवति । पश्च न भवति ॥ *ङावुत्तरपदे प्रतिषेधस्य प्रतिषेधो वक्तव्यः* । चर्मणि तिला चर्मतिलः । हे राजवृन्दारक इत्यत्र समुदायार्थसंबोधन, न पूर्वपदार्थसंबोधन यत इति सम्बुद्ध्यन्त पूर्वपद मेव समस्यते । *वा नपुंसकानामिति वक्तव्यम्* । चर्मन् । हे चर्म ॥

मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ९ ॥

मतोरिह कार्यित्वेनोपादानात् सामर्थ्यलब्ध प्रातिपदिक तस्मादिति मकार र्णाभ्यां विशिष्यते । मकारावर्णविशिष्टया चोपधया इत्ययमर्थो भवति—मकारान्त मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतोर्व इत्ययमादेशो भवति, यवा भ्यस्तु परतो न भवति । मकारान्तात्-किंवान् । शंवान् । मकारोपधात्-दामीवान् दाडिमीवान् । अवर्णान्तात्-वृक्षवान् । प्लक्षवान् । खट्वावान् । मालावान् । अवण पधात्-पयस्वान् । यशस्वान् । भास्वान् । मादुपधायाश्चेति किम् ? अग्निमान् । वा मान् । अयवादिभ्य इति किम् ? यवमान् । दल्मिमान् । ऊर्म्मिमान् । यव । दल्मि ऊर्म्मि । भूमि । कृमि । क्रुञ्चा । वशा । द्राक्षा (१) एतेषां मादुपधायाश्चेति प्राप्नोति ध्रजि । ध्वजि । सञ्जि (२) इत्येतेषां छन्दसीर इति । हरित् ककुद् गरुद् इत्येतेषां

(१) "वृक्ष । वशा" । इत्यधिक क्वचिदुपलभ्यते । (२) "बीजि । नीजि । शीजि । सिञ्जि इत्यधिक क्वचिदुपलभ्यते ।

इति। इक्षु मधु द्रुम मण्ड धूम इत्येतेषां संज्ञायामिति। आकृतिगणश्च यवादिः। अकृतवत्वो मतुप् यवादिषु द्रष्टव्यः। यस्य सति निमित्ते मतुपो वत्वं न दृश्यते स यवादिषु द्रष्टव्यः (१)। इह नृमत इदं नार्मतमिति बहिरङ्गलक्षणत्वादवर्णोपधस्य मतुपो वत्वं न भवति॥

झयः॥ १०॥

झयन्तादुत्तरस्य मतोर्व इत्ययमादेशो भवति। अग्निचित्वान् ग्रामः। उदश्वित्वान् घोषः। विद्युत्वान् बलाहकः। इन्द्रो मरुत्वान्। दृषद्वान् देशः॥

संज्ञायाम्॥ ११॥

संज्ञायां विषये मतोर्व इत्ययमादेशो भवति। अहीवती। कपीवती। ऋषीवती। मुनीवती॥

आसन्दीवदष्ठीवच्चक्रीवत् कक्षीवद्रुमण्वच्चर्मण्वती॥ १२॥

आसन्दीवद् अष्ठीवत् चक्रीवत् कक्षीवद् रुमण्वत् चर्मण्वती इत्येतानि संज्ञायां निपात्यन्ते। वत्वं पूर्वेणैव सिद्धमादेशार्थानि निपातनानि। आसन्दीवदिति। आसनशब्दस्यासन्दीभावो निपात्यते। आसन्दीवान् ग्रामः। आसन्दीवदहिस्थलम्। आसनवानित्येवान्यत्र। अपरे त्वाहुः—आसन्दीशब्दोऽपि प्रकृत्यन्तरमेवास्ति। तथा चोक्तमौदुम्बरी राजासन्दी भवतीति। तस्य संज्ञायामिति वत्वेन सिद्धम्। आसन्दीवदित्येतत्प्रपञ्चार्थमिह पठ्यते। अष्ठीवदिति। अस्थ्नोऽष्ठीभावः। अष्ठीवानिति शरीरैकदेशसंज्ञा। अस्थिमानित्येवान्यत्र। चक्रीवदिति। चक्रशब्दस्य चक्रीभावो निपात्यते। चक्रीवान् राजा। चक्रवानित्येवान्यत्र। चक्रीवन्ति सदो हविर्धानानि भवन्तीत्येतत्तु छान्दसत्वाद् अनुगन्तव्यम्। कक्षीवदिति। कक्ष्यायाः सम्प्रसारणं निपात्यते। कक्षीवान्नाम ऋषिः। कक्ष्यावानित्येवान्यत्र। रुमण्वदिति लवणशब्दस्य रुमण्भावो निपात्यते। लवणवानित्येवान्यत्र। अपरे त्वाहुः—रुमक्षिति प्रकृत्यन्तरमस्ति। तस्यैतन्निपातनं नकारलोपाभावार्थं णत्वार्थं च। मतोर्वा नुडर्थमिति। चर्मण्वतीति। चर्मणो नलोपाभावो णत्वं च निपात्यते। मतोर्वा नुडागमः। चर्मण्वती नाम नदी। चर्मवतीत्येवान्यत्र॥

उदन्वानुदधौ च॥ १३॥

उदन्वानित्युदकशब्दस्य मतावुदन्भावो निपात्यते उदधावर्थे, संज्ञायां विषये च। उदन्वान्नाम ऋषिर्यस्यौदन्वतः पुत्रः। उदधौ—उदन्वान्। यस्मिन्नुदकं धीयत स उच्यते। उदधाविति किम्? उदकवान् घट इत्यत्र तु धारणार्थो न विवक्ष्यते किं तर्हि? उदकस्तास्संबन्धसामान्यम्॥

---

(१) यस्य सति निमित्ते मतुपो वत्वं न दृश्यते स यवादिषु द्रष्टव्य इति नास्ति कस्मिंश्चित्पुस्तके॥

## राजन्वान् सौराज्ये ॥ १४ ॥

राजन्वानिति निपात्यते सौराज्ये गम्यमाने । शोभनो राजा यस्मिन्निति स राजन्वान् देशः । राजन्वती पृथ्वी । राजवानित्येवान्यत्र ॥

## छन्दसीरः ॥ १५ ॥

छन्दसि विषये इवर्णान्ताद्रेफान्ताच्चोत्तरस्य मतोर्वत्वं भवति । इवर्णान्तात्तावत्-त्रिवती याज्यानुवाक्या भवति । हरिवो मेदिनं त्वा । अधिपतिवती जुहोति । चरुं प्रियवानिव । आरेवानेतु मा विशत् । रयेर्मताविति संप्रसारणम् । सरस्वतीवान् । भारतीवान् । दधीवांश्चरुः । छन्दसि सर्वे विधयो विकल्प्यन्त इतीह न भवति-सप्तर्षिमन्तम् । ऋषिमान् । ऋतीमान् । सूर्यं ते द्यावापृथिवीमन्तमिति । रेफान्तात्-गीर्वान् । धूर्वान् । आशीर्वान् ॥

## अनो नुट् ॥ १६ ॥

छन्दसीति वर्ततेऽनन्तादुत्तरस्य मतोर्नुडागमो भवति छन्दसि विषये । अक्षण्वन्तः कर्णवन्तः सखायः । अस्थन्वन्तं यदनस्था बिभर्ति । अक्षण्वता लाङ्गलेन । शीर्षण्वती । मूर्धन्वती । नुटोऽसिद्धत्वात्तस्य च वत्वं न भवति । ततः परस्य च भवति ।

## नाद् घस्य ॥ १७ ॥

नकारान्तादुत्तरस्य घसञ्ज्ञकस्य नुडागमो भवति छन्दसि विषये । सुपथिन्तरः । दस्युहन्तमः । ॐभूरिदाव्नस्तुड्वक्तव्यःॐ । भूरिदावत्तरः । ॐईद्रथिनःॐ । रथिन ईकारान्तादेशो घे परतः । रथीतरः । रथशब्दादेव वा मत्वर्थीयोऽयमीकारः, छन्दसीवनिपाविति ॥

## कृपो रो लः ॥ १८ ॥

कृपेर्धातो रेफस्य लकारादेशो भवति । र इति श्रुतिसामान्यमुपादीयते । तेन यः केवलो रेफो यश्च ऋकारस्थस्तयोर्द्वयोरपि ग्रहणम् । ल इत्यपि सामान्यमेवोपादीयते । ततोऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते, ऋकारस्याप्येकदेशविकारद्वारेण लृकारस्तथा लुटि च क्लृप इत्येवमादयो निर्देशा उपपद्यन्ते । कल्प्ता । कल्प्तारौ । कल्प्तारः । क्लृप्तवान् । कृपा इत्येतत्कृपेः सम्प्रसारणं चेति भिदादिषु पाठात्भवति । तस्य हि कृतसम्प्रसारणस्य लाक्षणिकत्वात् । इह कृप इति ग्रहणं नास्ति । कृपणकृपाणकृपीटकर्पूरादयोऽपि कृपेरेव द्रष्टव्याः । उणादयो बहुलमिति वा कृपेरेव लत्वाभावः । ॐबालमूललघ्वसुरालमङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम्ॐ । बालः । बारः । मूलम् । मूरम् । लघु । रघु । असुरः । असुलः । अलम् । अरम् । अङ्गुलिः । अङ्गुरिः । ॐकपिलकादीनां सञ्ज्ञाच्छन्दसोर्वा रो लमापद्यत इति वक्तव्यम्ॐ । कपिरकः । कपिलकः । तिल्पिलीकम् । तिर्पिरीकम् । लोमानि । रोमाणि । पांशुरम् । पांशुलम् । कर्म । कल्म । रलयोरेकत्वस्मरणमिति केचित् । किमिदमेकत्वस्मरणमिति ? समानत्विव्यवस्थयैव तयोः स्मरणं इत्यर्थः ॥

## उपसर्गस्यायतौ ॥ १९ ॥

अयतौ परत उपसर्गस्य यो रेफस्तस्य लकार आदेशो भवति। प्लायते। पलायते। अत्र च योऽयमेकादेशस्तस्य स्थानिवद्भावादयतेरुपसर्गस्य च विभागे सति यद्ययतिग्रहणं रेफस्य विशेषणं तदा, येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति एकेन व्यवधानेऽपि सति लत्वं भवति। तथा च पल्ययते इत्यत्रापि भवति। उपसर्गस्य विशेषणे त्वयतिग्रहणे सिद्धमेवैतत् सर्वं प्रतेरपि तु व्यवहितेऽपि प्राप्नोति। तत्र केषांचिद्दर्शनं भवितव्यमेव प्लत्ययत इति। प्रथमपक्षदर्शनाभिनिविष्टास्तु प्रत्ययत इत्येव भवतीति मन्यन्ते। अपरे तु प्रति शब्दोपसृष्टस्यायते प्रयोगमेव नेच्छन्ति। दुस् निस् इत्येतयोस्तु रुत्वस्यासिद्धत्वाल्लत्वेन नैव भवितव्यम्। निरयणम्। दुरयणम्॥

## ग्रो यङि ॥ २० ॥

गॄ इत्येतस्य धातो रेफस्य लकार आदेशो भवति यङि परत। निजेगिल्यते। निजेगिल्येते। निजेगिल्यन्ते। आगमहीया ग्रो यङ्विहित (१) केचित् ग्र इति गिरते-र्गृणातेश्च सामान्येन ग्रहणमिच्छन्ति। अपरे तु गिरतेरेव, न गृणाते। गृणातेर्हि यङेव नास्ति, अनभिधानादिति। यङीति किम्? निगीर्यते॥

## अचि विभाषा ॥ २१ ॥

अजादौ प्रत्यये परतो ग्रो रेफस्य विभाषा लकारादेशो भवति। निगिरति। निगिलति। निगरणम्। निगलनम्। निगालक। इयं तु व्यवस्थितविभाषा। तेन गल इति प्राण्यङ्गे नित्यं भवति। गर इति विषे नित्यं न भवति। निगार्यते। निगाल्यत इति णिलोपस्य स्थानिवद्भावादचि विभाषेति लत्वविकल्प। पूर्वत्रासिद्धे न स्थानिवदिति एतदपि सापवादमेव तस्य दोष संयोगादिलोपलत्वणत्वेष्विति। अन्तरङ्गत्वाद्वा कृते लत्वविकल्पे णिलोपो भविष्यति। गिरौ गिर इत्यत्र धातो स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति लत्वं न भवति। गिरतिर्वा लत्वविधावधिकृतो गृणातेरेतद्रूपम्॥

## परेश्च घाङ्कयो ॥ २२ ॥

परि इत्येतस्य यो रेफस्तस्य घशब्देऽङ्कशब्दे च परतो विभाषा लकार आदेशो भवति। परिघ। पलिघ। पर्यङ्क। पल्यङ्क॥ घ इति स्वरूपग्रहणमत्रेष्यते, न तरप्तमपौ इति। योगे चेति वक्तव्यम्। परियोग। पलियोग॥

## संयोगान्तस्य लोप ॥ २३ ॥

संयोगान्तस्य पदस्य लोपो भवति। गोमान्। यवमान्। कृतवान्। हतवान्।

---

(१) क्वचिदधिकोऽयं पाठ —"इत्वे कृते रपरत्वे च दीर्घस्यासिद्धत्वान्नियतत्वाच्च लत्वे कृते तन्निमित्ताभावाद्दीर्घत्वं न भवति" इति।

इह श्रेयान् भूयानिति रुत्वं परमप्यसिद्धत्वात् सयोगान्तस्य लोपं न बाधते । जश्त्वे तु नाप्राप्ते तदारभ्यत इति तस्य बाधकं भवति—यशः पय इति । दध्यत्र मध्वत्रेत्यत्र तु यणादेशस्य बहिरङ्गलक्षणस्यासिद्धत्वात् सयोगान्तलोपो न भवति । पदस्येति किम् ? गामन्त इति ॥

रात्सस्य ॥ २४ ॥

सयोगान्तपदस्य यो रेफस्तस्मादुत्तरस्यान्तस्य सकारस्य लोपो भवति । गोभिरक्षाः प्रत्यञ्चमत्सा.,  त्सरतेः त्सरतेश्च लुङि सिचश्छान्दसत्वादीडभावो वहुलं छन्दसीति वचनाद्दीर्घे सति रूपमेतत् । मातुः पितुरिति, ऋत उदिति उत्वे कृते रपरत्वे च सति रात्सस्येति सलोपः । सिद्धे सत्यारम्भो नियमार्थः—रात्सस्यैव लोपो भवति नान्यस्येति । ऊर्जे क्विप्-ऊर्क् । मृजेर्लङि—अमार्ट् ॥

धि च ॥ २५ ॥

धकारादौ प्रत्यये परतः सकारस्य लोपो भवति । अलविध्वम् । अलविढ्वम् । अपविध्वम् । अपविढ्वम् । यद्यत्र सकारलोपो न स्यात् , सिचः पान्ते जश्त्वे च, विभाषेट इति मूर्द्धन्याभावपक्षेऽपि न धकारः श्रूयेत ॥ इतः प्रभृति सिचः सकारस्य लोप इष्यते ॥ इह न भवति—चकाद्धि पलित शिर इति । तथा पयो धावतीत्येवमादीनामपि न भवति । सग्धिश्च्चमिनि छान्दसो वर्णलोपः । भाष्यकारस्त्वाह—चकाधीत्येव भवितव्यमिति । तेन पयो धावतीत्येवमादौ यत्नान्तरमास्थेयम् ॥

धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्व तु कथ जश्त्व सकारस्य भविष्यति ॥
सर्वमेव प्रसिद्ध स्याच्छ्रुतिश्चापि न विद्यते ।
लुङश्चापि न मूर्द्धन्ये ग्रहणं सेटि दुष्यति ॥
घसिभसोर्न सिध्येत तस्मात् सिज्ग्रहण न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्त्तारमध्वरे ॥
निष्कर्त्तारमध्वरस्येत्येव प्राप्ते ॥

झलो झलि ॥ २६ ॥

झल उत्तरस्य सकारस्य झलि परतो लोपो भवति । अभित्त । अभित्थाः । अच्छित्त । अच्छित्थाः । अवाताम् । अवात्तेत्यत्र वा सिचः सकारलोपस्यासिद्धत्वात् सस्यार्द्धधातुक इति सकारस्य तकारः । झल इति किम् ? अमस्त । अमस्थाः । झलीति किम् ? अभित्साताम् । अभित्सत । अयमपि सिच एव लोपस्तेनेह न भवति—सोमसुत् स्तोता । दृषत् स्थानमिति ॥

ह्रस्वादङ्गात् ॥ २७ ॥

ह्रस्वान्तादङ्गादुत्तरस्य लोपो भवति झलि परतः । अकृत । अकृथाः । अहृत । अहृथाः । ह्रस्वादिति किम् ? अच्योष्ट । अप्लोष्ट । अङ्गादिति किम् ? अलाविष्टाम् ।

अलाविषुः । झलीत्येव । अकृपाताम् । अकृपत । अयमपि सिच एव लोपस्तेनेह न भवति–द्विष्टरां द्विष्टमामिति सुजन्ताद् द्विशब्दात्तरप्तमपौ । अद्रव्यप्रकर्षे आतिशयिक आम् प्रत्ययः ॥

इट ईटि ॥ २८ ॥

इट उत्तरस्य सकारस्य लोपो भवति ईटि परतः । अदावीत् । असेवीत् । अकोषीत् । अमोषीत् । इट इति किम् ? अकार्षीत् । अहार्षीत् । ईटीति किम् ? अलाविषाम् । अलाविषुः ॥

स्कोः संयोगाद्योरन्ते च ॥ २९ ॥

पदस्यान्ते यः संयोगः झलि परतो वा यः संयोगस्तदाद्योः सकारककारयोर्लोपो भवति । लस्जेः–लग्नः । लग्नवान् । साधुलक् । ककारस्य–तक्षेः, तट् । तष्टवान् । काष्ठतट् । ॐझलि सडीति वक्तव्यम्ॐ । किमिदं सडीति ? सनः सप्रभृति महिङो ङकारेण प्रत्याहारः । इह मा भूद्–काष्ठशक्स्यातेमि यकारे झलि ककारस्य संयोगादेर्लोपः प्राप्नोति । तदत्र शकेः क्विबन्तस्य प्रयोग एव नास्तीत्याह । काष्ठशगेव नास्ति कुतोऽयं काष्ठशकि तिष्ठेदिति । वास्यर्थं, काक्यर्थमिति । अत्रापि बहिरङ्गलक्षणस्य यणादेशस्यासिद्धत्वात् संयोगादिलोपो न भवति । स्कोरिति किम् ? नर्नर्त्ति वर्वर्ति । संयोगाद्योरिति किम् ? पयः शक् । अन्ते चेति किम् ? तक्षिता । तक्षकः ॥

चोः कुः ॥ ३० ॥

चवर्गस्य कवर्गादेशो भवति झलि परतः पदान्ते च । पक्ता । पक्तुम् । पक्तव्यम् । ओदनपक् । वक्ता । वक्तुम् । वक्तव्यम् । वाक् । कुञ्चेरयम् सडीति वचनाद् नकारस्य चकारे झलि कुत्वं न भवति । युजिकुञ्चां चेति निपातनाद्वा । नकारोपधो वा धातुरयं रेफरहितश्च कुञ्चकौटिल्याल्पीभावयोरिति पठ्यते । नकारलोपे हि निकुचितिरिति दृश्यते । युजिकुञ्चां चेति तस्यैव रेफोऽधिको नकारस्य लोपाभावश्चेति निपात्यते । तत्रानुस्वारस्य परसवर्णस्य चासिद्धत्वात् नकार एव नास्तीति कुत्वं न भविष्यति ॥

हो ढः ॥ ३१ ॥

हकारस्य ढकारादेशो भवति झलि परतः पदान्ते च । सोढा । सोढुम् । सोढव्यम् । तुरासाट् । वोढा । वोढुम् । वोढव्यम् । प्रष्ठवाट् । दित्यवाट् ।

दादेर्धातोर्घः ॥ ३२ ॥

दकारादेर्धातोर्हकारस्य घकारादेशो भवति झलि परतः पदान्ते च । दग्धा । दग्धुम् । दग्धव्यम् । काष्ठधक् । दोग्धा । दोग्धुम् । दोग्धव्यम् । गोधुक् । दादेरिति किम् ? लेढा । लेढुम् । लेढव्यम् । गुडलिट् । धातोरिति दादिसमानाधिकरणमेतन्न, किं तर्हि तद्विशेषणमवयवषष्ठ्यन्तं धातोरवयवो यो दादिः शब्दस्तदवयवस्य हकारस्येति । किमेवं कृतं भवति–अधोगित्यत्रापि घकारः सिद्धो भवति । कथं दोग्धा

दोग्धुमिति ? व्यपदेशिवद्भावात्। अथवा धातूपदेशे यो दादिरित्येवं विज्ञायते। तथा च दामलिहमिच्छति दामलिह्यति, दामलिह्यतेः क्विप् प्रत्ययः, दामलिडित्यत्रापि न भवति॥

वा द्रुहमुहष्णुहष्णिहाम्॥ ३३॥

द्रुह मुह ष्णुह ष्णिह इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः पदान्ते च। द्रुह्–द्रोग्धा। द्रोढा। मित्रध्रुक्। मित्रध्रुट्। मुह–उन्मोग्धा। उन्मोढा। उन्मुक्। उन्मुट्। स्नुह–उत्स्नोग्धा। उत्स्नोढा। उत्स्नुक्। उत्स्नुट्। स्निह–स्नेग्धा। स्नेढा। स्निक्। स्निट्। द्रुहेर्दादित्वात् घत्वं नित्यं प्राप्तमितरेषामप्राप्तमेव घत्वं विकल्प्यते॥

नहो धः॥ ३४॥

नहो हकारस्य धकारादेशो भवति झलि परे पदान्ते च। नद्धम्। नद्धुम्। नद्धव्यम्। उपानत्। परीणत्॥

आहस्थः॥ ३५॥

आहो हकारस्य थकारादेशो भवति झलि परतः। इदमात्थ। किमात्थ। आदेशान्तरकरणं झषस्तथोर्धोऽध इत्यस्य निवृत्त्यर्थम्। झलीत्येव। आह। आहतुः। आहुः॥ ॐहग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्ॐ। गर्दभेन सम्भरति। प्रभीता। जभ्रिरे। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्॥

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः॥ ३६॥

व्रश्च भ्रस्ज सृज मृज यज राज भ्राज इत्येतेषां छकारान्तानां शकारान्तानां च षकार आदेशो भवति झलि परतः पदान्ते च। व्रश्च–व्रष्टा। व्रष्टुम्। व्रष्टव्यम्। मूलवृट्। भ्रस्ज–भ्रष्टा। भ्रष्टुम्। भ्रष्टव्यम्। धानाभृट्। सृज–स्रष्टा। स्रष्टुम्। स्रष्टव्यम्। रज्जुसृट्। मृज–मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। कंसपरिमृट्। यज–यष्टा। यष्टुम्। यष्टव्यम्। उपयट्। राज–सम्राट्। स्वराट्। विराट्। भ्राज–विभ्राट्। राजभ्राजयोः पदान्तार्थं ग्रहणं, झलादिराभ्यामिडा पर्यवपद्यते। केचित् राष्टिरिति किञ्चन्तामिच्छन्ति। छकारान्तानाम्–प्रच्छ–प्रष्टा। प्रष्टुम्। प्रष्टव्यम्। शब्दप्राट्। च्छ्वोः शूडनुनासिके चेत्यत्र विङ्लीत्यनुवर्तते इति छग्रहणमिह क्रियते। शकारान्तानाम्–लिश्–लेष्टा। लेष्टुम्। लेष्टव्यम्। लिट्। विश–वेष्टा। वेष्टुम्। वेष्टव्यम्। विट्॥

एकाचो बशो भष् झषन्तस्य स्ध्वोः॥ ३७॥

धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च। बुध–भोत्स्यन्ते। अभुद्ध्वम्। अर्थभुत्। गुह–निघोक्ष्यते। न्यघुड्ढ्वम्। पर्णघुट्। दुह–धोक्ष्यते। अधुग्ध्वम्। गोधुक्। अजर्घाः–गृधेर्यङ्लुगन्तस्य लङि सिपि अटि लघूपधगुणे कृते सिपो हल्ङ्याब्भ्यो दीर्घात् इति लोपे च धातोरवयवस्यैकाचो बशः स्थाने भष्भावस्ततो घकारस्य जश्त्वं दश्चेति रुत्वं, रो

रीति पूर्वरेफस्य लोपः, ढ्रलोपे पूर्वस्य दीर्घोऽण इति दीर्घत्वम् । गर्दभयतेरप्रत्ययः-गर्धप् । एकाच इति किम् ? दामलिहमिच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययः-दामलिट् । असति ह्येकाज्ग्रहणे धातोरित्येतद्बशो विशेषणं स्यात् । बश इति किम् ? क्रुध-क्रोत्स्यति । झषन्तस्येति किम् ? दास्यति । स्ध्वोरिति किम् ? बोढा । बोढुम् । बोढव्यम् । धकारस्य बकारोपधस्य ग्रहणं किम् ? दादद्धि । दध धारण इत्येतस्य यङ्लुकि लोटि हुझल्भ्यो हेर्धिरिति धिभावे सत्येतद्भवति । अत्र चत्वारो बशः स्थानिनो भषादेशाश्चत्वार एव । तत्र सङ्ख्यातानुदेशे प्राप्ते डकारस्य स्थानिनोऽभावात् ढकारादेशो न भवति । आन्तर्यतो व्यवस्था विज्ञास्यते ॥

दधस्तथोश्च ॥ ३८ ॥

दध इति दधातिः कृतद्विर्वचनो निर्दिश्यते । तस्य झलन्तस्य बशः स्थाने भष् आदेशो भवति तकारथकारयोः परतश्चकारात् स्ध्वोश्च परतः । धत्तः । धत्थः । धत्से । धत्स्व । धद्ध्वम् । वचनसामर्थ्यादालो लोपस्य स्थानिवद्भावो न भवति । अभ्यासजश्त्वस्य चासिद्धत्वम् । तथोरिति किम् ? आनन्तर्यात्स्ध्वोरेव विज्ञायेत । चकारस्तयोरनुवृत्त्यर्थः । झषन्तस्येत्येव-दधाति ।

झलां जशोन्ते ॥ ३९ ॥

झलां जश आदेशा भवन्ति पदस्यान्ते वर्तमानानाम् । वागत्र । श्वलिडत्र । अग्निचिदत्र । त्रिष्टुबत्र । अन्तग्रहणं झलीत्येतस्य निवृत्त्यर्थम् । वस्ता । वस्तव्यम् ॥

झषस्तथोर्धोऽधः ॥ ४० ॥

झष उत्तरयोस्तकारथकारयोः स्थाने धकार आदेशो भवति दधातिं वर्जयित्वा । लब्धा । लब्धुम् । लब्धव्यम् । अलब्ध । अलब्धाः । दुह-दोग्धा । दोग्धुम् । दोग्धव्यम् । अदुग्ध । अदुग्धाः । लिह-लेढा । लेढुम् । लेढव्यम् । अलीढ । अलीढाः । बुध्-बोद्धा । बोद्धुम् । बोद्धव्यम् । अबुद्ध । अबुद्धाः । अध इति किम् ? धत्तः । धत्थः ॥

षढोः कः सि ॥ ४१ ॥

षकारढकारयोः ककारादेशो भवति सकारे परतः । षकारस्य-पिष्-पेक्ष्यति । अपेक्ष्यत् । पिपिक्षति । ढकारस्य-लिह-लेक्ष्यति । अलेक्ष्यत् । लिलिक्षति । सीति किम् ? पिनष्टि । लेढि ॥

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥

रेफदकाराभ्यामुत्तरस्य निष्ठातकारस्य नकार आदेशो भवति पूर्वस्य च दकारस्य । रेफान्तात्तावत्-आस्तीर्णम् । विस्तीर्णम् । विशीर्णम् । निगीर्णम् । अवगूर्णम् । दकारात्-भिन्नः । भिन्नवान् । छिन्नः । छिन्नवान् । रदाभ्यामिति किम् ? कृतः । कृतवान् । र इत्यत्र रश्रुतिसामान्यं नोपादीयते, किं तर्हि व्यञ्जनमात्रम् ।

रेफसामान्यनिर्देशेऽपि सति रेफात् परा याऽभक्तिस्तद्व्यवधानान्नत्वं न भवति। निष्ठेति किम्? कर्त्ता। हर्त्ता। त इति किम्? चरितम्। मुदितम्। पूर्वस्येति किम्? परस्य मा भूत्। भिन्नवद्भ्याम्। भिन्नवद्भिः। इह कृतस्यापत्यं कार्तिरिति वृद्धेर्बहिरङ्गलक्षणाया असिद्धत्वान्नत्वे कर्त्तव्ये रेफस्यासिद्धत्वम्॥

## संयोगादेरातो धातोर्यण्वतः॥ ४३॥

संयोगादिर्यो धातुराकारान्तो यण्वान् तस्मादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। प्रद्राणः। प्रद्राणवान्। ग्लानः। ग्लानवान्। संयोगादेरिति किम्? यातः। यातवान्। आत इति किम्? च्युतः। च्युतवान्। प्लुतः। प्लुतवान्। धातोरिति किम्? निर्यातः। निर्वातः। यण्वत इति किम्? स्नातः। स्नातवान्॥

## ल्वादिभ्यः॥ ४४॥

लूञ् छेदने इत्येतत्प्रभृति वृञ् वरणे इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते। तेभ्य उत्तरस्य निष्ठातकारस्य नकारादेशो भवति। लूनः। लूनवान्। धूनः। धूनवान्। जीनः। जीनवान्। ॐऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्ॐ। कीर्णिः। गीर्णिः। शीर्णिः। लूनिः। पूनिः। ॐदुग्वोर्दीर्घश्चेति वक्तव्यम्ॐ। दु-आदूनः। गु-विगूनः। ॐपूञो विनाश इति वक्तव्यम्ॐ। पूना यवाः, विनष्टा इत्यर्थः। विनाश इति किम्? पूतं धान्यम्। ॐसिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्ॐ सिनो ग्रासः स्वयमेव। ग्रासकर्मकर्तृकस्येति किम्? सिता पाशेन सूकरी। ग्रासोऽपि यदा कर्मैव भवति न कर्मकर्त्ता तदा न भवति–सितो ग्रासो देवदत्तेनेति॥

## ओदितश्च॥ ४५॥

ओकारेतो धातोरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। ओलस्जी–लग्नः। लग्नवान्। ओविजी–उद्विग्नः। उद्विग्नवान्। ओप्यायी वृद्धौ–आपीनः। आपीनवान्। स्वादय ओदितः–षूङ्–सूनः। सूनवान्। दूङ्–दूनः। दूनवान्। दीङ्–दीनः। दीनवान्। डीङ्–डीनः। डीनवान्। धीङ्–धीनः। धीनवान्। मीङ्–मीनः। मीनवान्। रीङ्–रीणः। रीणवान्। लीङ्–लीनः। लीनवान्। व्रीङ्–व्रीणः। व्रीणवान्।

## क्षियो दीर्घात्॥ ४६॥

क्षियो धातोर्दीर्घादुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। क्षीणाः क्लेशाः। क्षीणो जाल्मः। क्षीणस्तपस्वी। क्षियो, निष्ठायामण्यदर्थे, वा क्रोशदैन्ययोरिति दीर्घत्वं भवति। दीर्घादिति किम्? अक्षितमसि मामेक्षेष्ठाः। अक्षितमिति क्तप्रत्ययो भावे। भावश्च ण्यदर्थ इति दीर्घाभावः। ह्रस्वान्तस्यापि धात्वनुकरणस्य इह इयङा निर्देशः। क्षियो निष्ठायामण्यदर्थे इत्यत्र दीर्घग्रहणं क्रियते। विपरस्या जेरित्येवमादौ तु धातुत्वमनुकार्यगतं सदप्यविवक्षितत्वाद् जिरूपसामान्यानुकरणं द्रष्टव्यम्॥

श्योऽस्पर्शे ॥ ४७ ॥

श्यायतेरुत्तरस्य निष्ठातकारस्य स्पर्शे नकार आदेशो भवति । शीनं घृतम् । शीनं मेदः । शीना वसा । अस्पर्श इति किम् ? शीतं वर्त्तते । शीतो वायुः । शीतमुदकमित्यत्र गुणभूतोऽपि स्पर्शो, नत्वप्रतिषेधस्य संप्रसारणस्य च निमित्त भवति । गुणे च स्पर्शे प्रतिषेधोऽयं न रोगे, तेन प्रतिशीन इत्यत्र नत्वं भवत्येव ॥

अञ्चोऽनपादाने ॥ ४८ ॥

अञ्चतेरुत्तरपदस्य निष्ठातकारस्य नकारादेशो भवति न चेदपादानं तत्र भवति । समक्नौ शकुनेः पादौ । तस्मात् पशवो न्यक्नाः । अनपादान इति किम् ? उदक्तमुदकं कूपात् । व्यक्तमित्येतदञ्जे रूपम् ॥

दिवोऽविजिगीषायाम् ॥ ४९ ॥

दिव उत्तरस्य निष्ठातकारस्य नकारादेशो भवति अविजिगीषायामर्थे । आद्यूनः । परिद्यूनः । अविजिगीषायामिति किम् ? द्यूत वर्त्तते । विजिगीषया हि तत्राक्षपातनादि क्रियते ॥

निर्वाणोऽवाते ॥ ५० ॥

निर्वाण इति निस्पूर्वाद्वातेरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते, न चेद्वाताधिकरणो वात्यर्थो भवति । निर्वाणोऽग्निः । निर्वाणः प्रदीपः । निर्वाणो भिक्षुः । अवात इति किम् ? निर्वातो वातः । निर्वातं वातेन । निर्वाणः प्रदीपो वातेनेत्यत्र तु प्रदीपाधिकरणो वात्यर्थो, वातस्तु तस्य करणमिति भवत्येव नत्वम् ॥

शुषः कः ॥ ५१ ॥

शुषेर्धातोरुत्तरस्य निष्ठातकारस्य ककारादेशो भवति । शुष्कः । शुष्कवान् ॥

पचो वः ॥ ५२ ॥

पचेर्धातोरुत्तरस्य निष्ठातकारस्य वकारादेशो भवति । पक्वः । पक्ववान् ॥

क्षायो मः ॥ ५३ ॥

क्षैधातोरुत्तरस्य निष्ठातकारस्य मकारादेशो भवति । क्षामः । क्षामवान् ॥

प्रस्त्योऽन्यतरस्याम् ॥ ५४ ॥

प्रपूर्वात् स्त्यायतेरुत्तरस्य निष्ठातकारस्यान्यतरस्यां मकारादेशो भवति । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् । यदा मत्वं नास्ति तदा, संयोगादेरातो धातोर्यण्वत इत्यस्य पूर्वत्रासिद्धत्वात् सम्प्रसारणं प्रथमं क्रियते । तत्र कृते निमित्तव्याघातान्नत्वं न भवति ॥

अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥ ५५ ॥

फुल्ल क्षीब कृश उल्लाघ इत्येते निपात्यन्ते न चेदुपसर्गादुत्तरा भवन्ति । फुल्ल इति ञिफला विशरणे इत्येतस्माद्धातोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते ॥

उत्वमिडभावश्च सिद्ध एव ॥ क्तवत्वन्तस्याप्येतल्लत्वमिष्यते ॥ फुल्लः । फुल्लवान् इति । क्षीवकृशोल्लाघा इति क्षीवकृशिभ्यामुत्पूर्वाच्च लाघेः क्तप्रत्ययस्य तलोप इडागमाभावश्च निपात्यते । कृते वा इटि इष्ठन्दलोप. । क्षीवः । कृशः । उल्लाघः । अनुपसर्गादिति किम् ? प्रफुल्ता सुमनसः । प्रक्षीवितः । प्रकृशित' । प्रोल्लाघितः । लाघेरुदोऽन्य उपसर्ग. प्रतिषिद्ध्यते ॥ ❀उत्फुल्लसंफुल्लयोरिति वक्तव्यम्❀ । उत्फुल्ल । सफुल्ल. । परिकृश इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रत्यनुपसर्ग एव । परिगत' कृशः परिकृश इति ॥

नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ५६ ॥

नुद विद् उन्दी त्रा घ्रा ह्री इत्येतेभ्य उत्तरस्य निष्ठातकारस्य नकार आदेशो भवति अन्यतरस्याम् । नुद-नुन्न' । नुत्त । विद्-विन्नः । वित्तः । उन्द-समुन्नः । समुत्त. । त्रा-त्राणः । त्रातः । घ्रा-घ्राणः । घ्रातः । ह्री-ह्रीण । ह्रीतः । ह्री इत्येतस्मात् प्राप्त नत्वमितरेषा नित्य प्राप्त विकल्प्यते ॥ विद विचारण इत्यस्य विदेरिह ग्रहणमिष्यते ॥ एवमुक्तम् ॥

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दते ॥ इति ॥

न ध्याख्यापृमूर्च्छिमदाम् ॥ ५७ ॥

ध्या ख्या पृ मूर्छि मद इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति । ध्यातः । ध्यातवान् । ख्यात. । ख्यातवान् । पूर्त' । पूर्तवान् । मूर्त' । मूर्तवान् । मत्त' । मत्तवान् । रदाभ्या सयोगादेरिति च प्राप्त. प्रतिषिद्ध्यते ॥

वित्तो भोगप्रत्यययो ॥ ५८ ॥

वित्त इति विदेर्लाभार्थादुत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये चाभिधेये । वित्तमस्य बहु । धनमस्य बह्विर्थ । धन हि भुज्यत इति भोगोऽभिधीयते । प्रत्यये वित्तोऽय मनुष्य. । प्रतीत इत्यर्थ । प्रतीयत इति प्रत्यय । भोगप्रत्यययोरिति किम् ? विन्न ॥

भित्त शकलम् ॥ ५९ ॥

भित्तमिति निपात्यते शकल चेत्तद्भवति । भित्त तिष्ठति । भित्त प्रपतति । शकलपर्यायोऽयम् । अत्र भिदिक्रिया शब्दव्युत्पत्तेरेव निमित्तम् । भिदिक्रियाविवक्षायां हि शकलविषये भिन्नमित्येव भवति ॥

ऋणमाधमर्ण्ये ॥ ६० ॥

ऋणमिति ऋइत्येतस्माद्धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते आधमर्ण्यविषये । अधम ऋणे, अधमर्ण. । एतस्मादेव निपातनात् सप्तम्यन्तेनोत्तरपदेन समास । तद्भाव आधमर्ण्यम् । यद्येवमुत्तमर्ण इति न सिद्ध्यति ? नैष दोषः । काला-

न्तरदेयविनिमयोपलक्षणार्थं चेदमुपात्तम् । तेन उत्तमर्णे इत्यपि हि भवति । ऋण ददाति । ऋण धारयति । आधमर्ण्य इति किम् ? ऋतं वक्ष्यामि नानृतम् ॥

## नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि छन्दसि ॥ ६१ ॥

नसत्त निषत्त अनुत्त प्रतूर्त्त सूर्त्त गूर्त्त इत्येतानि छन्दसि विषये निपात्यन्ते । नसत्तनिषत्तेति । सदेर्नञ्पूर्वान्निपूर्वाच्च नत्वाभावो निपात्यते । नसत्तमञ्जसा । नसन्नमिति भाषायाम् । निषत्तः । निषण्ण इति भाषायाम् । अनुत्तमित्युन्देर्नञ्पूर्वस्य निपातनम् । अनुत्तमा ते मघवन् । अनुन्नमिति भाषायाम् । प्रतूर्त्तमिति त्वरतेः तूर्वि इत्येतस्य वा निपातनम् । प्रतूर्त्तं वाजिनम् । प्रतूर्णमिति भाषायाम् । सूर्त्तमिति सृ इत्येतस्य उत्व निपात्यते । सूर्त्ता गावः । सृता गाव इति भाषायाम् । गूर्त्तमिति गूरी इत्येतस्य नत्वाभावो निपात्यते । गूर्त्ता अमृतस्य । गूर्णमिति भाषायाम् ॥

## क्विन्प्रत्ययस्य कुः ॥ ६२ ॥

पदस्येति वर्त्तते । क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते । क्विन् प्रत्ययो यस्माद्धातोः स क्विन्प्रत्ययः । तस्य पदस्यान्तेऽन्त्यस्य कवर्गादेशो भवति । स्पृशोऽनुदके क्विन् । घृतस्पृक् । हलस्पृक् । मन्त्रस्पृक् । क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणं कृतं बहुव्रीहिविज्ञानार्थं, क्विन् प्रत्ययो यस्माद्विहितस्तस्मादन्यस्मिन्नपि प्रत्यये कुत्वं यथा स्यात् । मा नो अस्राक् । मा नो अद्राक् । सृजिदृशिभ्यां हि क्विन् विहितः । तयोर्लुङि कुत्वमेतत् । माङ्योगेऽपि छान्दसत्वादडागमः । ईडपि न भवति, बहुलं छन्दसीति । तथा दृग्भ्यां दृग्भिरिति क्विबन्तस्यापि दृशेः कुत्व भवति । एवं च सति रज्जुसृड्भ्यामित्यत्रापि कुत्वं प्राप्नोति । अथ तु नेष्यते । ततस्तत्प्रतिविधातव्यमिति ॥

## नशेर्वा ॥ ६३ ॥

पदस्येति वर्त्तते । नशेः पदस्य वा कवर्गादेशो भवति । सा वै जीवनगाहुतिः । सा वै जीवनडाहुतिः । नशेरयं सम्पदादित्वाद् भावे क्विप् । जीवस्य नाशो जीवनक् । जीवनट् । षत्वे प्राप्ते कुत्वविकल्पः ॥

## मो नो धातोः ॥ ६४ ॥

मकारान्तस्य धातोः पदस्य नकारादेशो भवति । प्रशान् । प्रतान् । प्रदान् । शमितमिदमादीनां क्विप् । अनुनासिकस्य क्विझलोः क्ङितीति दीर्घत्वम्(१) । नत्वस्यासिद्धत्वान्नलोपो न भवति । म इति किम् ? भित् । छित् । धातोरिति किम् ? इदम् । किम् । पदस्येत्येव । प्रतामौ । प्रतामः ॥

## म्वोश्च ॥ ६५ ॥

मकारवकारयोश्च परतः मकारान्तस्य धातोर्नकारादेशो भवति । अगन्म तमसः

(१) शमितमिदमादीनामित्यारभ्य दीर्घत्वमित्यन्त पाठः पुस्तकान्तरे नास्ति ॥

पारम् । अगन्त । गमेर्लङि बहुलं छन्दसीति शपो लुक् । अगन्वान् । विभाषा गमहनजनविदविशामिति क्वसाविडागमस्याभाव । अपदान्तार्थं आरम्भ ॥

सससजुषो रु ॥ ६६ ॥

सकारान्तस्य पदस्य सजुष इत्येतस्य च रुर्भवति । सकारान्तस्य—अग्निरत्र । वायुरत्र । सजुष—सजूर्ऋतुभि । सजूर्देवेभि । जुषे क्विपि सपूर्वस्य रूपमेतत् ॥

अवया श्वेतवा पुरोडाश्च ॥ ६७ ॥

अवया श्वेतवा पुरोडा इत्येते निपात्यन्ते । अवपूर्वस्य यजे श्वेतपूर्वस्य वहे पुरस्पूर्वस्य दाशते मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । अवे यज इति ण्विनि कृते श्वेतवहादीना डस्पदस्येति डस्प्रत्यये निपातनान्येतानि । किमर्थं तर्हि निपातन यावता पूर्वेणैव रु सिद्ध । दीर्घत्वमप्यत्वसन्तस्य चाधातोरिति ? सम्बुद्धौ दीर्घार्थमेते निपात्यन्ते । अत्वसन्तस्य चाधातोरित्यत्र हि असम्बुद्धाविति वर्तते । हे अवया । हे श्वेतवा । हे पुरोडा । चकारोऽनुक्तसमुच्चयार्थ । हे उक्थशा ॥

अहन् ॥ ६८ ॥

अहन्नित्येतस्य पदस्य रुर्भवति । अहोभ्याम् । अहोभि । नलोपमकृत्वा निर्देशो ज्ञापक—नलोपाभावो यथा स्यादिति । दीर्घाहा निदाघ । हे दीर्घाहोऽत्रेति । अहन्नित्यत्र तु लाक्षणिकत्वादहन् शब्दस्य रुर्न भवति । *अहो रविधौ रूपरात्रिरथन्तरेषूपसख्यान कर्त्तव्यम्* । अहो रूपम् । अहो रात्र । अहो रथन्तरम् । रोऽसुपीत्यस्यापवादो रुत्वमुपसख्यायते । अपर आह—सामान्येन रेफादौ रुत्व भवति—अहो रम्यम् । अहो रत्नानीति ॥

रोऽसुपि ॥ ६९ ॥

अहन्नित्येतस्य रेफादेशो भवत्यसुपि परत । अहर्ददाति । अहर्भुङ्क्ते । असुपीति किम् ? अहोभ्याम् । अहोभि । ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति—अहर्ददाति । अहर्भुङ्क इति ? नैतदस्ति । उक्तमेतत् । अहो रविधौ लुमता लुप्त प्रत्ययलक्षण न भवतीति नायमह शब्द सुप्परो भवति । यत्र तु लोपशब्देन लुप्यते त लक्षण भवत्येव यथा—हे दीर्घाहोऽत्र, दीर्घाहो निदाघ इति । अत्र हि ह लोपेन प्रत्ययस्य निवृत्ति ॥

अम्नरूधरवरित्युभयथा छन्दसि ॥ ७० ॥

अम्नस् ऊधस् अवस् इत्येतेषा छन्दसि विषये उभयथा भवति । रुर्वा रेफो वा । अम्नस्—अम्न एव । अम्नरेव । ऊधस्—ऊध एव । ऊधरेव । अवस्—अव एव । अवरेव । यदा रुत्व तदा, भोभगोअघोअपूर्वस्य योऽशीति यकार ॥ *छन्दसि भाषाया च विभाषा प्रचेतसो राजन्युपसख्यान कर्त्तव्यम्* । प्रचेता राजन् । प्रचेतो राजन् ॥ *अहरादीना पत्यादिषूपसख्यान कर्त्तव्यम्* । अहर्पति । अह पति । गीर्पति ।

गीःपतिः। धूर्पतिः। धूः पतिः। विसर्जनीयबाधनार्थमत्र पक्षे रेफस्यैव रेफो विधीयते॥

भुवश्च महाव्याहृतेः॥ ७१॥

भुवस् इत्येतस्य महाव्याहृतेश्छन्दसि विषये उभयथा भवति, रुर्वा रेफो वा। भुवरित्यन्तरिक्षम्। भुव इत्यन्तरिक्षम्। महाव्याहृतेरिति किम्? भुवो विश्वेषु भुवनेषु यज्ञियः (१)। भुवरित्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः॥

वसुस्रंसुध्वंस्यनडुहां दः॥ ७२॥

ससजुषोरुरित्यतः स इति वर्तते। तेन संभवाद् व्यभिचाराच्च वसुरेव विशेष्यते। न स्रंसुध्वंसू, व्यभिचाराभावात्। असंभवाच्चानडुहुद्दादः। वस्वन्तस्य पदस्य सकारान्तस्य स्रंसुध्वसु अनडुह् इत्येतेषां च दकारादेशो भवति। वसु-विद्वद्भ्याम्। विद्वद्भिः। पपिवद्भ्याम्। पपिवद्भिः। स्रंसु-उखास्रद्भ्याम्। उखास्रद्भिः। ध्वंसु-पर्णध्वद्भ्याम्। पर्णध्वद्भिः। अनडुह्-अनडुद्भ्याम्। अनडुद्भिः। स इत्येव। विद्वान्। पपिवान्। नकारस्य न भवति। रुत्वे नाप्राप्ते इदमारभ्यत इति तद् बाध्यते। संयोगान्तलोपस्तु नैवमिति तेनतदेव दत्वं बाध्यते। अनडुहोऽपि दत्वमनेन बाध्यते। नुमस्तु विधानसामर्थ्यान्न भवति। अनड्वान्। हे अनड्वन्निति। पदस्येत्येव। विद्वांसौ। विद्वांसः॥

तिप्यनस्तेः॥ ७३॥

तिपि परतः सकारान्तस्य पदस्य अनस्तेर्दकार आदेशो भवति। अचकाद्भवान्। अन्वशाद् भवान्। तिपीति किम्? चकास्तेः क्विप्। चकाः। अनस्तेरिति किम्? आप एवेदं सलिलं सर्वमाः। आ इत्यस्तेर्लङि तिपि बहुलं छन्दसीति ईड् न कृतः॥

सिपि धातो रुर्वा॥ ७४॥

सिपि परतः सकारान्तस्य पदस्य धातो रुरित्ययमादेशो भवति दकारो वा। अचकास्त्वम्। अचकात्त्वम्। अन्वशास्त्वम्। अन्वशात्त्वम्। धातुग्रहणं चोत्तरार्थं रुग्रहणं च॥

दश्च॥ ७५॥

दकारान्तस्य धातोः पदस्य सिपि परतो रुर्भवति दकारो वा। अभिनस्त्वम्। अभिनत्त्वम्। अच्छिनस्त्वम्। अच्छिनत्त्वम्॥

र्वोरुपधाया दीर्घ इकः॥ ७६॥

रेफवकारान्तस्य धातोः पदस्य उपधाया इको दीर्घो भवति। गीः। धूः। पूः। आशीः। वाग्रहणमुत्तरार्थम्। उपधाग्रहणं किम्? अबिभर्भवान्। अभ्यासेकारस्य

(१) भुवोमध्यम्, भुव इदम्। पुस्तकान्तरेऽधिकम्॥

मा भूत्। इक इति किम्? अत्रैव प्रत्युदाहरणे भशब्दाकारस्य मा भूत्। धातोरित्येव। अग्निः। वायुः। पदस्येत्येव। गिरौ। गिरः॥

## हलि च ॥ ७७ ॥

हलि च परतो रेफवकारान्तस्य धातोरुपधाया इको दीर्घो भवति। आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। अवगूर्णम्। वकारान्तस्य—दीव्यति। सीव्यति। धातोरित्येव। दिवमिच्छति दिव्यति। चतुर इच्छति–चतुर्यति। इक इत्येव। स्मर्यते। भव्यम्। अपदान्तार्थोऽयमारम्भः॥

## उपधायां च ॥ ७८ ॥

हलीत्यनुवर्तते। धातोरुपधाभूतौ यौ रेफवकारौ हल्परौ तयोरुपधाया इको दीर्घो भवति। हुर्छा–हूर्छिता। मुर्छा–मूर्छिता। उर्वी–ऊर्विता। धुर्वी–धूर्विता। हलीत्येव। चिरि, जिरि–चिरिणोति। जिरिणोति। इह कस्मान्न भवति। री गतौ–रियतुः। रियुः। वी गत्यादिषु–वियतुः। वियुरिति? यणादेशस्य स्थानिवत्त्वाद् असिद्धत्वाद् बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः। चतुर्थितेत्यत्रापि बहिरङ्गलक्षणत्वादतो लोपस्य धातोरुपधाभूतो रेफो न भवति। प्रतिदीव्नेत्यत्र तु हलि चेति दीर्घत्वम्। दीर्घविधौ लोपाजादेशस्य स्थानिवद्भावप्रतिषेधात्। असिद्धं बहिरङ्गमन्तरङ्ग इत्येतद् नाश्रयितव्यम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति गिरिः किर्योर्गिर्योरित्येवमादिषु दीर्घो न भवति॥

## न भकुर्छुराम् ॥ ७९ ॥

रेफवकारान्तस्य भस्य कुर् छुर् इत्येतयोश्च दीर्घो न भवति। धुरं वहति धुर्यः। धुरि साधुर्धुर्यः। दिव्यम्। कुर्–कुर्यात्। छुर्–छुर्यात्। रेफवकाराभ्यां भविशेषणं किम्? प्रतिदीव्ना। प्रतिदीव्ने॥

## अदसोऽसेर्दादु दो मः ॥ ८० ॥

अदसोऽसकारान्तस्य वर्णस्य दात्परस्य उवर्णादेशो भवति दकारस्य च मकारः। अमुम्। अमू। अमून्। अमुना। अमूभ्याम्। भाव्यमानेनाप्युकारेण सवर्णानां ग्रहणमिष्यत इत्येकमात्रिकस्य मात्रिको द्विमात्रिकस्य द्विमात्रिक आदेशो भवति। असेरिति किम्? अद इच्छति, अदस्यति। *अदसोऽनोस्त्र इति वक्तव्यम्*। ओका-रेफयोरपि प्रतिषेधो यथा स्यादिति। अदोऽत्र। अदः। तदर्थं केचित्सूत्रं वर्णयन्ति। अः सेर्यस्य सोऽयमसिः। यत्र सकारस्य अकारः क्रियत इति। तेन त्यदाद्यत्वविधाने एतद्, अन्यत्र न भवितव्यमेवेति। अद्र्यादेशे कथम्?॥

अदसोद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेहि दृश्यते॥ इति।

यैरसेरिति सकारस्य प्रतिषेधः क्रियते। अनन्त्यविकारेऽन्त्यसदेशस्येति च परि-

भाषा नाश्रीयते, तेषामुभयोरपि मुत्वेन भवितव्यम्-अमुमुयङ्। अमुमुयञ्चौ। अमुमुयञ्च इति। यथा चलीक्लृप्यत इति लत्वम्। ये [illegible] परिभाषामाश्रयन्ति तेषामन्त्यसदेशस्यैव भवितव्यम्-अदमुयङ्। अदमुयञ्चौ। अदमुयञ्च इति। येषां तु पदाद्यत्वविषय एव मुत्वेन भवितव्यमिति दर्शनं तेषामत्र न भवितव्यम्-अदद्र्यङ्। अदद्र्यञ्चौ। अदद्र्यञ्च इति। दादिति किम्? अलोऽन्त्यस्य मा भूत्-अमु[illegible]। अमुयोः॥

एत ईद् बहुवचने ॥ ८१ ॥

अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति दकारस्य च मकारः, बहुवचने बहूनामर्थानामुक्तौ। अमी। अमीभिः। अमीभ्यः। अमीषाम्। अमीषु। बहुवचन इत्यर्थनिर्देशोऽयं, पारिभाषिकस्य हि बहुवचनस्य ग्रहणेऽमी इत्यत्र न स्यात्॥

वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥

अधिकारोऽयम्। वाक्यस्य टेरिति प्लुत इति च उदात्त इति च एतत्त्रयमप्यधिकृत वेदितव्यमापादपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो वाक्यस्य टेः प्लुत उदात्त इत्येव तद्वेदितव्यम्। वक्ष्यति-प्रत्यभिवादेऽशूद्रे। अभिवादये देवदत्तोऽहं, भो आयुष्मानेधि देवदत्त ३। पदाधिकारोऽनुवर्त्तत एव। वाक्यग्रहणमनन्त्यस्य पदस्य प्लुतनिवृत्यर्थम्। टिग्रहणं व्यञ्जनान्त्यस्यापि टेरेव प्लुतो यथा स्यात्-अग्निचि ३ दिति॥

प्रत्यभिवादेऽशूद्रे ॥ ८३ ॥

प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते तत्राशूद्रविषये यद्वाक्यं वर्त्तते तस्य टेः प्लुत उदात्तो भवति। अभिवादये देवदत्तोऽहं, भो आयुष्मानेधि देवदत्त ३। अशूद्र इति किम्? अभिवादये तुषजकोऽहं, भो आयुष्मानेधि तुषजक। *स्त्रियामपि प्रतिषेधो वक्तव्यः*। अभिवादये गार्ग्यहं, भो आयुष्मती भव गार्गि। असूयकेऽपि केचित् प्रतिषेधमिच्छन्ति। अभिवादये स्थाल्यहं भोः। आयुष्मानेधि स्थालिन्। यावच्च तस्यासूयकत्वं न ज्ञायते तावदेव प्रत्यभिवादवाक्यम्। तस्मिंस्त्वसूयकत्वेन निर्ज्ञाते प्रत्यभिवाद एव नास्ति, कुतः प्लुतः। तथा ह्युक्तम्, असूयकस्त्वं जाल्म न त्वं प्रत्यभिवादनमर्हसि। भिद्यस्व वृषल स्थालिन्निति॥ अभिवादवाक्ये यत् सङ्कीर्त्तितं नाम गोत्रं वा तद् यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र प्लुत इष्यते॥ इह न भवति-देवदत्त कुशल्यसि। देवदत्त आयुष्मानेधीति। *भोराजन्यविशां वेति वक्तव्यम्*। भो अभिवादये देवदत्तोऽहम्। आयुष्मानेधि देवदत्त भोः३। आयुष्मानेधि देवदत्त भोः। राजन्य-अभिवादये इन्द्रवर्म्माऽहंभोः। आयुष्मानेधीन्द्रवर्म्म ३ न्। आयुष्मानेधीन्द्रवर्म्मन्। विश्-अभिवादये इन्द्रपालितोऽहं भोः। आयुष्मानेधीन्द्रपालित ३। आयुष्मानेधीन्द्रपालित॥

### दूराद्धूते च ॥ ८४ ॥

दूराद्धूते यद्वाक्य वर्त्तते तस्य टे प्लुतो भवति स चोदात्तः । आह्वानं हूतं शब्देन सम्बोधनम् । आगच्छ भो माणवक देवदत्त ३ । आगच्छ भो माणवक यज्ञदत्त ३ । दूर यद्यप्यपेक्षाभेदादनवस्थित तथापि हूतापेक्ष यत्तदाश्रीयते इति । यत्र प्राकृताद् प्रयत्नाद्यत्नविशेषे आश्रीयमाणे शब्दः श्रूयते तद्दूरम् । हूतग्रहण च सम्बोधनमात्रोपलक्षणार्थं द्रष्टव्यम् । तेन यत्राप्याह्वान नास्ति तत्रापि प्लुतिर्भवति । सक्तून्पिब देवदत्त ३ । पलायस्व देवदत्त ३ इति ॥ अस्याश्च प्लुतेरेकश्रुत्या समावेश इष्यते ॥ दूरादिति किम् ? आगच्छ भो माणवक देवदत्त ॥ दूरादाह्वाने वाक्यस्यान्ते यत्र सम्बोधनपद भवति तत्राय प्लुत इष्यते ॥ तेनेह न भवति—देवदत्त आगच्छ(१) ॥

### हैहेप्रयोगे हैहयोः ॥ ८५ ॥

हैहेप्रयोगे दूराद्धूते यद्वाक्य वर्त्तते तत्र हैहयोरेव प्लुतो भवति । है ३ देवदत्त । देवदत्त है ३ । हे ३ देवदत्त । देवदत्त हे ३ । पुनर्हैहयोर्ग्रहणमनन्त्ययोरपि यथा स्यात् ॥

### गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८६ ॥

प्रत्यभिवादेऽशूद्र इत्येवमादिना यः प्लुतो विहितस्तस्यैवाय स्थानिविशेष उच्यते । ऋकारवर्जितस्य गुरोरनन्त्यस्य, अपिशब्दादन्त्यस्यापि टेरेकैकस्य सम्बोधने वर्त्तमानस्य प्लुतो भवति प्राचामाचार्याणां मतेन । दे ३ वदत्त । देवद ३ त्त । देवदत्त ३ । य ३ ज्ञदत्त । यज्ञद ३ त्त । यज्ञदत्त ३ । गुरोरिति किम् ? वकारात् परस्य मा भूत् । अनृत इति किम् ? कृष्णमि ३ त्र । कृष्णमित्र ३ । एकैकग्रहण पर्यायार्थम् । प्राचामिति ग्रहण विकल्पार्थम् । आयुष्मानेधि देवदत्त । तदनेन यदेतदुच्यते सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्त्तव्य इति तदुपपन्न भवति ॥

### ओमभ्यादाने ॥ ८७ ॥

अभ्यादान प्रारम्भः । तत्र य ओम्शब्द तस्य प्लुतो भवति । ओ३म् अग्निमीळे पुरोहितम् । अभ्यादान इति किम् ? ओमित्येतदक्षरमुद्गीथमुपासीत ॥

### ये यज्ञकर्म्मणि ॥ ८८ ॥

ये इत्येतस्य यज्ञकर्म्मणि प्लुतो भवति । ये ३ यजामहे । यज्ञकर्म्मणीति किम् ? ये यजामह इति पञ्चाक्षरमिति स्वाध्यायकाले मा भूत् ॥ ये यजामह इत्यत्रैवाय प्लुत इष्यते ॥ इह हि न भवति—ये देवासो दिव्येकादशस्थ इति ॥

### प्रणवष्टेः ॥ ८९ ॥

यज्ञकर्म्मणीति वर्त्तते । यज्ञकर्म्मणि टेः प्रणव आदेशो भवति । क एष प्रणवो नाम पादस्य वार्द्धर्चस्य वान्त्यमक्षरमुपसहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कार

---

१ दूरादाह्वाने वाक्यस्यान्ते यत्रेत्यारभ्य देवदत्त आगच्छेत्यन्तं पुस्तकान्तरे नास्ति ॥

वा विदधति त प्रणवमित्याचक्षते । अपां रेतांसि जिन्वतो३म् । देवान् जिगा सुम्नयो३म् । टिग्रहणं सर्वादेशार्थम्(१) । ओकारः सर्वादेशो यथा स्यात् । व्य नान्ते अन्त्यस्य मा भूदिति । यज्ञकर्मणीत्येव । अपां रेतांसि जिन्वति ॥

याज्यान्तः ॥ ९० ॥

याज्या नाम ये याज्याकाण्डे पठ्यन्ते मन्त्रास्तेषामन्त्यो यष्टिः स प्लुतो यज्ञकर्मणि । स्तोमैर्विधेमाग्नये ३ । जिह्वामग्ने चकृषे हव्यवाहाम् ३ । अन्तग्रहणं किम् याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपास्तत्र यावन्ति वाक्यानि तेषां सर्वेषां प्लुत प्राप्नोति । सर्वान्त्यस्यैवेष्यते तदर्थमन्तग्रहणम् ॥

ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥

ब्रूहि प्रेष्य श्रौषट् वौषट् आवह इत्येतेषामादेः प्लुतो भवति यज्ञकर्मणि । अग्नयेऽनु३ब्रूहि । प्रेष्य–अग्नये गोमयान् प्रे३ष्य । श्रौषट्–अस्तु श्रौ३षट् । वौषट्–सोमस्याग्ने वीहि वौ३षट् । आवह–अग्निमा३वह । आवह देवान् यजमानायेत्येवमादावप्लुतो न भवति । सर्वे विधयश्छन्दसि विकल्प्यन्त इति ॥

अग्नीत्प्रेषणे परस्य च ॥ ९२ ॥

अग्नीधः प्रेषणमग्नीत्प्रेषणम् । तत्रादेः प्लुतो भवति परस्य च । आ३श्रा३वय ओ३श्रा३वय । अनैवायं प्लुत इष्यते । तेनेह न भवति–अग्नीदग्नीन्विहर बर्हिस्तृणीहीति । तदर्थं केचिद्वक्ष्यमाणं विभाषेत्यभिसंबध्नन्ति । सा च व्यवस्थितविभाषेति अपर आह–सर्व एव प्लुतः साहसमनिच्छता विभाषा विज्ञेय इति । इह तु उद्धर३ । उद्धर । अभिहर३ । अभिहरेति छान्दसः प्लुतव्यत्ययः । यज्ञकर्मणीत्येव ओश्रावय ॥

विभाषा पृष्टप्रतिवचने हेः ॥ ९३ ॥

पृष्टप्रतिवचने विभाषा हे प्लुतो भवति । अकार्षीः कटं देवदत्त । अकार्षं हि३ अकार्षं हि । अलावीः केदारं देवदत्त । अलाविष हि३ । अलाविष हि । पृष्टप्रतिवचन इति किम् ? कटं करिष्यति हि । हेरिति किम् ? करोमि ननु ॥

निगृह्यानुयोगे च ॥ ९४ ॥

स्वमतात्प्रच्यावनं निग्रहः । अनुयोगस्तस्य मतस्याविष्करणम् । तत्र निगृह्यानुयोगे यद्वाक्यं वर्तते तस्य टे प्लुतो भवति विभाषा । अनित्यः शब्द इति केनचित्प्रतिज्ञात तमुपालिप्सुरुपपत्तिभिर्निगृह्य साम्यसूयमनुयुङ्क्ते–अनित्यः शब्द इत्यात्थ३ अनित्यः शब्दः इत्यात्थ । अद्य श्राद्धमित्यात्थ३ । अद्य श्राद्धमित्यात्थ । अद्यामावास्ये त्यात्थ३ । अद्यामावास्येत्यात्थ । अद्य अमावास्येत्येव वादी युक्त्या प्रच्याव्य स्वमताद्देवमनुयुज्यते ॥

१. टेरिति वर्तमाने इत्यधिक पुस्तकान्तरे ।

## आम्रेडित भर्त्सने ॥ ९५ ॥

वाक्यादेरामन्त्रितस्येति भर्त्सने द्विर्वचनमुक्त तस्याम्रेडित प्लवते। चौर चौर३, वृपल, वृपल ३, दस्यो दस्यो३, घातयिष्यामि त्वा वन्धयिष्यामि त्वा। ॐभर्त्सने पर्यायेणेति वक्तव्यम्ॐ। चौर ३ चौर। चौर चौर ३। तदर्थमाम्रेडितग्रहण द्विरुक्तोपलक्षणार्थं वर्णयन्ति ॥

## अङ्गयुक्त तिडाकाङ्क्षम् ॥ ९० ॥

अङ्ग इत्यनेन युक्त तिङन्तमाकाङ्क्ष भर्त्सने प्लवते। अङ्ग कूज ३। अङ्ग व्याहर३। इदानीं ज्ञास्यसि जाल्म। तिङिति किम् ? अङ्ग देवदत्त मिथ्या वदसि। आकाङ्क्षमिति किम् ? अङ्ग पच। नैतदपरमाकाङ्क्षति। भर्त्सन इत्येव। अङ्गाधीष्व ओदन ते दास्यामि ॥

## विचार्यमाणानाम् ॥ ९७ ॥

प्रमाणेन वस्तुपरीक्षण विचार। तस्य विषये विचार्यमाणाना वाक्याना टे प्लुतो भवति। होतव्य दीक्षितस्य गृहा ३ इ। होतव्य न होतव्यमिति विचार्यते। तिष्ठेद्यूपा ३ इ। अनुप्रहरेद्यूपा ३ इ। यूप तिष्ठेद्यूपे अनुप्रहरेदिति विचार्यते ॥

## पूर्वं तु भाषायाम् ॥ ९८ ॥

भाषाया विषये विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु ३। रज्जुर्नु ३। लोष्टो नु ३। कपोतो नु३ (१)। प्रयोगापेक्ष पूर्वत्वम्। इह भाषाग्रहणात् पूर्वयोगश्छन्दसि विज्ञायते।

## प्रतिश्रवणे च ॥ ९९ ॥

प्रतिश्रवणमभ्युपगम प्रतिज्ञानम्। श्रवणाभिमुख्य च तत्राविशेषात् सर्वस्य ग्रहणम्। प्रतिश्रवणे यद्वाक्य वर्तते तस्य टे प्लुतो भवति। गा देहि भो, अहं ते ददामि ३। नित्य शब्दो भवितुमर्हति। देवदत्त भो किमात्थ ३ ॥

## अनुदात्त प्रश्नान्ताभिपूजितयो ॥ १०० ॥

अनुदात्त प्लुतो भवति प्रश्नान्ते अभिपूजिते(२)। अगम ३ पूर्वां३न् ग्रामा३न् अग्निभूता ३ इ। पटा ३ उ। अग्निभूते पटो इत्येतयो प्रश्नान्ते वर्तमानयोरनुदात्त प्लुतो भवति। अगम इत्येवमादीना अन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतो भवति। अभिपूजिते-शोभन खल्वसि माणवक ३ ॥

## चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

अनुदात्तमिति वर्तते। चिदित्येतस्मिन्निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेरनु

---

१ स्थाणुनु ३। पुरुषोनु ३ इत्यधिक पुस्तकान्तरे ॥

(२) क्वचिदधिकोऽय पाठ —"नानेन प्लुतो विधीयते। किन्तु दूराद्धूतेऽपि विहितस्य अन्त्यस्यापि प्रश्नाख्यानयोरिति स्वरितप्लुतस्यानुदात्तत्व गुणमात्र विधीयते" इति।

दात्तः प्लुतो भवति। प्लुतोऽप्यत्र विधीयते, न गुणमात्रम्। अग्निचिद्भायाऽ३त्। राजचिद्भायात् ३। अग्निरिव भायात्। राजेव भायादित्यर्थः। उपमार्थ इति किम्? कथंचिदाहुः। प्रयुज्यमान इति किम्? अग्निर्माणवको भायात्॥

उपरिस्विदासीदिति च॥ १०२॥

अनुदात्तमिति वर्त्तते। उपरिस्विदासीदित्येतस्य टेरनुदात्तः प्लुतो भवति। अधः स्विदासी३त्। उपरि स्विदासी३त्। अधः स्विदासीदित्यत्र विचार्यमाणानामित्युदात्तः प्लुतः। उपरिस्विदासीदित्यत्र तु अनेनानुदात्तः॥

स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु॥ १०३॥

स्वरितः प्लुतो भवति आम्रेडिते परतः असूयायां संमतौ कोपे कुत्सने च गम्यमाने। वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेष्विति द्विर्वचनमुक्तं, तत्रायं प्लुतविधिः। असूयायां तावत्–माणवक ३ माणवक। अभिरूपक३ अभिरूपक रिक्त ते आभिरूप्यम्। संमतौ–माणवक ३ माणवक अभिरूपक ३ अभिरूपक शोभनः खल्वसि। कोपे–माणवक ३ माणवक अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने–शाक्तीक ३ शाक्तीक याष्टीक ३ याष्टीक रिक्ता ते शक्तिः। ॐअसूयादिषु वावचनं कर्त्तव्यम्ॐ माणवक माणवके३त्येवमादावपि यथा स्यात्॥

क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्॥ १०४॥

स्वरित इति वर्त्तते। क्षिया आचारभेदः। आशीः प्रार्थनाविशेषः। शब्देन व्यापारणं प्रैषः। एतेषु गम्यमानेषु तिङन्तमाकाङ्क्षं यत्तस्य स्वरितः प्लुतो भवति। आकाङ्क्षतीत्याकाङ्क्षं तिङन्तमुत्तरपदमाकाङ्क्षतीत्यर्थः। क्षियायां तावत्–स्वयं रथेन याति ३ उपाध्यायं पदातिं गमयतीति। स्वयं ओदनं ह भुङ्क्ते उपाध्यायं सक्तून् पाययति। पूर्वमत्र तिङन्तमुत्तरमाकाङ्क्षतीति साकाङ्क्षं भवति। आशिषि–सुतांश्च लप्सीष्ठा३ धनं च तात। छन्दोऽध्येषीष्ठा३ व्याकरणं च भद्र। प्रैषे–कटं कुरु ३ ग्रामं च गच्छ। यवान् लुनीहि ३ सक्तूंश्च पिब। आकाङ्क्षमिति किम्? दीर्घं ते आयुरस्तु। अग्नीन् विहर॥

अनन्त्यस्यापि प्रश्नाख्यानयोः॥ १०५॥

पदस्येति वर्त्तते स्वरितमिति च। अनन्त्यस्यापि अन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्ने आख्याने च। अगम३ः पूर्वा ३ न् ग्रामा ३ न्। अग्निभूत ३ [illegible]। पट ३ उ। सर्वेषामेव पदानामेष स्वरितः प्लुतः। अन्त्यस्य अनुदात्तं प्रश्नान्ताभिपूजितयोरिति। अनुदात्तोऽपि पक्षे भवति। आख्याने–अगम ३ः पूर्वा ३न् ग्रामा ३न् भो ३ः॥

प्लुतावैच इदुतौ॥ १०६॥

दूराद्धूतादिषु प्लुतो विहितः। तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूताविदुतौ प्लुतौ। ऐ ३ तिकायन। औ३पगव। अत्र यदेवर्णोवर्णयोरवर्णस्य च समविभागस्तदा

इदुतौ द्विमात्रावनेन प्लुतौ क्रियेते । प्लुताविति हि क्रियानिमित्तोऽयं व्यपदेशः । इदुतौ प्लवेते वृद्धिं गच्छत इत्यर्थः । तावती च सा प्लुतिर्भवति । यया तावेतौ त्रिमात्रौ संपद्येते । यदा त्वर्द्धमात्रावर्णस्याप्यर्द्धमात्रा इवर्णोवर्णयोस्तदा तावर्द्धतृतीयमात्रौ क्रियेते इति । भाष्ये तूक्तमिष्यते चतुर्मात्रः प्लुत इति । तत्कथम् ? समप्रविभागपक्षे इदुतोरनेन त्रिमात्रः प्लुतो विधीयते ॥

## एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ॥ १०७ ॥

एचोऽप्रगृह्यस्यादूराद्धूते प्लुतविषयस्यार्द्धस्याकार आदेशो भवति स प्लुतः उत्तरस्येकारोकारावादेशौ भवतः । विषयपरिगणनं कर्त्तव्यम्-※प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम्※ । प्रश्नान्ते-अगमः३ पूर्वा३न् ग्रामा३न् अग्निभूता३इ । पटा३उ । अभिपूजिते-भद्रं करोषि माणवक३ अग्निभूता३इ । पटा३उ । विचार्यमाणे-होतव्यं दीक्षितस्य गृहा३इ । प्रत्यभिवादे-आयुष्मानेधि अग्निभूता३इ । पटा३उ । याज्यान्ते-उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नया३इ । सोऽयमाकारः प्लुतो यथाविषयमुदात्तोऽनुदात्तः स्वरितो वेदितव्यः । इदुतौ पुनरुदात्तावेव भवतः । परिगणनं किम् ? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वा । आगच्छ भो माणवक विष्णुभूते । परिगणने च सत्यदूराद्धूत इति न वक्तव्यम् । पदान्तग्रहणं तु कर्त्तव्यम् । इह मा भूत्-भद्रं करोषि गौरिति । अप्रगृह्यस्येति किम् ? शोभने खलु स्तः खट्वे३ । ※आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः※ । अग्ना३इ पत्नी वः ।

## तयोर्य्वावचि संहितायाम् ॥ १०८ ॥

तयोरिदुतोर्यकारवकारादेशौ भवतोऽचि संहितायां विषये । संहितायामित्येतदाधिकृतमित उत्तरमध्यायपरिसमाप्तेर्यद्वक्ष्यामः संहितायामित्येव तद्वेदितव्यम् । अग्ना३याशा । पटा३वाशा । अग्ना३यिन्द्रम् । पटा३वुदकम् । अचीति किम् ? अग्ना३इ । पटा३उ । संहितायामिति किम् ? अग्ना३इ इन्द्रम् । पटा३उ उदकम् । इदुतोरसिद्धत्वादिको यणचीति न प्राप्नोतीत्ययमारम्भः । अथापि कथंचित्तयोः सिद्धत्वं स्यादेवमपि सवर्णदीर्घत्वनिवृत्त्यर्थं शाकलनिवृत्त्यर्थं च वक्तव्यमेतत् । अथापि तन्निवृत्त्यर्थं यत्नान्तरमस्ति तथापि यण्स्वरनिवृत्त्यर्थमिदमारभ्यते । यणादेशस्यासिद्धत्वाद् उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्येष स्वरो न भवति ॥

किं तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति ।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥
इक्तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ॥

इति काशिकायां वृत्तौ अष्टमाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ अष्टमाध्यायस्य तृतीयः पादः ॥

### मतुवसो रु सम्बुद्धौ छन्दसि ॥ १ ॥

संहितायामिति वर्त्तते । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषये । मत्वन्तस्य तावत्-इन्द्र मरुत्व इह पाहि सोमम् । हरिवो मेदिनं त्वा । मरुतोऽस्य सन्ति, हरयोऽस्य सन्ति, इति मतुप् । तुमकारयो-र्हल्ङ्यादिलोपे संयोगान्तस्य लोपे च कृते नकारस्य रुर्भवति । वस्वन्तस्य खल्वपि-मीढ्वस्तोकाय तनयाय इन्द्र साह्वः । क्वसोर्निपातनं दाश्वान् साह्वान् मीढ्वानिति । मतुवसोरिति किम् ? यज्ञन्नस्तोष्याम । सम्बुद्धाविति किम् ? य एवं विद्वानग्निमाधत्ते । छन्दसीति किम् ? हे गोमन् । हे पयिवन् । ⊛वन उपसंख्यानं कर्त्तव्यम्⊛ । यस्त्वायन्तं वसुना प्रातरित्वः । इणः प्रातः पूर्वस्य छन्दसि क्वनिप् । ⊛विभाषा भवद्भगवदघवतामोच्चावस्य⊛ । छन्दसि भाषायां च भवद् भगवद् अघवद् इत्येतेषां विभाषा रुर्भवत्योऽवशब्दस्य च ओकारादेशः । सामान्येन छन्दसि भाषायां चेदं वचनम् । भवत्-हे भोः । हे भवन् । भगवद्-हे भगोः । हे भगवन् । अघवत्-हे अघोः । हे अघवन् । निपातनविज्ञानाद्वा सिद्धम् । अथवा भो इत्येवमादयो निपाता द्रष्टव्याः । असम्बुद्धावपि द्विवचनबहुवचनयोरपि दृश्यन्ते-भो देवदत्तयज्ञदत्तौ । भो देवदत्तयज्ञदत्तविष्णुमित्राः । तथा स्त्रियामपि च दृश्यन्ते-भो ब्राह्मणि । इत्यादि । संहिताधिकार उत्तरत्रोपयुज्यते यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ । नश्छव्यप्रशानिति(१) ॥

### अत्रानुनासिकः पूर्वस्य तु वा ॥ २ ॥

अधिकारोऽयम् । इत उत्तरं यस्य स्थाने रुर्विधीयते ततः पूर्वस्य तु वर्णस्य वाऽनुनासिको भवतीत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र । वक्ष्यति-समः सुटि । सँस्कर्त्ता । सँस्कर्त्तुम् । सँस्कर्त्तव्यम् । अत्रग्रहणं रुणा सह सन्नियोगप्रतिपत्त्यर्थम् । अधिकारपरिमाणापरिग्रहे हि सति, ढो ढे लोप इत्यत्रापि पूर्वस्याऽनुनासिक आशङ्क्येत ॥

### आतोऽटि नित्यम् ॥ ३ ॥

अटि परतो रोः पूर्वस्याकारस्य स्थाने नित्यमनुनासिकादेशो भवति । दीर्घादटि समानपाद इति रुत्वं वक्ष्यति । ततः पूर्वस्यातोऽनुनासिकविकल्पे प्राप्ते नित्यार्थं वचनम् । महाँ असि । महाँ इन्द्रो य ओजसा । देवाँ अच्छादीध्यत् । केचिदनुस्वारमधीयते । स छान्दसो व्यत्ययो द्रष्टव्यः । आत इति किम् ? ये वा वनस्पतींरनु । अटीति किम् ? भवांश्चरति भवांश्छादयति(२) । नित्यग्रहणं विस्पष्टार्थम्(३) ॥

---

१. संहिताधिकार उत्तरत्रेत्यत आरभ्य नश्छव्यप्रशानित्यन्तः पाठः पुस्तकान्तरे नास्ति ॥
२. भवांश्छादयति इति पाठान्तरं पंक्तिपत्रे ॥ ३. नित्यग्रहणनियमाशङ्कापरिहारार्थमिति पाठः पुस्तकान्तरे ॥

## अनुनासिकात्परोऽनुस्वारः ॥ ४ ॥

अन्यशब्दोऽत्राध्याहर्त्तव्यः । तदपेक्षया चेयमनुनासिकादिति पञ्चमी । अनुनासिकादन्यो यो वर्णः रोः पूर्वं यस्यानुनासिको न विहितस्ततः परोऽनुस्वार आगमो भवति । वक्ष्यति—समः सुटि । संस्कर्त्ता । संस्कर्त्तव्यम् । पुमः खय्यम्परे । पुंस्कामा । नश्छव्यप्रशान् । भवांश्चरति । केचित्तु परशब्दमेवान्यार्थं वर्णयन्ति । अनुनासिकात् परोऽनुनासिकादन्योऽनुस्वारो भवति । यस्मिन् पक्षेऽनुनासिको नास्ति तत्रानुस्वारागमो भवति । स तु कस्यागमो भवति ? रोः पूर्वस्यैवेति वर्त्तते व्याख्यानादादेशो न भवति ॥

## समः सुटि ॥ ५ ॥

रुर्वर्त्तते । सम इत्येतस्य रुर्भवति सुटि परतः संहितायां विषये । संस्कर्त्ता । संस्कर्त्तुम् । संस्कर्त्तव्यम्—सँस्स्कर्त्ता । सँस्स्कर्त्तुम् । सँस्स्कर्त्तव्यम् । अत्र [illegible] नीये कृते वा शरीति पक्षे विसर्जनीय एव प्राप्नोति । व्यवस्थितविभाषा द्रष्टव्या तेनात्र नित्यं सकार एव भवति । अस्मिन्नेव सूत्रे सकारादेशो वा निर्दिश्यते । समः सुटीति द्विसकारको निर्देशः । सम इति किम् ? उपस्कर्त्ता । सुटीति किम् ? संकृ[illegible]ः । कश्चिदाह । ॐसपुकानां सो वक्तव्य.ॐ । रुविधौ ह्यनिष्टप्रसङ्गः । सँस्स्कर्त्ता । पुंस्कामा । कांस्कानिति ॥

## पुमः खय्यम्परे ॥ ६ ॥

पुमित्येतस्य रुर्भवति अम्परे खयि परतः । पुँस्कामा । पुंस्कामा । पुँस्पुत्रः । पुंस्पुत्रः । पुँस्फलम् । पुंस्फलम् । पुँश्चली । पुंश्चली । पुंस्कामेत्यत्र विसर्जनीयस्य कुप्वोः ≍क≍पौ चेति प्राप्नोति । तस्मादत्र सकार एवादेशो वक्तव्यः । द्विसकारकनिर्द्दिश्यते ॥ पूर्वस्मादेव सूत्रात् स इत्यनुवर्त्तते । रुस्त्वनुवर्तमानमपि नात्राभिसंबध्यते । सबन्धानुवृत्तिस्तस्येति । खयीति किम् ? पुंदासः । पुंगवः । अम्पर इति किम् ? पुंक्षीरः । पुंक्षुरः । परग्रहणं किम् ? पुमाख्य । पुमाचारः ॥

## नश्छव्यप्रशान् ॥ ७ ॥

अम्पर इति वर्त्तते । नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुर्भवत्यम्परे छवि परतः । भवांश्छादयति २ । भवांश्चिनोति २ । भवांष्टीकते २ । भवांस्तरति २ । छवीति किम् ? भवान् करोति । अप्रशानिति किम् ? प्रशान्छादयति । प्रशान्चिनोति । अम्पर इत्येव । भवान्त्सरुकः ॥

## उभयथर्क्षु ॥ ८ ॥

पूर्वेण नित्ये प्राप्ते विकल्पः क्रियते । नकारान्तस्य पदस्य छवि परतः अम्परे उभयथा ऋक्षु भवति—रुर्वा नकारो वा । तँस्मिँस्त्वा दधाति । तस्मिन्त्वा दधाति । ऋक्ष्विति किम् ? तांस्त्वं खाद सुखादितान् ॥

### दीर्घादटि समानपादे ॥ ९ ॥

न इत्यनुवर्तते। दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुर्भवत्यटि परतस्तौ चेन्निमित्तनिमित्तिनौ समानपादे भवतः। ऋचिवित्ति प्रकृतत्वाद् ऋक्पाद इह गृह्यते। परिधीं रति। देवाँ अच्छादीध्यत्। महा इन्द्रो य ओजसा। दीर्घादिति किम्? अहन्नहिम्। अटीति किम्? इम्यान्वहियान्। समानपाद इति किम्? यातुधानानुपस्पृश। उभयथेत्येव। आदित्यान् हवामहे।

### नॄन्पे ॥ १० ॥

नॄनित्येतस्य नकारस्य रुर्भवति पशब्दे परतः। अकार उच्चारणार्थः। नॄँःपाहि। नॄ पाहि। नॄँःप्रीणीहि। नॄःप्रीणीहि। प इति किम्? नॄन्भोजयति। उभयथेत्यपि केचिदनुवर्तयन्ति। नॄन्पाहीत्यपि यथा स्यात्॥

### स्वतवान्पायौ ॥ ११ ॥

स्वतवानित्येतस्य नकारस्य रुर्भवति पायुशब्दे परतः। स्वतवाँ: पायुरग्ने॥

### कानाम्रेडिते ॥ १२ ॥

कानित्येतस्य नकारस्य रुर्भवति आम्रेडिते परतः। कांस्कानामन्त्रयते। कांस्कान्भोजयति। अस्य कस्कादिषु पाठो द्रष्टव्यः। तेन कुप्वोः ≍क≍पौ चेति न भवति। समः सुटीत्यतो वा सकारोऽनुवर्तते, स एवात्र विधीयते। पूर्वेषु योगेषु संबन्धानुवृत्त्या गतस्य रोरप्रानभिसम्बन्धः। आम्रेडित इति किम्? कान् कान् पश्यति। एकोऽत्र कुत्सायाम्॥

### ढो ढे लोपः ॥ १३ ॥

ढकारस्य ढकारे लोपो भवति। सत्यपि पदाधिकारे तस्यासम्भवादपदान्तस्य ढकारस्याय लोपो विज्ञायते। लीढम्। उपगूढम्। ष्टुत्वस्यात्र सिद्धत्वमाश्रयाद् द्रष्टव्यम्। श्लिड्ढौकत इत्यत्र तु जश्त्वे कृते कार्यं नास्तीति लोपाभावः। न च ढलोपो जश्त्वापवादो विज्ञातु शक्यते? तस्य हि लीढादिर्विषयः सम्भवति। तत्र हि श्रुतिकृतमानन्तर्यमस्ति शास्त्रकृतं तु यदा नानन्तर्यं ष्टुत्वस्यासिद्धत्वेन प्राप्त तत्त् सूत्रकरणसामर्थ्याद् बाध्यते। श्लिड्ढौकत इत्यत्र तु न श्रुतिकृतमानन्तर्यं, न शास्त्रकृतमिति अविषयोऽयं ढलोपस्य॥

### रो रि ॥ १४ ॥

रेफस्य रेफे परतो लोपो भवति। नीरक्तम्। अग्नी रथः। इन्दू रथः। पुना रक्तं वासः। प्राता राजक्रयः। पदस्येत्यत्र विशेषणे षष्ठी। तेनापदान्तस्यापि रेफस्य लोपो भवति। जर्गृधेरजर्घाः। पास्पर्धेरपास्पाः, इति॥

### खरवसानयोर्विसर्जनीयः ॥ १५ ॥

र इति वर्तते। रेफान्तस्य पदस्य खरि परतोऽवसाने च विसर्जनीयादेशो भवति।

वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षस्तरति। प्लक्षस्तरति (१)। अवसाने-वृक्षः। प्लक्षः। खरवसानयोरिति किम्? अग्निर्नयति। वायुर्नयति। इह नृकुट्यां भवः, नार्कुट। नृपतेरपत्यं नार्पत्य इति, वृद्धेर्बहिरङ्गलक्षणत्वात्तदाश्रयस्य रेफस्यासिद्ध बहिरङ्गमित्यसिद्धत्वाद्विसर्जनीयो न भवति॥

रोः सुपि॥ १६॥

रु इत्येतस्य रेफस्य सुपि परतो विसर्जनीयादेशो भवति। पयःसु। सर्पिःषु। यशःसु। सुपीति सप्तमीबहुवचनं गृह्यते। सिद्धे सत्यारम्भो नियमार्थः-रोरेव सुपि विसर्जनीयादेशो, नान्यस्य। गीर्षु। धूर्षु॥

भोभगोअघोअपूर्वस्य योऽशि॥ १७॥

भो भगो अघो इत्येवं पूर्वस्य अवर्णपूर्वस्य च रो रेफस्य यकारादेशो भवति अशि परतः। भो अत्र। भगो अत्र। अघो अत्र। भो ददाति। भगो ददाति। अघो ददाति। अवर्णपूर्वस्य-क आस्ते। कय् आस्ते। ब्राह्मणा ददति, पुरुषा ददति। भोभगोअघोअपूर्वस्येति किम्? अग्निरत्र। वायुरत्र। अश्ग्रहणं किम्? वृक्षः। प्लक्षः। नैतदस्ति। संहितायामित्यनुवर्त्तते। तर्हि अश्ग्रहणमुत्तरार्थम्। हलि सर्वेषामित्ययं लोपोऽशि हलि यथा स्यात्। इह मा भूत्-वृक्षं वृश्चतीति वृक्षवृट् तमाचष्टे य स वृक्षवयति। वृक्षवयतेरप्रत्ययः, वृक्षव् करोति। अथ तत्रैव अश्ग्रहणं कस्मान्न कृतम्? उत्तरार्थम्। मोऽनुस्वार इति हल्मात्रे यथा स्यात्। व्योर्लघुप्रयत्नतरः शाकटायनस्य लोपः शाकल्यस्येत्येतच्च सूत्रम् करोतीत्यत्र मा भूदित्यश्ग्रहणम्। रोरित्येव। प्रातरत्र। पुनरत्र॥

व्योर्लघुप्रयत्नतरः शाकटायनस्य॥ १८॥

वकारयकारयोर्भोभगोअघोअवर्णपूर्वयोः पदान्तयोर्लघुप्रयत्नतर आदेशो भवति अशि परतः शाकटायनस्याचार्यस्य मतेन। भगोयत्र। अघोयत्र। क आस्ते। कयास्ते। अस्मायुद्धर। अस्मा उद्धर। असावादित्यः। असा आदित्यः। द्वावत्र। द्वा अत्र। द्वावानय। द्वा आनय। लघुप्रयत्नतरत्वमुच्चारणे स्थानकरणशैथिल्यम्। स्थानं ताल्वादि। करणं जिह्वामूलादि। तयोरुच्चारणे शैथिल्यं मन्दप्रयत्नता॥

लोपः शाकल्यस्य॥ १९॥

वकारयकारयोः पदान्तयोरवर्णपूर्वयोर्लोपो भवति शाकल्यस्याचार्यस्य मतेन अशि परतः। क आस्ते। कयास्ते। काक आस्ते। काकयास्ते। अस्मा उद्धर। अस्मायुद्धर। द्वावत्र। द्वा अत्र। असावादित्यः। असा आदित्यः। शाकल्यग्रहणं विभाषार्थम्। तेन यदापि लघुप्रयत्नतरो न भवत्यादेशस्तदापि व्योः पक्षे श्रवणं भवति॥

(१) वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। इति क्वचिदधिकम्॥

ओतो गार्ग्यस्य ॥ २० ॥

ओकारादुत्तरस्य यकारस्य लोपो भवति गार्ग्यस्याचार्यस्य मतेन अशि परतः। भो अत्र। भो इदम्। भगो इदम्। नित्यार्थोऽयमारम्भः। गार्ग्यग्रहणं पूजार्थम्। योऽयमलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सोऽनेन निवर्त्यते। लघुप्रयत्नतरस्तु भवत्येव यकारः। भो अत्र। भोयत्र। भगो अत्र। भगोयत्र। अघो अत्र। अघोयत्र। केचित्तु सर्वमेव यकारमत्र नेच्छन्ति॥

उञि च पदे ॥ २१ ॥

अवर्णपूर्वयोः य्वोः पदान्तयोर्लोपो भवति उञि च पदे परतः। स उ एकविंशतिः। स उ एकाग्निः। पद इति किम्? तन्त्र उतं, तन्त्रयुतम्। वेञः संप्रसारणे कृते उमिति भूतपूर्वेण मकारेण शक्यते प्रतिपत्तुमिति। अथ उमित्येवरूपो निपातः प्रतिपदोक्तोऽस्ति तदा लाक्षणिकत्वाद्वेञादेशस्य ग्रहणमिह नास्ति, उत्तरार्थं पदग्रहणं क्रियते॥

हलि सर्वेषाम् ॥ २२ ॥

हलि परतो भोभगोअघोअपूर्वस्य यकारस्य पदान्तस्य लोपो भवति सर्वेषामाचार्याणां मतेन। भो हसति। भगो हसति। अघो हसति। भो याति। भगो याति। अघो याति। वृक्षा हसन्ति। सर्वेषां ग्रहणं शाकटायनस्यापि लोपो यथा स्यात्, लघुप्रयत्नतरो मा भूदिति॥

मोऽनुस्वारः ॥ २३ ॥

मकारस्य पदान्तस्यानुस्वार आदेशो भवति हलि परतः। कुण्डं हसति। वनं हसति। वनं याति। कुण्डं याति। हलीत्येव। त्वमत्र। किमत्र। पदान्तस्येत्येव। गम्यते। रम्यते॥

नश्चापदान्तस्य झलि ॥ २४ ॥

नकारस्य मकारस्य चापदान्तस्यानुस्वारादेशो भवति झलि परतः। पयांसि। यशांसि। सर्पींषि। धनूंषि। मकारस्य–आक्रंस्यते। आचिक्रंस्यते। अधिजिगांसते। अपदान्तस्येति किम्? राजन् भुङ्क्ष्व। झलीति किम्? रम्यते। गम्यते॥

मो राजि समः क्वौ ॥ २५ ॥

समो मकारस्य मकार आदेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः। सम्राट्। साम्राज्यम्। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्। राजीति किम्? संयत्। सम इति किम्? किंराट्। क्वाविति किम्? सराजिता। सराजितम्। सराजितव्यम्॥

हे मपरे वा ॥ २६ ॥

हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति। किं ह्मलयति। केम् ह्मलयति। कथं ह्मलयति। कथम् ह्मलयति। ॐयवलपरे यवला वा॥

यवलपरे हकारे मकारस्य यवला यथासंख्यं वा भवन्तीति वक्तव्यम्। कियँ ह्यः। किं ह्यः। किवँ ह्वलयति। किं ह्वलयति। किलँ ह्लादयति। किंह्लादयति॥

नपरे नः॥ २७॥

नकारपरे हे परतो मकारस्य वा नकारादेशो भवति। किन् ह्नुते। किं ह्नुते। कथन् ह्नुते। कथं ह्नुते॥

ङ्णोः कुक्टुक् शरि॥ २८॥

ङकारणकारयोः पदान्तयोः कुक् टुक् इत्येतावागमौ वा भवतः शरि परतः। प्राङ्क्शेते। प्राङ्शेते। प्राङ्क्षष्ठः। प्राङ् षष्ठः। प्राङ्क्साये। प्राङ् साये। णकारस्य—वण्ट्शेते। वण् शेते। पूर्वान्तकरणं प्राङ्क्छेते इत्यत्र छत्वार्थम्। शश्छोऽटीति हि पदान्ताज्झय इति तद्विज्ञायते। इह मा भूत्—पुरा क्रूरस्य विसृपो विरप्शिन्। प्राङ्क् साय इत्यत्रापि सात्पदाद्योरिति षत्वप्रतिषेधार्थं च। वण्ट् साय इत्यत्र च न पदान्ताट्टोरनामिति ष्टुत्वप्रतिषेधार्थम्॥

डः सि धुट्॥ २९॥

डकारान्तात्पदादुत्तरस्य सकारादेः पदस्य वा धुडागमो भवति। श्वलिट्त्साये। मधुलिट्त्साये। श्वलिट् साये। मधुलिट् साये। परादिकरणं, न पदान्ताट्टोरनामिति ष्टुत्वप्रतिषेधार्थम्॥

नश्च॥ ३०॥

नकारान्तात्पदादुत्तरस्य सकारस्य वा धुडागमो भवति। भवान्त्साये। महान्त्साये। भवान्साये। महान्साये। धुटश्चासिद्धत्वाच्छत्वप्रसङ्गानिति रुत्वं न भवति॥

शि तुक्॥ ३१॥

नकारस्य पदान्तस्य शकारे परतो वा तुगागमो भवति। भवाञ्छेते। पूर्वान्तकरणं छत्वार्थम्। यद्येवं कुर्वञ्छेते इत्यत्र नकारस्यापदान्तत्वाण्णत्वं प्राप्नोति? तत्र समाधिमाहुः—स्तोः श्चुना श्चुरित्यत्र योगविभागः क्रियते णत्वप्रतिषेधाय, स्तोः श्चुना णकारो न भवतीति। ततः श्चुरिति॥

ङमो ह्रस्वादचि ङमुण्नित्यम्॥ ३२॥

ह्रस्वात्परो यो ङम् तदन्तात्पदादुत्तरस्याचो ङमुडागमो भवति नित्यम्। ङणनेभ्यो यथासंख्यं ङणना भवन्ति। ङकारान्ताद् ङुट्—प्रत्यङ्ङास्ते। णकारान्ता-ण्णुट्—वण्णास्ते। वण्णवोचत्। नकारान्तान्नुट्—कुर्वन्नास्ते। कुर्वन्नवोचत्। कृषन्नास्ते। कृषन्नवोचत्। ङम इति किम्? त्वमास्से। ह्रस्वादिति किम्? प्राङास्ते। भवानास्ते। अचीति किम्? प्रत्यङ् करोति। इह परमदण्डिनौ परमदण्डिनेनि उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधादुत्तरपदस्य पदत्वं नास्तीति

ङमुट् न भवति । अथवा, उमि च पद इत्यतः सप्तम्यन्तं पद इत्यनुवर्त्तते। तेन अजादौ पदे ङमुट् भवति ॥

मय उञो वो वा ॥ ३३ ॥

मय उत्तरस्य उञो वा वकारादेशो भवति अचि परतः । शमुअस्तु वेदिः । शम्व-स्तु वेदिः । तदु अस्य परेतः । तद्वस्य परेतः । किमु आवपनम् । किम्वावपनम्। प्रगृह्यत्वादुञः प्रकृतिभावे प्राप्ते वकारो विधीयते । तस्यासिद्धत्वाद्धलोति मोऽनुस्वारो न भवति ॥

विसर्जनीयस्य सः ॥ ३४ ॥

खरीत्यनुवर्त्तते । विसर्जनीयस्य सकार आदेशो भवति खरि परतः । वृक्षश्छा-दयति । प्लक्षश्छादयति । वृक्षष्टकारः । प्लक्षष्टकारः । वृक्षस्थकारः । प्लक्षस्थकारः । वृक्षश्चिनोति । प्लक्षश्चिनोति । वृक्षष्टीकते । प्लक्षष्टीकते । वृक्षस्तरति । प्लक्षस्तरति ॥

शर्परे विसर्जनीयः ॥ ३५ ॥

शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति । वासः क्षुरम् । पुरुषः क्षुरम् । अद्भिः प्सातम् । वासःक्षौमम् । पुरुषः त्सरुः । घनाघनः क्षोभणश्चर्षणी-नाम् । नेति वक्तव्ये विसर्जनीयस्य विसर्जनीयादेशविधानं विकारनिवृत्त्यर्थम् । तेन जिह्वामूलीयोपध्मानीयौ न भवतः ॥

वा शरि ॥ ३६ ॥

विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि परे । वृक्षः शेते । प्लक्षः शेते । वृक्षश्शेते । प्लक्षश्शेते । वृक्षः षण्डे । वृक्षष्षण्डे । वृक्षः साये । वृक्षस्साये । ॐखर्परे शरि वा लोपो वक्तव्यः ॐ । वृक्षा स्थातारः । वृक्षाः स्थातारः । वृक्षास्स्थातारः ॥

कुप्वोः ≍क≍पौ च ॥ ३७ ॥

कवर्गपवर्गयोः परतो विसर्जनीयस्य यथासंख्यं ≍क≍प इत्येतावादेशौ भवतः, चकाराद्विसर्जनीयश्च । वृक्ष≍करोति । वृक्षः करोति । वृक्ष≍खनति । वृक्षः खनति । वृक्ष≍पचति । वृक्षः पचति । वृक्ष≍फलति । वृक्षः फलति । ककारपकारावुच्चारणार्थौ । जिह्वामूलीयोपध्मानीयावेतावादेशौ । विसर्जनीयस्य स इत्येतस्मिन्नप्राप्ते इदमार-भ्यते इत्येतस्य बाधकं, शर्परे विसर्जनीय इत्येतत्तु न बाध्यते—वासः क्षौमम् । अद्भिः प्सातम् । पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति शर्परे विसर्जनीय इत्येतदेव भवति । केचित्तु एतदर्थं योगविभागं कुर्वन्ति । कुप्वोः । शर्परयोः विसर्जनीयस्य विसर्जनीय आदेशो भवति । किमर्थमिदम् ? ≍क≍पौ चेति वक्ष्यति तद्बाधनार्थमिति ॥

सोऽपदादौ ॥ ३८ ॥

सकार आदेशो भवति विसर्जनीयस्य कुप्वोरपदाद्योः परतः । पाशकल्पककाम्‌-

म्येषु । याप्ये पाशप्-पयस्पाशम्(१) । ईषदपरिसमाप्तौ कल्पप्-पयस्कल्पम् । यशस्कल्पम् । प्रागिवात्कः-पयस्कम् । यशस्कम् । काम्यच-पयस्काम्यति । यशस्काम्यति । अपदादाविति किम् ? पयःकामयते । पयःपिबति । ॐसोऽपदादावित्यनव्ययस्येति वक्तव्यम्ॐ । इह मा भूत्-प्रातः कल्पम् । पुनः कल्पमिति । ॐरोः काम्ये नियमार्थम्ॐ । रोरेव काम्ये नान्यस्येति नियमार्थं वक्तव्यम् । पयस्काम्यति । यशस्काम्यति । इह मा भूत्-गीः काम्यति । धूः काम्यति । ॐउपध्मानीयस्य कवर्गे परतः सकार आदेशो भवतीति वक्तव्यम्ॐ । किं प्रयोजनमुब्जिरुपध्मानीयोपधः पठ्यत इति दर्शने अभ्युद्गः समुद्गः इति यथा स्यात् ॥

इणः षः ॥ ३९ ॥

अपदादाविति वर्त्तते । इण उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोः पराद्योः परतः । पाशकल्पककाम्येषु । पाश-सर्पिष्पाशम् । यजुष्पाशम् । कल्प-सर्पिष्कल्पम् । यजुष्कल्पम् । क-सर्पिष्कम् । यजुष्कम् । काम्य-सर्पिष्काम्यति । यजुष्काम्यति । अपदादावित्येव । अग्निः करोति । वायुः करोति । अग्निः पचति । वायुः पचति । कुप्वोरित्येव । सर्पिस्ते । यजुस्ते । इत उत्तरं स इति इणः ष इति च वर्त्तते तत्र इणः परो यो विसर्जनीयस्तस्य षकारो भवत्यन्यस्य सकारो भवति ॥

नमस्पुरसोर्गत्योः ॥ ४० ॥

नमस्पुरस् इत्येतयोर्गतिसंज्ञकयोर्विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः । नमस्कर्त्ता । नमस्कर्त्तुम् । नमस्कर्त्तव्यम् । गत्योरिति किम् ? पूः पुरौ पुरः करोति ॥

इदुदुपधस्य चाप्रत्ययस्य ॥ ४१ ॥

इकारोपधस्य उकारोपधस्य चाप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः । निर्दुर्बहिराविश्चतुर्प्रादुस् । निस्-निष्कृतम् । निष्पीतम् । दुस्-दुष्कृतम् । दुष्पीतम् । बहिस्-बहिष्कृतम् । बहिष्पीतम् । आविस्-आविष्कृतम् । आविष्पीतम् । चतुर्-चतुष्कृतम् । चतुष्कपालम् । चतुष्कन्दलम् । चतुष्फलम् । प्रादुस्-प्रादुष्कृतम् । प्रादुष्पीतम् । अप्रत्ययस्येति किम् ? अग्निः करोति । वायुः करोति । मातुः करोति । पितुः करोति । अत्र, रात्सस्येति सकारलोपे कृते रेफस्य यो विसर्जनीयस्तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति । कस्कादिषु तु भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य ॥ ॐपुम्मुहुसोः प्रतिषेधो वक्तव्यःॐ । पुस्कामा । मुहुस्कामा(२) । नैष्कुल्यम् । दौष्कुल्यम् । निष्कुलम् ।

---

(१) यशस्पाशमित्यधिकं पुस्तकान्तरे ॥

(२) पुस्तकान्तरे मुहुः कामेति पाठः स एव च युक्तः । अत एव पदमञ्जर्यां मुहुःकामेति प्रतीकमुपादाय, कुप्वोः ≍क≍पौ चेत्येव एव विधिरिति कश्चित् मुहुस्कामेति पठ्यते सोऽपपाठः, नह्यत्र सत्वसंभवः, यत्र वा तयोरनिमित्तत्वादित्युक्तम् ॥

दुश्चकुलम् । दुश्चपुरम् । बहिरङ्गलक्षणयोर्नृङ्क्लिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्तते ॥

तिरसोऽन्यतरस्याम् ॥ ४२ ॥

तिरसो विसर्जनीयस्यान्यतरस्यां सकारादेशो भवति कुप्वो परत । तिरस्कर्ता । तिरस्कर्तुम् । तिरस्कर्त्तव्यम् । तिर कर्त्ता । तिर कर्तुम् । तिर कर्त्तव्यम् । गतेरित्येव । तिर कृत्वा काण्ड गत ॥

द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ॥ ४३ ॥

ष इति संपद्यते । द्विस् त्रिस् चतुर् इत्येतेषां कृत्वोऽर्थे वर्त्तमानानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यां कुप्वो परत । द्विष्करोति । द्वि करोति । त्रिष्करोति । त्रि करोति । चतुष्करोति । चतु करोति । द्विष्पचति । द्वि पचति । त्रिष्पचति । त्रि पचति । चतुष्पचति । चतु पचति । कृत्वोर्थ इति किम् ? चतुष्कपालम् । चतुष्कण्टकम् । पूर्वेण नित्य षत्व भवति । इदुदुपधस्येत्यस्यानुवृत्तौ सत्या कृत्वोर्थविषयेण च पदेन विसर्जनीये विशेष्यमाणे द्विस्त्रिचतुरिति शक्यमकर्तुम् ॥

कृत्वसुजर्थे षत्व ब्रवीति कस्माच्चतुष्कपाले मा ।
षत्व विभाषयाभूत्ननु सिद्ध तत्र पूर्वेण ॥
सिद्धे ह्यथ विधत्त चतुर षत्व यदापि कृत्वोऽर्थे ।
लुप्ते कृत्वोऽर्थेपि रेफस्य विसर्जनीयो हि ॥
एव सति विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम् ।
अन्यो हि नेदुदुपध कृत्वोर्थ कश्चिदप्यस्ति ॥
अक्रियमाणेग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिद्ध्यति तथा रेफस्य विसर्जनीयो हि ॥
तस्मिंस्तु क्रियमाणे युक्त चतुरो विशेषण भवति ।
प्रकृत पद तदन्त तस्यापि विशेषण न्याय्यम् ॥

एव च क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतु शब्दस्य कृत्वोऽर्थेऽपि वर्त्तमानस्य पूर्वेणैव नित्य षत्व स्यात् । पूर्वत्रासिद्धे नास्ति प्रतिषेधोऽभावादुत्तरस्य ॥

इसुसो सामर्थ्ये ॥ ४४ ॥

षेति संपद्यते । इस् उस् इत्येतयोर्विसर्जनीयस्यान्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वो परत । सर्पिष्करोति । सर्पि करोति । यजुष्करोति । यजु करोति । सामर्थ्य इति किम् ? तिष्ठतु सर्पि पिब त्वमुदकम् । सामर्थ्यमिह व्यपेक्षा । न पुनरेकार्थीभाव , उभय वा ॥

नित्यं समासेऽनुत्तरपदस्थस्य ॥ ४५ ॥

इसुसोरिति वर्त्तते । समासविषये इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्य षत्व भवति कुप्वो परत । सर्पिष्कुण्डिका । धनुष्कपालम् । सर्पिष्पानम् । धनुष्फ

लम् । अनुत्तरपदस्थस्येति किम् ? परमसर्पिः कुण्डिका । परमधनुः कपालम् । पूर्वसूत्रेण विकल्पोऽप्यत्र न भवति । एतदेवानुत्तरपदस्थस्येति वचनं ज्ञापकमिसुसोः प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरित्ययं नियमो न भवति । तेन वाक्येऽपि परमसर्पिष्करोति । परमसर्पिः करोति । इसुसोः सामर्थ्यं इत्येतद्भवति । व्यपेक्षा च तत्र सामर्थ्यमाश्रितमिति समासे न भवति ॥

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४६ ॥

अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्यं सकारादेशो भवति कृ कमि कंस कुम्भ पात्र कुशा कर्णी इत्येतेषु परतः । कृ—अयस्कारः । पयस्कारः । कमि—अयस्कामः । पयस्कामः । कंस—अयस्कंसः । पयस्कंसः । कुम्भ—अयस्कुम्भः । पयस्कुम्भः । अयस्कुम्भी, पयस्कुम्भीत्यत्रापि भवति प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति । पात्र—अयस्पात्रम् । पयस्पात्रम् । अयस्पात्री । पयस्पात्री । कुशा—अयस्कुशा । पयस्कुशा । कर्णी—अयस्कर्णी । पयस्कर्णी । शुनस्कर्ण इत्ययं तु कस्कादिषु द्रष्टव्यः । अत इति किम् ? गीःकारः । धूःकारः । तपरकरणं किम् ? भाःकरणम् । भास्कर इत्ययं तु कस्कादिषु द्रष्टव्यः । अनव्ययस्येति किम् ? स्वःकारः । पुनःकारः । समास इत्येव । यशः करोति । पयः करोति । यशः कामयते । अनुत्तरपदस्थस्येत्येव । परमपयःकारः । परमपयःकामः ॥

अधःशिरसी पदे ॥ ४७ ॥

अधस् शिरस् इत्येतयोर्विसर्जनीयस्य समासेऽनुत्तरपदस्थस्य सकार आदेशो भवति पदशब्दे परतः । अधस्पदम् । शिरस्पदम् । अधस्पदी । शिरस्पदी । समास इत्येव । अधःपदम् । अनुत्तरपदस्थस्येत्येव । परमशिरःपदम् । अधस्पदमिति मयूरव्यंसकादित्वात् समासः ॥

कस्कादिषु च ॥ ४८ ॥

कस्क इत्येवमादिषु च विसर्जनीयस्य सकारः षकारो वा यथायोगमादेशो भवति कुप्वोः परतः । कस्कः । कौतस्कुत । कुत आगत इत्यण् । भ्रातुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । सद्यस्क्रीः । क्रीणातेरयं सम्पदादित्वात् क्विप् प्रत्ययः । तत्र भव साद्यस्कः । कांस्कान् । कानाम्रेडित इति रुत्वमत्र । सर्पिष्कुण्डिका । धनुष्कपालम् । बर्हिष्पूलम् । यजुष्पात्रमित्येषा पाठ उत्तरपदस्थस्यापि षत्वं यथा स्यादिति । परमसर्पिः फलमित्येवमादिप्रत्युदाहरणादिति पारायणिका आहुः । भाष्ये वृत्तौ च नित्यं समासेऽनुत्तरपदस्थेत्यत्र परमसर्पिः कुण्डिकेत्येतदेव प्रत्युदाहरणम् । अयस्काण्डः । मेदस्पिण्डः । अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्यः ॥

छन्दसि वाऽप्राम्रेडितयोः ॥ ४९ ॥

छन्दसि विषये विसर्जनीयस्य वा सकारादेशो भवति कुप्वोः परतः प्रशब्दम्

आम्रेडित च यजंथित्वा । अय पात्रम् । अयस्पात्रम् । विश्वत पात्रम् । विश्वतस्पात्रम् । उरुण कार । उरुणस्कार । अपाम्रेडितयोरिति किम् ? अग्नि प्रविद्वान् । परुप परुप परि ॥ सूर्यरश्मिर्हरिकेश पुरस्तात् । स न पावक इत्येवमादिषु सर्वविधयश्छन्दसि विकल्प्यन्त इति सत्व न भवति ॥

क करत्करतिकृधिकृतेष्वनदिते ॥ ५० ॥

क करत् करति कृधि कृत इत्येतेषु परत अनदितेर्विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये । क-विश्वतस्क । करत्-विश्वतस्करत् । करति-पयस्करतिन । कृधि-उरुणस्कृधि । कृत-सदस्कृतम् । अनदितेरिति किम् ? यथा नो अदिति करत् ॥

पञ्चम्या परावध्यर्थे ॥ ५१ ॥

छन्दसीत्येव । पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परत अध्यर्थे । दिवस्परि प्रथम जज्ञे । अग्निर्हिमवतस्परि । दिवस्परि । महस्परि । पञ्चम्या इति किम् ? अहिरिव भोगै पर्येति बाहुम । पराविति किम् ? एभ्यो वा एतल्लोकेभ्य प्रजापति समैरयत् । अध्यर्थ इति किम् ? दिव पृथिव्या पर्योज उद्भृतम् । अत्र परि सर्वतोभावे, अध्यर्थ उपरिभाव ॥

पातौ च बहुलम् ॥ ५२ ॥

पातौ च धातौ परत पञ्चमीविसर्जनीयस्य बहुल सकार आदेशो भवति छन्दसि विषये । दिवस्पातु । राज्ञस्पातु । न च भवति-परिषद पातु ॥

षष्ठ्या पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ५३ ॥

षष्ठ विसर्जनीयस्य सकारादेशो भवति पति पुत्र पृष्ठ पार पद पयस पोष इत्येतेषु परत छन्दसि विषये । वाचस्पतिं विश्वकर्माणमूतये । पुत्र दिवस्पुत्राय सूर्याय । पृष्ठ-दिवस्पृष्ठे धावमान सुपर्णम् । पार-अगन्म तमसस्पारम् । पद-इळस्पदे समिध्यसे । पयस्-सूर्यं चक्षुर्दिवस्पय । पोष-रायस्पोष यजमानेषु धत्तम् । षष्ठ्या इति किम् ? मनु पुत्रेभ्या दाय व्यभजत् ॥

इडाया वा ॥ ५४ ॥

इडाया षष्ठीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतश्छन्दसि विषये । इडायास्पति । इडाया पति । इडायास्पुत्र । इडाया पुत्र । इडायास्पृष्ठम् । इडाया पृष्ठम् । इडायास्पारम् । इडाया पारम् । इडायास्पदम् । इडाया पदम् । इडायास्पय । इडाया पय । इडाया पोषम् । इडायास्पोषम् ॥

अपदान्तस्य मूर्द्धन्य ॥ ५५ ॥

पदाधिकारो निवृत्त । अपदान्तस्येति मूर्द्धन्य इति चैतदधिकृत वेदितव्यम् । आपादपरिसमाप्ते । वक्ष्यति-आदेशप्रत्यययो । सिषेव । सुष्वाप । अग्निषु । वायुषु ।

अपदान्तस्येति किम् ? अग्निस्तत्र । वायुस्तत्र । ष इत्येव सिद्धे मूर्धन्यग्रहणं टकारार्थम् । अकृड्ढ्वम् । चकृड्ढ्वे ॥

## सहेः साडः सः ॥ ५६ ॥

सहेर्धातोः साड्रूपस्य यः सकारस्तस्य मूर्धन्य आदेशो भवति । जलाषाट् । तुराषाट् । पृतनाषाट् । सहेरिति किम् ? सह डेन वर्तते सडस्तस्यापत्यं साडिः । साड्ग्रहणं किम् ? यत्रास्यैतद्रूपं तत्र यथा स्यात् । इह मा भूत्—जलासाहम् । स इति किम् ? आकारस्य मा भूत् ॥

## इण्कोः ॥ ५७ ॥

इण्कोरित्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्याम इणः कवर्गाच्चेत्येवं तद्वेदितव्यम् । वक्ष्यति—आदेशप्रत्यययोः । सिषेव । सुष्वाप । अग्निषु । वायुषु । कर्तृषु । हर्तृषु । गीर्षु । धूर्षु । वाक्षु । त्वक्षु । इण्कोरिति किम् ? दास्यति । ससौ ॥

## नुम्विसर्जनीयशर्व्यवायेऽपि ॥ ५८ ॥

नुम्व्यवायेऽपि विसर्जनीयव्यवायेऽपि शर्व्यवायेऽपि इण्कोरुत्तरस्य सकारस्य मूर्धन्यादेशो भवति । व्यवायशब्दः प्रत्येकमभिसम्बध्यते । नुम्व्यवाये तावत्—सर्पींषि । यजूंषि । हवींषि । विसर्जनीयव्यवाये—सर्पिःषु । यजुःषु । हविःषु । शर्व्यवाये—सर्पिष्षु । यजुष्षु । हविष्षु । नुमादिभिः प्रत्येकं व्यवाय इष्यते, न समस्तैः । तेनेह न भवति—निंस्से । निंस्व इति । णिसि चुम्बने इत्येतस्यैतद्रूपम् । अत्र हि नुमा सकारेण च द्वाभ्यां व्यवधानम् ॥

## आदेशप्रत्यययोः ॥ ५९ ॥

मूर्धन्य इति वर्तते ॥ इति च । आदेशप्रत्यययोरिति षष्ठी भेदेन सम्बध्यते । आदेशो यः सकारः प्रत्ययस्य च यः सकारः इण्कोरुत्तरस्तस्य मूर्धन्यो भवति । आदेशस्य तावत्—सिषेव । सुष्वाप । प्रत्ययस्य—अग्निषु । वायुषु । कर्तृषु । हर्तृषु । इन्द्रो मा वक्षत् । स देवान् यक्षदिति व्यपदेशिवद्भावात् प्रत्ययस्येति षत्वं भवति । वहतेर्यजतेश्च पञ्चमल्लकारे परस्मैपदप्रथमैकवचने इकारलोपे लेटोऽडाटावित्यटि सिब्बहुलं लेटीति सिप्, ततः सिद्धं यक्षत्, वक्षत्, इति ॥

## शासिवसिघसीनां च ॥ ६० ॥

शासि वसि घसि इत्येतेषां च इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति । अन्वशिषत् । अन्वशिषताम् । अन्वशिषन् । शिष्टः । शिष्टवान् । वसि—उषितः । उषितवान् । उषित्वा । घसि—जक्षतुः । जक्षुः । घसिभसोर्हलि चेत्युपधालोपः—अक्षन्नमीमदन्त पितरः । अनादेशार्थं वचनम् । घसिर्यद्यप्यादेशः सकारस्त्वादेशो न भवति । इण्कोरित्येव । शास्ति । वसति । जघास ॥

स्तौतिण्योरेव षण्यभ्यासात् ॥ ६१ ॥

स्तौतेर्ण्यन्तानां च षत्वभूते सनि परतः अभ्यासादिण उत्तरस्य आदेशसकारस्य मूर्द्धन्यादेशो भवति । तुष्टूषति । ण्यन्तानाम्-सिषेवयिषति । सिषञ्जयिषति । सुष्वापयिषति । सिद्धे सत्यारम्भो नियमार्थः, स्तौतिण्योरेव षण्यभ्यासाद्यथा स्याद् न्यस्य मा भूत् । सिसिक्षति । सुसूषति । एवकारस्करणमिष्टतोऽवधारणार्थम् । स्तौतिण्योः षण्येवेति हि विज्ञायमाने सुष्टावेत्यत्र न स्यात् । इह च स्यादेव सिसिक्षतीति' षणीति किम् ? अन्यत्र नियमो माभूत्-सिषेव । को विनतेऽनुरोधः ? अविनते नियमें मा भूत्-सुसुप्सति । तितासति । क्व' तत्सुषन्धेऽनुरोधः ? षत्वभूतमात्रे नियमो म भूत-सुषुप्सि इन्द्रम् (१) । अभ्यासादिति किम् ? अभ्यासाद् या प्राप्तिस्तस्य नियमो यथा स्याद्धातोर्या (२) प्राप्तिस्तस्या नियमो मा भूत् । प्रतीषिषति । अधीषिषति ॥

सः स्विदिस्वदिसहीनां च ॥ ६२ ॥

स्विदि स्वदि सहि इत्येतेषां ण्यन्तानां सनि षभूते परतोऽभ्यासादुत्तरस्य सकारस्य सकारादेशो भवति । स्विदि-सिस्वेदयिषति । स्वदि-सिस्वादयिषति । सहि-सिसाहयिषति । सकारस्य सकारवचनं मूर्द्धन्यनिवृत्त्यर्थम् ॥

प्राक्सितादड्व्यवायेऽपि ॥ ६३ ॥

सेवसितेति वक्ष्यति प्राक्सितसशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामस्तत्राड्व्य वायेऽपि मूर्द्धन्यो भवतीत्येवं सद्देदितव्यमपिशब्दादनड्व्यवायेऽपि वक्ष्यति । उप सर्गात्सुनोतिस्सुवतीति षत्वम् । अभिषुणोति । परिषुणोति । विषुणोति । निषुणोति अभ्यषुणोत् । पर्यषुणोत् । व्यषुणोत् । न्यषुणोत् ॥

स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥

प्राक् सितादिति वर्तते । उपसर्गाद् सुनोतीत्यत्र स्थासेनयसेधेति स्थादयस्तेषु स्थादिषु प्राक् सितसशब्दनाद् अभ्यासेन व्यवाये मूर्द्धन्यो भवत्यभ्याससकारस्य च भवतीत्येवं वेदितव्यम् । अभ्यासेन व्यवाये अपोपदेशार्थं च-अभिषिषेणयिषति । परिषिषेणयिषति । अवर्णान्ताभ्यासार्थं च-अभितष्ठौ । परितष्ठौ । षणि प्रतिषेधार्थं च-अभिषिषिक्षति । परिषिषिक्षति । अभ्यासस्येति वचनं नियमार्थं स्थादिष्वेवाभ्यास कारस्य मूर्द्धन्यो भवति नान्यत्र-अभिसुसूषति । अभिसिषासति ॥

उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेध-
सिचसञ्जस्वञ्जाम् ॥ ६५ ॥

मूर्द्धन्य इति वर्त्तते स इति च । उपसर्गस्थान्निमित्तादुत्तरस्य सुनोति सुवति

(१) स्वपेर्हिटि षात स इति रूपमित्यधिकं पुस्तकान्तरे । (२) धातोरित्यनद्रितीयेति पाठ तन्त्र ॥

स्यति स्तौति स्तोभति स्था सेनय सेध सिच सञ्ज स्वञ्ज इत्येतेषां सकारस्य मूर्द्धन्यादेशो भवति । सुनोति–अभिषुणोति । परिषुणोति । अभ्यषुणोत् । पर्यषुणोत् । सुवति–अभिषुवति । परिषुवति । अभ्यषुवत् । पर्यषुवत् । स्यति–अभिष्यति । परिष्यति । अभ्यष्यत् । पर्यष्यत् । स्तौति–अभिष्टौति । अभ्यष्टौत् । स्तोभति–अभिष्टोभते । परिष्टोभते । अभ्यष्टोभत । पर्यष्टोभत । स्था–अभिष्ठास्यति । परिष्ठास्यति । अभ्यष्ठात् । पर्यष्ठात् । अभितष्ठौ । परितष्ठौ । सेनय–अभिषेणयति । परिषेणयति । अभ्यषेणयत् । पर्यषेणयत् । अभिषिषेणयिषति । परिषिषेणयिषति । सेध–अभिषेधति । परिषेधति । अभ्यषेधत् । पर्यषेधत् । सिच–अभिषिञ्चति । परिषिञ्चति । अभ्यषिञ्चत् । पर्यषिञ्चत् । अभिषिषिक्षति । परिषिषिक्षति । सञ्ज–अभिषजति । परिषजति । अभ्यषजत् । पर्यषजत् । अभिषिषङ्क्षति । परिषिषङ्क्षति । स्वञ्ज–अभिष्वजते । परिष्वजते । अभ्यष्वजत । पर्यष्वजत । अभिषिष्वङ्क्षते । परिषिष्वङ्क्षते । सेध इति शब्विकरणनिर्देशः सिध्यतिनिवृत्त्यर्थः । उपसर्गादिति किम् ? दधि सिञ्चति । मधु सिञ्चति । निर्गताः सेचका अस्माद्देशान्निः सेचको देश इति । नायं सिचेरुपसर्गः । अभिसावकीयतीत्यत्रापि न सुनोतिं प्रति क्रियायोगः, किं तर्हि ? सावकीय प्रति । अभिषावयतीत्यत्र तु सुनोतिमेव प्रति क्रियायोगो न सावयतिम्प्रतीति षत्वं भवति ॥

सदिरप्रतेः ॥ ६६ ॥

सदेः सकारस्य उपसर्गस्थान्निमित्तादप्रतेरुत्तरस्य मूर्द्धन्य आदेशो भवति । निषीदति । विषीदति । न्यषीदत् । व्यषीदत् । निषसाद । विषसाद । अप्रतेरिति किम् ? प्रतिसीदति ॥

स्तम्भेः ॥ ६७ ॥

उपसर्गादिति वर्तते । स्तम्भेः सकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य मूर्द्धन्य आदेशो भवति । अभिष्टभ्नाति । परिष्टभ्नाति । अभ्यष्टभ्नात् । पर्यष्टभ्नात् । अभितष्टम्भ । परितष्टम्भ । अप्रतेरित्येतदिह नानुवर्तते, तेनैतदपि भवति—प्रतिष्टभ्नाति । प्रत्यष्टभ्नात् । प्रतितष्टम्भ ॥

अवाच्चालम्बनाविदूर्ययोः ॥ ६८ ॥

अवशब्दादुपसर्गादुत्तरस्य स्तम्भेः सकारस्य मूर्द्धन्यादेशो भवति, आलम्बनेऽर्थे आविदूर्ये च । आलम्बनमाश्रयणम् । अविदूरस्य भाव आविदूर्यम् । आलम्बने तावत्–अवष्टभ्यास्ते । अवष्टभ्य तिष्ठति । आविदूर्ये–अवष्टब्धा सेना । अवष्टब्धा शरत् । आलम्बनाविदूर्ययोरिति किम् ? अवस्तब्धो वृषलः शीतेन । अनिगर्थ आरम्भः ॥

वेश्च स्वनो भोजने ॥ ६९ ॥

वेरुपसर्गादवाच्चोत्तरस्य भोजनार्थे स्वनतेः सकारस्य मूर्द्धन्यादेशो भवति ।

विष्वणति। व्यष्वणत्। विषष्वाण। अवष्वणति। अवाष्वणत्। अवषष्वाण। अभ्यवहारक्रियाविशेषोऽभिधीयते, यत्र स्वननमस्ति। भोजन इति किम्? विस्वनति मृदङ्ग (१)॥

परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ॥ ७० ॥

परि नि वि इत्येतेभ्य उपसर्गेभ्य उत्तरेषां सेव सित सय सिवु सह सुट् स्तु स्वञ्ज इत्येतेषां सकारस्य मूर्धन्य आदेशो भवति। परिषेवते। निषेवते। विषेवते। पर्यषेवत। न्यषेवत। व्यषेवत। परिषिषेविषते। निषिषेविषते। विषिषेविषते। सित परिषितो, निषित। विषित। सय-परिषयो, निषयो, विषय। सिव्-परिषीव्यति। निषीव्यति। विषीव्यति। पर्यषीव्यत्। न्यषीव्यत्। व्यषीव्यत्। पर्यसीव्यत्। न्यसीव्यत्। व्यसीव्यत्। सह-परिषहते। निषहते। विषहते। पर्यषहत। न्यषहत। व्यषहत। पर्यसहत। न्यसहत। व्यसहत। सुट्-परिष्करोति। पर्यष्करोत्। पर्यस्करोत्। स्तु-परिष्टौति। निष्टौति। विष्टौति। पर्यष्टौत्। न्यष्टौत्। व्यष्टौत्। पर्यस्तौत्। न्यस्तौत्। व्यस्तौत्। स्वञ्ज-दंशसञ्जस्वञ्जामिति नलोप। परिष्वजते। निष्वजते। विष्वजते। पर्यष्वजत। पर्यस्वजत। पूर्वेणैव सिद्धे स्तुस्वञ्जिग्रहणमुत्तरार्थम्। अड्व्यवाये विभाषा यथा स्यात्॥

सिवादीनां वाड्व्यवायेऽपि ॥ ७१ ॥

अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जामिति सिवादय। सिवादीनामड्व्यवायेऽपि परिनिविभ्य उत्तरस्य सकारस्य वा मूर्धन्यो भवति। तथा चैवोदाहृतम्(२)॥

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥७२॥

अनु वि परि अभि नि इत्येतेभ्य उत्तरस्य स्यन्दतेरप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति। अनुष्यन्दते। विष्यन्दते। परिष्यन्दते। अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते। विस्यन्दते। परिस्यन्दते। अभिस्यन्दते। निस्यन्दते। अप्राणिष्विति किम्? अनुस्यन्दते मत्स्य उदके। प्राण्यप्राणिविषयस्यापि स्यन्दतेरयं विकल्पो भवति। अनुष्यन्देते मत्स्योदके। अनुस्यन्देते। अप्राणिष्विति पर्युदासोऽयं न प्रसज्यप्रतिषेध॥

वे. स्कन्देरनिष्ठायाम् ॥ ७३ ॥

वेरुपसर्गादुत्तरस्य स्कन्दे सकारस्य मूर्धन्यो वा भवति अनिष्ठायाम्। विष्कन्ता। विस्कन्ता। विष्कन्तुम्। विस्कन्तुम्। विष्कन्तव्यम्। विस्कन्तव्यम्। अनिष्ठायामिति किम्? विस्कन्न॥

परेश्च ॥ ७४ ॥

परिशब्दाच्चोत्तरस्य स्कन्दे सकारस्य वा मूर्धन्यो भवति। परिष्कन्ता। परिष्क

---

१ अवस्वनति चोखे यधिक पुस्तकान्तरे।

२ व चित्पुस्तके पूर्वसूत्रोदाहृता यड्व्यवायनिरूपाण्यत्रैवोदाहृतानि।

न्तुम् । परिष्कन्तव्यम् । परिस्कन्ता । परिस्कन्तुम् । परिस्कन्तव्यम् । पृथग्योगकरणसामर्थ्यादनिष्ठायामित्येतन्नानुवर्त्तते । परिष्कण्णः । परिस्कन्नः ॥

परिस्कन्दः प्राच्यभरतेषु ॥ ७५ ॥

परिस्कन्द इति मूर्द्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु । पूर्वेण मूर्द्धन्ये प्राप्ते तदभावो निपात्यते । परिस्कन्दः । अन्यत्र परिष्कन्दः । अचि निपातनम् । अथवा निष्ठातकारस्य लोपः, भरतग्रहणं प्राच्यविशेषणम् ।

स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ७६ ॥

स्फुरतिस्फुलत्योः सकारस्य निस् नि वि इत्येतेभ्य उत्तरस्य वा मूर्द्धन्यादेशो भवति । स्फुरति-निष्ष्फुरति । निस्स्फुरति । निष्फुरति । निस्फुरति । विष्फुरति । विस्फुरति । स्फुलति-निष्ष्फुलति । निस्स्फुलति । निष्फुलति । निस्फुलति । विष्फुलति । विस्फुलति ॥

वेः स्कभ्नातेर्नित्यम् ॥ ७७ ॥

वेरुत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्द्धन्यादेशो भवति । विष्कभ्नाति । विष्कम्भिता । विष्कम्भितुम् । विष्कम्भितव्यम् ॥

इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ७८ ॥

मूर्द्धन्य इति वर्त्तते । इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्द्धन्यादेशो भवति । च्योषीढ्वम् । प्लोषीढ्वम् । लुङ्-अच्योढ्वम् । अप्लोढ्वम् । लिट्-चकृढ्वे । इण्कोरिति वर्त्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम् । पक्षीध्वं । यक्षीध्वं । षीध्वंलुङ्लिटामिति किम् ? स्तुध्वे । स्तुध्वम् । अङ्गादिति किम् ? परिवेविषीध्वम् । अर्थवद्ग्रहणादपि सिद्धं तत्तु नाश्रितम् ॥

विभाषेटः ॥ ७९ ॥

इणः परस्मादिट उत्तरेषां षीध्वंलुङ्लिटां यो धकारस्तस्य मूर्द्धन्यादेशो भवति विभाषा । लविषीढ्वम् । लविषीध्वम् । पविषीढ्वम् । पविषीध्वम् । लुङ्-अलविढ्वम् । अलविध्वम् । लिट्-लुलुविढ्वे । लुलुविध्वे । इण इत्येव, आसिषीध्वम् । अथेह कथं भवितव्यम्—उपदिदीयिध्वे ? केचिदाहुः—इणन्तादङ्गादुत्तरस्य इट आनन्तर्यं युटा व्यवहितमिति न भवितव्यं ढत्वेनेति । अपरेषां दर्शनमङ्गादिति निवृत्तमिण इत्यनुवर्त्तते । ततश्च यकारादेव इणः परोऽनन्तरमिडिति पक्षे भवितव्यं मूर्द्धन्येनेति ॥

समासेऽङ्गुलेः सङ्गः ॥ ८० ॥

सङ्गसकारस्याङ्गुलेरुत्तरस्य मूर्द्धन्य आदेशो भवति समासे । अङ्गुलेः सङ्ग, अङ्गुलिषङ्गः । अङ्गुलिषङ्गा यवागूः । अङ्गुलिषङ्गो गाः सादयति । समास इति किम् ? अङ्गुलेः सङ्गं पश्य ॥

भीरोः स्थानम् ॥ ८१ ॥

स्थानसकारस्य भीरोरुत्तरस्य मूर्द्धन्यादेशो भवति । भीरुष्ठानम् । समास इत्येव । भीरोः स्थानं पश्य ॥

अग्नेः स्तुत्स्तोमसोमाः ॥ ८२ ॥

अग्नेरुत्तरस्य स्तुत् स्तोम सोम इत्येतेषां सकारस्य मूर्द्धन्यादेशो भवति समासे। अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमः ॥ अग्नेर्दीर्घात् सोमस्येष्यते ॥ तेनेह न भवति-अग्निसोमौ माणवकौ । अथापि ज्योतिरग्निः सोमो लताविशेषः-अग्निसोमौ तिष्ठतः। समास इत्येव । अग्नेः सोमः ॥

ज्योतिरायुषः स्तोमः ॥ ८३ ॥

ज्योतिस् आयुस् इत्येताभ्यामुत्तरस्य स्तोमसकारस्य मूर्द्धन्यादेशो भवति समासे । ज्योतिष्टोमः । आयुष्टोमः । समास इत्येव । ज्योतिः स्तोमं दर्शयति ॥

मातृपितृभ्यां स्वसा ॥ ८४ ॥

मातृ पितृ इत्येताभ्यामुत्तरस्य स्वसृसकारस्य समासे मूर्द्धन्यादेशो भवति । मातृष्वसा । पितृष्वसा ॥

मातुः पितुर्भ्यामन्यतरस्याम् ॥ ८५ ॥

मातुर् पितुर् इत्येताभ्यामुत्तरस्य स्वसृशब्दस्यान्यतरस्यां मूर्द्धन्यादेशो भवति समासे । मातुःष्वसा । मातुः स्वसा । पितुःष्वसा । पितुःस्वसा । मातुःपितुरिति रेफान्तयोरेतद्ग्रहणम् । एकदेशविकृतस्यानन्यत्वाद्विसर्जनीयान्तात् सकारान्तात् परं भवति । समास इत्येव । वाक्ये मा भूत्-मातुः स्वसेत्येव नित्यं भवति ॥

अभिनिसस्तनः शब्दसंज्ञायाम् ॥ ८६ ॥

अभि निस् इत्येतस्मादुत्तरस्य स्तनतिसकारस्य मूर्द्धन्यादेशो भवति अन्यतरस्यां शब्दसंज्ञायां गम्यमानायाम् । अभिनिष्टानो वर्णः । अभिनिष्टानो विसर्जनीयः। अभिनिस्तानो वर्णः । अभिनिस्तानो विसर्जनीयः (१) । शब्दसंज्ञायामिति किम् ? अभिनिस्तनति मृदङ्गः (२) । समास इत्यतः प्रभृति निवृत्तम् ॥

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८७ ॥

उपसर्गस्थान्निमित्तात्प्रादुस् शब्दाच्चोत्तरस्य यकारपरस्याच्परस्य चास्तिसकारस्य मूर्द्धन्यो भवति । अभिषन्ति । निषन्ति । विषन्ति । प्रादुःषन्ति । अभिष्यात् । निष्यात् । विष्यात् । प्रादुःष्यात् । उपसर्गादिति किम् ? दधिस्यात् । मधुस्यात् । अस्तीति किम् ? अनुसृतम् । विसृतम् । अथासत्यपि अस्तिग्रहणे सकारमेव प्रति उपसर्गं आश्रीयते । प्रादुःशब्दस्य च कृभ्वस्तिष्वेव प्रयोग इत्यन्यत्राप्रसङ्गः ? तथाप्येतत्प्रत्युदाहर्त्तव्यम्-अनुसूते अनुसूः । अनुस्वोऽपत्य आनुसेयः शुभ्रादित्वाड्ढक् ।

१ विसर्जनीयस्येत्र संशेयमिदं पुस्तकान्तरे २. कश्चिदित्यधिकं ॥

ढेलोपोऽकद्र्वा इत्युवर्णलोपः । यत्पर इति किम् ? निस्तः । विस्तः । प्रादुस्तः ॥

सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८८ ॥

सु वि निर् दुर् इत्येतेभ्य उत्तरस्य सुपि सूति सम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति । सुपीति स्वपेः कृतसंप्रसारणस्य ग्रहणम्—सुषुप्तः । विषुप्तः । निःषुप्तः । दुःषुप्तः । सूतिरिति स्वरूपग्रहणम्—सुषूतिः । विषूतिः । निःषूतिः । दुःषूतिः । समसुषमम् । विषमम् । निःषमम् । दुःषमम् ॥

* सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न । हलादिशेषान्न सुपिरिष्ट पूर्वं प्रसारणम् ॥

स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः । अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ॥ पूर्वत्रासिद्धीयमद्विर्वचने इति कृते षत्वे ततो द्विर्वचनम् ॥

निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥

नि नदी इत्येताभ्यामुत्तरस्य स्नातिसकारस्य मूर्धन्यादेशो भवति कौशले गम्यमाने । निष्णातः कटकरणे । निष्णातो रज्जुवर्तने । नद्यां स्नातीति नदीष्णः । सुपि स्थ इत्यत्र सुपीति योगविभागात्कप्रत्ययः । कौशल इति किम् ? निस्नातः । नद्यां स्नातो नदीस्नातः इति ॥

सूत्रं प्रतिष्णातम् ॥ ९० ॥

प्रतिष्णातमिति निपात्यते, सूत्रं चेद्भवति । प्रतिष्णातं सूत्रम् । शुद्धमित्यर्थः । प्रतिस्नातमित्येवान्यत्र ॥

कपिष्ठलो गोत्रे ॥ ९१ ॥

कपिष्ठल इति निपात्यते गोत्रविषये । कपिष्ठलो नाम, यस्य सः कापिष्ठलिः पुत्रः । गोत्र इति किम् ? कपेः स्थलं कपिस्थलम् ॥

प्रष्ठोऽग्रगामिनि ॥ ९२ ॥

प्रष्ठ इति निपात्यते अग्रगामिन्यभिधेये । प्रतिष्ठत इति प्रष्ठोऽश्वः । अग्रतो गच्छतीत्यर्थः । अग्रगामिनीति किम् ? प्रस्थे हिमवतः पुण्ये । प्रस्थो व्रीहीणाम् ॥

वृक्षासनयोर्विष्टरः ॥ ९३ ॥

विष्टर इति निपात्यते वृक्षे आसने च वाच्ये । विपूर्वस्य स्तृणाते षत्वं निपात्यते । विष्टरो वृक्षः । विष्टरमासनम् । वृक्षासनयोरिति किम् ? औलपिक्यस्य विस्तर (१) ॥

छन्दोनाम्नि च ॥ ९४ ॥

विष्टार इति निपात्यते । विपूर्वात् स्तृ इत्येतस्माद्धातोः छन्दोनाम्नि चेत्येवं विहितो घञ् इति विष्टर इत्यपि प्रकृतेर्विष्टार इति विज्ञायते । विष्टारपङ्क्तिः छन्दः । विष्टारोबृहती छन्दः । छन्दोनाम्नीति किम् ? पटस्य विस्तारः ॥

(१) एतदुत्तरं विस्तर वाक्यमादेति पुस्तकान्तरेऽधिकम् ॥

गवियुधिभ्यां स्थिरः ॥ ९५ ॥

गवियुधिभ्यामुत्तरस्य स्थिरसकारस्य मूर्द्धन्यादेशो भवति। गविष्ठिरः। गोशब्दादहलन्तादपि एतस्मादेव निपातनात् सप्तम्या अलुग्भवति॥

विकुशमिपरिभ्यः स्थलम् ॥ ९६ ॥

वि कु शमि परि इत्येतेभ्य उत्तरस्य स्थलसकारस्य मूर्द्धन्यादेशो भवति। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्॥

अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जि-
परमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ९७ ॥

अम्ब आम्ब गो भूमि सव्य अप द्वि त्रि कु शेकु शङ्कु अङ्गु मञ्जि पुञ्जि परमे बर्हिस् दिवि अग्नि इत्येतेभ्य उत्तरस्य स्थशब्दसकारस्य मूर्द्धन्यादेशो भवति। अम्बष्ठः। आम्बष्ठः। गोष्ठः। भूमिष्ठः। सव्येष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। बर्हिष्ठः। दिविष्ठः। अग्निष्ठः॥ स्थास्थिन्स्थॄणामिति वक्तव्यम्॥ सव्येष्ठा। परमेष्ठी। सव्येष्ठा सारथिः॥

सुषामादिषु च ॥ ९८ ॥

सुषामादिषु शब्देषु सकारस्य मूर्द्धन्यादेशो भवति। शोभनं साम यस्यासौ सुषामा ब्राह्मणः। दुष्षामा। निष्षामा। निष्षेधः। दुष्षेधः। सुशब्दस्य कर्मप्रवचनीयसंज्ञकत्वान्निर्दुःशब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोऽयम्। सेधतेर्गताविति वा प्रतिषेधबाधनार्थः। सुषन्धिः। दुःषन्धिः। निःषन्धिः। सुष्ठु। दुष्ठु। तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते। गौरिषक्थः संज्ञायाम्। ङ्यापोः संज्ञाछन्दसोर्बहुलमिति पूर्वपदस्य ह्रस्वत्वम्। प्रतिष्णिका। प्रतिष्णाशब्दादयं कन् प्रत्ययः। जलाषाहम्। नौषेचनम्। दुन्दुभिषेवनम्॥

एति संज्ञायामगात् ॥ ९९ ॥

एकारपरस्य सकारस्य मूर्द्धन्यादेशो भवति इण्कोरुत्तरस्यागकारात् परस्य संज्ञायां विषये। हरिषेणः। वारिषेणः। जानुषेणी। एतीति किम्? हरिसक्थम्। संज्ञायामिति किम्? पृथ्वी सेना यस्य स पृथुसेनो राजा। अगादिति किम्? विष्वक्सेनः। इण्कोरित्येव। सर्वसेनः॥

नक्षत्राद्वा ॥ १०० ॥

नक्षत्रवाचिनः शब्दादुत्तरस्य सकारस्य वा एति संज्ञायामगकारात् मूर्द्धन्यो भवति। रोहिणीषेणः। रोहिणीसेनः। भरणीषेणः। भरणीसेनः। अगकारादित्येव। शतभिषक्सेनः। अविहितलक्षणो मूर्द्धन्यः सुषामादिषु द्रष्टव्यः॥

ह्रस्वात्तादौ तद्धिते ॥ १०१ ॥

ह्रस्वादुत्तरस्य सकारस्य मूर्द्धन्यादेशो भवति तादौ तद्धिते परतः। तर तम तय

स्व तल् तस् त्यप् एतानि प्रयोजयन्ति । तर सर्पिष्टरम् । यजुष्टरम् । तम-सर्पिष्टमम् । यजुष्टमम् । त्व-चतुष्टवे ब्राह्मणाना निकेता । त्व सर्पिष्ट्वम् । यजुष्ट्वम् । तल्-सर्पिष्टा । यजुष्टा । तस्-सर्पिष्ट । यजुष्ट । त्यप्-आविष्ट्यो वर्द्धते । ह्रस्वादिति किम् ? गीस्तरा । धूस्तरा । तादाविति किम् ? सर्पिस्साद्भवति । प्रत्ययसकारस्य सापदाद्योरिति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात् । तद्धित इति किम् ? सर्पिस्तरति । ॐतिङन्तस्य प्रतिषेधो वक्तव्य ॐ । भिन्द्युस्तराम् । छिन्द्युस्तराम् ॥

## निसस्तपतावनासेवने ॥ १०२ ॥

निस सकारस्य मूर्द्धन्यादेशो भवति तपतौ परतोऽनासेवनेऽर्थ । आसेवन पुन पुनःकरणम् । निष्टपति सुवर्णम् । सकृदग्निं स्पर्शयतीत्यर्थ । अनासेवन इति किम् ? निस्तपति सुवर्णं सुवर्णकार । पुन पुनरग्निं स्पर्शयतीत्यर्थ । निष्टप्त रक्षो निष्टप्ता अरातय इत्यत्र सदप्यासेवन न विवक्ष्यते । छान्दसो वा वर्णविकार ॥

## युष्मत्तत्ततक्षुःष्वन्त पादम् ॥ १०३ ॥

युष्मत् तत् ततक्षुस इत्येतेषु तकारादिषु परत सकारस्य मूर्द्धन्यादेशो भवति स चेत्सकारोऽन्त पाद भवति । युष्मदादेशास्त्व त्वा ते तव । अग्निष्ट्व नामासीत् । त्वा-अग्निष्ट्वा वर्द्धयामसि । ते-अग्निष्टे विश्वा मानाय । तव-अप्स्वग्ने सधिष्टव । तत्-अग्निष्टद्विश्वमापृणाति । ततक्षुस्-द्यावापृथिवी निष्टतक्षु । अन्त पादमिति किम् ? नित्यमा मन्यो मिन्द्रामूदग्निस्तत्पुनराह जातवेदा विचर्षणि ॥

## यजुष्येकेषाम् ॥ १०४ ॥

यजुषि विषये युष्मत्तत्ततक्षुषु परत एकेषामाचार्याणा मतेन सकारस्य मूर्द्धन्यादेशो भवति । अर्चिभिष्ट्वम् । अर्चिर्भिस्त्वम् । अग्निष्टेऽग्रम् । अग्निस्तेऽग्रम् । अग्निष्टत् । अग्निस्तत् । अर्चिर्भिष्टतक्षु । अर्चिर्भिस्ततक्षु ॥

## स्तुतस्तोमयोश्छन्दसि ॥ १०५ ॥

एकेषामिति वर्त्तते । स्तुत स्तोम इत्येतयो सकारस्य छन्दसि विषये मूर्द्धन्यादेशो भवति एकेषामाचार्याणा मतेन । त्रिभिष्टुतस्य । त्रिभिस्तुतस्य । गोष्टोमं षोडशिनम् । गोस्तोमं षोडशिनम् । पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम् ॥

## पूर्वपदात् ॥ १०६ ॥

छन्दसीति वर्त्तते एकेषामिति च । पूर्वपदस्थान्निमित्तात्परस्य सकारस्य मूर्द्धन्यादेशो भवति छन्दसि विषये एकेषामाचार्याणा मतेन । द्विषन्धि । त्रिषन्धि । द्विसन्धि । त्रिसन्धि । मधुष्ठानम् । मधुस्थानम् । द्विषाहस्र चिन्वीत । द्विसाहस्र चिन्वीत । असमासेऽपि च पूर्वपद तदपीह गृह्यते । त्रिषमृद्धत्वाय । त्रि समृद्धत्वाय ॥

## सुञ ॥ १०७ ॥

सुञिति निपात इह गृह्यते तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य मूर्द्धन्यादेशो

भवति छन्दसि विषये । अभीषुणः सखीनाम् । ऊर्द्ध्व ऊषुणः । इकः सुञीति दीर्घं । नश्च धातुस्थोरुषुभ्य इति णत्वम्(१) ॥

सनोतेरनः ॥ १०८ ॥

सनोतेरनकारान्तस्य सकारस्य मूर्द्धन्यादेशो भवति । गोषाः । नृषाः । अन इति किम् ? गोसनिं वाचमुदीरयन् । पूर्वपदादित्येव सिद्धे नियमार्थमिदम् । तत्र केचित्सवनादिपाठाद्गोसनिर्नियमस्य फलं न भवतीति सिसानयिषतीति प्रत्युदाहरन्ति। सिसनिषतेरप्रत्ययः सिसनीरित्यपरे ॥

सहेः पृतनर्त्ताभ्यां च ॥ १०९ ॥

पृतना ऋत इत्येताभ्यामुत्तरस्य सहिसकारस्य मूर्द्धन्यादेशो भवति । पृतनाषाहम् । ऋताषाहम् । केचिद्योगविभाग सहेरिति कुर्वन्ति । ऋतीषहमित्यत्रापि यथा स्यात् । ऋतिशब्दस्य पूर्वपदस्य संहितायामेतद्दीर्घत्वम् । अवग्रहे तु ऋतिसहमित्येव भवति । चकारोऽनुक्तसमुच्चयार्थः । तेन ऋतीषहमिति सिद्धम् ॥

न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ ११० ॥

रेफपरस्य सकारस्य सृपि सृजि स्पृशि स्पृहि सवनादीनां च मूर्द्धन्यो भवति । रपर-विस्रसिकायाः काण्डं जुहोति । विस्रब्धः कथयति । सृपि-पुरा विसृपः । सृजि-वाचो विसर्जनात् । स्पृशि-दिविस्पृशम् । स्पृहि-निस्पृहं कथयति। सवनादीनाम्-सवने २ । सूते २ । सामे २ । सवनमुखे २ । किंस २ । किं स्यती किंसः । अनुसवनम् २ । गोसनिम् २ । अश्वसनिम् २ । पूर्वपदादिति प्राप्ते प्रतिषेधः । अश्वसनिग्रहणमणिणोऽपि षत्वमस्तीति ज्ञापनार्थम् । तेन जलाषाहमश्वषाहमित्येतत् सिद्धं भवति । क्वचिदेव गणपाठः-सवनेसवने । अनुसवने २ संज्ञायां बृहस्पति सव । शकुनिसवनम् । सोमे २ । सूते २ । संवत्सरे २ । किंसम् २ । विसम् २ । सुसम् २ । गोसनिमश्वसनिम् ॥ सवनादि

सात्पदाद्योः ॥ १११ ॥

सादिति एतस्य पदादेश्च मूर्द्धन्यादेशो न भवति ।(२)विभाषा साति कार्त्स्न्ये । प्रत्ययसकारत्वात् प्राप्तिः । पदादेश्चादेशसकारत्वात् । सात्-अग्निसात् । दधिसात् । मधुसात् । पदादेः-दधि सिञ्चति । मधु सिञ्चति ॥

सिचो यङि ॥ ११२ ॥

सिचः सकारस्य यङि परतो मूर्द्धन्यादेशो न भवति । सेसिच्यते । अभिसेसिच्यते । उपसर्गादिति या प्राप्तिः सा पदादिलक्षणमेव प्रतिषेधं बाधते न सिचो यङी ति । तस्मादयं प्रतिषेधः सर्वत्र भवति । यङीति किम् अभिषिषिक्षति ॥

(१) "इकः सुञि" इति दीर्घः । नश्चधातुस्थोरुषुभ्य इति णत्वं इति पुस्तकान्तरे नास्ति ॥ (२) इत आरभ्यादेशसकारादित्यन्तं पुस्तकान्तरे नास्ति ॥

सेघतेर्गतौ ॥ ११३ ॥

गतौ वर्त्तमानस्य सेधतेः सकारस्य मूर्द्धन्यादेशो न भवति । अभिसेधयति गाः । परिसेधयति गाः । गताविति किम् ? शिष्यमकार्यात् प्रतिषेधयति ॥

प्रतिस्तब्धनिस्तब्धौ च ॥ ११४ ॥

प्रतिस्तब्ध निस्तब्ध इत्येतौ मूर्द्धन्यप्रतिषेधाय निपात्येते । स्तन्भेरिति प्राप्तं षत्वं प्रतिषिध्यते । प्रतिस्तब्धः । निस्तब्धः ॥

सोढः ॥ ११५ ॥

सहिरय सोढभूतो गृह्यते तस्य सकारस्य मूर्द्धन्यादेशो न भवति । परिसोढः । परिसोढुम् । परिसोढव्यम् । सोढभूतग्रहणं किम् ? परिषहते ॥

स्तम्भुसिवुसहां चङि ॥ ११६ ॥

स्तम्भु सिवु सह इत्येतेषां चङि परतः सकारस्य मूर्द्धन्यादेशो न भवति । स्तन्भेरिति प्राप्तः परिनिविभ्य इति च मूर्द्धन्यः प्रतिषिध्यते । स्तम्भु-पर्यतस्तम्भत् । अभ्यतस्तम्भत् । सिवु-पर्यसीषिवत् । न्यसीषिवत् । सह-पर्यसीषहत् । व्यसीषहत् । *स्तम्भुसिवुसहां चङि उपसर्गादिति वक्तव्यम्* । उपसर्गात्प्राप्तिस्तस्याः प्रतिषेधो यथा स्यात् । अभ्यासात्प्राप्तिस्तस्य मा भूदिति । तथा चैवोदाहृतम् ॥

सुनोतेः स्यसनोः ॥ ११७ ॥

सुनोतेः सकारस्य मूर्द्धन्यादेशो न भवति स्ये सनि च परतः । अभिसोष्यति । परिसोष्यति । अभ्यसोष्यत् । पर्यसोष्यत् । सनि किमुदाहरणम् ? सुसूषति । नैतदस्ति प्रयोजनं, तत्र स्तौतिण्योरेव षण्यभ्यासादिति नियमाद् न भविष्यति । इदं तर्हि-अभिसुसूषते । एतदपि नास्ति । स्थादिष्वभ्यासेन चाभ्यासस्येति नियमात् । इदं तर्ह्यभिसुसूषतेरप्रत्ययः अभिसुसूरित्युदाहरणमिति । अत्र हि सन् षभूतो न भवतीत्यव्याप्त्यात् नास्तिरस्ति । स्यसनोरिति किम् ? सुषाव ॥

सदिष्वञ्जोः परस्य लिटि ॥ ११८ ॥

सदि ष्वञ्ज इत्येतयोर्द्धात्वोर्लिटि परतः सकारस्य परस्य मूर्द्धन्यो न भवति । अभिषसाद । परिषसाद । निषसाद । विषसाद । परिषस्वजे । परिषस्वजाते । परिषस्वजिरे । अभिषस्वजे । स्वञ्जेः संयोगान्तादपि विभाषा लिटः कित्त्वमिच्छन्तीति पक्षेऽनुषङ्गलोपः ॥

निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ ११९ ॥

नि वि अभि इत्येतेभ्य उपसर्गेभ्य उत्तरस्य सकारस्याड्व्यवाये छन्दसि विषये मूर्द्धन्यादेशो न भवति वा । न्यषीदत्पिता नः । न्यषीदत्पिता नः । न्यसीदत् । व्यसीदत् । अभ्यषीदत् । अभ्यसीदत् । सदिस्वञ्जोरिति तदिह नानुवर्त्तते । सामान्येनैव तद्वचनम् । व्यष्टौत् । व्यस्तौत् । अभ्यष्टौत् । अभ्यस्तौत् इत्येतदपि सिद्धं भवति ॥

इति काशिकायां वृत्तावष्टमाध्यायस्य तृतीयः पादः ॥

---

## अथ अष्टमाध्यायस्य चतुर्थः पादः ।

### रषाभ्यां नो णः समानपदे ॥ १ ॥

रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेन्निमित्तनिमित्तिनौ भवतः । आस्तीर्णम् । षकारात्-कुष्णाति । पुष्णाति । मुष्णाति । पूर्वस्मादुत्तरार्थं, एतेनैव हि सिद्धमेतत् । समानपद इति किम् ? अग्निर्नयति । वायुर्नयति । ऋवर्णाच्चेति वक्तव्यम् । तिसृणाम् । चतसृणाम् । मातृणाम् । पितृणाम् । रश्रुतिसामान्यनिर्देशात् सिद्धम् । वर्णैकदेशा च व्यवधानेऽपि णत्वं भवतीति क्षुभ्नादिषु नृनमनतृप्नोतिग्रहणं ज्ञापकम् । अथवा ऋवर्णादपि णत्वं भवतीत्येतदेवानेन ज्ञाप्यते ॥

### अट्कुप्वाङ्नुम्व्यवायेऽपि ॥ २ ॥

अट् कु पु आङ् नुम् इत्येतैर्व्यवायेऽपि रेफषकाराभ्यामुत्तरस्य नकारस्य णकार आदेशो भवति । अड्व्यवाये तावत्-करणम् । हरणम् । किरिणा । गिरिणा । कुरुणा । गुरुणा । कवर्गव्यवाये-अर्केण । मूर्खेण । गर्गेण । अर्घेण । पवर्गव्यवाये-दर्पेण । रेफेण । गर्भेण । चर्म्मणा । वर्म्मणा । आङ्व्यवाये-पर्याणद्धम् । निराणद्धम् । अड्व्यवाय इति सिद्धे आङ्ग्रहणं पदव्यवायेऽपि इत्यस्य प्रतिषेधस्य बाधनार्थम् । नुम्व्यवाये-बृंहणम् । बृंहणीयम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम् । तेन तृंहणं बृंहणीमिति यत्रानुस्वारव्यवाये नुमभावेऽपि णत्वं भवति । सत्यपि च नुमि यत्रानुस्वारो न श्रूयते तत्र न भवति-प्रेन्वनम् । प्रन्वनीयमिति । व्यवायोपलक्षणार्थं चाट्कादीनामिह व्यस्तैः समस्तैश्च व्यवायेऽपि णत्वं भवति ॥

### पूर्वपदात् संज्ञायामगः ॥ ३ ॥

पूर्वपदस्थान्निमित्तादुत्तरस्य गकारवर्जितात् नकारस्य णकार आदेशो भवति संज्ञाया विषये । द्रुणसः । वार्ध्रीणसः । खरणसः (1) । शूर्पणखा । संज्ञायामिति किम् ? चर्मनासिकः । अग इति किम् ? ऋगयनम् । केचिदेतन्नियमार्थं वर्णयन्ति । पूर्वपदात् संज्ञायामेव णत्वं नान्यत्रेति । समासपदेऽपि हि समानपदे निमित्तनिमित्तिनोर्भावादस्ति पूर्वेण प्राप्तिरिति च नियमः । पूर्वपदसम्बन्धादुत्तरपदस्यस्यैव णत्वं निवर्त्तयति चर्म्मनासिक इति । न तद्धितपूर्वपदस्यस्य-खारपायणः । मातृभोगीणः । करणप्रिय इति । अग इति योगविभागेन णत्वप्रतिषेधो न नियमप्रतिषेध इति । अपरे पूर्वसूत्रे समानमेव यद् नित्यं पदं तत् समानपदमिति व्याचक्षते समानग्रहणात् । तेषामप्राप्तमेव णत्वमनेन विधीयते । समासे हि पूर्वपदोत्तरपदविभागादसमानपदत्वमप्यस्तीति ॥

---

( १ ) क्वचिद् खरणस इति नास्ति ।

### वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥ ४ ॥

पूर्वपदात् संज्ञायामिति वर्तते । पुरगा मिश्रका सिध्रका शारिका कोटरा अग्रे इत्येतेभ्यः पूर्वपदेभ्य उत्तरस्य वननकारस्य णकारादेशो भवति संज्ञायां विषये । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । सिद्धे सत्यारम्भो नियमार्थः । एतेभ्य एव परस्य वननकारस्य णकारादेशो भवति, नान्येभ्य इति । कुबेरवनम् । शतधारवनम् । असिपत्रवनम् ॥

### प्रनिरन्तः शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥ ५ ॥

प्र निर् अन्तर् शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूक्षा इत्येतेभ्य उत्तरस्य वननकारस्य संज्ञायामसंज्ञायामपि णकारादेशो भवति । प्र-प्रवणे यष्टव्यम् । निर्वणे प्रतिधीयते । अन्तर्-अन्तर्वणे । शर-शरवणम् । इक्षु-इक्षुवणम् । प्लक्षवणम् । आम्र-आम्रवणम् । कार्ष्य-कार्ष्यवणम् । खदिर-खदिरवणम् । पीयूक्षा-पीयूक्षावणम् ॥

### विभाषौषधिवनस्पतिभ्यः ॥ ६ ॥

वनमित्येव । ओषधिवाचि यत्पूर्वपद वनस्पतिवाचि च तत्स्थान्निमित्तादुत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा । ओषधिवाचिभ्यस्तावत्-दूर्वावणम् । दूर्वावनम् । मूर्वावणम् । मूर्वावनम् । वनस्पतिभ्यः-शिरीषवणम् । शिरीषवनम् । बदरीवणम् । बदरीवनम् । ❀द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्❀ । इह मा भूत्-देवदारुवनम् । भद्रदारुवनम् । ❀इरिकादिभ्यः प्रतिषेधो वक्तव्यः❀ । इरिकावनम् । मिरिकावनम् । सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्यम् ॥
फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः । ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ।

### अह्नोऽदन्तात् ॥ ७ ॥

अदन्त यत्पूर्वपद तत्स्थान्निमित्तादुत्तरस्याह्नो नकारस्य णकार आदेशो भवति । पूर्वाह्णः । अपराह्णः । अदन्तादिति किम् ? निरह्नः । दुरह्नः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । अह्न इत्यकारान्तग्रहणाद् दीर्घाह्नी शरदित्यत्र न भवति ॥

### वाहनमाहितात् ॥ ८ ॥

आहितवाचि यत्पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति । इक्षुवाहणम् । शरवाहणम् । दर्भवाहणम् । वाहने यद् आरोपितमुह्यते तदाहितमुच्यते । आहितादिति किम् ? दाक्षिवाहनम् । दाक्षिस्वामिकं वाहनमित्यर्थः ॥

### पानं देशे ॥ ९ ॥

पाननकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति पीयत इति पानम् कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । मनुष्याभिधानेऽपि देशाभिधानं गम्यते । सुरापाणाः प्राच्याः ।

सौवीरपाणा बाह्लीकाः । कषायपाणा गन्धाराः । देश इति किम्? दाक्षीणां पानं दाक्षिपानम् ॥

### वा भावकरणयोः ॥ १० ॥

भावे करणे च यः पानशब्दस्तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थान्निमित्तादुत्तरस्य । क्षीरपाणं वर्त्तते । क्षीरपानम् । कषायपाणम् । कषायपानम् । सुरापाणम् । सुरापानम् । करणे—क्षीरपाणः कंसः । क्षीरपानः ॥ ॐ वा प्रकरणे गिरिनद्यादीनामुपसङ्ख्यानम्ॐ । गिरिणदी । गिरिनदी । चक्रणदी । चक्रनदी । चक्रनितम्बा । चक्रणितम्बा ॥

### प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ११ ॥

वेति वर्त्तते । प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा णकार आदेशो भवति । प्रातिपदिकान्ते तावत्—माषवापिणौ । माषवापिनौ । नुमि—माषवापाणि । माषवापानि । व्रीहिवापाणि । व्रीहिवापानि । विभक्तौ—माषवापेण । माषवापेन । व्रीहिवापेण । व्रीहिवापेन ॥ पूर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो योऽन्त्यो नकारस्तस्येदं णत्वमिष्यते ॥ इह हि न भवति—गर्गाणां भगिनी, गर्गभगिनी । यदा त्वेवं भवति(१) गर्गाणां भगो गर्गभगः गर्गभगोऽस्या अस्तीति गर्गभगिणीति—तदा मातृभोगीणमित्यादिवन्नित्यं णत्वमेवेति वेदितव्यम् । माषवापिणी माषवापिनीत्यत्र तु गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति कृदन्तेनैव समासे सति प्रातिपदिकस्योत्तरपदस्यैव सतो नकारो भवति(२) । तथा नुम्ग्रहणं कृतम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति । ॐयुवादीनां प्रतिषेधो वक्तव्यःॐ ॥ आर्ययूना । क्षत्रिययूना । प्रपक्वानि(३) दीर्घाह्नी शरत् ॥

### एकाजुत्तरपदे णः ॥ १२ ॥

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः । तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकार आदेशो भवति । वृत्रहणौ । वृत्रहणः । नुमि—क्षीरपाणि । सुरापाणि । विभक्तौ—क्षीरपेण । सुरापेण । ण इति वर्त्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थम् ॥

### कुमति च ॥ १३ ॥

कवर्गवति चोत्तरपदे प्रातिपदिकान्तनुम्विभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । वस्त्रयुगिणौ । वस्त्रयुगिणः । स्वर्गकामिणौ । वृषगामिणौ । नुमि—वस्त्रयुगाणि । खरयुगाणि । विभक्तौ—वस्त्रयुगेण । खरयुगेण ॥

---

(१) यदा एतद्वाक्यं भवति । इति मा० स० पाठः । (२) कचित्तु प्रातिपदिकस्योत्तरपदस्यान्त्यो नकारो भवति इति पाठः । (३) परिपक्वानीत्यधिकमन्यत्र ।

उपसर्गादसमासेऽपि णोपदेशस्य ॥ १४ ॥

ण उपदेशो यस्यासौ णोपदेशः । णोपदेशस्य धातोर्यो नकारः तस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति असमासेऽपि । प्रणमति । परिणमति । (१)प्रणायकः । परिणायकः । उपसर्गादिति किम् ? प्रगता नायका अस्माद्देशात् प्रनायको देशः । असमासेऽपीति किम् ? पूर्वपदाधिकारात् समास एव स्यादिति तदधिकारनिवृत्तिद्योतनार्थम् । णोपदेशस्येति किम् ? प्रनर्दति । प्रनर्दकः ॥

हिनुमीना ॥ १५ ॥

हिनु मीना इत्येतयोरुपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणीतः । हीनुमीनाग्रहणे विकृतस्यापि भवति अजादेशस्य स्थानिवद्भावात् ॥

आनि लोट् ॥ १६ ॥

आनीत्येतस्य लोडादेशस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति । प्रवपाणि । परिवपाणि । प्रयाणि । परियाणि । लोडिति किम् ? प्रवपानि मांसानि ॥

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

नेरित्येतस्योपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद नद पत पद घु मा स्यति हन्ति याति वाति द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः । गद्-प्रणिगदति । परिणिगदति । नद्-प्रणिनदति । परिणिनदति । पत-प्रणिपतति । परिणिपतति । पद्-प्रणिपद्यते । परिणिपद्यते । घु-प्रणिददाति । परिणिददाति । प्रणिदधाति । परिणिदधाति । माङ्-प्रणिमिमीते । परिणिमिमीते । मेङ्-प्रणिमयते । परिणिमयते ॥ मा इति माङ्मेङोर्ग्रहणमिष्यते ॥ स्यति-प्रणिष्यति । परिणिष्यति । हन्ति-प्रणिहन्ति । परिणिहन्ति । याति-प्रणियाति । परिणियाति । वाति-प्रणिवाति । परिणिवाति । द्राति-प्रणिद्राति । परिणिद्राति । प्साति-प्रणिप्साति । परिणिप्साति । वपति-प्रणिवपति । परिणिवपति । वहति-प्रणिवहति । परिणिवहति । शाम्यति-प्रणिशाम्यति । परिणिशाम्यति । चिनोति-प्रणिचिनोति । परिणिचिनोति । देग्धि-प्रणिदेग्धि । परिणिदेग्धि । अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते-प्रण्यगदत् ॥

शेषे विभाषाकखादावषान्त उपदेशे ॥ १८ ॥

नेरिति वर्त्तते उपसर्गादिति च । अककारखकारादिरषकारान्तश्च उपदेशे यो धातुः शेषस्तस्मिन् परतः उपसर्गस्थान्निमित्तादुत्तरस्य नेर्नकारस्य विभाषा णकार

(१) 'प्रणयति । परिणयति । प्रणायकः परिणायकः । इति क्वचिदधिकोऽयं पाठः

आदेशो भवति। प्रणिपतति। प्रनिपतति। प्रणिभिनत्ति। प्रनिभिनत्ति। अकखादाविति किम्? प्रनिकरोति। प्रनिखादति। अषान्त इति किम्? प्रनिपिनष्टि। उपदेशग्रहणं किम्? इह च प्रतिषेधो यथा स्यात्—प्रनिचकार। प्रनिचखाद। प्रनिवेक्ष्यतीति। इह च मा भूत्—विशे—प्रणिवेष्टा प्रण्विवेदयति॥

आनितेः॥ ६९॥

अनितेर्नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति। प्राणिति। पराणिति।

अन्तः॥ ७०॥

अनितेरिति वर्तते। उपसर्गस्थान्निमित्तादुत्तरस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति। हे प्राण्। हे पराण्। पदान्तस्येति प्रतिषेधस्यापवादोऽयम्। अन्तश्च पदापेक्षो गृह्यते। कश्चित्तु पूर्वसूत्र एवैतदन्तग्रहणं सामीप्यार्थमभिसबध्नन्ति। निमित्तसमीपस्थस्यैकवर्णव्यवहितस्यानितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात्। इह मा भूत्—पर्यनितीति। तैर्द्वितीयमपि पदान्तस्य णत्वार्थमन्तग्रहणमाश्रयितव्यमेव। येषां तु पर्यणितीति भवितव्यमिति दर्शनम्। तेषां पूर्वसूत्रे नाथोऽन्तग्रहणेन॥

उभौ साभ्यासस्य॥ ७१॥

साभ्यासस्यानितेरुपसर्गस्थान्निमित्तादुत्तरस्योभयोर्नकारयोर्णकार आदेशो भवति। प्राणिणिषति। प्राणिणत्। पराणिणिषति। पराणिणत्। पूर्वत्रासिद्धीयमद्विर्वचन इत्येतस्मिन्सति पूर्वेणैव कृतेन णत्वे द्विर्वचने कृते सिद्धमेतदन्तरेणापि वचनं तत्तु नाश्रयितव्यमिति सूत्रमिदमारभ्यते। तेन औजढदिति सिद्धं भवति (१)॥

हन्तेरत्पूर्वस्य॥ ७२॥

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकार आदेशो भवति। प्रहण्यते। परिहण्यते। प्रहणनम्। परिहणनम्। अत्पूर्वस्येति किम्? प्रघ्नन्ति। तपरकरणं किम्? किंगि—प्राघानि। पर्यघानि॥

वमोर्वा॥ ७३॥

हन्तेरिति वर्तते। वकारमकारयोः परतो हन्तिनकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रहण्व। परिहण्व। प्रहन्व। परिहन्व। प्रहण्म। परिहण्म। प्रहन्म। परिहन्म (२)॥

अन्तरदेशे॥ ७४॥

अन्तःशब्दादुत्तरस्य हन्तिनकारस्यात्पूर्वस्य णकारादेशो भवति अदेशाभिधाने। अन्तर्हण्यते। अन्तर्हणनं वर्तते। अदेश इति किम्? अन्तर्हननो देशः। अत्पूर्वस्येत्येव। अन्तर्घ्नन्ति। तपरकरणं किम्? अन्तरघानि॥

(१) तेनेत्यादिमवत्यन्तं क्वचिन्नास्ति। (२) पहुँग तिसेत, पार्त्तोक्ष, न, क्नित्यादि [illegible]

अयनं च ॥ २५ ॥

अन्तरदेश इति वर्तते । अयननकारस्य चान्तः शब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने । अन्तरयणं वर्तते । अन्तरयणं शोभनम् । अदेश इत्येव । अन्तरयनो देशः ॥

छन्दस्यृदवग्रहात् ॥ २६ ॥

पूर्वपदादिति वर्तते । ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये । नृमणाः । पितृयाणम् । अत्र हि नृमणाः पितृयाणमिति ऋकारोऽवगृह्यते । अवग्रहग्रहणं किमर्थमुच्यते । यावता, संहिताधिकार आध्यायपरिसमाप्तेरित्युक्तम् ? विषयोपलक्षणार्थमवग्रहग्रहणमवगृह्यमाणाद्यथा स्यादनवगृह्यमाणान्मा भूत् । अपदान्ते चावग्रहो नास्ति ॥

नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

नस् इत्येतस्य नकारस्य णकारादेशो भवति धातुस्थान्निमित्तादुत्तरस्योरुशब्दात् षुशब्दाच्च छन्दसि विषये । धातुस्थात्तावत्–अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरुशब्दात्–उरुणस्कृधि । षुशब्दात्–अभीषु णः सखीनाम् । ऊर्ध्व ऊषु ण ऊतये । अस्मदादेशोऽयं नसृशब्दो बहुवचनस्य वस्नसाविति ॥

उपसर्गाद् बहुलम् ॥ २८ ॥

उपसर्गस्थान्निमित्तादुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम् । प्रणः शूद्रः । प्रणसः । प्रणो राजा । न च भवति–प्र नो मुञ्चतम् । बहुलग्रहणाद्भाषायामपि भवति–प्रणस मुखम्(१) । उपसर्गाच्चेति नासिकाया नसादेशः ॥

कृत्यचः ॥ २९ ॥

कृत्स्थो यो नकारोऽच उत्तरस्तस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति । अन मान अनीय अनि इनि निष्ठादेश एते णत्वं प्रयोजयन्ति । अन–प्रयाणम् । परियाणम् । प्रमाणम् । परिमाणम् । मान–प्रयायमाणम् । परियायमाणम् । अनीय–प्रयाणीयम् । परियाणीयम् । अनिः–अप्रयाणिः । अपरियाणिः । इनि–प्रयायिणौ । परियायिणौ । निष्ठादेशः–प्रहीणः । परिहीणः । प्रहीणवान् । परिहीणवान् । अच इति किम् ? प्रभुग्नः । परिभुग्नः । (२) भुजो कौटिल्ये । अस्य निष्ठाप्रत्ययः । ओदितश्चेति निष्ठानत्वम् । चोः कुरिति कुत्वं सिद्धं परिभुग्न इति ॥ ॐकृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानं कर्त्तव्यम्ॐ । निर्विण्णोऽहमत्र वासेन ॥

णेर्विभाषा ॥ ३० ॥

ण्यन्ताद्यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य

(१) छन्दसीति निवृत्तं तेन भाषायामपि भवतीति क्वचित्पाठः ।

(२) भुजो कौटिल्य इत्यारभ्य परिभुग्न इत्यन्तं क्वचिन्नास्ति ।

विभाषा णकारादेशो भवति । प्रयापणम् । प्रयापनम् । परियापणम् । परियापनम् । प्रयाप्यमाणम् । प्रयाप्यमानम् । प्रयापणीयम् । प्रयापनीयम् । अप्रयापणि । अप्रयापनि । प्रयापिणौ । प्रयापिनौ । विहितविशेषणं किम् ? प्रयाप्यमाणमित्यत्र यका व्यवधानेऽपि यथा स्यादिति ॥

हलश्चेजुपधात् ॥ ३१ ॥

कृत्यच इति वर्त्तते । हलादिर्यो धातुरिजुपधस्तस्मात्परो यः कृत्प्रत्ययः तत्स्थस्य नकारस्याच उत्तरस्योपसर्गस्थान्निमित्तादुत्तरस्य विभाषा णकारादेशो भवति । प्रकोपणम् । परिकोपणम् । प्रकोपनम् । परिकोपनम् । हल इति किम् ? प्रेहणम् । प्रोहणम् । इजुपधादिति किम् ? प्रवपणम् । परिवपणम् । कृत्यच इति नित्ये प्राप्ते विकल्पः । अच इत्येव । परिभुग्न । इजुपधस्य सर्वस्य हलन्तत्वादिह हलग्रहणमादिविशेषणम् ॥

इजादेः सनुमः ॥ ३२ ॥

हल इति वर्त्तते । तेनेह सामर्थ्यात्तदन्तविधिः । इजादेः सनुमो हलन्ताद्धातोर्विहितो यः कृत्तत्स्थस्य नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य णकारो भवति । प्रेङ्खणम् । परेङ्खणम् । प्रेङ्गणम् । परेङ्गणम् । प्रोम्भणम् । परोम्भणम् । सिद्धे सत्यारम्भो नियमार्थः इजादेरेव सनुमो नान्यस्मादिति । प्रमङ्गनम् । परिमङ्गनम् । हल इत्यधिकारादृप्यन्ते नित्य विकल्पार्थमेतन्न भवति ॥

वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

उपसर्गादिति वर्त्तते । निंस निक्ष निन्द इत्येषां नकारस्योपसर्गस्थान्निमित्तादुत्तरस्य वा णकारादेशो भवति । प्रणिंसनम् । प्रनिंसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः ॥

न भाभूपूकमिगमिप्यायीवेपाम् ॥ ३४ ॥

भा भू पू कमि गमि प्यायी वेप इत्येतेषामुपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति । भा-प्रभानम् । परिभानम् । भू-प्रभवनम् । परिभवनम् । पू-प्रपवनम् । परिपवनम् । पूञ्ग्रहणं द्रष्टव्यम् । पूङो हि भवत्येव प्रवम्-प्रपवणं सोमस्येति । कमि-प्रकमनम् । परिकमनम् । गमि-प्रगमनम् । परिगमनम् । प्यायी-प्रप्यानम् । परिप्यानम् । वेप-प्रवेपनम् । परिवेपनम् । ॐण्यन्तानां भादीनामुपसंख्यानं कर्त्तव्यम्ॐ । प्रभापनम् । परिभापनम् ॥

षात्पदान्तात् ॥ ३५ ॥

पकारात्पदान्तादुत्तरस्य णकारादेशो न भवति । निष्पानम् । दुष्पानम् । सर्पिष्पानम् । यजुष्पानम् । षादिति किम् ? निर्णयः । पदान्तादिति किम् ? कुष्णाति । पुष्णाति । पदे अन्तः पदान्त इति सप्तमीसमासोऽयं तेनेह न भवति-सुसर्पिष्केण । सुयजुष्केण । ...

नशेः षान्तस्य ॥ ३६ ॥

नेति वर्तते । नशेः षकारान्तस्य णकारादेशो न भवति । प्रनष्टः । षान्तस्येति किम् ? प्रणश्यति । परिणश्यति । षान्तग्रहणं षान्तभूतपूर्वमात्रस्यापि यथा स्यात्–प्रनङ्क्ष्यति । परिनङ्क्ष्यति ॥

पदान्तस्य ॥ ३७ ॥

पदान्तस्य नकारस्य णकारादेशो न भवति । वृक्षान् । प्लक्षान् । अरीन् । गिरीन् ॥

पदव्यवायेऽपि ॥ ३८ ॥

पदेन व्यवायः–पदव्यवायः । पदव्यवधानम् । पदे व्यवायेऽपि सति निमित्तनिमित्तिनोर्नकारस्य णकारादेशो न भवति । माषकुम्भवापेन । चतुरङ्गयोगेन । प्रावनद्धम् । पर्यवनद्धम् । प्रगान्नयामः । परिगान्नयामः । पदव्यवायेऽतद्धित इति वक्तव्यम् । इह मा भूत्–आर्द्रगोमयेण । शुष्कगोमयेण । गोश्च पुरीष इति मयट् । स्वादौ पूर्वं, पदमिति गोशब्दः पूर्वपदं, तेन व्यवायः ॥

क्षुभ्नादिषु च ॥ ३९ ॥

नेति वर्तते । क्षुभ्ना इत्येवमादिषु शब्देषु नकारस्य णकारादेशो न भवति । क्षुभ्नाति । अनादेशस्य स्थानिवद्भावादिहापि प्रतिषेधो भवति । क्षुभ्नीत । क्षुभ्नीत । नृनमनः । पूर्वपदात्संज्ञायामिति प्राप्तिः । छन्दस्यृदवग्रहादिति च प्राप्नोति । नन्दिन् । नन्दन । नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति–हरिनन्दी । हरिनन्दनः । गिरिनगरम् । नृतिर्यङि प्रयोजयति–नरीनृत्यते । तृप्नु–तृप्नोति । नर्तन । गहन । नन्दन । निवेश । निवास । अग्नि । अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम् । परिगहनमिति संज्ञायां पूर्वपदात्संज्ञायामिति प्राप्नोति । परिनन्दनमित्यत्रोपसर्गादसमासेऽपीति प्राप्नोति । शरनिवेशः । शरनिवासः । शराग्निः । दर्भानूपः । इत्येताः संज्ञाः ॥ आचार्यादणत्वं च ॥ आचार्यभोगीनः । आचार्यानी (१) हरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञायाम् ॥ हरिका । तिमिर । समीर । कुबेर । हरि । कर्मार । इत्युत्तरपदवनशब्दस्यस्य संज्ञायाम् ॥ क्षुभ्नादिराकृतिगणः । अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ॥

स्तोः श्चुना श्चुः ॥ ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः । स्तोः श्चुनेति यथासंख्यमत्र नेष्यते । सकारस्य शकारेण चवर्गेण द्वाभ्यामपि सन्निपाते शकारो भवति । तवर्गस्यापि च शकारेण चवर्गेण च सन्निपाते चवर्गो भवति । आदेशे तु यथासंख्यमिष्यते । सकारस्य शकारस्तवर्गस्य च चवर्ग इति । सकारस्य

(१) "तत्र णत्वमत्र नेष्यते । [illegible] । चतुर्थ्यन्तः कर्मार इति चोत्तरपदस्य संज्ञायाम्" इत्यपि क्वचित् ।

शकारेण संनिपाते-वृक्षश्शेते । प्लक्षश्शेते । तस्यैव चवर्गेण-वृक्षश्चिनोति । प्लक्षश्चिनोति । वृक्षश्छादयति । प्लक्षश्छादयति । तवर्गस्य शकारेण-अग्निचिच्छेते । सोमसुच्छेते । तस्यैव चवर्गेण-अग्निचिच्चिनोति । सोमसुच्चिनोति । अग्निचिच्छादयति । सोमसुच्छादयति । अग्निचिज्जयति । सोमसुज्जयति । अग्निचिज्झकारम् । सोमसुज्झकारम् । अग्निचिञ्ञकारः । सोमसुञ्ञकारः । मस्जेः-मज्जति । भ्रस्जेः-भृज्जति । वश्चेः-वृश्चति । यजेः-यज्ञः । याचेर्याच्ञा । शादिति प्रतिषेधो ज्ञापकः-सख्यातानुदेशाभावस्य । स्तोः श्चुनेति सप्तमीनिर्देशो न कृतः । पूर्वेण परेण च श्चुना संनिपाते श्चुत्वं यथा स्यादिति ॥

## ष्टुना ष्टुः ॥ ४१ ॥

स्तोरिति वर्त्तते । सकारतवर्गयोः षकारटवर्गाभ्यां संनिपाते षकारटवर्गावादेशौ भवतः । तत्रापि तथैव सख्यातानुदेशाभावः । षकारेण सकारस्य-वृक्षष्षण्डे । प्लक्षष्षण्डे । तस्यैव टवर्गेण-वृक्षष्टीकते । प्लक्षष्टीकते । वृक्षष्ठकारः । प्लक्षष्ठकारः । तवर्गस्य षकारेण-पेष्टा । पेष्टुम् । पेष्टव्यम् । कृषीष्ट । कृषीष्ठाः । तस्यैव टवर्गेण-अग्निचिट्टीकते । सोमसुट्टीकते । अग्निचिट्ठकारः । सोमसुट्ठकारः । अग्निचिड्डीनः । सोमसुड्डीनः । अग्निचिड्ढौकते । सोमसुड्ढौकते । अग्निचिण्णकारः । सोमसुण्णकारः । अट्ट्-अट्टति । अड्ड्-अड्डति ॥

## न पदान्ताट्टोरनाम् ॥ ४२ ॥

पदान्तात्टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति नामित्येतद्वर्जयित्वा । श्वलिट्साये । मधुलिट्तरति । पदान्तादिति किम् ? ईड स्तुतौ-ईट्टे । टोरिति किम् ? सर्पिष्टमम् । अनामिति किम् ? षण्णाम् । अत्यल्पमिदमुच्यते । ॐअनाम्नवतिनगरीणामिति वक्तव्यम्ॐ । षण्णाम् । षण्णवतिः । षण्णगरी ॥

## तोः षि ॥ ४३ ॥

नेति वर्त्तते । तवर्गस्य षकारे यदुक्तं तन्न भवति । अग्निचित्षण्डे । भवान्षण्डे । महान्षण्डे ॥

## शात् ॥ ४४ ॥

तोरिति वर्त्तते । शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति । प्रश्नः । विश्नः ॥

## यरोऽनुनासिकेऽनुनासिको वा ॥ ४५ ॥

पदान्तग्रहणमनुवर्त्तते । यरः पदान्तस्यानुनासिके परतो वाऽनुनासिकादेशो भवति । वाङ्नयति । वाग्नयति । श्वलिण्नयति । श्वलिड्नयति । अग्निचिन्नयति । अग्निचिद्नयति । त्रिष्टुम्नयति । त्रिष्टुब्नयति । पदान्तस्येत्येव । वेद्मि । क्षुभ्नाति ॥

ॐयरोऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्त्तव्यम्ॐ ॥ वाङ्मात्रम् । कियन्मात्रम् । व्यवस्थितविभाषाविज्ञानात् सिद्धम् ॥

## अचोरहाभ्यां द्वे ॥ ४६ ॥

यर इति वर्त्तते । अचः उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । अर्क्कः । मर्क्कः । ब्रह्म्मा । अपह्न्नुते । अच इति किम् ? ह्नुते । ह्मलयति ॥

अनचि च ॥ ४७ ॥

अच इति वर्त्तते यर इति च । अच उत्तरस्य यरो द्वे वा(१) भवतोऽनचि परतः । दद्ध्यत्र । मद्ध्वत्र । अच इत्येव । स्मितम् । ध्मातम् । ※यणो मयो द्वे भवत इति वक्तव्यम्※ । केचिदत्र यण इति, पञ्चमी मय इति षष्ठीति व्याचक्षते । तेषामुल्क्का वाल्म्मीक इत्युदाहरणम् । अपरे तु यण इति षष्ठी मय इति पञ्चमीति तेषां दध्य्यत्र । मध्व्वत्रेत्युदाहरणम् । ※शरः खयो द्वे भवत इति वक्तव्यम्※ । अत्रापि यदि शर इति पञ्चमी खय इति षष्ठी तदा स्थ्थालः स्थ्थातेत्युदाहरणम् । अथवा खय उत्तरस्य शरो द्वे भवतः । वत्स्सरः । अप्स्सराः । ※अवसाने च यरो द्वे भवत इति वक्तव्यम्※ । वाक्क् । वाक् । त्वक्क् । त्वक् । षट्ट् । षट् । तत्त् । तत् । ॥

नादिन्याक्रोशे पुत्रस्य ॥ ४८ ॥

आदिनी परत आक्रोशे गम्यमाने पुत्रशब्दस्य न द्वे भवतः । अनचि चेति प्राप्तिः प्रतिषिध्यते । पुत्रादिनी त्वमसि पापे । आक्रोश इति किम् ? तत्त्वकथने द्विर्वचन भवत्येव । पुत्रानत्तीति पुत्त्रादिनी-शिशुमारी व्याघ्री । ※तत्परे चेति वक्तव्यम्※ । पुत्रपुत्रादिनी त्वमसि पापे । ※वा हतजग्धपर इति वक्तव्यम्※ । पुत्त्रहती । पुत्रहती । पुत्त्रजग्धी । पुत्रजग्धी । ※चयो द्वितीयाः शरि पौष्करसादेः※ । चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । तकारस्य थकारः-वथ्सः । ककारस्य खकारः-अख्षरम् । पकारस्य फकारः-अफ्सराः ॥

शरोऽचि ॥ ४९ ॥

नेति वर्त्तते । शरोऽचि परतो न द्वे भवतः । अचो रहाभ्यामिति प्राप्तिः प्रतिषिध्यते । कर्षति । वर्षति । आकर्षः । अक्षदर्शः । अचीति किम् ? दर्श्यते ॥

त्रिप्रभृतिषु शाकटायनस्य ॥ ५० ॥

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्याचार्यस्य मतेन द्वित्वं न भवति । इन्द्रः । चन्द्रः । उष्ट्रः । राष्ट्रम् । भ्राष्ट्रम् ॥

सर्वत्र शाकल्यस्य ॥ ५१ ॥

शाकल्यस्याचार्यस्य मतेन सर्वत्र द्विर्वचनं न भवति । अर्कः । मर्कः । ब्रह्मा । अपह्नुते ॥

दीर्घादाचार्याणाम् ॥ ५२ ॥

दीर्घादुत्तरस्याचार्याणां मतेन न द्वित्वं भवति । दात्रम् । पात्रम् । मूत्रम् । सूत्रम् ।

झलां जश् झशि ॥ ५३ ॥

झलां स्थाने जशादेशो भवति झशि परतः । लब्धा । लब्धुम् । लब्धव्यम् । दोग्धा । दोग्धुम् । दोग्धव्यम् । बोद्धा । बोद्धुम् । बोद्धव्यम् । झशीति किम् ? दत्तः । दत्थः । दध्मः ॥

---

१. पूर्वसूत्रेऽपि वा इत्यस्यानुवृत्तिर्बोध्या ।

## अभ्यासे चर्च ॥ ५४ ॥

अभ्यासे वर्त्तमानानां झलां चरादेशो भवति चकाराज्जश्च। चिखनिषति। चिच्छित्सति। टिठकारयिषति। तिष्ठासति। पिफकारयिषति। बुभूषति। जिघत्सति। डुढौकिषते। प्रकृतिचरां प्रकृतिचरो भवन्ति। चिचीषति। टिटीकिषते। तितनिषति। प्रकृतिजशां प्रकृतिजशो भवन्ति। जिजनिषते। बुबुधे। ददौ। डिड्ये ॥

## खरि च ॥ ५५ ॥

खरि च परतो झलां चरादेशो भवति। झल्ग्रहणं नानुवर्त्तते पूर्वसूत्रे चानुकृष्टत्वात्। भेत्ता। भेत्तुम्। भेत्तव्यम्। युयुत्सते। आरिप्सते। आलिप्सते ॥

## वावसाने ॥ ५६ ॥

झलां चरिति वर्त्तते। अवसाने वर्त्तमानानां झलां वा चरादेशो भवति। वाक्। वाग्। त्वक्। त्वग्। श्वलिट्। श्वलिड्। त्रिष्टुप्। त्रिष्टुब् ॥

## अणोऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणः अप्रगृह्यसंज्ञस्यावसाने वर्त्तमानस्य वानुनासिकादेशो भवति। दधिँ दधि। मधुँ मधु। कुमारीँ कुमारी। अण इति किम्? कर्तृ। हर्तृ। अप्रगृह्यस्येति किम्? अग्नी। वायू ॥

## अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य ययि परतः परसवर्ण आदेशो भवति। शङ्किता। शङ्कितुम्। शङ्कितव्यम्। उञ्छिता। उञ्छितुम्। उञ्छितव्यम्। कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। नन्दिता। नन्दितुम्। नन्दितव्यम्। कम्पिता। कम्पितुम्। कम्पितव्यम्। इह कुर्वन्ति वृषन्ति इत्यत्र णत्वस्यासिद्धत्वात्पूर्वं नकारस्यानुस्वारः क्रियते। तस्यापि परसवर्णेन पुनर्नकार एव भवति। तस्याप्यसिद्धत्वात्पुनर्णत्वं न भवति। एवमनुस्वारीभूतो णत्वमतिक्रामतीति। ययीति किम्? आक्रंस्यते। आचिक्रंस्यते ॥

## वा पदान्तस्य ॥ ५९ ॥

पदान्तस्यानुस्वारस्य ययि परतो वा परसवर्णादेशो भवति। तङ्कथञ्चित्रपक्षण्डयमानन्नभःस्थम्पुरुषोऽवधीत्। तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषोऽवधीत् ॥

## तोर्लि ॥ ६० ॥

तवर्गस्य लकारे परतः परसवर्णादेशो भवति। अग्निचिल्लुनाति। सोमसुल्लुनाति। भवाँल्लुनाति। महाँल्लुनाति ॥

## उदः स्थास्तम्भोः पूर्वस्य ॥ ६१ ॥

सवर्ण इति वर्त्तते। उद उत्तरयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णादेशो भवति। उत्थिता। उत्थातुम्। उत्थातव्यम्। स्तम्भेः खल्वपि-उत्तम्भिता। उत्तम्भितुम्। उत्तम्भितव्यम्। स्थास्तम्भोरिति किम्? उत्स्नाति ॥ *उदः पूर्वसवर्णत्वे स्कन्देश्छन्द

त्युपसङ्ख्यानम् ॥ अग्ने दूरमुत्कन्दः रोगे चेति वक्तव्यम् ॥ उत्कन्दको नाम रोगः। कन्दतेर्वा धात्वन्तरस्यैतद्रूपम् ॥

## झयो होऽन्यतरस्याम् ॥ ६२ ॥

झय उत्तरस्य हकारस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम्। वाग्घसति। वाग्हसति। श्वलिड्ढसति। श्वलिड् हसति। अग्निचिद्धसति। अग्निचिद् हसति। सोमसुद्धसति। सोमसुद् हसति। त्रिष्टुब्भसति। त्रिष्टुब् हसति। झय इति किम्? प्राङ्हसति। भवान् हसति ॥

## शश्छोऽटि ॥ ६३ ॥

झय इति वर्तते अन्यतरस्यामिति च। झय उत्तरस्य शकारस्याटि परतश्छकारादेशो भवति अन्यतरस्याम्। वाक्छेते। वाक् शेते। अग्निचिच्छेते। अग्निचित् शेते। सोमसुच्छेते। सोमसुत् शेते। श्वलिट्छेते। श्वलिट् शेते। त्रिष्टुप्छेते। त्रिष्टुप् शेते। छत्वममीति वक्तव्यम् ॥ किं प्रयोजनम्? तच्छ्लोकेन, तच्छ्मश्रुणेत्येवमर्थम् ॥

## हलो यमां यमि लोपः ॥ ६४ ॥

अन्यतरस्यामिति वर्तते। हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम्। शय्या इत्यत्र द्वौ यकारौ क्रमजस्तृतीयस्तत्र मध्यमस्यात्र वा लोपो भवति। शय्या। शय्य्या। अदितेरपत्यमादित्य्य इत्यत्र तकारात्पर एको यकारो ण्यगो भव इति क्रमजो द्वितीयः। तत्र मध्यमस्य वा लोपो भवति—आदित्यः। आदित्य्यः। आदित्यो देवता अस्य स्थालीपाकस्येति आदित्य्य। आदित्य्य इत्यत्रापि द्वौ यकारौ क्रमजस्तृतीयः। तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति। हल इति किम्? अक्षम्। यमामिति किम्? अग्नि। अर्घ्यम्। यमीति किम्? शार्ङ्गम् ॥

## झरो झरि सवर्णे ॥ ६५ ॥

हल इति वर्तते अन्यतरस्यामिति च। हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम्। प्रत्तमवत्तमित्यत्र त्रयस्तकाराः। क्रमजश्चतुर्थः। तत्र मध्यमस्य मध्यमयोर्वा लोपो भवति। मरुत्त इत्यत्र चत्वारस्तकाराः क्रमजः पञ्चमस्तत्र प्रथमस्य मध्यमयोर्मध्यमानां वा लोपो भवति। मरुच्छब्दस्योपसङ्ख्यानसामर्थ्यादच उपसर्गात्त इति तत्वं भवति। झर इति किम्? शार्ङ्गम्। झरीति किम्? प्रियपञ्च्ञः। अल्लोपस्य च पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवद्भावप्रतिषेधादत्र चकारस्य ञकारे लोपः स्यात्। सवर्ण इति किम्? तर्प्ता। तर्प्तुम्। तर्प्तव्यम्। सवर्णग्रहणसामर्थ्यादिह सङ्ख्यातानुदेशो न भवति। सवर्णमात्रे लोपो विज्ञायते। तेन शिण्ढि, पिण्ढि इति ढकारे ढकारस्य लोपो भवति ॥

उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदात्तादुत्तरस्यानुदात्तस्य स्वरितादेशो भवति । गार्ग्यः । वात्स्यः । पचति । पठति । अस्य स्वरितस्यासिद्धत्वादनुदात्तं पदमेकवर्जमित्येतन्न प्रवर्त्तते । तेनोदात्तस्वरितावुभावपि श्रूयेते ।

नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६७ ॥

उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरितो न भवति । पूर्वेण प्राप्तः प्रतिषिद्ध्यते । अगार्ग्यकाश्यपगालवानां मतेन । उदात्त उदयो यस्मात्स उदात्तोदय उदात्तपर इत्यर्थः । एवं स्वरितोदयः । उदात्तोदयस्तावत्—गार्ग्यस्तत्र । वात्स्यस्तत्र । तत्रशब्द आद्युदात्तः । तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति । स्वरितोदयः—गार्ग्यः क्व । वात्स्यः क्व । क्वशब्दः स्वरितः तस्मिन् परतोऽनुदात्तः स्वरितो न भवति । अगार्ग्यकाश्यपगालवानामिति किम् ? गार्ग्यस्तत्र । गार्ग्यः क्व । तेषां हि मतेन स्वरितो भवत्येव । उदात्तपरस्येति वक्तव्ये उदयग्रहणं मङ्गलार्थम् । अनेकाचार्यसङ्कीर्तनं पूजार्थम् ॥

अ अ इति ॥ ६८ ॥

एकोऽत्र विवृतोऽन्यः संवृतस्तत्र विवृतस्य संवृतः क्रियते । अकारो विवृतः संवृतो भवति । वृक्षः । प्लक्षः । इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरियं क्रियते ॥ दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहणं नेष्यते । तेन तयोः संवृतो न भवति । संवृतेन च सवर्णस्य मात्रिकस्य ग्रहणमिष्यते । तेन सवर्णग्रहणं प्रत्यापद्यते ॥

इष्टयुपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ॥
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥ १ ॥
व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकार्यमेतावत् ॥
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण ॥ २ ॥

इति श्रीवामनकृतकाशिकावृत्तावष्टमाध्यायस्य तुरीयः पादः ।
समाप्तश्चायमध्यायो ग्रन्थश्च ॥ ८ ॥ ४ ॥

---

# काशिकास्थसूत्राणामकारादिवर्णानुक्रमेण सूचिका।

पृष्ठाङ्का
६७० पाघ्राध्मास्थाम्नादा० ७।३।७८
१७८ पाणिघताडघौ शि० ३।२।५५
१६८ पाघ्राध्माधेट्दृशः श ३।१।१३७
२९० पाण्डुकम्बलादिनि ४।२।११
७८८ पातौ च बहुलम् ८।२।५२
३७६ पाथा छन् ५।१।४६
३८० पात्राद्घञ्च ५।१।६८
९२ पात्रेसमितादयश्च २।१।४८
३६१ पाथोनदीभ्यां ड्यण् ४।४।११५
५१७ पाद पत् ६।४।१३०
४३८ पादशतस्य सङ्ख्यादे० ५।४।१
५६० पादस्य पदाज्याति० ६।३।५२
४६२ पादस्य लोपोऽहु० ५।४।१३८
४४२ पादार्घाभ्यां च ५।४।२५
२५२ पादोऽन्यतरस्याम् ४।१।८
७६१ पान देशे ८।४।९
५२७ पाप च शिल्पिनि ६।२।६८
९४ पापाणके कुत्सितैः २।१।५४
७०३ पाय पौ ६।१।२८
१६६ पाय्यसान्नाय्यनि० ३।१।१२९
५९८ पारस्करप्रभृतीनि० ६।१।१५७
४१ पारायणतुरायणचा० ५।१।७२
३६ पाराशर्यशिलालि० ४।३।११०
८६ पारेमध्ये षष्ठ्या वा २।१।१८
४०६ पार्श्वेनान्विच्छति ५।२।७५
१७ पाशादिभ्यो य ४।२।४९
५६ पितरामातरा च च्छ० ६।३।३३
४३ पिता मात्रा १।२।७०
२९ पितुर्यच्च ४।३।७९
९४ पितृव्यमातुलमाता० ४।२।३६
७९ पितृष्वसुश्छण् ४।१।१३२
४१ पित्तश्च ४।३।१४६

पृष्ठाङ्का
२७७ पीलाया वा ४।१।११८
२६१ पुंयोगादाख्यायाम् ४।१।४८
५५८ पुंवत्कर्मधारयजाती० ६।३।४२
२१७ पुंसि सञ्ज्ञायां घ० ३।३।११८
६२२ पुंसोऽसुङ् ७।१।८९
६७१ पुगन्तलघूपधस्य च ७।३।८६
१४६ पुच्छभाण्डचीवरा० ३।१।२०
५३७ पुत्र पुम्भ्य ६।२।१३२
३६५ पुत्राच्छ च ५।१।४०
२८४ पुत्रान्तादन्यत० ४।१।१५९
५५१ पुत्रेऽन्यतरस्याम् ६।३।२२
७३९ पुमः खय्यम्परे ८।३।६
४२ पुमान्स्त्रिया १।२।६७
७०४ पुरा च परीप्सायाम् ८।१।४२
३३५ पुराणप्रोक्तेषु ब्राह्म० ४।३।१०५
१८८ पुरि लुङ् चास्मे ३।२।१२२
५४८ पुरपश्चान्वादिष्ट ६।२।१९०
४०० पुरुषहस्तिभ्यामण्च ५।२।३८
२५५ पुरुषात्प्रमाणेऽन्य० ४।१।२४
५३२ पुरे प्राचाम् ६।२।९९
१७२ पुरोऽग्रतोऽग्रेषु सर्त्तेः ३।२।१८
७६ पुरोऽव्ययम् १।४।६७
१९८ पुव सञ्ज्ञायाम् ३।२।१८५
१५३ पुषादिद्युताद्य्लृदितः ३।१।५५
४१७ पुष्करादिभ्यो देशे ५।२।१३५
१६२ पुष्यसिद्ध्यौ नक्षत्रे ३।१।११६
१७५ पूः सर्वयोर्दारिसहोः ३।२।४१
४३६ पूगाञ्ञ्योऽग्रा० ५।३।११२
५१७ पूर्वेष्वन्यतरस्याम् ६।२।२८
३१ पूङः क्त्वा च १।२।२२
६४० पूङश्च ७।२।५१
१८९ पूङ्यजोः शानन् ३।२।१२८

पृष्ठाङ्का

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस-१